स्वापेक्षापेक्ष्यपेक्षित्वसत्त्वान्ताधिक्यम् ॥ अस्यात्माश्रयवत् त्रैविध्यम् ॥ अपिचाद्यलक्षणं यथा । स्वापेक्षणीयापेक्षितसापेक्षितत्वनिबन्धनप्रसङ्गत्वमिति । अपेक्षाच उत्पत्तौ स्थितौच ग्राह्या । तत्राद्या यथा । यदि एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात् । द्वितीया यथा । घटोयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात् । तृतीया यथा । घटोयं यद्येतद्घटवृत्तिवृत्तिः स्यात् तथाज्ञेनोपलभ्येतेति । इतितर्कशास्त्रम् ॥

चक्रकारकम् । न । व्याघ्रनखाख्यगन्धवस्तुनि । करजे ॥ चक्रस्यकारकम् ॥

चक्राङ्गल्या । स्त्री । पृश्निपर्ण्याम् ॥

चक्रगजः । पुं । चक्रमर्द्दे ॥

चक्रगण्डुः । पुं । वर्त्तुलाकारोपधाने । चातुरे । गालसिर्हाना गोलसिर्हाना इतिचभाषा ॥

चक्रगदाधरः । पुं । परमात्मनि वासुदेवे ॥ मनस्तत्त्वात्मकं चक्रं बुद्धितत्त्वात्मिकां गदाम् । धारयन् लोकरक्षार्थं गुप्तश्चक्रगदाधरः ॥ चक्रगदे धरति । धृञ्० । पचाद्यच् ॥ चक्रग



दयोर्धरोवा ॥

चक्रगुच्छः । पुं । अशोकपादपे ॥

चक्रजीवकः । पुं । कुलाले । कुम्भकारे ॥ चक्रंजीवनमस्य ॥

चक्रदंष्ट्रः । पुं । शूकरे ॥

चक्रदन्ती । स्त्री । दन्तीवृक्षे ॥

चक्रदन्तीबीजम् । न । जयपाले ॥

चक्रधरः । पुं । अजे । विष्णौ ॥ अहौ । सर्पे ॥ त्रि । चक्रिणि ॥ ग्रामजालिनि ॥ धरति । धृञ्० । अच् । चक्रस्यधरः ॥ चक्रंधारयतिवा । अच् वा हलन्ताच्छिलुक् ॥

चक्रधारणम् । न । अक्षे । रथावयवे । काष्ठविशेषे ॥

चक्रधारा । स्त्री । प्रधौ ॥ चक्रस्यधारा ॥

चक्रनखः । पुं । व्याघ्रनखाभिधेगन्धद्रव्ये ॥

चक्रनदी । स्त्री । गण्डक्याम् ॥

चक्रनामा । पुं । माक्षिकधातौ ॥

चक्रनायकः । पुं । व्याघ्रनखे ॥

चक्रपक्षाटः । पुं । दद्रुम ॥

चक्रपरिव्याधः । पुं । आरग्वधवृक्षे ॥

चक्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥

चक्रपाणिः । पुं । विष्णौ । नारायणे ॥ चक्रं पाणौ यस्य सः । प्रहरणार्थेभ्यःपरे निष्ठासप्तम्याविति सप्तम्याःपरत्वम् ॥

चक्रपादः । पुं । रथे ॥ गजे । हस्तिनि ॥

चक्रपुष्करिणी । स्त्री । मणिकर्णिकायाम् ॥

चक्रफलम् । न । अस्त्रविशेषे । अङ्कने ॥

चक्रबन्धः । पुं । चित्रकाव्यविशेषे ॥

चक्रबन्धुः । पुं । } रवौ ॥
चक्रबान्धवः । पुं । }

चक्रभृत् । पुं । विष्णौ ॥

चक्रभेदिनी । स्त्री । रात्रौ ॥

चक्रभ्रमः । पुं । } कुन्दाख्ये शिल्पियन्त्रे । चक्राकारे शस्त्रोत्तेजनयन्त्रे । शाणे ॥
चक्रभ्रमिः । स्त्री । }

चक्रमण्डली । पुं । अजगरसर्पे ॥

चक्रमर्दः । पुं । चकवँड इति चकौंदी इति च भाषाप्रसिद्धे क्षुपविशेषे । दद्रुघ्ने । एडगजे ॥ चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् ॥ हन्त्युष्णं तत् फलं कुष्ठकण्डुदद्रुविषानिलान् । गुल्मकासकृमिश्वासनाशनं कटुकं स्मृतम् ॥ चक्रं दद्रुं मृद्नाति । मृद क्षोदे । कर्मण्यण् ॥

चक्रमर्दकः । पुं । चक्रमर्दे ॥ स्वा० कन् ॥

चक्रयानम् । न । असाङ्ग्रामिके रथे । पुष्परथे ॥

चक्रयानकम् । न । चक्रयाने ॥

चक्ररदः । पुं । शूकरे ॥

चक्रलक्षणः । पुं । विष्णौ ॥ रथे ॥



चक्रलक्षणा । स्त्री । गुडूच्याम् ॥

चक्रवतासः । पुं । वट्टरसालवृक्षे ॥

चक्रला । स्त्री । उच्चटायाम् । मुस्ताविशेषे ॥ चक्रं लाति । ला० । आत इति कः ॥

चक्रवर्त्ती । पुं । समुद्रपरिवृतायाः सर्वभूमेरीश्वरे । सार्वभौमे ॥ चक्रे भूमण्डले राजमण्डले वर्त्तितुं चक्रं सैन्यं वर्त्तयितुं सर्वभूमौ चालयितुं वा शीलमस्य ॥ सुप्यजातौ णिनिः ॥ अवश्यं वा चक्रं वर्त्तयति । आवश्यके णिनिः ॥ वास्तूके ॥ डगणे मध्यगुरोः । ऽ । संज्ञायाम् ॥ त्रि । चक्रवर्त्तिनि ॥

चक्रवर्त्तिनी । स्त्री । जन्याम् । अलक्तकायाम् ॥ अलक्तके ॥ जटामांस्याम् ॥

चक्रवाकः । पुं । कोकपक्षिणि । चकवा इति भाषा ॥ अस्य मांसं लघु स्निग्धं बलप्रदमुदाहृतम् ॥ चक्रशब्देन वच्यते । वचपरिभाषणे । घञ् । न्यङ्क्वादिः ॥

चक्रवाकी । स्त्री । चक्रवाकस्य स्त्रियाम् । चकवी इति भाषा ॥ जातेरिति ङीष् ॥

चक्रवाटः । पुं । क्रियारोहे ॥ शिखातरौ ॥ पर्यन्ते ॥ मेरोर्मस्तकसमीपे लोकपालाश्रयभूताया अष्टादशसहस्रयोजनविस्तीर्णायां नेमौ ॥

चक्रवाडः । पुं । लोकालोकाख्यपर्वते ॥ चक्राकारेण वाडते । वाडृ आप्लाव्ये । अच् ॥ न । चक्रवाले । मण्डले ॥ चक्रं भूमण्डलं वलते । वल वेष्टने । कर्मण्यण् । डलयोरेकत्वम् ॥

चक्रवातः । पुं । वात्यायाम् । ववूरा इति भाषा ॥

चक्रवालः । पुं । लोकालोकपर्वते ॥ न । मण्डलाकारेण परिणतसमूहे । मण्डले ॥ चक्राकारेण वलते । वल संवरणे । अच् । अन्येषामपीतिदीर्घः ॥ यद्वा । भावेघञिवालः । चक्रमिववालोऽस्य ॥ चक्रं भूमण्डलं वलते । वलवेष्टने । कर्मण्यणुवा ॥ चक्रवालमस्याऽस्तीतिवा । अर्शआद्यच् ॥

चक्रवृद्धिः । स्त्री । वत्सरद्विगुणधनंदातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीतिस्वीकरोति तस्यावृद्धिः सा । सूदका सूद इति भाषा ॥ वृद्धेरपि पुनर्वृद्धि चक्रवृद्धि रुदाहृतेति नारद ॥

चक्रव्यूहः । पुं । युद्धार्थं मण्डलाकारेण सैन्यरचनायाम् ॥

चक्रशल्या । स्त्री । काकतुण्ड्याम् ॥ श्वेतगुञ्जायाम् ॥

चक्रश्रेणी । स्त्री । अजशृङ्ग्याम् ॥

चक्रसंज्ञम् । न । वङ्गे ॥

चक्रसम्बरः । पुं । बुद्धभेदे । वज्रटीके ॥

चक्रा । स्त्री । नागरमुस्तायाम् ॥ कर्कटशृङ्ग्याम् ॥

चक्राङ्गः । पुं । श्वेतगरुति । हंसे ॥ चक्राण्यङ्गान्यस्य ॥ रथे ॥ चक्रमङ्गमस्य ॥

चक्राङ्गा । स्त्री । सुदर्शनाख्यां लतायाम् ॥

चक्राङ्गी । स्त्री । कटुरोहिण्याम् ॥ विश्वमोचिकायाम् ॥ मञ्जिष्ठायाम् ॥ वृषपर्ण्याम् ॥ कर्कटशृङ्ग्याम् ॥ चक्राकारमङ्गमस्याः । गौरादित्वान् ङीष् ॥ हंस्याम् ॥

चक्राटः । पुं । विषवैद्ये ॥ धूर्त्ते ॥ दीनारे ॥

चक्राधिवासी । पुं । नारङ्गवृक्षे । किर्मीरत्वचि ॥

चक्रायुधः । पुं । सूर्यते ॥

चक्राह्वः । पुं । चक्रमर्द्दे ॥

चक्रिकः । पुं । घटिके । घटिकावादके ॥ चक्रंवाद्यत्वेनास्त्यस्य । ठन् ॥

चक्रिका । स्त्री । दुरधोगे ॥ घुणावर्त्ते ॥ जानुनि ॥ चक्की इतिभाषा प्रसिद्धे द्रव्यस्वरूपे ॥

चक्री । पुं । जालिकभिदि ॥ कोके ॥ कुलाले ॥ अहौ ॥ सूचके ॥ वैष्णवे । नारायणे ॥ चक्रं मनस्तत्त्वात्मकं सुदर्शनाख्यं यस्यास्ति इनिः ॥ चक्रवर्त्तिनि ॥ चक्रमर्द्दे ॥ तिनिशे ॥

व्याघनखे ॥ काके ॥ खरे ॥ त्रि । चक्रविशिष्टे ॥ चक्रमस्यास्ति । अतइनिठनाविति इनिः ॥ चक्रयुक्तरथादियानारूढे ॥

चक्री । स्त्री । चक्री इतिसर्वजनप्रसिद्धायां चूर्णपेषण्याम् । जाँता इति भाषा ॥

चक्रीवान् । पुं । गर्द्दभे ॥ चक्रवद्भ्रमणं चक्रम् । तदस्यास्ति । मतुप् । आसन्दीवदितिसाधुः ॥ चक्रीवान्नाम राजादि ॥

चक्रुः । पुं । कर्त्तरि ॥ करोति । डुकृञ॰ । कृञ्श्चेति चकारात्कुःप्रत्ययोधातोर्द्वित्वञ्च ॥

चक्रेश्वरी । स्त्री । जिनानांविद्यादेवीविशेषे ॥ इतिहेमचन्द्रः ॥

चक्षणम् । न । अवदंशे । मद्यपानरोचकभक्ष्यद्रव्ये । चखना इति भाषा ॥

चक्षाः । पुं । वृहस्पतौ ॥ उपाध्याये ॥

चक्षुःश्रवाः । पुं । सर्पे ॥ चक्षुःश्रवःकर्णौऽस्य । सान्तः ॥

चक्षुर्वर्द्धनम् । न । मेषशृङ्गीदले ॥

चक्षुष्यः । पुं । केतके ॥ पुण्डरीकवृक्षे ॥ शोभाञ्जनवृक्षे ॥ रसाञ्जने ॥ न । सौवीराञ्जने ॥ खर्परीतुत्थे ॥ प्रपौण्डरीके । स्थलपद्मे ॥ त्रि । प्रियदर्शने ॥ अक्षिहिते ॥ चक्षुषाद्दर्शनीये ॥ चक्षुषेहितम् । शरीरावयवाद्यत् ॥

चक्षुष्या । स्त्री । कुलत्थिकायाम् ॥ सुभगायाम् ॥ अजशृङ्ग्याम् ॥ अरण्यकुलत्थिकायाम् ॥ चक्षुषेहिता । यत् । टाप् ॥

चक्षुः । न । लोचने । नयने । नेत्रे । रूपग्रहणलिङ्गेन्द्रिये । रूपप्रकाशके ॥ उद्भूतरूपं नयनस्यगोचरो द्रव्याणि तद्वन्ति पृथक्त्वसङ्ख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ क्रियां जातिं योग्यवृत्तिं समवायञ्च तादृशम् । गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोरिति कारिकावली ॥ दाक्षिण्यात्य सूत्रे चक्षु चक्षुषी नैकपाक्षिनेतिकर्मलोचनम् ॥ चष्टेपश्यत्यनेन चक्षतेरूपमनुभवत्यनेन वा । चक्षिङ्॰ । चक्षेःशिश्चेत्युसिः । शिद्वादार्द्धधातुकत्वात् ख्याञ् न ॥ मेषशृङ्गीवृक्षे ॥

चङ्कुरः । पुं । स्यन्दने । रथे ॥ वृक्षे ॥ न । मोरणो । यानमात्रे ॥ चङ्कति । चकि: सौत्रः । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यउरच ॥

चङ्क्रमणम् । न । अतिशयभ्रमणे । इतस्ततो भ्रमणे ॥ पुनः पुनर्भ्रमणे ॥ अनतिदेहपीडाकारकचङ्क्रमणस्य गु-





णाः । आयुर्बलमेधाग्नीन्द्रियशुद्धिकारित्वम् ॥ सदोपानद्धृतपादत्वं क्रमणगुणाः । अनारोग्यत्वम् । अनायुष्यत्वम् । इन्द्रियदृष्टिनाशित्वं चेति राजवल्लभः ॥

चङ्गः । त्रि । शोभने ॥ दक्षे ॥ इतिमेदिनी ॥

चचेण्डा । स्त्री । फललताविशेषे । वृहत् फले ॥

चञ्चः । पुं । पञ्चाङ्गुले ॥ चञ्चति । चञ्चुगतौ । पचाद्यच् ॥

चञ्चत् । त्रि । देदीप्यमाने ॥

चञ्चत्पुटः । पुं । तालप्रभेदे ॥ ताले चञ्चत् पुटेचैयं गुरुद्वन्द्वं लघुप्लुतम् ॥

चञ्चरी । स्त्री । तिन्तिडीवृते ॥ भ्रमर्याम् ॥

चञ्चरीकः । पुं । भ्रमरे । षट्पदे ॥ चञ्चति । चञ्चु० । पर्फरीकादित्वात् साधुः ॥ चरति वा । चर० । पर्फरीकादित्वादीकन् चरेर्नुम्च ॥

चञ्चलः । पुं । कामुके ॥ अनिले ॥ त्रि । अस्थिरे । सदाचलनस्वभावे । लोले । तरले ॥ कदाचिच्चञ्चलासती । चञ्चति । चञ्चु० । बाहुलकात् अलच् ॥

चञ्चला । स्त्री । लक्ष्म्याम् ॥ तडिति ॥ पिप्पल्याम् ॥ वर्णवृत्तविशेषे । य



था । तूर्यतालपरिराजमेरुहारनायकेन चामरध्वजेन चापि मण्डिता सुवर्णकेन । वर्णिताऽतिसुन्दरेण पन्नगेन्द्रपिङ्गलेन चञ्चलाचकोरचारुलोचने सुमङ्गलेन ॥ यथा । आलियाति मञ्जुकुञ्जगुञ्जितालिमालितेन भास्करात्मजाविराजिरम्यतीरकाननेन । शोभिते स्थले स्थितेन सङ्गता यदूत्तमेन माधवेन भाविनी तडिल्लतेव नीरदेनेति ॥ चञ्चनम् । चञ्चु० । घञ् । चञ्चं लाति । ला० कः ॥

चञ्चा । स्त्री । नलनिर्मिते । नलनिर्मिते । चांच इतिगौडभाषा ॥ तृणनिर्मितपूरुषे । बजूका इतिभाषा ॥ चञ्चति । चञ्चु० । अच् । टाप् ॥ चञ्चेव मनुष्यः । लुम्मनुष्य इति कनोलुप् ॥

चञ्चुः । पुं । नाडीचशाके ॥ व्यडम्बके । रक्तैरण्डे ॥ एरण्डसामान्ये ॥ क्षुद्रचञ्चुवृक्षे ॥ स्त्री । पक्षिणामोष्ठे । त्रोट्याम् । चूंच इति भाषा ॥ चञ्चति । चञ्चु० । बाहुलकादुः ॥ चिञ्चुकायाम् । चेंचूनाडीतिश्रुते ॥ चञ्चुःशीता सरा रुच्या स्वाद्वी दोषघ्नयामता । धातुपुष्टिकरी बल्या मेध्या पिच्छिलिका स्मृता ॥ पत्रशाकविशे

घे। विजलायाम्। चीरपत्रिकायाम्॥

चञ्चुका। स्त्री। चञ्चौ। पक्षिणामोष्ठे॥

चञ्चुपत्र.। पु। सुशाके। विजलायाम्॥

चञ्चुभृत्। पु। स्त्री। } खगे। पक्षि

चञ्चुमान्। पुं। स्त्री। } णि॥

चञ्चुर:। पुं। चञ्चुशाके॥

चञ्चुसूचि। पुं। } सुगृहे। पीतसु

चञ्चुसूचिक। पुं। } खडे। बया इतिभा

षा॥ चञ्चौ सूचिरस्य। स्वार्थे कः॥

चञ्चू। स्त्री। चञ्च्वाम्। चोच्याम्॥ अहुल.॥

चञ्चक। पु। चेचू इतिप्रसिद्धे शाके॥

चटक। पुं। कलविङ्के। गृहनीडे। चिडा इतिभाषा॥ चटतिभिनत्ति गृहीतधान्यादिकं मुखेन। चटभेदने। पचाद्यच्। तस्मात् स्वार्थेकः॥

चटकका। स्त्री। चटकायाम। चटकिकायाम्॥ उदीचामात.स्थानइति पक्षेइदादेशाभाव'॥

चटका। स्त्री। चटकस्यस्त्रियाम्॥ चटकस्य चटकाया वा स्त्र्यपत्ये। चिडिया इतिभाषा॥ चटकस्य चटकाया वा स्त्र्यपत्यम्। चटकायाऐरक् स्त्रियामपत्येलुग्वक्तव्य.। तस्य टावन्तात् तद्धितेलुसे लुक्तद्धितलुकी तिटापोलुकि पुनरजादिलक्षणाष्टाप् सच जातिलक्षणस्यङीषोबाधइति



भाव:॥ नचाणप्रत्ययस्यादितीकार: शङ्क्य: चटकायाऐरगितिलिङ्गादस्यादिपुनिपातनात्तातदप्रवृत्ते:। क्षिपकादित्वान्नेत्व मितितुयुक्तम्। पुंयोगलक्षणो जातिलक्षणो वा ङीप् अजादिपाठाद्बाध्यते॥ श्यामाख्यपक्षिणि॥

चटकाशिर:। न। पिप्पलीमूले॥ चटकाया:शिरइव॥

चटकिका। स्त्री। चटककायाम्॥ उदीचामात:स्थानेयकपूर्वाया: इतिपक्षेइदादेश'॥

चटु। अ। प्रियेवाक्ये॥

चटु:। पुं। चाटौ। प्रियेवाक्ये॥ प्रतिनामासने॥ पिचण्डे। उदरे॥ चटति। चट०। मृगय्वादित्वात् कु:॥

चटुल:। त्रि। चञ्चले॥ शोभने॥ चटति। बाहुलकादुलच्॥ मत्वर्थे सिध्मादित्वाल्लज्वा॥

चटुला। स्त्री। विद्युति॥ अजा० टाप्॥

चटुलोल.। त्रि। चाटुलोले। सुचञ्चले॥ इति हारावली॥

चट्टलम्। न। सिद्धपीठविशेषे॥ यथा। चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखर। व्यक्तरूपा भगवती भवानी तत्रदेवता। विशेषत. कलियुगे वसामिचन्द्रशेखरे। इति॥

चणकः । पुं । शस्यविशेषे । हरिमन्थे ॥ चणकः शीतलो रूक्षः पित्तरक्तकफापहः । लघुः कषायो विष्टम्भी वातलो ज्वरनाशनः ॥ स चाङ्गारैस्सम्भृष्टस्तैलभृष्टश्च तद्गुणः । आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्त्तितः ॥ शुष्कभृष्टोऽतिरूक्षः स्याद्वातकुष्ठप्रकोपनः । स्विन्नः पित्तकफं हन्यात् सूपः क्षोभकरोऽहितः ॥ आर्द्रोऽतिकोमलो रुच्यः पित्तशुक्रहरो हिमः ॥ * ॥ हरितार्द्रचणकान्यन्तु । सुहरितहरिमन्थं चोदभिन्नो नखाग्रैः प्रथममुदकसिक्तो वेसवारेण सिद्धः । लवणमरिचसङ्गात् तैलहिङ्गुप्रसिक्तः शिखरयति विभोक्तुर्जाठरं मन्दवह्निम् ॥ कोलाभिधानकफलं परिगृह्य शुद्धं तप्ते घृते सुखचितकथितोपयाभ्याम् । संसाधितं सुरभितं सुचिरामठेन जिह्वातले विशति नित्यमतिप्रकामम् ॥ चणयते । चणदाने । कुन् ॥ मुनिविशेषे ॥

चणकरोटिका । स्त्री । चणकसुद्रायाम् ॥ चाणक्यरोटिका रूक्षा श्लेष्मपित्तास्त्रनुद्गुरुः । विष्टम्भिनी न चक्षुष्या तद्गुणा तिलशष्कुली ॥

चणकशाकम् । न । स्वनाम्ना प्रसिद्धे शाके ॥ रुच्यं चणकशाकं स्याद् दुर्जरं कफवातकृत् । अम्लं विष्टम्भजनकं पित्तनुद्दन्तशोथहृत् ॥ सुकृतं चाणकं शाकं मन्दतक्रेण साधितम् । सहिङ्गुलवणोत्तमं भर्जितं रामठान्वितम् ॥ चारात्मभाषसत्वता, स्वयकाय वाषा सम्मर्दिताम्मरिचसैन्धवशृङ्गवेरैः । सम्यक् चूर्णिताः कटुकतैलयुतैः सुपक्वैर्भृष्टैःसुहिङ्गुचणकैः परिहृतवासाः ॥

चणकात्मजः । पुं । वात्स्यायनमुनौ ॥

चणकाम्लम् । न । चणकक्षारे ॥ चणकाम्लकमत्युष्णं दीपनं दन्तहर्षणम् । लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत् ॥

चणकात्मिका । स्त्री । चेत्रस्थफलस्यचणकपत्रस्थितवारिणि ॥

चणद्रुमः । पुं । चुद्रगोचुरे ॥

चणपत्री । पुं । रुदन्तीवृक्षे ॥

चणिका । स्त्री । तृणविशेषे । गोदुग्धायाम् ॥

चण्डः । पुं । तिन्तिडीवृक्षे ॥ यमकिङ्करे ॥ दैत्यविशेषे ॥ न । तीक्ष्णे ॥ त्रि । अतिकोपने ॥ तीव्रे ॥ तीक्ष्णवति ॥ चण्डते । चडिकोपे । पचाद्यच् ॥ चमति । चमुअदने । चणति वा । चणदाने । अमन्ताड्डः ॥

चण्डता । स्त्री । उग्रतायाम् ॥ भावे तल् ॥

चण्डनायिका । स्त्री । दुर्गायाम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥

चण्डमुण्डी । स्त्री । स्थानविशेषे ॥ यथा । चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरीति ॥

चण्डहृद्रिका । स्त्री । विद्याविशेषे ॥

चण्डवती । स्त्री । चण्डीविशेषे ॥

चण्डवृष्टिप्रताप । पुं । दण्डकविशेषे ॥ यथा । यदिह नयुगलं ततः सप्तरेफा सदा चण्डवृष्टिप्रतापो भवेद् दण्डकः । यथा । प्रलयघनघटासमारम्भसंभावनीचण्डवृष्टिप्रतापाकुलं गोकुलम् सपदि समवलोक्य सलीलेन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया । कमलनयनं रचरचोतिगर्ज्जत्सैसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गल्लदभिनवधातुधाराविचित्राङ्गरागो मुराराति रस्तु प्रमोदाय वदति ॥

चण्डा । स्त्री । धनहरीद्रुमे । चोरनामगन्धद्रव्ये ॥ शङ्खपुष्प्याम् ॥ अष्टनायिकान्तर्गतनायिकाविशेषे ॥ छिन्नानां शासनदेवताविशेषे ॥ लिङ्गिनीलतायाम् ॥ कपिकच्छ्वाम् ॥ आखुपर्ण्याम् ॥ श्वेतदूर्वायाम् ॥ पद्मा सतीनद्याम् ॥ टाप् ॥

चण्डांशुः । पुं । सूर्य्ये ॥ चण्डा अंशवो यस्य सः ॥

चण्डातः । पुं । करवीरे ॥ चण्डमतति । अत० । कर्मण्यण् ॥

चण्डातकः । पुं । न । अर्द्धोरुके । वरस्त्रीणामर्द्धोरुपर्य्यन्तवस्त्रे ॥ चण्डां कोपनां वरस्त्रियमतति । अत० । क्वुन् ॥

चण्डालः । पुं । शूद्राद्ब्राह्मण्यामुत्पन्ने । प्लवे । मातङ्गे । दिवाकीर्त्तौ । श्वपचे । नृणामधमे ॥ चण्डते । चडि० । पतिचण्डिभ्यामालञ् ॥

चण्डालकन्दः । पुं । कन्दविशेषे ॥

चण्डालवल्लकी । स्त्री । चण्डालवीणायाम् । कण्डोलवीणायाम् । किङ्गरीति भाषा ॥ चण्डालवल्लकी ॥

चण्डालिका । स्त्री । किन्नरायाम् ॥ उमायाम् ॥ ओषधीभेदे ॥

चण्डिः । स्त्री । चण्ड्याम् ॥ चण्डति । चडि० । सर्वधातुभ्य इन् ॥

चण्डिका । स्त्री । भवान्याम् । चण्ड्याम् ॥ अथ स्थानममरेशे ॥ चण्डे क चेरिवुल् । ह्रस्वम् ॥

चण्डिकेश्वरः । पुं । शिवे ॥

चण्डिमा । पुं । चण्डत्वे ॥ चण्डस्य भावः । पृथ्वा० इमनिच् ॥

चण्डिलः । पुं । रुद्रे ॥ वास्तूकशाके ॥ ना

अर्पिते ॥

चण्डिला । स्त्री । नदीविशेषे ॥

चण्डी । स्त्री । कात्यायन्याम् । दुर्गायाम् ॥ हिंस्रायां नार्याम् ॥ कोपनायां योषिति ॥ मार्कण्डेयपुराणोक्ते श्रीदेवीमाहात्म्ये ॥ अतिजगतीसंज्ञकचतुर्दशाक्षरवृत्तविशेषे । यथा । नियुगलसयुगलगैरिति चण्डी ॥ जयति दितिजरिपुलाघवलीलाक्षुभितकमलकरकायिमौलौ । चरणकमलयुगचापलचण्डी पदनखरुचिजितमेघमणिन्दौ ॥ चण्डति चण्डि कोपे ॥ पचाद्यच् । षिद्गौरादिभ्यश्चेति ङीष् ॥

चण्डीकान्तः । पुं । सदाशिवे ॥ चण्ड्याः कान्तः ॥

चण्डीकुसुमः । पुं । रक्तकरवीरवृक्षे ॥

चण्डीशः । पुं । शिवे ॥

चण्डुः । पुं । उन्दुरौ ॥

चतुःपत्री । स्त्री । क्षुद्रपाषाणभेदिनि ॥

चतुःपर्णी । स्त्री । क्षुद्राम्लिकायाम् ॥

चतुःपला । स्त्री । नागबलायाम् ॥

चतुःपुण्ड्रः । पुं । भिण्डावृक्षे ॥

चतुःशालम् । नं । सञ्जवने । अन्योन्याभिमुखशालचतुष्टयगृहे ॥ चतस्रः शालाः समाहृताः । पात्रादिभ्यो वेति क्लीबत्वम् ॥ पक्षे चतुःशाली ॥



चतुःषष्टिः । स्त्री । कलाभेदे । कलान्युपविद्यायाम् ॥ सङ्ख्याभेदे । चौसठ इति भाषा ॥ बहुव्रीचि । ऋग्वेदे ॥ चतुरधिका षष्टिः ॥

चतुःसमम् । नं । मिलितचन्दनागुरुकस्तूरीकुङ्कुमरूपे ॥ औषधविशेषे ॥ यथा ॥ लवङ्गं सैन्धवं पथ्या यमानी च चतुःसमम् । आमशूलविबन्धघ्नं पाचनं भेदि दीपनम् ॥ अन्यच्च । जातीफलं विदशपुष्पसमन्वितञ्च कोरञ्च टङ्कणयुतं चरकेण चोक्तम् । चूर्णानि मा चकलितासहितानि पीढया आमातिसारमखिलं गुरु हन्ति शूलमिति ॥

चत्वारः । त्रि । सङ्ख्याविशेषे । चार इति भाषा ॥ सङ्ख्येये ॥ यथा । चत्वारो वेदाः । चतस्रः स्त्रियः । चत्वारि फलानि ॥ चतति चत्यते वा । चते याचने । चतेरुरन् ॥

चतुरः । पुं । वक्रगतौ ॥ न । हस्तिशालायाम् ॥ त्रि । नेत्रगोचरे ॥ चटुकारे ॥ कार्यकुशले । दक्षे । पटौ । निपुणे ॥ चतति चत्यते वा । चते० । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥

चतुरसा । स्त्री । वर्णवृत्तभेदे ॥ यथा । द्विजवरकर्णा विह रसवर्णा भ

स्योपरि चतुष्टये । नौकाचतुष्टयं यत्र क्रियते यस्य नौकया ॥ नौकाचतुष्टयं तत्र वृहन्नौकेति मण्यते ॥ * ॥ नकुलैर्यदि कदा राजन् गजस्याभिमुखं गजम् ॥ यदि कुर्वीत धर्मज्ञ पापग्रस्तो भविष्यति । स्थाना भावे यदा पार्थिव स्तिनं हस्तिसम्मुखम् ॥ करिष्यति तदा राजन्निति गौतमभाषितम् । प्राप्ते गजद्वये राजन् हन्तव्यो मन्त्रिणा गजः ॥ इति तिथ्यादितत्त्वे चतुरङ्गक्रीडनम् ॥

चतुरङ्गा । स्त्री । घोटिकाभूषे ॥

चतुरङ्गिणी । स्त्री । सेनायाम् ॥ रथगजहयपदातयः चत्वारि अङ्गानि यस्याम् सा ॥

चतुरङ्गुलः । पुं । धनवहेडा इति प्रसिद्धे आरग्वधवृक्षे ॥ चतस्रोऽङ्गुलयः प्रमाणमस्य पर्वणस्तद्योगात् वृक्षोऽपि ॥

चतुरब्दा । स्त्री । चतुर्हायण्यां गवि ॥ चत्वारोऽब्दा वयःप्रमाणमस्याः । व्याप्तीयष्टक् । अध्यर्द्धेतिसुक् ॥

चतुरम्लम् । न । कोलदाडिमवृक्षाम्लाऽम्लवेतसे ॥ अम्लवेतसवृक्षाम्ल हरवजम्बीरनिम्बुकैः । चतुरम्लमिदं प्रोक्तमन्यैभावप्रकाशके ॥

चतुरस्रः । त्रि । चतुष्कोणे ॥ लग्नाच्चतुर्थाऽष्टमस्थाने । लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञे ॥ चतस्रोऽस्रयोऽस्य ॥ सुमतिसुश्लेष्मजम्भोतिपातितः ॥

चतुरात्मा । पुं । परमात्मनि परमेश्वरे ॥ सर्गादिषु पृथग्विभूतयश्चतस्र आत्मानि सन्त्यस्य । यथा । ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरे रेता जगतः सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलयायैता जनार्दनविभूतयः ॥ इति विष्णुपुराणम् ॥ यद्वा । रागद्वेषादिरहितत्वात् चतुरं मनः आत्माऽस्य । मनोबुद्ध्यहङ्कारचित्तचतुष्टयात्मत्वाद्वा ॥

चतुराननः । पुं । ब्रह्मणि । अजयोनौ ॥ यथा । तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः । परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानीति । श्रीभागवतम् । चत्वारि आननान्यस्य ॥

चतुरूषणम् । न । कणामूलसहिते त्र्यूषणे ॥ त्र्यूषणं सकणामूलं कथितं चतुरूषणम् । व्योषस्येव गुणाः प्रोक्ता अधिकाश्चतुरूषणे ॥

चतुर्गतिः । पुं । नारायणे ॥ चतुर्णां

माश्रमाणां वर्णानाञ्च यथोक्तकारिणां गतिराश्रयः॥ कच्छपे॥

चतुर्ज्जातकम्। न। त्वगेलापत्रकना गकेसरेषु॥ एतच्चरोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघुपित्ता ग्निकृद्वर्ण्यं कफवात विषापहम्॥

चतुर्थः। त्रि। तुरीये॥ चतुर्णां पूरणः तस्यपूरणेडट् तस्यथुगागमः॥

चतुर्थकः। पुं। चतुर्थेह्नि चतुर्थक इति ख्यातस्थिते विषमज्वरविशेषे॥ चतुर्थेह्निभवः। कालप्रयोजनाद्रोग इति कन्। दिनद्वयन्त्वतिक्रम्य यःस्या त्स चिचतुर्थकःस्मृतः। चतुर्थक श्चतुर्थेह्नीत्यर्थागमदिनग्रहणात्ख्या खेयम्॥

चतुर्थांशः। त्रि। चतुर्भागैकभागे। तुरीये। पादे॥

चतुर्थिका। स्त्री। पलपरिमाणे॥

चतुर्थी। स्त्री। चन्द्रस्यचतुर्थकलाक्रियारूपायां तिथौ॥ तत्रजातस्यफलं यथा। स्वपुत्रमित्रप्रमदाप्रमोदी द्रताभिलाषी कृपया समेतः। विवादशीलो विजयी विवादे भवेच्चतुर्थीप्रभवः कठोर इति॥ ङेभ्याम्भ्यस् इति चिके॥ टित्त्वान्ङीप्॥

चतुर्द्दन्तः। पुं। ऐरावते। इन्द्रस्यगजे॥ चत्वारोदन्ताः अस्य॥

चतुर्द्दशः। त्रि। चतुर्द्दशानांपूरणे॥ तस्यपूरणेडट्॥

चतुर्द्दश। त्रि। सङ्ख्याविशेषे १४॥ सङ्ख्येये॥ चत्वारश्च दशच॥ चतुरधिकादशवा॥

चतुर्द्दशभुवनम्। न। पञ्चीकृतेभ्यो भूतेभ्योजातानि भूर्भुवःस्वर्म्महोजनस्तपःसत्यमित्येतन्नामकानि उपर्युपरिविद्यमानानि सप्त। अतलवितलसुतलरसातलतलातलमहातलपातालनामकानि अधोऽधोविद्यमानानिच सप्त। मिलित्वाचतुर्द्दशभुवनानि भवन्ति॥ चतुर्द्दशानां भुवनानांसमाहारः॥

चतुर्द्दशलोकम्। न। चतुर्द्दशभुवने॥

चतुर्द्दशी। स्त्री। चन्द्रस्य चतुर्द्दशकलाक्रियारूपायांतिथौ॥ तत्रोत्पन्नस्य फलम्। यथा। विरूद्धमार्गः पुरुषः सरोष श्चौरः कठोरः परवञ्चकश्च। परान्नभोक्ता परदाररक्तश्चतुर्द्दशीचे जननस्य कालेदिति॥ टित्त्वान्ङीप्॥

चतुर्द्दोलः। पुं। न। चतुर्द्दोलइति चन्दोलइतिचख्याते द्विपद्वाह्ये यानविशेषे॥ यथा। राज्ञोयद् द्विपदं यानं विशेषाख्यमस्तंविदुः। चतुर्भिरुह्यतेयत्तुचतुर्द्दोलंतदुच्यते इति-

॥ अथ भोजः । चतुर्भिर्वाहकैर्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः । सप्तभिरष्टाभिरुदितं चतुर्दोलमनुत्तमम् ॥ * ॥ तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् । चतुर्विधानां भूपानां चतुर्दोलाः प्रकाशिताः ॥ चित्रसम्मितायामो वितस्तपरिणाहवान् । हस्तद्वयोन्नतः प्रोक्तश्चतुर्दोलो जयाख्यया ॥ १ ॥ चतुर्हस्तायतो यस्तु सार्द्धहस्तस्तदन्यथा । चतुर्दोलः समाख्यातः कल्याण इति विश्रुतः ॥ २ ॥ पञ्चहस्तायतो यस्तु वितस्तपरिणाहवान् । तावदेवोन्नतो वीरश्चतुर्दोल उदाहृतः ॥ ३ ॥ आयामपरिणाहाभ्यां चतुर्हस्तमितोऽपि यः । चतुर्दोलोऽयं सिंहसञ्ज्ञकेनोन्नतः शुभः ॥ ४ ॥ * ॥ स चैव द्विविधः प्रोक्तः सच्छदिश्च विनिश्छदिः । आद्यः समस्तवर्षासु परः केचिद्घनात्यये ॥ * ॥ सर्वेषामेव काष्ठानां दण्डः स्यादश्ववारणः । चन्दनेनैव घटना सर्वेषामुपयुज्यते ॥ लोमसंसर्ववस्त्रेषु कनकं सर्वधातुषु । कुम्भश्च पद्मकोषश्च गिरिश्चेति यथाक्रमम् ॥ चैदेशानां महीन्द्राणां चतुर्दोलेषु विन्यसेत् ॥ दर्पणं चार्द्धचन्द्रश्च हंसः केकी शुको गजः । अश्वः सिंहश्च



स्वाग्रे मादिच्यादिदशोत्तरान् ॥ मणिनियमस्तु दण्डवत् ॥ * ॥ रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथा गणः । नीलः कपिल इत्युक्तः पताकानामसङ्करः ॥ चतुर्दोलः सपताकः शुभयानमिति स्मृतः ॥ * ॥ मुक्ताजालैर्दशभिर्युक्तः स्याद्राजकेशानाम् । चामरदण्डैर्दशभिर्दिग्गजयिनां चतुर्दोलः ॥ चापपञ्चकपुच्छश्चेत् सर्वोपरि परिन्यसेत् । याचास्तिहिरण्यनामा चतुर्दोलो महीभुजाम् ॥ स्तम्भच्छादरहितो निश्छदिश्च चतुर्दोलः । मानं पूर्ववत् ॥ * ॥ स पुन द्विविधः प्रोक्तः सध्वजश्च निर्ध्वजः । ध्वजान् पञ्च न्यसन्ति षड्वर्गविजयैषिणः ॥ तेषां मानन्तु चत्वारः स्वामिहस्तैः कसम्मिताः । कोणेषु पञ्च दण्डेषु हस्तद्वयमितो ध्वजौ ॥ सुवर्णं रजतं युग्मं त्रिविधानां महीभुजाम् । मणिचामरकुम्भाशंखङ्गादीनां विनिश्चय ॥ चतुर्दोलश्च जो राज्ञां विज्ञेयो नवदण्डवत् । निर्ध्वजोऽच चतुर्दोले मानमन्यत् शृणु ॥ आयामपरिणाहाभ्यां चतुर्हस्तमितोऽपि यः । विजयो नाम विख्यातश्चतुर्दोलो महीभुजाम् ॥ विजयो मङ्गलो भव्यो वितस्ये केक

मोक्षेषु ॥ चत्वारिभद्राणिश्रेष्ठान्यत्र वृन्दे ॥ यद्वा । चत्वारिभद्राणि । दिक्सङ्ख्ये संज्ञायामितिसमासः ॥

चतुर्भुजः । पुं । विष्णौ । माधवे ॥ त्रि । भुजचतुष्टयविशिष्टे ॥ चत्वारोभुजायस्य ॥ यद्वा । भुङ्क्ते भुनक्ति इति भुजः । चतुर्णां धर्मार्थकाममोक्षाणां भुजः ॥

चतुर्मुखः । पुं । ब्रह्मणि । परमेष्ठिनि ॥ औषधविषये रसविशेषे ॥ यथा । रसगन्धकलौहाभ्रं समं सूताङ्घ्रिहेमच । सर्वं खल्लतले पिष्ट्वा कन्यारसविमर्दितम् ॥ एरण्डपत्रैरावेष्ट्य धान्यराशौ दिनत्रयम् । संस्थाप्य ततउद्धृत्य सर्वरोगेषुयोजयेत् ॥ एतद्रसायनवरं त्रिफलामधुसंयुतम् । तद्यथाग्निबलं खादेद्दीपितनाशनम् ॥ क्षयमेकादशविधं कासं पञ्चविधं तथा । कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम् ॥ ग्रहणीं सर्वां नाशयेत्तं विसर्पं विद्रधिं तथा ॥ अपस्मारग्रहोन्मादान् सर्वार्शांसित्वगामयान् । क्रमेणासेवितं हन्ति वृष्टिचमिन्द्राशनिर्यथा ॥ पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारणम् । चतुर्मुखोणदेवे



न कृष्णात्रयेणद्भाषितम् ॥ इतिभैषज्यरत्नावली ॥ चत्वारिमुखानि यस्य ॥

चतुर्मूर्त्तिः । पुं । विष्णौ ॥ चतस्रोमूर्त्तयो विराट्सूत्रात्माव्याकृततुरीयात्मनोऽस्य ॥ सिता पीता रक्ता कृष्णा चेति चतस्रो मूर्त्तयोऽस्य वा ॥

चतुर्युगम् । न । चतुर्षु सत्यत्रेताद्वापरकलिसंज्ञकेषु ॥ चतुर्णां युगानां समाहारः । पात्रादित्वात् स्त्रीत्वं न ॥

चतुर्वक्त्रः । पुं । ब्रह्मणि । वेधसि ॥

चतुर्वर्गः । पुं । धर्मार्थकाममोक्षेषु मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विद्यः । पुं । चातुर्वेद्ये । चतुर्वेदवेत्तरि ॥

चतुर्विधशरीरम् । न । जरायुजाण्डजस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधशरीराणि भृत्वा मुक्त्वा सहस्रशः । सुकृताच्चामनोभूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

चतुर्बीजम् । न । मेथिकादिचतुष्टये ॥ मेथिका चन्द्रसूरश्च कालाजाजी यवानिका । एतच्चतुष्टययुक्तं चतुर्बीजमितिस्मृतम् ॥ तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयान् । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथामितिभावप्रकाशः ॥

चतुर्व्यूहः । पुं । विष्णौ । नारायणे ॥

मोक्षेषु ॥ चत्वारि भद्राणि श्रेष्ठान्यस्य ॥ यद्वा । चत्वारि भद्राणि । दिक्‌सङ्ख्ये संज्ञायामिति समासः ॥

चतुर्भुजः । पुं । विष्णौ । माधवे । त्रि । भुजचतुष्टयविशिष्टे ॥ चत्वारो भुजा यस्य सः ॥ यद्वा । भुङ्क्ते भुनक्ति इति भुजः । चतुर्णां धर्मार्थकाममोक्षाणां भुजः ॥

चतुर्मुखः । पुं । ब्रह्मणि । परमेष्ठिनि ॥ औषधविशेषे रसविशेषे ॥ यथा । रसगन्धकलौहाभ्रं समं सूतांऽघ्रि हेम च । सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्दितम् ॥ एरण्डपत्रे राशौ छत्र धान्यराशौ दिनत्रयम् । संस्थाप्य तत उद्धृत्य सर्वरोगेषु योजयेत् ॥ एतद्रसायनवरं त्रिफलामधुसंयुतम् । यथाग्निबलं खादेद्दीपितमाग्निमम् ॥ क्षयमेकादशविधं कासं पञ्चविधं तथा । कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ शूलं श्वासञ्च हिक्काञ्च मन्दाग्निं चाम्लपित्तकम् । रोगान् सर्वान् नाशयति वातं विसर्पं विद्रधिं तथा ॥ अपस्मारग्रहोन्मादान् सर्वार्शांसि त्वगामयान् । क्रमेणसेवितं हन्ति तमश्चमिन्द्रा ऋनिर्यथा ॥ पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारकम् । चतुर्मुखोऽदिते

न कुर्याद्यैर्भयवर्जितम् ॥ इति प्रयोगामृतम् ॥ चत्वारि मुखानि अस्य ॥

चतुर्मूर्त्तिः । पुं । विष्णौ ॥ चतस्रो मूर्त्तयो विराट्सूत्रात्माव्याकृततुरीयात्मनोऽस्य ॥ सिता पीता रक्ता कृष्णा चेति चतस्रो मूर्त्तयोऽस्य वा ॥

चतुर्युगम् । नं । चतुर्षु सत्यत्रेताद्वापरकलिसंज्ञकेषु ॥ चतुर्णां युगानां समाहारः पात्रादित्वात् स्त्रीत्वं न ॥

चतुर्वक्त्रः । पुं । ब्रह्मणि । वेधसि ॥

चतुर्वर्गः । पुं । धर्मार्थकाममोक्षेषु मिलितेषु ॥ चतुर्णां वर्गः समूहः ॥

चतुर्विंशः । पुं । वासुदेवे । चतुर्वेदवेत्तरि ॥ [illegible]

चतुर्विधशरीरम् । नं । जरायुजाण्डजस्वेदजोद्भिज्जाख्येषु ॥ चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः । सुकृताज्ज्ञानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥

चतुर्बीजम् । नं । मेथिकादिचतुष्टये ॥ मेथिका चन्द्रसूरश्च कालाजाजी यवानिका । एतच्चतुष्टयं युक्तं चतुर्बीजमिति स्मृतम् ॥ तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयान् । अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम् ॥ इति भावप्रकाशः ॥

चतुर्व्यूहः । पुं । विष्णौ । नारायणे ॥

सृष्ट्यादिकार्य्यार्थं चत्वारो व्यूहा वि
भागा वासुदेवसङ्कर्षणप्रद्युम्नानिरु
द्धसंज्ञा मूर्त्तयो यस्य सः। यथा। व्यू
ह्यात्मानं चतुर्द्धा वै वासुदेवादिमूर्त्ति
भिः। सृष्ट्यादीन् प्रकरोत्येष वि
श्रुतात्मा जनार्द्दन इति व्यासवचन
म्॥ तथाच मार्कण्डेयपुराणे मूलका
रणं वासुदेवाख्यं व्यूहमुक्तोक्तम्।
द्वितीया पृथिवीमूर्द्ध्ना शेषाख्या धा
रयत्यधः। तामसी सा समाख्याता
तिर्य्यक्त्वं समुपाश्रिता॥ तृतीया कर्म्म
कुरुते प्रजापालनतत्परा। सत्त्वोद्रि
क्ता तु सा ज्ञेया धर्म्मसंस्थानकारिणी॥
चतुर्थी जलमध्यस्था शेते पन्नगतल्प
गा। रजस्तस्या गुणः सर्गं सा करोति स
दैवहीत्यादि॥ शरीरपुरुषश्छन्दः
पुरुषो वेदपुरुषो महापुरुष इति बह्वृ
चोपनिषदुक्ताश्चत्वारः पुरुषा व्यूहा
अस्येति वा॥ न। सांख्ययोगशा
स्त्रे॥ तत्र हि हेयं तस्य हेयहेतु र्हा
नोपायश्चेति चत्वारो व्यूहाः प्रतिपा
द्या भवन्ति। तत्र त्रिविधं दुःखं हे
यम्। तदत्यन्तनिवृत्तिर्हानम्। प्र
कृतिपुरुषसंयोगद्वारा चाविवेको हे
यहेतुः। विवेकख्यातिस्तु हानोपा
य इति॥ चिकित्साशास्त्रे॥ तत्र च
रोग आरोग्यं रोगनिदानं भैषज्यमि



ति चत्वारो व्यूहत्वेनोक्ताः॥

चतुर्हायणी। स्त्री। चतुर्वर्षीयायां गवि॥
चत्वारो हायना यस्याः। दामहाय
नेति ङीप्। त्रिचतुर्भ्यां हायनस्येति
णत्वम्॥ त्रि। अन्यत्र॥

चतुष्कम्। न। चतुःस्तम्भमण्डपे। चौख
ण्डा इति भाषा॥ अश्वस्य गतिविशेषे॥

चतुष्की। स्त्री। मशकहरी। मस
हरी इति भाषा॥ पुष्करिणी वि
शेषे॥

चतुष्टयम्। त्रि। चतुरवयवसमुदा
ये॥ यथा चतुष्टयी शब्दानां प्रवृत्ति
रिति। शब्दानामर्थेषु या प्रवृत्तिः सा
प्रवृत्तिनिमित्तभेदात् प्रकारचतु
ष्टयवती त्यर्थः। प्रकारभेदश्च यथा।
जातिशब्दो गुणशब्दः क्रियाशब्दो य
दृच्छाशब्दश्चेति॥ चत्वारोऽवयवा
यस्य। संख्याया अवयवे तयप्। रे
फस्य विसर्गस्तस्य च षत्वे ष्टुत्वात् तादावि
तिमद्वैन्य.॥ केन्द्रे॥

चतुष्पत्री। स्त्री। सुनिषण्णके। चौप
ती शाक इति भाषा॥ चाङ्गेरीसदृ
शः पत्रैश्चतुर्दल इति स्मृतः। श्रीको
ष्ठाऽन्विते देशे चतुष्पत्रीति चो
च्यते॥ क्षुद्रपाषाणभेदिनि॥

चतुष्पथः। पुं। ब्राह्मणे॥ न। चतुर्म्मा
र्गसङ्गमे। चौहाटके॥ चतुर्णां पथां

समाहारः । तद्धितार्थेतिसमासः । ऋक्पूरिति समासान्तः । द्वन्द्वुमध्येति पत्वम् । पयःसंख्येतिक्लीबत्वम् । चत्वारः पन्थानो यत्र वा ॥

चतुष्पद । पुं । गवादिपशौ ॥ करणविशेषे ॥ तद्व्यासस्फणं यथा ॥ चतुष्पदमश्वमर्त्यः सदाचारविवर्जितः । स्वल्पवित्तः क्षीणदेहश्चतुष्पादशमान्वित इति ॥ राशिविशेषे । मेषवृषसिंहेषु । धनुषोन्त्यार्द्धे । मकरस्य पूर्वार्द्धे ॥ स्त्रीणां करणभेदे चेति हेमः ॥ चत्वारि पदानि पादा अस्य ॥

चतुष्पदी । स्त्री । पद्ये । चौपदी इति चौपई इति च भाषा ॥ चत्वारः पादाः अस्याः । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपे पादोन्यतरस्यामिति ङीपि भत्वात् पादः पदिति पदादेशः ॥

चतुष्पर्णी । स्त्री । सुद्रात्रिकायाम् ॥

चतुष्पथा । स्त्री । नागवलायाम् ॥

चतुष्पाठी । स्त्री । चौपाड इति भाषा प्रसिद्धे छात्राणामध्ययनस्थले ॥ चतुर्णां वेदानां पाठो यस्याम् ॥

चतुष्पाणिः । पुं । शतधामनि । विष्णौ ॥ चत्वारः पाणयो यस्य ॥ त्रि । चतुर्हस्तान्विते ॥

चतुष्पात्-द् । पुं । गवादिपशौ ॥ चत्वारः पादा अस्य । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

चतुष्पुण्ड्रः । पुं । भिण्डातरौ ।

चतुस्समम् । न । चतुःसमे ॥

चतुस्त्रिंशत् । स्त्री । चतुरधिकायां त्रिंशति । चौंतीस इति भाषा ॥

चतुस्त्रिंशज्जातकः । पुं । बुद्धविशेषे ॥

चतूराशी । स्त्री । चतुरङ्गक्रीडान्तर्गतक्रीडाविशेषे ॥

चत्वरम् । न । स्थण्डिले । यागार्थसंस्कृतभूमौ ॥ अङ्गने ॥ नानाजनाश्रयप्रदेशे । चौतरा इति भाषा ॥ यथा स्वेषे । चतसृणां रथ्यानां सम्बन्धे ॥ गन्तव्यहिरङ्गने ॥ चत्यते । चतेः । छ्गृवृदृभ्यः ष्वरच् ॥ चतन्त्यस्मिन्वा ॥

चत्वारिंशत् । स्त्री । चालीस इति प्रसिद्धे सङ्ख्याविशेषे ॥ सङ्ख्येये ॥ चत्वारो दशतः परिमाणमस्य । पङ्क्तिविंशतित्रिंशच्चत्वारिंशदिति निपातनात्प्रकृतेश्चत्वारिंभावः शत्प्रत्ययः ॥

चत्वालः । पुं । होमकुण्डे ॥ दर्भे ॥ चतति । चतेः । स्थाचतिमजेरिति वालच् ॥

चन । अ । असकृदर्थे ॥ चनति । चनशब्दे । पचाद्यच् ॥ अप्यर्थे ॥

चनस् । न । भक्ते ॥ चाय्यते । चायृ पूजानिशामनयोः । चायतेरन्ने ह्रस्वश्चेत्यसुन्प्रत्ययस्तुडागमश्च ॥

तःस्फुरणोवामुद्गमरामयचौरभया
य ॥ प्रालेयकुन्दकुमुदस्फटिकावदा
तो यतोदिवाद्रिसुतया परिरभ्य च
न्द्रः । तस्वैः कृतो निशि भविष्यति
मे शिवाय योदृश्यतेसमविलाजग
त.शिवार्थं ॥ अथपञ्चदृष्टो चानौधा
साम्ये च शुभाशुभमाह । शुक्लेपच्चेस
मवृद्धेप्रवृद्धिं व्रजचर्नयातिदृद्धिंप्रजा
ना । हीनेव निःस्मृत्यतातुल्यतायांक्र
मोसर्वैतत्फलंव्यन्थयेन ॥ यदिकु
मुदमार्केचकारगौरः क्षितिविजया
त्प्रयमेतिर्वहं तेषा । अधिकृतगति
मथक्षांशुयोगीभवतिन्वयाविजया
य शीतरश्मिः ॥ ६२ ॥ इतिसारावली
चतुर्थोध्यायः ॥ ४ ॥

चन्द्रदाराः । पुं । भू० । अश्विन्यादिन
क्षत्रेषु ॥ चन्द्रस्यदाराः ॥

चन्द्रनामा । पुं । कर्पूरे ॥ चन्द्रस्यना-
मान्येव नामान्यस्य ॥

चन्द्रपुष्पा । स्त्री । श्वेतकण्टकार्याम् ॥

चन्द्रप्रभः । पुं । वृक्षविशेषे ॥

चन्द्रप्रभा । स्त्री । ज्योत्स्नायाम् ॥ च
न्द्रस्य प्रभा ॥ वाकुच्याम् ॥ औषध
विशेषे ॥ अथाङ्गसुखबोधः । कृमिरि
पुदहनव्योषत्रिफलामरदारुचव्यभू
निम्बम् । मागधिमूलं मुस्तं सशटि
वचामाक्षिकश्चैव ॥ लवणयारनि-
मायुगकुस्तुम्बुरुगजकरणातिविषाः
॥ कर्षांशकान्येवसमानिकुर्यात् पला
ष्टकञ्चाश्मजतो विदध्यात् । निष्पत्र
गुग्गुलपुरस्य धीमान् पलद्वयं लोहर
जस्तथैव ॥ सितापलतुष्कं प्रथमभवं
स्यानिकुम्भकुम्भविसुन्धियुक्तम् । च
न्द्रप्रभेयं गुटिकाप्रयोज्याचार्शी सि
निर्णाशयतेयशेष ॥ भगन्दरं पाण्डुर
कामलाञ्चनियोंछयक्ष्मे कुरुते च दी-
प्तिम् । कन्धामयान् पित्तकफानि
लोत्थाम् नाडीगतेममेगते प्रयोज्य ॥
मन्यर्बुदे विद्रधिराजयक्ष्मणोर्से हे
भगाख्ये प्रवलेपयोज्या । शुक्रक्षये
चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहे प्यद-
रामयेच ॥ भक्तादपूर्वं सततंप्रयो
ज्या तक्रानुपानंत्वथमस्तुपानम् । क्षी
रोरसो वाङ्ग्भवे रसो वा पयोऽथ
वा शीतजलानुपानम् ॥ यत्नेननाम
सुरगोमयेन दृष्टया सुपर्णे श्वनयोरा
ग: ॥ वलीपलितनिर्मुक्तो दृद्धोपि
तरुणायते ॥ न पानभोज्येपरिहार्य
मस्ति न शीतवातातपमैथुनेषु । अ
मुं समभ्यर्च्य कृतप्रसादेनासावटी
चन्द्रमसःप्रसादादिति ॥ कर्चूरके ।
कचूर इति भाषा ॥

चन्द्रभस्म । न । कर्पूरे ॥

चन्द्रभागः । पुं । पर्वतविशेषे ॥ विभक्त

25184

स्नायाम् ॥ चन्द्रशूरे ॥ अतिजगती संज्ञकेषयोदशाक्षराहृत्तिविशेषे ॥ यथा । ननततगुरुभिश्चन्द्रिकाश्वर्त्तुभिः । यथा । शरदमृतरुचश्चन्द्रिकाक्षालिते दिनकरतनयातीरदेशे हरिः । विहरति रभसाद्गोपवीभिः समं विहितयुवतिभिः कोऽपिदेवो यथा ॥ हरिश्चन्द्रपुरवासिन्याम् अन्यायाम् ॥

चन्द्रिकाम्बुजम् । न । सितोत्पले ॥

चन्द्रिकाद्रावः । पुं । चन्द्रकान्तमणौ ॥

चन्द्रिकापायी । पुं । चकोरपक्षिणि ॥

चन्द्री । स्त्री । वाकुच्याम् ॥

चन्द्रेष्टा । स्त्री । उत्पलिन्याम् ॥

चन्द्रोदयः । पुं । शशिप्रकाशे ॥ उल्लोचे ॥ मकरध्वजाख्येरससिन्दूरे ॥ यथा ह । पलं मृदुस्वर्णदलं रसेन्द्रं पलाष्टकं षोडशगन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्वं विमर्द्याथकुमारिकाद्भिः ॥ तत्काचकुम्भे निहितं सुगाढे मत्कर्पटैस्तद्दिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रजः पल्लवरागरम्यम् ॥ निगृह्य चैतस्य पलं पलानि चत्वारिकर्पूररजस्तथैव । जातीफलं सोषणा मिन्द्रपुष्पं कस्तूरिकाया इह शाणएकः ॥ *॥ चन्द्रोदयोऽयंकथितस्तु भाषो भुक्तो हि वल्लीदलमध्यवर्त्ती ॥ मदोन्मदानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यकाण्डे ॥ घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥ ॥ वलीपलितनाशनं तनुभृतां वयःस्तम्भनः समस्तगदखण्डनः प्रचुररोगपञ्चाननः । गृहेषु रसराजयं भवति यस्य चन्द्रोदयः स पञ्चशरदर्पितो मृगदृशां भवेद् दुर्लभः ॥ इति सारकौमुदी सुखबोधश्चेतिराधाकान्तः ॥ चन्द्रस्य चन्द्रस्येव उदयो यस्य ॥

चन्द्रोदया । स्त्री । नेत्ररोगस्यौषधविशेषे ॥ यथा । हरीतकी वचा कुष्ठं पिप्पली मरिचानि च । बिभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ सर्वमेतत्समं कृत्वा छागीक्षीरेण पेषयेत् । * । नाशयेत् तिमिरं कण्डुं पटलान्यर्बुदानि च ॥ अधिकानि च मांसानि यश्च रात्रौ न पश्यति । अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥ वर्त्तिश्चन्द्रोदयानाम्ना तथा दृष्टि प्रसादनी ॥ इति चक्रपाणिदत्तः ॥

चन्द्रोपलः । पुं । चन्द्रकान्तमणौ ॥

चपलः । पुं । पारदे ॥ मीने ॥ चोर

कें ॥ प्रस्तरविशेषे ॥ चैवे ॥ राजमाषे ॥ चपनम् । चपसान्त्वने । यन्तः सरूच् । चपयति । स्वा० । क. ॥ न । चीपे ॥ क्रियाविशेषणत्वाद्द्रव्ये वर्त्तमानं क्लीवम् ॥ त्रि । तरले ॥ चले । चञ्चले ॥ विकले ॥ दुर्विनीते ॥ चपति । चप० । स्वा० कथः ॥ चेपिति । चुप मन्दायां गतौ । चुपे रच्चोपधाया इति कलमप्रत्ययः । दोषमलिनिमित्त्यवधन्नादेः कर्त्तरि । चिकुरे ॥

चपला । स्त्री । कमलायाम् । श्रियि ॥ विद्युति ॥ पुंश्चल्याम् ॥ पिप्पल्याम् ॥ विजयायाम् ॥ मदिरायाम् ॥ जिह्वायाम् ॥ आर्याभेदे ॥ यथा । द्वयोर्द्वितीयतुर्य्यगणौ जकारौ तु चपलासा । यथा । चपलानन्वेत् कदाचित् नृणामभवे बुद्धिभावना कृष्णे । धर्मार्थकाममोक्षा सद्दाकरस्थान सन्देहः ॥ चपलाट्टाप् ॥

चपेटः । पुं । विस्तृताङ्गुलिपाणौ । प्रतले । थाप् चपेटा इतिच भाषा ॥ चपति । चप० । अच् । एटति । इट गतौ । अच् । चपश्चासौ इटश्च ॥

चपेटा । स्त्री । चपेटे । प्रहस्ते ॥ खण्डिकोपाध्यायः शिष्याय चपेटां ददातीतिभाष्यम् ॥ टाप् ॥

चपेटिका । स्त्री । चपेटायाम् ॥ चपेटैव । स्वा० कः । प्रत्ययस्था दितीत्वम् ॥

चपेटी । स्त्री । भाद्रशुक्लषष्ठ्याम् ॥ भाद्रे चपेटी विख्यातेति स्कन्दपुराणम् ॥

चमत्कारः । पुं । विस्मये । चित्तविस्ताररूपे । डमरौ ॥ लोकातीतार्थकथनेन किमेतदितिज्ञानधाराजननेन चित्तस्य दीर्घमायत्वं चित्तविस्तार इत्यर्थः । दृष्टहेतुभ्योऽसम्भविस्मयमानेन हेत्वन्तरानुसन्धाने मनोव्यापार एव चित्तविस्तार इत्यपरे ॥ अपामार्गे ॥ चमत् करणम् । कृ भ्वा० । घञ् ॥

चमरः । पुं । मृगविशेषे । व्यजन्याम् ॥ यस्यश्वेतवालैर्देवराजादिव्यजनं क्रियते सचमरीगाकृतिर्भवति ॥ दैत्यविशेषे ॥ न । चामरे ॥ चमति चम्यते वा अनेन वा । चमु अदने । कर्णिकमिश्रमिचमीत्यरच्मित् ॥

चमरपुच्छः । पुं । कोकखे ॥ न । चामरे ॥

चमरिकः । पुं । कोविदारवृक्षे । रक्तकाञ्चनारे ॥ चमरमस्यास्ति । ठन् ॥

चमरी । स्त्री । मञ्जर्याम् ॥ मृगीभेदे । दीर्घलतायाम् । गिरिमिकायाम् ॥

चमसः । पुं । न । दारुजेयज्ञपानवि-

कलङ्कः इति ॥

चम्पकचतुर्दशी । स्त्री । ज्येष्ठशुक्लचतुर्दश्याम् ॥

चम्पकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

चम्पकारण्यम् । न । तीर्थविशेषे ॥

चम्पकालुः । पुं । चांपकला इति गौडे प्रसिद्धे मत्स्यविशेषे ॥

चम्पकोपः । पुं । पनसे ॥

चम्पा । स्त्री । कर्णराजस्य भार्यायाम् ॥ तस्यैव पुर्याम् । अधुना भागलपुर इति यस्य प्रसिद्धिरिति राधाकान्तः ॥ तीर्थविशेषे ॥

चम्पाधिपः । पुं । कर्णभूपे ॥

चम्पापुरी । स्त्री । चम्पायां नगर्याम् ॥

चम्पारण्यम् । न । विदेहदेशसमीपस्थे विपिने ॥

चम्पालुः । पुं । पनसे ॥

चम्पावती । स्त्री । कर्णपुर्याम् ॥

चम्पूः । स्त्री । काव्यविशेषे ॥ तल्लक्षणं यथा । गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते । इत्यलङ्कारज्ञाः ॥

चम्पेशः । पुं । कर्णाख्यनृपे ॥

चम्पोपलक्षितः । पुं । अङ्गदेशे ॥ तद्देशस्थे पुम्भूम्नि ॥

चम्वेली । स्त्री । स्वनाम्ना प्रसिद्धे पुष्पविशेषे । सुमनायाम् ॥

चयः । पुं । समूहे ॥ वप्रे । प्राकारमूलबन्धने ॥ यदुपरि प्राकारो निरूप्यते प्राकाराधारवेदिकेति यावत् । तथा चार्थशास्त्रम् । खातमुद्धृत्य तस्य द्वादशवप्रं कारयेत् तस्योपरि प्राकारमिति । प्रगार इति गौडभाषा ॥ समाहृतौ ॥ परिखोद्धृत तस्य तत्स्तूपे ॥ चीयते । चि भूधयने । कर्मण्येरच् ॥ प्राकारे ॥ पीठे ॥ इति हेमचन्द्रः ॥

चयनम् । न । चिनन इति ख्याते रत्नादिविशेषे । इष्टकादीनामूर्ध्वाधोदेशनिवेशने ॥ चिधोल्युट् ॥

चरः । पुं । अचद्यूतभेदे ॥ भौमे ॥ जङ्गमे । चले ॥ चले ॥ चारे । गोपनेन राष्ट्रादेः शुभाशुभादिज्ञानार्थं राज्ञा नियुक्तपुरुषे ॥ परतत्त्वज्ञानार्थं भ्रमणकर्त्तरि । यथार्थवक्ता । प्रणिधौ ॥ चरति । चरगतौ । पचाद्यच् ॥ कपर्दके ॥ मेषकर्कटतुलामकराख्येषु ॥ । नक्षत्रविशेषे । स्वात्यादित्यश्रविणीति प्रक्रामस्य च रचलम् ॥

चरकः । पुं । चारे ॥ पर्पटे ॥ चक्रकारे । भिक्षौ ॥ मुनिग्रन्थविशेषयोः । वैद्यशास्त्रप्रवर्त्तके मुनौ ॥ तत्कृते नामके ग्रन्थे ॥ चरति । चरगतौ । शिल्पिसंज्ञयोरपूर्वस्यापीति वुन् ॥

चरटः । पुं । खञ्जनपक्षिणि ॥

चरणः । पुं । न । वह्वृचादौ । वेदैकदेशे ॥ शाखाध्येतरि ॥ मूले ॥ गोत्रे ॥ पदे । पादे ॥ न । भ्रमणे ॥ भक्षणे ॥ शीले । आचारे ॥ चर्य्यतेऽनेन । चर० । करणेतिल्युट् ॥

चरणाम. । त्रि । प्रशस्ते ॥

चरणग्रन्थिः । पुं । गुल्फे ॥

चरणयोधी । पुं । कुक्कुटे ॥

चरणव्यूहः । पुं । वेदव्यासकृते चतुर्वेदविवरणग्रन्थे ॥

चरणामृतम् । न । चरणोदके ॥ चरणानामामृतम् । मुकुन्दस्य विधिना पाद्यं चरणतुप्रक्षेपितम् । चरणं वा तत्सदस्यं रम्यं पित्तकरं गुरु ॥

चरणायुधः । पुं । कुक्कुटे ॥ चरणमायुधं यस्य ॥

चरमः । त्रि । पश्चे । अवसाने । प्रान्ते ॥ पश्चिमे ॥ चरति । चर० चरेश्चेत्यमच् । प्रथमचरमेतिसर्वनामत्वात् पक्षे जस् शी । चरमे चरमाः ॥

चरमक्ष्माभृत् । पुं । अस्ताचले ॥ चरमश्चासौ क्ष्माभृच्च ॥

चरमतीर्थकृत् । पु । वर्द्धमानाख्यार्हद्भेदे ॥

चरमाचलः । पुं । अस्ताचले ॥ चरमश्चासावचलश्च ॥

चरमाद्रिः । पुं । अस्ताचले ॥

चराचरम् । न । विष्टपे । जगति ॥ त्रि । चरे ॥ जङ्गमाजङ्गमे ॥ दृष्टे ॥ पुं । कपर्दके ॥ चरति । चर० चरिचलीतिद्वित्वादि ॥

चरिः । पुं । पशौ ॥ चरति । चर० । खनिकष्यज्यसीत्यादिना इप्रत्ययः ॥

चरितम् । न । अनुष्ठिते ॥ चरित्रे ॥ सञ्चारे ॥ व्रतकर्म्मणि ॥

चरितार्थः । त्रि । प्राप्तप्रयोजने ॥

चरित्रम् । न । स्वभावे ॥ चेष्टिते ॥ चर्य्यतेऽनेन । चर० । अर्त्तिलूधूसूखनसहचर इत्रः ॥

चरिष्णु । त्रि । जङ्गमे ॥ चरणशीलः । चरगतौ । अलङ्कृञित्यादिना इष्णुच् ॥

चरुः । पुं । हव्यान्ने । हव्यपाके ॥ टीकायामितिख्याते भाण्डे ॥ चर्य्यते भक्ष्यते देवैः । चरन्ति भक्षयन्ति देवा इममिति वा । चर गतौ भक्षणे च । भृमृशीतॄचरीत्युः ॥ अनवस्रावितान्तरूष्मपाक ओदनश्चरुरिति याज्ञिकाः ॥ मीमांसकैरपि त्रिवृच्चर्वधिकरणे ओदनपरत्वमेव चरुशब्दस्याभ्युपगतम् ॥ उखशब्दिष्ठीयदितिसूत्रे केयटस्तु स्थालीवाची चरुशब्दः तात्स्थ्यादोदने भाक्त इत्याह । त्रिविधप्रकाशे तु चरुर्भाण्डे चरुरन्ने इत्यनेकार्थतोक्ता ॥

चच्चरः । पुं । चित्रापूपे ॥

चर्च्चरी । स्त्री । गीतभेदे ॥ अब्दजुकेशे ॥ चर्च्चरीगीतभेदे चर्केशभित् करशब्दयोरिति रुद्रः ॥ हर्षक्रीडायामिति सुभूतिः । कापटिकानां सादरवचने नीरविकेचेत्यन्ये । वसन्तसमयक्रीडायामित्येके ॥ चर्भव्याम् । साटोपवाक्ये ॥ वाद्यहस्तविशेषे ॥ यथा । वारयुवतिसुपर्णकक्षमयासिद्धकविराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता । शोभिता चलयेन पिङ्गलपन्नगाधिपवर्णिता चर्चरी तरुणीव चेतसि चारुरीतिसुसङ्गता ॥ यथा । कोकिलाकलकूजितं न शृणोसि सम्प्रतिसादरम् मन्यसे तिमिरापहारि सुधाकरं नसुधाकरम् । दूरमुज्झसि भूषणं विकसाति चन्दनमारुते कस्य पुण्यफलेन सुन्दरि मन्दिरं न सुखायते इति ॥ चर्च्चते । चर्च्चपरिभाषणभर्त्सनयोः । बाहुलकात् अरम् । गौ० ङीष् ॥

चर्च्चरीकः । पुं । महाकाले ॥ केशविन्यासे ॥ शाके ॥ चर्च्यते चर्च अध्ययने । पर्फ० इकन् प्रत्ययान्तो निपातितः ॥

चर्च्चा । स्त्री । चिन्तायाम् ॥ विचारणायाम् ॥ स्थासके । चार्चिक्ये । चन्दनादिना देहविलेपने । चर्चना इति भाषा ॥ चर्च्चिकायाम् । दुर्गायाम् ॥

चर्च्चनम् । चर्च अध्ययने । चुरादिगणस्ताङ्गाने चिन्तिपूजिकथिकुम्बिचर्चश्चेत्यक् । चर्चनं च ॥

चर्च्चिका । स्त्री । दुर्गायाम् ॥ चर्चायाम् ॥ चर्च्चैव । स्वा० कः ॥

चर्च्चितः । त्रि । दिग्धे । लिप्ते । चन्दनादिनाकृतलेपने । चर्चा चर्चिता इति च भाषा ॥ चर्चासञ्जाता ऽस्य । तारकादित्वादितच् ॥

चर्पटः । पुं । चपेटे ॥ पर्पटे ॥ स्फार विपुले । चिपिटे । चिपटा इति भाषा ॥

चर्प्पटा । स्त्री । आद्रमुक्तषष्ठ्याम् । चपेट्याम् ॥

चर्प्पटी । स्त्री । पिष्टकविशेषे । पे-स्याम् ॥

चर्भटः । पुं । इर्वारौ ॥

चर्भटी । स्त्री । चर्चर्याम् । हर्षक्रीडावाचि । साटोपवाक्ये ॥

चर्म्मकषा । स्त्री । गन्धद्रव्यविशेषे । सातलायाम् । भूरिफेनायाम् ॥ सा सरोहिण्याम् ॥ चर्म्मसः कषा ॥

चर्म्मकारः । पुं । चमार इति भाषाप्रसिद्धे कारावरे । पादूकृति । चण्डाल्यां तीवराज्जाते ॥ इतिपराशरपद्धतिः ॥ चर्म्मकरोति । डुकृञ्० ।

कर्म्मशय्या ॥

चर्म्मकारी । स्त्री । चर्म्मकषायामोषधौ ॥

चर्म्मकीलम् । न । अर्शः प्रभेदे ॥ व्याने गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः । कीलोपमं स्थिरखरं चर्म्मकीलन्तु तद्विदुः ॥

चर्म्मकृत् । पुं । चर्म्मकारे ॥

चर्म्मचटका । स्त्री । अजिनपत्रायाम् । जतुकायाम् । चाम्चिरैया इति भाषा ॥

चर्म्मचटी । स्त्री । गंडमाचिकायाम् । चर्म्मचटकायाम् ॥

चर्म्मचित्रकम् । न । श्वेतकुष्ठे ॥

चर्म्मजम् । न । रुधिरे ॥ रोमणि ॥

चर्म्मण्वती । स्त्री । चम्बल इति भाषा प्रसिद्ध नदीविशेषे ॥ चर्म्माण्यस्याम् । मतुप् । आसन्दीवदिति चर्म्मणो

सिद्धे फलके ॥ अस्य लक्षणं यथा । शरीरावरकं शस्तं चर्म्मेत्यभिधीयते । तत् पुनर्द्विविधं काठचर्म्मसम्भवभेदतः ॥ शरीरावरकत्वस्य लघुता दृढता तथा । दुर्भेद्यतेति कथितश्चर्म्मणां गुणसङ्ग्रहः ॥ स्थूलता गुरुता चैव सच्छिद्रता सुखभेद्यता । विरुद्धवर्णतापीति चर्म्मणां दोषसङ्ग्रहः ॥ सितो रक्तस्तथा पीतः कृष्णश्चेत्यभिलक्षितः । ब्रह्मादिजातिभेदेन चर्म्मणां वर्णनिर्णयः ॥ चित्रवर्णस्तु सर्वेषां सर्वदैवोपपद्यते इति भोजः ॥ चरति चर्य्यते वाऽनेन वा ॥ चर० । मनिन् ॥

चर्म्मनासिका । स्त्री । ताडन्याम् ॥

चर्म्मपत्रा । स्त्री । चर्म्मचट्याम् ॥

चर्म्मपादुका । स्त्री । उपानहि ॥

चर्म्मपुटः । पुं । हस्तिसंज्ञके चर्म्म

चर्म्ममुण्डिका । स्त्री । कात्यायन्याम् । चण्डिकायाम् ॥

चर्म्मयष्टिः । स्त्री । चर्म्मताडन्याम् । कशायाम् ॥ चर्म्मणो यष्टिः ॥

चर्म्मरङ्गा । स्त्री । आवर्त्तकीलतायाम् । विभाण्ड्याम् ॥

चर्म्मवः । पुं । चर्म्मकारे ॥ इतित्रिकाण्डशेषः ॥

चर्म्मसम्भवा । स्त्री । एलायाम् ॥

चर्म्मसारः । पुं । } रसे ॥ इतिरा

चर्म्मान्तम् । न । } जनिर्घण्टः ॥

चर्म्मारः । पुं । चर्म्मकारे ॥ चर्म्मक्रिया म् ऋच्छति । ऋच्छेः कर्म्मण्यण् ॥ वि ज्ञकमभेदे ॥ चर्म्मारः शुक्लवर्णः स्यात् ॥

चर्म्मी । पुं । फलकपाणौ । ढालैत इति भाषा ॥ भूर्ज्जवृक्षे ॥ सृङ्गरीटे ॥ कदल्याम् ॥ चर्म्मास्यास्ति । व्रीह्यादित्वादिनिः ॥

चर्य्या । स्त्री । ईर्य्यायाम् । नियमाख्याने । ध्यानमौनादिकस्याभिवृद्धतयानुष्ठाने । ईर्य्यापथस्थितौ ॥ ईर्य्यतेगुरोः शास्त्रोपासनया ज्ञायते इति ईर्या । ईर्य्यायाःपन्थाः । ऋक्पूरित्यः । ईर्य्यापथे ध्यानाद्युपाये परिव्राजकादीनांस्थितिः तस्यामित्यर्थः ॥ आचरणे ॥ चरणम् । चर० । गदमदचरयमश्चानुपसर्गइतियत् ॥ यथा । परिचर्यापरिसर्य्येत्यत्र परीक्षसा

विरभ्यत्वात् चर्य्येतिसाधुः ॥

चर्व्वणम् । न । दन्तैश्चूर्णने । चिवायना इतिभाषा ॥ चर्व्वअदने । ल्युट् ॥

चर्व्वा । पुं । तलप्रहारे ॥

चर्व्वितः । त्रि । भक्षिते । कृतचर्व्वणे ॥ चर्व्व्यतेस्म । चर्व० क्तः ॥

चर्व्वितपात्रकम् । न । चर्व्विततांम्बूलादित्यागपात्रे । कटकोले । पतद्ग्रहे ॥

चर्व्व्यम् । त्रि । चर्व्वणीये ॥

चर्षणिः । पुं । जने ॥ कर्षति । कृष० । कृषेरादेश्चचश्चानिः ॥

चर्षणी । स्त्री । पुंश्चल्याम् ॥ कर्षति मनः । कृषविलेखने । कृषेरित्यनिः । कृदिकारादितिङीष् ॥

चलः । पुं । कम्पे ॥ न । चञ्चले । लोले । तरले ॥ अस्थिरे । गत्वरे ॥ अल्पकालस्थायिनि । शरीरे जगतिच ॥ प्रतिक्षणमन्यथाभावात् ॥ नयविशेषे । स्वाच्याद्यद्येषुतेस्त्रीणिचन्द्रस्यापिचरंचलम् ॥ त्रि । कम्पयुक्ते । चञ्चले ॥ चलति चलगतौ । पचाद्यच् ॥

चलचञ्चुः । पुं । } चकोरपक्षि-

चलचञ्चुः । पुं । } णि ॥

चलत्पूर्णिमा । स्त्री । चन्द्रकमत्स्ये ॥

चलदङ्गः । पुं । } चेङ्गमाछ इ-

चलदङ्गकः । पुं । } तगौड भाषा प्रसिद्धे मत्स्ये ॥

चलद्दलः । पुं । अश्वत्थवृक्षे ॥ चलानि दलान्यस्य ॥

चलनः । पुं । पादे ॥ हरिणे ॥ न । भ्रमणे ॥ कम्पे ॥ स्थिरत्वप्रच्युतौ ॥ देशान्तरप्राप्तिहेतुभूते क्रियाविशेषे ॥

चलनशीलम् । चल० चलनशब्दे इतियुच् ॥ त्रि । कम्पे । कम्पयुक्ते ॥

चलनकम् । न । चण्डातके ॥

चलनी । स्त्री । नारीभेदे । गजबन्धन्याम् ॥ चलघर्घयोम् । वस्त्रवेधिन्याम् ॥

चलपत्रः । पुं । पिप्पलवृक्षे ॥ चलानि पत्राण्यस्य ॥

चलसङ्क्रमः । पुं । ईश्वरेच्छालोकादृष्टवशात्तत्साम्यादिभागस्य सूर्ये तत्सम्पर्के ॥

चला । स्त्री । लक्ष्म्याम् ॥ चञ्चला ह्येषा त्वं वै सत्यैव नसंशयः ॥ सिल्हके ॥ टाप् ॥

चलाचलः । त्रि । चञ्चले ॥ चलति । चल० । चरिचलीति द्वित्वादि. ॥ पुं । काके ॥

चलातङ्कः । पुं । वातरोगे ॥

चलाभासः । पुं । मायामयस्य रज्जुसर्पादेर्गमने ॥ चलमिवाभासते इति तथा ॥

चलितः । त्रि । कम्पिते ॥ उच्चलिते । तरङ्गिते ॥ प्रचक्रे ॥ गते ॥ चल्यते स्म । चलकम्पने । क्तः ॥

चलुः । पुं । गण्डूषे ॥ इति हेमचन्द्रः ॥

चलुकः । पुं । प्रसृतौ ॥ भाण्डभेदे ॥

चवर्गः । पुं । चादिपञ्चवर्णेषु ॥

चवर्गीयः । पुं । चवर्गभवे वर्णे ॥ वर्गान्ताच्छ इति छः ॥

चवलः । पुं । राजमाषे । चौंला इति भाषा ॥

चविः । स्त्री । चविकायाम् ॥

चविकम् । न । चव्ये ॥ चर्व्यते । चर्व० । क्कुन् । पृषोदरादिः ॥

चविका । स्त्री । चइ इति गौडभाषाप्रसिद्धे द्रव्ये । चव्ये ॥ चविकाट्टाप् ॥

चव्यम् । न । चविकायाम् ॥ कणामूलभवं चव्यं विशेषाहुर्गजापिप्पलम् ॥ चर्व्यते । चर्व । यत् । पृ० ॥

चव्यकम् । न । चव्ये ॥

चव्यजा । स्त्री । } गजपिप्पल्याम् ॥
चव्यफलम् । न । }

चव्या । स्त्री । वचायाम् ॥ कार्पास्याम् ॥

चषकः । पुं न । सुरापानपात्रे । गल्वर्के । सरके ॥ अथचषकोद्देशः । यत्पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः । काञ्चनं राजतंचैव स्फाटिकं काचमेव च ॥ वृत्तं स्वराष्टदिङ्कोणं चतुर्थं पृथिवीभुजाम् । इत्यन्य

सम्मतं तेषां निर्णयःपाठसम्मतः ॥
स्वमुष्टिसम्मितं रत्नै श्चतुर्वर्णैः स
मन्वितम् । मार्त्तिकंवाऽथफालवा
। सर्वेषामुपयुज्यते ॥ काष्ठजं धातुजं
। शैलं आज्यादिसर्पीभुजाम् । यद
। न्यत्तोयपानादिपात्रं पृथ्वीभुजां भवे
त् ॥ एवंसर्वापिनियमइतिभोजस्य
निरूपणः ॥ * ॥ मधुनि । मद्ये ॥ म
द्यभेदे ॥ मद्यभाजने ॥ चष्यतेऽ
नेन ॥ चषभक्षणे । क्रुन् ॥

चषतिः । पुं । भक्षणे ॥ वधे ॥

चषालः । पुं । यूपकटके ॥ यज्ञसमाप्ति
सूचकं पशुबन्धनाद्यर्थं यज्ञभूमौ य
त्काष्ठमारोप्यते सयूपः तच्छिरसि
॥ वलयाकृति उमरुकाकृति वायःका
ष्ठविकारः सचषालः । यूपस्तेविधि
तसेोवलयस्तु ॥ चषति चष्यतेवा
। चष० । सानसिवर्णसिपर्णसीतिचषे
रालः ॥

चाकचक्यम् । न । ) उज्ज्वलतायां
चाकचिक्यम् । न । } म् ॥ नहिलो
कसिद्धसामग्री प्रातिभासिकरजता
त्पादिका किन्तु विलक्षणैव । तथाहि
। काचादिदोषदूषितलोचनस्य पु
रोवर्त्तिद्रव्यसंयोगादिदमाकाराच
कचकाकाराच काचिद्वृत्तिः काचा
दस्तिरदेतीतिवेदान्तपरिभाषा ॥

चाकचिक्या । स्त्री । स्वतनुज्ञायाम् ॥

चाक्रायण । पुं । उषस्त्याख्यर्षौ ॥ चक्र
स्यगोत्रापत्यम् । अ० फञ् ॥

चाक्रिकः । पुं । बहुभिर्मिलित्वास्तुति
कारे ॥ घाण्टिके ॥ चक्रेण समूहेन
चरति । चरतीति ठक् ॥ शाकटि
के ॥ तैलकारे ॥

चाक्षुषः । पुं । षष्ठेमनौ ॥ न । रूपे ॥ च
क्षुषागृह्यते । अण् ॥ चक्षुरेव वा । स्वा
र्थिके प्रज्ञाद्यण् ॥ प्रत्यक्षविशेषे ॥
तत्तु चक्षुरिन्द्रियजन्यज्ञानम् । द्रव्य
चाक्षुषंप्रति चक्षुःसंयोगः कारणम्
। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसं
युक्तसमवायः । द्रव्यसमवेतसमवे
तचाक्षुषंप्रति चक्षुःसंयुक्तसमवेतस
मवायः । तथाच भा० प० । द्र
व्याध्यक्षं संयोगात् संयुक्तसमवाय
तः । द्रव्येषु समवेतानां तथातत्स
मवायतः ॥ तत्रापिसमवेतानां शब्द
स्यसमवायतः । तद्वृत्तीनांसमवेत
समवायेनतुग्रह इति ॥ त्रि । च
क्षुर्ग्राह्ये ॥

चाङ्गम् । न । दन्तपटुत्वे ॥

चाङ्गेरी । स्त्री । अम्ललोणिकायाम् ॥
चाङ्गेरीदीपनीरुच्या लघूष्णाकफवा
तनुत् । पित्तलाम्लाग्रहण्यर्शः कुष्ठा
तीसारनाशिनी ॥ चाङ्गम् ईरयति

॥ ईरप्रेरणे । कर्मण्यच् ॥

चाञ्चल्यम् । न । चञ्चलतायाम् ॥

चाटः । पुं । चौरे ॥ आर्यमर्यादां शास्त्रमर्यादां वा भिन्दाने ॥ प्रतारके ॥ आदौ विश्वासमुत्पाद्य पश्चात् परधनापहर्तरि । प्रच्छन्नापहारिणि तस्करे ॥ चोरहरि कलहप्रिये ॥ चटनम् चाटनं वा । चटभेदने । भावे घञ् ॥

चाटकेरः । पुं । चटकापत्ये ॥ चटकायाः चटकस्य वा पुमपत्यम् । चटकाया एरक् । चटकस्य तिवाच्यम् ॥

चाटुः । पुं । न । प्रियवाक्ये । प्रियप्राये । चटौ ॥ चकार च बहु चाटून् प्रौढयोपिद्वदस्योत । क्लीवमपि । चाटु चाटुकृतकसंभ्रमभाषां कामिनां मगमदूरसयोषिति च माघः ॥ चटति । चटभेदने । दृसनिजनीतञ्जुन् ॥ मिथ्याप्रियवाक्ये ॥

चाटुपटुः । पुं । भण्डः । भाँड इति भाषा ॥

चाटुलोलः । त्रि । चटुलोले । सुचञ्चले ॥

चाटुवटुः । पुं । भण्डे । विदूषके । क्रीडनीयवपाषे ॥

चाटूक्ति । स्त्री । सेवायाम् । प्रियवार्त्तायाम् ॥

चाणकीनम् । न । चणकोत्पत्तियोग्य



क्षेत्रे ॥ चणकानाम् भवनं क्षेत्रम् । धान्यानामिति खञ् ॥

चाणक्यः । पुं । मुनिविशेषे । द्रोमिणे ॥ चणकस्य गोत्रापत्यम् । गर्गादित्वात् यञ् । न । तन्निर्मिते राजनीतिशास्त्रे ॥

चाणक्यमूलकम् । न । मूलकप्रभेदे । चाणेये । विष्णुगुप्ते ॥

चाणूरः । पुं । कंसासुरस्य प्रधानमल्ले ॥

चाणूरसूदनः । पुं । श्रीकृष्णे ॥ चाणूरं सूदितवान् । सूदयतेर्नन्द्यादित्वाल्ल्युः ॥

चाण्डालः । पुं । चण्डाले । श्वपचे । अन्त्यजे ॥ चण्डाल एव । कुलालवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानमिति छन्दस्यण् ॥ प्रमादार्षि लोकेपीति केचित् ॥

चाण्डालिः । पुं । चण्डालापत्ये ॥

चण्डालवल्लकी । स्त्री । कण्डोलवीणायाम् ॥ चाण्डालवीणा ॥

चाण्डालिका । स्त्री । कण्डोलवीणायाम् ॥ चण्डालिकाशब्दार्थे ॥ चण्डालस्येयम् । तस्येदमित्यण् । टिड्ढेति ङीप् । स्वार्थे कन् ॥ चण्डालेन कृता वा । कुलालादिभ्यो वुञ् ॥

चाण्डाली । स्त्री । चण्डालयोषायाम् । लिङ्गिन्याम् ॥

चातकः । पुं । स्तोकके । सारङ्गे । पक्षी

स्यादिति भाषा ॥ यथा । सर्वसन्ताप तिलमम्नु न चातकानामिति ॥ च तति स्खले । खलु ॥

चातकानन्दनः । पुं । वर्षाकाले ॥

चातुकः । पुं । शरवीजे ॥ चातुको म धुरो रूक्षो रक्तपित्तकफापहः । श्री तो लघु रहस्यश्च कषायो वातको पनः ॥

चातुरः । पुं । चक्रगण्डौ । त्रि । नेच गोचरे ॥ चाटुकारे ॥ निपुणे ॥ चतुरएव । स्वार्थे ऽण् ॥ न । शकटे ॥ चतुर्भिरुह्यते । शेषत्वाण् ॥

चातुरिकः । त्रि । चातुरार्थे ॥

चातुराश्रम्यम् । न । ब्रह्मचारिगृहस्थ वानप्रस्थसंन्यासिषु ॥ चत्वार आश्र मास्व । चतु० स्वार्थे ष्यञ् ॥ चतुर्णा माश्रमाणां धर्मे ॥

चातुरी । स्त्री । दाक्ष्ये । चतुरतायाम् ॥ यालेखिनयसाधनीवनुभूतासा चा तुरी चतुरी ॥ चतुरस्येयम् । तस्येद मित्यण् । ङीप् ॥

चातुर्जातकम् । न । चतुर्जातके ॥ स्वार्थे अण् ॥

चातुर्दशिकः । त्रि । भूताध्ययनकर्त्तरि ॥ चतुर्दश्यामधीते । अध्यायिन्यदे शकालादिति ठक् ॥

चातुर्भद्रम् । न । नागरातिविषामुस्ता



गुडूचीतिचतुष्टये ॥

चातुर्मासी । स्त्री । पूर्णिमाविशेषे ॥ चतुर्षु मासेषु भवा । संज्ञायामित्य ण् । ङीप् ॥

चातुर्मास्यम् । न । यागविशेषे ॥ चा तुर्मास्ययागस्य चत्वारि पर्वाणि । वै श्वदेवो वरुणप्रघासः शाकमेधः शु नासीरीयश्चेति । चतुर्षु मासेषु भ वन्ति चातुर्मास्यानि यज्ञकर्माणि । चतु र्मासाण्ण्यो यज्ञे तत्र भवे ॥ आषाढ शुक्लद्वादश्यादिचतुर्मासकर्त्तव्ये व्रते ॥ यथा । आषाढशुक्लद्वादश्यां पौर्ण मास्यामथापि वा । चातुर्मास्यव्रतारम्भं कुर्यात् कर्कटसङ्क्रमे ॥ अभावे तु तुलार्केपि मन्त्रेण नियमं व्रती । का र्त्तिके शुक्लद्वादश्यां विधिवत् तत् स मापयेत् ॥ चतुष्टोपिच तच्चीर्यं चा तुर्मास्यं व्रतं नरः । कार्त्तिक्यां शुक्ल पक्षेतु द्वादश्यां तत् समापयेदिति वाराहः ॥

चातुर्मास्यद्वितीया । स्त्री । आषाढमा लुनेर्जपे या द्वितीया विधुक्षये । चातुर्मास्यद्वितीया सा प्रवदन्ति म हर्षयः ॥

चातुर्वर्ण्यम् । न । वेदसाधनेषु ब्रह्मक्ष त्रियविट्शूद्रेषु ॥ चत्वारो वर्णाएव । चतुर्वर्णादीनां स्वार्थे उपसंख्यान

चामुण्डा

। गौर्य्याम् ॥ मोक्षकारणीभूतनि-
र्विकल्पकवृत्तिविशेषे ॥ चमूसेनां वि
यदादिसमूहरूपां हाति लडयोरैक्या
ल्लाति आदत्ते स्वात्मसाक्षात्कारेण
नाशयति इति व्युत्पत्त्या पृषोदरा-
दित्वात् सर्वं सुसाधितमाहुः ॥ यथा,
तथाचोपहतौ । चण्डमुण्डौ महाप
शू इत्यत्र चण्डमुण्डपदद्विवचनयोः ग्रकार
लोपेन तत्समूलभेदेनाख्यानद्वयकथने
न यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्व
मुपागता । चामुण्डेति ततो लोके
ख्याता देवी भविष्यसि ॥ त्वयापि मूल
मूलाविद्ययोरादानमेव गृहीत्वेति
पदेनामूद्य । निर्वचनकथनाच्चण्डमु
ण्डविश्लेष्येव चामुण्डापदस्यार्थो वर्णि
त इति तत्त्वप्रकाशरहस्यम् ॥ अथवा
चमति । चमु अदने । भ्वा० पर० ।
चामु रहनीयः पदार्थः । स च ब्रह्मा
तिरिक्तः सर्वोऽपि । तत्ता चराचरस्य
ब्रह्मादिव्यधिकरणे तन्नानिर्णयात् ।
तं डापयति उड्डापयति नाशयति
कुरुते प्रत्यक्षभानविषयिणीति यावत्
॥ अथवा चकारश्चकाचरनिघण्टौ
रूपा चन्द्रवाचकः आह्लादप्रकाशगु
णयोगादितरानपरः आनन्दपरो वा
स च ब्रह्मैवर्मक्ति तदात्मन्तोन्मुण्डय
तीति चामुण्डा । मुण्डनं नाशाधा

चारः

रपि चक्षान्यानस्त ताकवस्तुनिरासः ।
भिरश्चर्मा चेक्षयान्न्यूनतादृक्व वत्ता
मेव केशानांवपने प्रयोगात् ॥ अथ-
वा चार्ना बुद्धीनां सुखानां वा मुण्ड
यित्री परमिव स्थिता सर्वैः समा च
रस्मत्वृ सिद्धमा ब्रह्मविद्येति याव इति
गौडपादटीकानुवादी भास्कररायः ॥
चाम्पिला । स्त्री । नद्याम् । निर्झरि-
ण्याम् ॥
चाम्पेयः । पुं । चम्पके ॥ स्वर्णे ॥ कि
ञ्जल्के ॥ नागकेसरे ॥ चम्पायां भव
म् । स्त्रीभ्यो ढक् ॥
चाम्पेयकम् । नि । किञ्जल्के ॥
चायनीयः । त्रि । पूजनीये ॥
चारः । पुं । पियालवृक्षे । चिरौंजी इ
ति प्रसिद्धे ॥ चारः पित्तकफास्रघ्न-
स्तत्फलं मधुरं गुरु । स्निग्धं सरं म्नेव
तु पित्तदाहज्वरतृषापहम् ॥ पिया
लमज्जा मधुरो वृष्यः पित्तानिला-
पहः । हृद्योऽतिदुर्जरः स्निग्धो वि
ष्टम्भी चामवर्द्धनः ॥ गतौ ॥ बन्धे ॥
अवसर्पे । चरे । प्रणिधौ ॥ चारान्
विचारयेत् तीर्थेष्वात्मनश्च परस्य च
। पाषण्डादीनविज्ञातानन्योन्यमवि
तरेऽपि च ॥ * ॥ अमीष्व समान्यम
स्य आपिच्यमभ्यूह्यकत्वचेतिचार
गुप्ता इतिनीति वाक्यमतम् ॥ * ॥

चारित्रम् । न । स्वभावे । चरित्रे ॥ कुलक्रमागताचारे ॥ चरित्रमेव । स्वार्थे ष्यञ् ॥ चरन्ति तेन । चर० । चरेर्वृत्त इति चित्रम् वा । स्वरभेदः ॥

चारित्रा । स्त्री । तिन्तिडीवृक्षे ॥

चारी । स्त्री । नृत्याङ्गविशेषे ॥ विदग्धस्तु सखीसहामोदरे ॥

चारुः । पुं । बृहस्पतौ ॥ त्रि । शोभने । रम्ये । मनोज्ञे ॥ चरति चित्ते । चर० । दृसनिजनिचरिचटिभ्यो ञुण् ॥ न । कुङ्कुमे ॥

चारुकः । पुं । शरबीजे ॥

चारुकेशरा । स्त्री । तरणीपुष्पे ॥ नागरमुस्तायाम् ॥

चारुगर्भः । पुं । }
चारुगुप्तः । पुं । } श्रीकृष्णपुत्रे ॥

चारुदेष्णः । पुं । रुक्मिण्यां श्रीकृष्णतनये ॥

चारुधारा । स्त्री । इन्द्राण्याम् ॥ स्यादिंद्राणी शतावरी चारुधारेति रभसः ॥

चारुनालकम् । न । रक्तपद्मे ॥

चारुपर्णी । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥

चारुफला । स्त्री । द्राक्षायाम् ॥ चारूणि फलान्यस्याः ॥

चारुमती । स्त्री । रुक्मिण्यां श्रीकृष्णकन्यायाम् ॥

चारुलोचनः । पुं । हरिणे ॥ त्रि । सुलोचने ॥

चारुवर्द्धना । स्त्री । नार्याम् ॥

चारुबाहुः । पुं । }
चारुविन्दः । पुं । } श्रीकृष्णात्मजे ॥

चारुव्रता । स्त्री । मासोपवासिन्याम् ॥

चारुशिला । स्त्री । मणौ ॥

चार्मिकः । त्रि । चर्मभिन्ने ॥ उक्थादित्वाट् ठक् ॥

चार्चिक्यम् । न । अञ्जनादिना देहविलेपने ॥ चर्चायाम् । आसके ॥ चर्चाध्ययने । धात्वर्थनिर्देशे ण्वुल् । चर्चिकैव । स्वार्थे ष्यञ् ॥

चार्म्मः । पुं । चर्मावृते रथे ॥ चर्मणा परिवृतः । परिवृतोरथ इत्यण् ॥

चार्म्मणम् । न । चर्मसमूहे ॥ चर्मणां समूहः । भिक्षादिभ्योऽण् ॥

चार्वाकः । पुं । बौद्धैकदेशिनि । आकाशभिन्नभूतचतुष्टयवादिनि तार्किकविशेषे । नास्तिके । बार्हस्पत्ये । लौकायतिके ॥ तन्मतं यथा । शरीरमेवात्मा । प्रज्वलितगृहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् । स्थूलोऽहं कृशोऽहमित्यनुभवाच्च ॥ प्रत्यक्षमेकं चार्वाकाः प्रमाणं मन्यन्ते ॥ अपि च । सर्वथा लोकायतमेव शा

क्रियाभिर्जायन्ते शरीरे धातवः स
माः। सा चिकित्सा विकाराणां क
र्म तद्भिषजां मतम्॥ या ह्युदीर्णं
शमयति नान्यं व्याधिं करोति च।
सा क्रिया न तु या व्याधिं हरत्यन्य
मुदीरयेत्॥ अस्याः फलम्। क्वचि
दर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्य
शः। कर्माभ्यासः क्वचिच्चेति चिकि
त्सा नास्ति निष्फला॥ अस्या अङ्गा
नि यथा। रोगी दूतो भिषग् दीर्घ
मायुर्द्रव्यं सेवकः सदौषधं चि
कित्सायामित्यङ्गानि। गुधातुरि
ति। गुप्तिज्किद्भ्यः सन् इति कितेर्व्याधिप्र
तीकारे निग्रहे अपनयने नाशने सं
शये च सन्। चिकित्सनम्। अप्रत्य
यात्॥

चिकित्सितः। त्रि। प्रतिकृतामये।
कृतप्रतीकारे॥ न। चिकित्सायां
म्। भेषजे॥ चिकित्सा सञ्जाता
ऽस्य। तारकादित्वादितच्॥

चिकित्स्यः। त्रि। रोगान्मोचयितव्ये॥
चिकित्सितुं योग्ये। रोगे॥ यथा।
जातमात्रश्चिकित्स्यः स्यान्नोपेक्ष्यो
ऽल्पतया गदः। वह्निशत्रुविषैस्तुल्यः
स्वल्पोऽपि विकरोत्यसौ॥ रोगमादौ
परीक्षेत तदनन्तरमौषधम्। ततः
कर्म भिषक् पश्चाद् ज्ञानपूर्वं समाचरेत्॥



दिति॥

चिक्किनः। त्रि। चिपिटे। चिक्के॥ ना
सिकायां नतम्। इनच् पिटच् चिक
चि चेति इनच् प्रकृतेश्चिकादे
शश्च। तत्र योगात् नासिका चिक्किना
पुरुषश्चिक्किनः॥

चिक्कणः। पुं। पक्षोर्वीकडइति भाषा॥

चिकीर्षा। स्त्री। कर्त्तुमिच्छायाम्॥
कृञ्। अप्रत्ययादित्यः। टाप्॥

चिकीर्षितम्। न। अभिप्राये। कर्त्तु
मीप्सिते॥

चिकीर्षुः। त्रि। कर्त्तुमिच्छौ। करणे
च्छाविशिष्टे॥ कर्त्तुमिच्छति चिकी
र्षति। सन्नन्तः। सनाशंसभिक्ष उः॥

चिकुरः। पुं। कुन्तले। बाले॥ वृक्ष
भेदे॥ पक्षिविशेषे॥ शैले। पर्वते
॥ गृहबभ्रौ॥ सरीसृपे॥ त्रि। तर
ले। चञ्चले॥ चपले। दोषमनि
श्चित्य वधबन्धनादेः कर्त्तरि॥ स्वच्छे
॥ यथा। तां वीक्ष्य लीलाचिकुरां स
नङ्गः स्वचापसौन्दर्यमदं मुमोचेति
॥ चिद्रूपं चैतन्यशब्दं कुरति। कुर
शब्दे। इगुपधेति कः॥

चिकुरपक्षः। पुं। केशसमूहे॥
चिकुरपाशः। पुं।
चिकुरहस्तः। पुं।

चिकूरः। पुं। चिकुरे॥ इति शब्दभेद

रूपत्वाविशेषात् । बुद्धेह्यपूर्वविषयः चित्तस्य पूर्वानुभूत इतिविषयभेदात् चित्तस्यकचित् पृथङ्निर्देशोप्यस्ति ॥ चैतन्ये ॥ यथा । एवंनंज्ञायतेचित्तमिति ॥ विज्ञानस्कन्धे ॥ चितौ० । भावे क्तः । श्वीदितइतीण्निषेधः ॥ चिन्तायाम् ॥ चित्ताकाशमठीचैत्यं चित्ताघुडकमिष्यते ॥ चित्तत्वे । त्रिविकाण्डशेषात् ॥

चित्तकाल: । पुं । चित्तपरिच्छेद्ये ॥ नान्यश्चिन्तकालव्यतिरेकेण परिच्छेदकः कालोयस्य तथा ॥

चित्तजन्मा । पुं । कामदेवे ॥

चित्तदोष: । पुं । शून्यतायाम् ॥

चित्तनदी । स्त्री । उभयतोवाहिन्याम् ॥ इयं ह्युभयतोवहति कल्याणाय वहति पापायच । तत्र या कैवल्यप्राग्भारा विवेकनिम्ना सा कल्याणावहा । याऽत्वविवेकनिम्ना संसारप्राग्भारा सापापवहा ॥

चित्तप्रसन्नता । स्त्री । हर्षे ॥

चित्तबन्धनम् । न । चित्तबन्धकारिस्वमूलाधाने ॥ चित्तस्यबन्धनम् ॥

चित्तमज्जनम् । न । रूपक्रियानुसन्धानरहिते ॥

चित्तमोदक: । पुं । लड्डुकविशेषे ॥

चित्तल: । पुं । मृगविशेषे ॥ असिततिलोद्भवतैलविपक्वं लवणयुतं नवविकुरसात्रम् । त्रिकटुकयुक्तनिशार्द्रकमिश्रं बहुगुणचित्तलमांसमनर्घम् ॥ रसे पाकेच मधुरं रक्तपित्तविनाशनम् ॥

चित्तविक्षेप: । पुं । योगप्रतिपक्षेषु व्याधिस्त्यानादिषु ॥ चित्तं विक्षिपन्ति योगादपनयन्तीति चित्तविक्षेपाः योगप्रतिपक्षाः । तेच नव योगसूत्रोक्ताः । यथा । व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तराया इति ३० । तत्रसंशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधरूपस्य समाधेः साक्षात्प्रतिपक्षौ । व्याध्यादयस्तु सत्त्वचरितैसतया तत्प्रतिपक्षा भवन्ति ॥

चित्तवित् । पुं । विज्ञानात्मवादिनि बौद्धविशेषे ॥ चित्तमेव बाह्याकारशून्यं विज्ञानं तदेवात्मेतिविज्ञानवादिनो भ्रान्तिरेव । सुषुप्ते व्यभिचारात् वेद्यस्यच घटादिवदतिरिक्तवेद्यत्वात् ॥

चित्तविप्लव: । पुं । उन्मादे ॥

चित्तविभ्रम: । पुं । उन्मादे ॥ चित्तस्य विभ्रमोऽनवस्थानम् ॥

तकसम्भृतम् ॥ चीता इतिभाषा प्रसिद्धे व्याघविशेषे । शूरे । मृगान्तके ॥ एरण्डवृक्षे ॥ न । तिलके ॥ चित्रयति ) चित्र० । कुनृशिल्पिसंज्ञयोः ॥ यद्वा । चित्रंवुद्धिंचायते । पै ष्ट्० । कात्मात् स्वार्थेकन् ॥ चित्रं करोतिवा । अन्येभ्योऽपीतिडः ॥

चित्रकण्ठः । पुं । कपोते ॥ ॥

चित्रकम्बलः । पुं । गलीचाइति दुली चा इतिचभाषा प्रसिद्धे कम्बल विशेषे ॥

चित्रकरः । पुं । शूद्रागर्भे विश्वकर्मैरसजाते चितेरा इतिख्याते वर्णसङ्करजातिविशेषे । चित्रकारे । रङ्गाजीवे ॥ इतिब्रह्मवैवर्त्त पुराणम् ॥ चित्रंकरोति । डुकृञ्० । दिवाविभानिशेतिटः ॥

चित्रकर्मा । पुं । तिनिशद्रुमे ॥ त्रि । विविधाद्भुतकर्मणि ॥

चित्रकाय । पुं । व्याघ्रे । बाघ इतिभाषाप्रसिद्धे ॥ चीता इतिभाषा प्रसिद्धे चित्रव्याघ्रे ॥ चित्रः कायोऽस्य ॥

चित्रकारः । पुं । चित्रकरे ॥ स्थपतेरपि गान्धिक्यां चित्रकारोव्यजायते ति प०प० ॥ चित्रं करोति । डुकृञ्० कर्मण्यण् ॥

चित्रकूटः । पुं । स्वनाम प्रसिद्धे पर्वतविशेषे ॥

चित्रकृत् । पुं । तिनिशद्रुमे ॥ चित्रकारे ॥ चित्रंकरोति । क्विप् ॥

चित्रकोलः । पुं । बाह्मनीतिख्यातेजन्तौ । ज्येष्ठ्याम् । अञ्जने । हलाहले ॥

चित्रगन्धम् । न । हरिताले ॥

चित्रगुप्तः । पुं । चतुर्दशयमान्तर्गतयमे ॥ यथा । एकोद्दिष्टविधायचित्रगुप्तायवैनमइति ॥ ब्रह्मपाद्मे यमस्यलेखके ॥ अस्योत्पत्त्यादिरावारनिर्णयतन्त्रादवधार्यः ॥

चित्रजल्पः । पुं । वाक्यविशेषे ॥ यथा । प्रेष्ठस्यसुहृदालोके गूढरोषाभिजृम्भितः । भूरिभावमयोजल्पो यस्तीव्रोत्कण्ठितान्तिमः ॥ चित्रजल्पोदशाङ्गोयंप्रजल्पंपरिजल्पितम् । विजल्पोज्जल्पसंजल्पावजल्पोऽभिजल्पितम् ॥ आजल्पःप्रतिजल्पश्च सुजल्पश्चेति कीर्त्तित इत्युज्ज्वलनीलमणिः ॥

चित्रतण्डुला । स्त्री । विडङ्गे ॥ चित्राः तण्डुलाअस्याः ॥

चित्रत्वक् । पुं । भूर्जवृक्षे ॥

चित्रदण्डक । पुं । श्रीलवृक्षे ॥

चित्रदर्शनम् । न । स्मारके ॥ स्मारकं चित्रदर्शनम् ॥

चित्रदेवी । स्त्री । महेन्द्रवारुण्याम् ॥

चित्रनेत्रा । स्त्री । सारिकाविहगे ॥

चित्रपक्षः । पुं । तित्तिरिपक्षिणि ॥ चित्रितो पक्षो यस्येति । पाण्डुसंज्ञकोष्णे ॥ चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ॥

चित्रपटः । पुं । छींट इति प्रसिद्धे वस्त्रे ॥

चित्रपत्रिका । स्त्री । द्रोणपुष्प्याम् ॥ कपित्थपर्ण्याम् ॥

चित्रपर्णी । स्त्री । जलपिप्पल्याम् ॥

चित्रपदा । स्त्री । गोधापदीलतायाम् ॥ अनुष्टुप्छन्दःकाष्टाक्षरार्द्धत्तिविशेषे ॥ यथा । चित्रपदा यदि भौगौ ॥ यथा । यामुनसैकतदेशे गोपवधूजलकेलौ । कंसरिपो र्गतिलीला चित्रपदाजगदव्यात् ॥ सवैया स्वर्गे तायामपि दृश्यते । यथा । सप्तयदा भगणाः पदतो गुरु एकगतो लघुको जितदेव चित्रपदेति तदा बुधि चित्रक्रमतो धृतवैरिधराविपकेश । काक्वथिता धिकमल्लपिल्लमागवरे यादवाभिनिवेश शौकलोकनथा रयधारय चेतसि, हेयथयन्तनरेशेति ॥

चित्रपर्णिका । स्त्री । चित्रपर्णीप्रभेदे । त्रिपर्ण्याम् । दीर्घपत्रायाम् ॥

चित्रपर्णी । स्त्री । पृश्निपर्ण्याम् ॥ चित्रं पर्णमस्याः । पाककर्णेतिङीष् ॥ कस्फोटावल्लयाम् ॥ जलपिप्पल्याम् ॥ द्रोणपुष्प्याम् ॥ मञ्जिष्ठायाम् ॥



चित्रपादा । स्त्री । सारिकापक्षिणि ॥

चित्रपिच्छकः । पुं । मयूरे ॥

चित्रपुङ्खः । पुं । शरे ॥

चित्रपर्णी । स्त्री । लक्ष्मणायाम् ॥

चित्रपृष्ठः । पुं । कलविङ्के । चटके ॥

चित्रफलः । पुं । चितल इति गौडप्रसिद्धे मत्स्ये ॥

चित्रफला । स्त्री । चिर्भिटायाम् ॥ मृगेर्वारौ ॥ लिङ्गिन्याम् ॥ वार्त्ताक्याम् ॥ कण्टकार्याम् ॥ फलकमाच इति गौड प्रसिद्धे मत्स्ये । राजनीये । फलक्याम् ॥ बृहदिन्द्रवारुण्याम् ॥

चित्रभानुः । पुं । अग्नौ । वैश्वानरे ॥ सूर्ये ॥ चित्रकवृक्षे ॥ भैरवे ॥ चित्रा भानवोऽस्य । शुभ्रादित्वात् पूर्वपदादिति णत्वम् ॥ षोडशवत्सरे ॥ अस्य फलम् । यथा कामु रमा पाश्चल्याकिद्दलंभिये । यस्यां जायते सर्वे चित्रभानौ वरानने ॥

चित्रमेषजा । स्त्री ॥ काकोदुम्बरिकायाम् ॥

चित्रमृगः । पुं । पृषताख्यमृगे ॥

चित्रमेखलः । पुं । मयूरे ॥

चित्रयोधी । पुं । अर्जुनवृक्षे ॥

चित्ररथः । पुं । सूर्ये ॥ गन्धर्वविशेषे ॥

था तथा । चिदाकाशस्य नोत्कामि
नैवात्राभ प्रतिस्थितिः ॥ चित्ताका
शं चिदाकाश माकाशञ्च तृतीयक
म् । द्वाभ्यां शून्यतरं विद्धि चिदाका
शं महामुने ॥

चिदात्मकः । त्रि । निर्विशेषस्फुरणमा
त्रस्वरूपे चिदद्वैते ॥ बाध्यते जाग्र
त्स्वप्नः सुप्ते जाग्रच्च बाध्यते । चिद
द्वैतन्तु न क्वापि बाध्यते वास्तवत्व
तः ॥ चितो न बाधकं द्वैतं चित्प्र
सादेन भासनात् । अबाध्यत्वाद्वास्त
वत्वं चिदद्वैतस्य सुस्थितम् ॥

चिदाभासः । पुं । बुद्ध्यात्मप्रतिबि
म्बे ॥ जीवे ॥ योऽयं चराचरात्मकेषु
शरीरजातेषु नियतसन्निहितः । चि
दाभासनेसः ॥

चिद्रसपूर्णः । त्रि । स्फुरत्सुखपूरिते ॥

चिद्रूपः । त्रि । ज्ञानमये ॥ हृदयालौ ॥

चिन्तनम् । न ॥ कर्त्तव्याकर्त्तव्यचिन्ता
याम् ॥ विचारे ॥ चिति स्मृत्याम् ।
ल्युट् । अन् ॥ स्मरणे ॥

चिन्तयन् । त्रि । ध्यायति ॥

चिन्ता । स्त्री । आध्याने । चिन्तने ।
स्मृत्याम् ॥ आत्मीययोगक्षेमापा
यालोचनात्मिकायां बुद्धौ ॥ दर्शन
सम्भोगयोः प्रकाराभावमायाम् ॥ चि
ता चिन्ताद्वयोर्मध्ये चिन्तानामगरी
यसि । चिता दहति निर्जीवं सजीवो
दह्यतेऽनया ॥ चिन्तनम् । चिति०
। चितिपूजीत्यङ् ॥ चिन्त्यतेऽनया
वा ॥ कुतश्चागच्छ घटते विघम्य क म
वातिष । इति चिन्ता न कर्त्तव्या धन
स्य धनस्य च ॥

चिन्तामणिः । पुं । वाञ्छितप्रदे मणिवि
शेषे ॥ तस्मिन् यद्यच्चिन्त्यते तत्त
च्चिन्तोपाधिकमेवावभासते न स्वरू
पतस्तथा ॥ स्पर्शमणौ ॥ यथा चि
न्तामणिं स्पृष्ट्वा लोहं काञ्चनतां भ
जेत् ॥ ब्रह्मणि ॥ आयुरारोग्यमर्थं
च भोगांश्चैवानुषङ्गिकान् । ददाति
ध्यायतां नित्यं सर्वकामप्रदो हरिः ॥
मन्त्रविशेषे ॥ यात्रायोगान्तरे ॥ स
हजस्थानगो भौमो भाग्यस्थश्च बृह
स्पतिः । चिन्तामणिः समाख्यातो या
तुः सङ्कल्पपूरकः ॥ बुद्धविशेषे ॥

चिन्तावेश्म । न । मन्त्रणागृहे । दा
बैटे ॥

चिन्तितः । त्रि । कृतचिन्तने । मनसा
विचारिते ॥ यथा । यच्चिन्तितं त
दिह दूरतरं प्रयाति यच्चेतसा न गणि
तं तदिहाभ्युपैति । प्रातर्भवामि व
सुधाधिपचक्रवर्ती सोऽहं व्रजामि
विपिने जटिलस्तपस्वीति ॥

चिन्तिया । स्त्री । चिन्तायाम् ॥

चिन्तोक्तिः । स्त्री । चिन्तावचने ॥

चिन्त्यः । त्रि । निरूपणीये । चिन्तितुं शक्य । विचारणीये ॥

चिन्त्यमान । त्रि । विचार्यमाणे ॥

चिन्नः । पुं । चीनाइतिख्याते ऽन्नविशेषे ॥ इतिशब्दचन्द्रिका ॥

चिन्मयः । त्रि । चैतन्यरूपे ॥ चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना । रूपस्थानां देवतानां स्त्री पुंसादिककल्पना ॥

चिपिटः । पुं । चिउड़ा इति प्रसिद्धधान्यभेदे । पृथुके । धान्यचमसे ॥ शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः । कुट्टिता चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि ॥ शालयो यावनालाश्चिपिटाः पुष्टिवर्द्धनाः इति च ॥ भक्ष्याभक्ष्यविधिनिषेधौ यथा । द्विः स्विन्नमन्नं पृथुकं शुष्कं देशविशेषके । भाष्यन्तिशस्तं विप्राणां भक्षणे च निवेदने ॥ अभक्ष्यं तद्यतीनाञ्च विधवाब्रह्मचारिणामिति ब्रह्मवैवर्त्तपुराणम् ॥ आर्द्रसद्याध्योषे ॥ त्रि । पिट्टितविस्तृते ॥ चिपटे ॥ नासिकायानते ॥ इनच् पिटच् चिकचिचेति पिटच् प्रत्ययः प्रकृतेश्चिरादेशः ॥

चिपिटकः । पुं । चिपिटे । पृथुके ॥ चिपिटमिव । संज्ञायाम् इवेतिवा कन् ॥

चिपिटा । स्त्री । गुण्डासिनीतृणे ॥

चिप्पः । पुं । क्षुद्ररोगविशेषे ॥ यथा । नखमांस मधिष्ठाय वातःपित्तञ्च देहिनाम् । कुर्वाते दाहपाकौ च तं व्याधिं चिप्प मादिशेदिति ॥

चिमिः । पुं । शुकखगे ॥ पट्टवृक्षे ॥

चिमिकः । पुं । शुकपक्षिणि ॥

चिमिचिमः । पुं । अर्शोव्याधिविशेषे ॥ कण्डूविशेषे । स्पर्शमियतायाम् ॥

चिरम् । न । अव्यादि (।ऽ)चिकाले ॥ दीर्घकाले ॥ त्रि । तद्वति ॥

चिरकारी । त्रि । चिरक्रिये ॥

चिरकालः । पुं । दीर्घकाले । दीर्घरात्रे ॥

चिरक्रियः । त्रि । दीर्घरूपे । अतिविलम्बेन क्रियासम्पादके ॥ चिराक्रिया यस्य ॥

चिरजीवकः । पुं । जीवकद्रुमे ॥

चिरजीवी । पुं । काके ॥ विष्णौ ॥ जीवकवृक्षे ॥ शाल्मलितरौ ॥ अश्वत्थामादिषु ॥ अश्वत्थामा वलि र्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ त्रि । चकुणाखजीविनि ॥

चिरञ्जीवी । पुं । विष्णौ ॥ काके ॥ जी

बक ट० ॥ प्राज्ञचिर० ॥ त्रि । चि
रजीविनि ॥
चिरण्टः । पुं । यौवने ॥
चिरण्टी । स्त्री । प्राप्तयौवनायांपितृगे
हस्थायाम् । सुवासिन्याम् ॥ चिरे
ण अटति पितृगेहाद्भर्तृगेहम् । अट
गतौ । अच् । पृषोदरादिः । वयस्य
चरमइतिङीप् ॥ तरुण्याम् । द्वि
तीयवयःस्थायाम् ॥
चिरतिक्तः । पुं । चिरायता इतिप्रसि
द्धे भूनिम्बे । किराततिक्ते ॥
चिरत्नः । त्रि । पुरातने । चिरन्तने ॥
चिरेभवः । चिरपरुत्परारिभ्यस्त्नो
वक्तव्यः ॥
चिरन्तनः । त्रि । पुरातने ॥ चिरेभवः
। सायंचिरमितिट्युट्युलौ । निपात
नान्मान्तत्वम् ॥
चिरपाकी । पुं । कपित्थे ॥
चिरपुष्पः । पुं । वकुलाऽगमे ॥
चिरप्रसूता । स्त्री । वष्कयिण्याम् ॥ चि
रंप्रसूता । सुप्सुपेतिसमासः ॥
चिरम् । अ । बहुकालार्थे । चिराय ॥
चिरमेही । पुं । गर्दभे ॥
चिरमित्रः । पुं । चिल्ले ॥
चिररात्रम् । न । दीर्घकाले ॥
चिररात्राय । अ । दीर्घकाले ॥ चिरा
रात्रय.। अचूप्रत्ययान्वेत्यवाजिति



योगविभागाद्च् । चिररात्राम्अय
ते । अय० । कर्मण्यण् ॥
चिरलोकपितरः । पुं भूम्नि । अग्निष्वात्ता
दिषु ॥ अग्निष्वात्तादयोलोकेपितर
श्चिरवासिनः ॥
चिरविल्वः । पुं । करञ्जवृक्षे ॥ चिरं
विलसि । बिलभेदने । बाहुलका
द्वः ॥
चिरसूता । स्त्री । वष्कयिण्याम् ॥
चिरसूतिका । स्त्री । वष्कयिण्याम् ॥
चिरस्य । अ । दीर्घकाले ॥ चिरमस्य
ति । असु० । यत् । संज्ञापूर्वकत्वा
द्वृद्ध्यभावः । ग० ॥
चिरा । स्त्री । बहुकालसाध्यायाम् ॥
चिराटिका । स्त्री । श्वेतपुनर्नवायाम् ॥
पातासी इतिगौडभाषाप्रसिद्धचटि
कायाम् ॥
चिरात् । अ । दीर्घकाले ॥
चिरात् । पुं । गरुडे ॥
चिरातिक्तः । पुं । चिरतिक्ते ॥
चिराय । अ । दीर्घकाले ॥ चिरमय
ते । अय० । कर्मण्यण् ॥
चिरायुः । पुं । विबुधे । देवतायाम् ॥
त्रि । चिरजीविनि ॥ चिरमायुर्यस्य
॥ भवति यदि मनुष्यो गुर्वधीनश्चि
रायुरित्त्वागमः ॥
चिराश्रयः । पुं । खट्वादि (ऽ) त्रिकले ॥

चिरिः । पुं । तोता इतिप्रसिद्धे शुकपक्षिणि ॥

चिरेण । अ । चिरमित्यर्थे ॥

चिर्भटी । स्त्री । कर्कट्याम् ॥

चिर्भिटः । पुं । न । कर्कटी सद्धे । मेलसैंध इतिसैंधकचरी इतिचभाषा प्रसिद्धायां लुचिभायाम् ॥ चिर्भिटंमधुरं रूक्षंगुरुपित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वंतूष्णंचपित्तलम् ॥

चिर्भिटा । स्त्री । चिभड इति भाषा प्रसिद्धे चिर्भिटे ॥

चिलमिलिका । स्त्री । कण्ठीभेदे ॥ खद्योते ॥ विद्युति ॥

चिलमीलिका । स्त्री । चिलमिलिकायाम् ॥

चिलिचिमः । पुं । चाल्हियागडक इति गौडभाषाप्रसिद्धे मत्स्ये । नखमीने ॥ चिलविलसने । इगुपधात् किदिति कः । वीप्सायांद्वित्वम् । चिलिचिलिंविलासं मिमीते । माङ्माने । आतइतिक । पृषोदरादिः ॥ चिलिंविलासंचिनोतिवा । चिञ्० । बाहुलकात् मक् ॥ चेल्हो इतिगौडप्रसिद्धे मत्स्ये ॥

चिलिचिलिः । पुं । विलासे ॥

चिलिचीमः । पुं । } चाल्हियागडक इतिगौडप्रसिद्धे चिलिचिमे ॥
चिलिचीमिः । पुं । }

चिलिमिलिका । स्त्री । चिलमिलिकार्थे ॥

चिलिमीनकः । पुं । चिलिचिमेमत्स्ये ॥

चिलिमीलिका । स्त्री । चिलमिलिकार्थे ॥

चिलीचिमः । पुं । } नखमीने । चिलिचिमे ॥
चिलीचिमिः । पुं । }
चिलीमः । पुं । }

चिल्लः । पुं । आतायिनि । खभ्रान्तौ । चील इति भाषा ॥ चिल्लति । चिल्ल शैथिल्ये भावकरणेच । अच् ॥ क्लिन्ननेत्रे ॥ त्रि । क्लिन्ननेत्रवति ॥ क्लिन्ने चक्षुषी अस्य । क्लिन्नस्य चिल्पिल् चास्य चक्षुषीति चिलादेशो लच्च प्रत्ययः । चक्षुर्गतःक्लेदरोगः चिल्लशब्दवाच्यः । तद्योगाच्चक्षुस्तद्योगात् पुरुषोपीतिव्याख्यातारः ॥

चिल्लकः । पुं । लोभे ॥

चिल्लभक्षा । स्त्री । दद्रुविलासिन्याम् ॥

चिल्लाभः । पुं । प्रसह्यचौरे । गांठकटा लुटेरा पिंडारा कूषाचोर इत्यादि भाषा ॥

चिल्लिः । पुं । भ्रूमध्ये ॥

चिल्ली । स्त्री । क्षुद्रवास्तुकशाके । गौडवास्तुके । बथुआ इति प्रसिद्धे शाके ॥ लोध्रे ॥ झिल्ल्याम् ॥ चिल्लति । चिल्लशैथिल्ये । अच् । गौ० ङीष् ॥

चिविह्निका । स्त्री । क्षुद्रक्षुपविशेषे । रक्तदलायाम् ॥

चिवुः । पुं । चिवुके । ओष्ठाधोभागे । ठोडि इति भाषा ॥ चीवति । चीव्यते वा । चीवृ आदानसंवरणयोः । मृगय्वादित्वात् कुः ॥ चिनोतिर्वा । प्राग्वत् ॥

चिवुकम् । न । चिवौ ॥ स्वार्थेकन् ॥ पुं । मुचुकुन्दवृक्षे ॥

चिह्नम् । न । लाञ्छने । लक्ष्मणि ॥ पताकायाम् ॥ चह्यतेऽनेन । चह परिकल्कने । बा०नक् उपधाया इत्त्वं ॥ शाब्दादि (।ऽ) विकल्पे ॥

चिह्नकारी । त्रि । घोरदर्शने ॥ चिह्नयतिनि ॥

चिह्नधारिणी स्त्री । श्यामालतायाम् ॥

चिह्नितः । त्रि । अङ्किते । चिह्नविशिष्टे ॥

चिल्हः । पुं । } गंधारी इति पर्वत-
चिल्हकः । पुं । } प्रसिद्धे वृक्षे ॥ चिल्हकोयातनिवारी श्लेष्मघ्नोधातुपुष्टिकृत् । आग्नेयो विषवदास्यफलं मत्स्यनिषूदनम् ॥

चीडा । स्त्री । चीडागन्ध इति गौड प्रसिद्धेगन्धद्रव्ये । दारुगन्धायाम् ॥

चीत्कारः । पुं । भयध्वनौ ॥

चीनः । पुं । देशविशेषे ॥ यथा । कामीरन्तुसमारभ्य कामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशि मानसेशादक्षिणे ॥ मानसेशादक्षपूर्वे चीनदेशः प्रकीर्तितः इति तन्त्रशास्त्रम् ॥ तद्देशजे मनुष्ये । चीनदेशोद्भवे पूर्वं क्षत्रिये पश्चाद्विहितक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये ॥ आगमोक्ते सम्प्रदायविशेषे ॥ अंशुकविशेषे । मखमल इत्याधुनिक भाषाप्रसिद्धे बहुविधाङ्कितवस्त्रे ॥ चीणा इतिप्रसिद्धे व्रीहिविशेषे ॥ चीनकः कङ्गुभेदोऽस्ति सचेयः कङ्गुवद्गुणैः ॥ तन्तौ ॥ मृगविशेषे ॥ न । पताकायाम् ॥ सीसके ॥ चिनोति । चिञ्० । बाहुलकान्नक् दीर्घश्च ॥

चीनकः । पुं । चीणा इति प्रसिद्धधान्ये । काककङ्गौ ॥ कङ्गुन्याम् ॥ चीनकर्पूरे ॥

चीनकर्पूरः । पुं । चीनाकपूर इति भाषाप्रसिद्धे कर्पूरविशेषे । कृत्रिमे । मेघसारे । धवले ॥

चीनजम् । न । तीक्ष्णलौहे ॥

चीनपिष्टम् । न । सिन्दूरे ॥ चीनपिष्टम् ॥ सीसके ॥

चीनवङ्गम् । न । सीसके ॥

चीनाकः । पुं । चीनियाकपूर इति प्रसिद्धे कर्पूरविशेषे ॥ चीनाकसंज्ञः

ह्नौं धरणीमवलोक्य करुणार्द्रहृदय स्तस्या भारमवतारयितुं रामकृष्ण स्वरूपेणांशतो यदुवंशे अवततार सि ॥ पुं । आमलकविशेषे ॥

चूर्णकारः । पुं । चूनरी इति गौडभाषाप्रसिद्धे नटकन्यायांपुण्ड्रकाज्जाते वर्णसङ्करजातिविशेषे ॥

चूर्णकुन्तलः । पुं । शिरस्थे चूर्णकुन्तले । अलके ॥ चूर्णस्य कर्पूरादिचोदस्य कुन्तलः ॥

चूर्णखण्डः । पुं । न । कर्करे । कङ्करतिकांकर इतिभाषा ॥

चूर्णदासी । स्त्री । पिष्टकारिण्याम् । पिसनहारी इतिभाषा ॥

चूर्णपारदः । पुं । हिङ्गुले ॥

चूर्णशाकाङ्कः । पुं । गौरसुवर्णशाके ॥

चूर्णा । स्त्री । वासयोगे । पटवासादि चोदे । निवासयुक्तिषु । सुगन्धिचूर्णे ॥ चूर्णते । चूर्ण० ॥ घञ् ॥

चूर्णिः । स्त्री । भाष्यस्थले महाभाष्ये ॥ कपर्द्दके ॥ शतसङ्ख्यककपर्द्दकेषु ॥ चूर्णस्यकरणम् । तत्करोतीतिरण्य न्तादचद्रः ॥ यथा । चरणं चारणं वा । घ यि पृष्टिपाप्यहं चूर्णिभूखि इतिसायुः ॥

चूर्णिका । स्त्री । सक्तुषु ॥

चूर्णितः । त्रि । संदलिते ॥ कृतचूर्णे ॥

चूर्णी । स्त्री । महाभाष्ये ॥ कपर्दीकशते ॥ कृदिकारादिति पक्षेङीष् ॥

चूर्णीकृत् । पुं । महाभाष्यकारे । पतञ्जलौ ॥

चूर्णीकृतः । पुं । गन्धविशेषे ॥ यथा । गन्धचूर्णं गन्धपर्णं चूर्णं सुमनसां तथा । प्रशस्तगन्धयुक्तानां पञ्चचूर्णानियानिच ॥ तानि गन्धाव्हयानिस्युः सुगन्धः प्रथमःस्मृत इति ॥ त्रि । कृतचूर्णे ॥

चूलः । पुं । कपाटाधो भागान्तरे ॥

चूलकः । पुं । केशे ॥

चूला । स्त्री । गृहोपरिगृहे । चन्द्रशालायाम् ॥ चूडायाम् ॥

चूलिकम् । न । घृतभृष्टसमितायाम् ॥

चूलिका । स्त्री । हस्तिकर्णमूले ॥ चूल्यते ऽनया । चूलसमुच्छ्राये । सं ज्ञायामितिण्वुल् ॥ नाटकाङ्गे ॥

चूषा । स्त्री । कक्ष्यायाम् । गजमध्यबन्धनरज्ज्वाम् ॥ चूष्यते पीयते पृष्ठमांसेनाहृश्यतां नीयते । चूषपाने । कर्मणिघञर्थे कः ॥

चेकितानः । पुं । नृपविशेषे ॥

चेटः । पुं । दासे ॥ चेटति । चिटपरप्रेष्ये । अच् ॥

चेटकः । पुं । दासे । भृत्ये ॥ चेष्यते । चिट० । कृञादिभ्योवुन् ॥ उपपतिनायकविशेषे । सम्धानचतुरे ॥

चेतनीया । स्त्री । ऋद्धिनामौषधौ ॥

चेतः ॥ न । चित्ते ॥ चिती० । असुन् ॥ पुं । चैतन्य ॥ साक्षीचेता इति-श्रुतेः ॥

चेतोंशुः । पुं । जीवे ॥ चेतसश्चैतन्यस्य अंशुरिव ॥

चेतोमुखः । पुं । चैतन्यदीप्तानिरुक्तिप्रधाने प्राज्ञे ॥ स्वप्नादिप्रतिबोधं चेतः प्रतिद्वारीभूतत्वात् । स्वप्नोजागरितस्थेति प्रतिबोधशब्दितं चेतस्तत् प्रतिद्वारभूतत्वं द्वारभावेन स्थितस्वम् नहि स्वप्नस्य जागरितस्य वा सुषुप्तद्वारमन्तरेण सम्भवोऽस्ति तयोस्तत्कार्यत्वात् अतःसुषुप्ताभिमानी प्राज्ञः स्वानद्वयंकारणत्वात् चेतोमुखव्यपदेशभागित्यर्थः ॥

चेदिः । पुं । देशविशेषे । चेपुरे न्द्रा छेले ॥ पुंभूम्नि । तद्देशस्थे । चेदयः ॥

चेदिपतिः । पुं । उपरिचरवसौ ॥ चेदिराजि ॥ चेदीनां देशविशेषाणां पतिः ॥

चेदिराट् । पुं । शिशुपाले ॥ चेदिपुराट् यस्य । सं० क्विप् ॥ यद्वा । चेदीनां राट् । अन्ये० क्विप् । इतिकेचित् । वस्तुतस्तु सत्सूद्विषेति क्विप् ॥

चेदिराजः । पुं । शिशुपाले ॥ चेदीनां देशविशेषाणां राजा । टच् ॥ उपरिचरवंशे ॥

चेवी । स्त्री । रागिणीविशेषे ॥ इतिहलायुधः ॥

चेयम् । त्रि । चेतव्यमात्रे ॥ चेतुं योग्यम् । चिञ्० । अर्हकृत्यतृचश्चेति योग्यतायां प्रत्ययः ॥

चेलम् । न । वस्त्रे ॥ त्रि । अधमे ॥ चिलति चिल्यते वा । चिल वसने । चेलति चेल्यते वा । चेलृ गतौ । अच् । घञ् वा ॥

चेलकम् । न । चेलशब्दार्थे ॥ स्वार्थेकः ॥

चेलानः । पुं । चेलना इति गौडप्रसिद्धे फललताविशेषे । अल्पप्रमाणके ॥

चेलाशः । पुं । फललताविशेषे । चिपकडे । ज्ञतापनसे । सुखाशे ॥

चेलिका । स्त्री । चेवली इति प्रसिद्धे पट्टवस्त्रे ॥ यथा । सेयं कृष्णास्य वनिता पीतशाटीपरिच्छदा । रक्तचेलिकयाच्छन्ना शातकुम्भघनस्तनी । इति पाद्मेपातालखण्डम् ॥

चेली । स्त्री । अधमायाम् ॥ गौरादित्वात् ङीप ॥ चेलड्डितिपचादौ टित्त्वान्ङीपवा ॥

चेलीमः । पुं । वालियाखमीने ॥

चेलुकः । पुं । बुद्धभिक्षुशिष्ये । श्रामणेरे ॥

चेटकः । पुं । रतिबन्धविशेषे ॥ यथा । पादमेकं हृदि न्यस्य द्वितीयं चैव चेष्टयेत् । कान्तः क्रोडे स्थितां नारीं बन्धो यं चेटको मतः ॥ त्रि । चेष्टाकर्त्तरि ॥

चेष्टा । स्त्री । कायपरिस्पन्दनादिरूपायां क्रियायाम् । प्राणधर्मे ॥

चेष्टानाशः । पुं । प्रलये ॥

चेष्टितम् । न । गतौ ॥ चेष्टायाम् ॥ चरित्रे ॥ त्रि । चेष्टान्विते ॥

चैकितानः । पुं । चिकितानस्यर्षेरपत्ये ॥

चैकितानेयः । पुं । यक्षदत्ताख्येऽर्षिविशेषे ॥ चिकितानस्यापत्यं चैकितानः तदपत्यं युवा चैकितानेयः ॥

चैकितायनः । पुं । दल्भ्यगोत्रापत्यस्यात् दाल्भ्ये ऋषिविशेषे ॥ चिकितायनस्यापत्यम् । अण् ॥

चैतन्यम् । न । चेतनायाम् ॥ ब्रह्मणि । सर्वभूतात्मिकप्रपञ्चाधिष्ठानप्रकाशे ॥ चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते । ज्ञानक्रिये जगत्कर्त्तृत्वमिष्यते चेतनाश्रये ॥ नेष्यते वैशेषिकैः सांख्यैश्चेति शेषः ॥ प्रकृतौ ॥ भावे स्वार्थे वा ष्यञ् ॥

चैत्तः । पुं । विज्ञानस्कन्धातिरिक्तस्कन्धाभावे ॥

चैत्यः । पुं । उद्देश्यपादपे । ग्रामादिप्रसिद्धहेतौ महावृक्षे । देवतरौ । देवावासे ॥ जिनबिम्बे ॥ जिनसभातरौ ॥ बुद्धे । न । आयतने ॥ चिताचिह्ने ॥ बुद्धवेश्मे ॥ जिनसभायाम् ॥ यज्ञस्थाने ॥ जनानां विश्रामस्थाने ॥ देवस्थाने ॥ चित्याश्चितिच्येचेतिसाधुः । चित्याया इदम् । तस्येदमित्यण् ॥

चैत्यगहम् । न । वसुप्रथमखण्डे ॥

चैत्यद्रुः । पुं । अश्वत्थाऽगमे ॥ प्रख्यातवृक्षे ॥

चैत्यद्रुमः । पुं । अश्वत्थवृक्षे ॥ प्रसिद्धद्रुमे ॥ ग्रामादिसमीपे ख्यातवृक्षे ॥

चैत्यमुखः । पुं । कमण्डलौ ॥

चैत्यवृक्षः । पुं । चैत्यद्रुमे ॥

चैत्योपरागः । पुं । कर्त्तृत्वादिसर्वप्रपञ्चसम्बन्धे ॥ चैत्येनोपरागः ॥

चैत्रः । पुं । मासविशेषे । चैत्रिके । मधौ ॥ अत्र जातस्य फलम् । सत्यसंभाषी विनयी सुवेषी भोगी सुखी स्यान्मधुरान्नभोजी । सत्सङ्गयुक्तो द्विजदेवभक्तो भवेन्मनुष्यो मधुमासजन्मा ॥ चैत्री पौर्णमास्यस्मिन् । विभाषा फाल्गुनीत्यादिना पक्षेऽण् ॥ पर्वतविशेषे ॥ चित्रागर्भजे बुधपुत्रे सप्तद्वीपाधिपतौ सुरथराजस्य पितामहे ॥ बुद्धभिक्षुके ॥ न ।

स्मृते ॥ देवकुले । देउल इति गौडभाषा ॥ स्तम्भकचैत्ये ॥

चैत्रकः । पुं । मधुमासि ॥ न । चित्रकस्यशाकादौ ॥

चैत्ररथम् । न । कुबेरस्योद्याने ॥ मेरोः प्राच्यांविष्कम्भशैले स्थितमू-लोद्याने ॥ चित्ररथेन गन्धर्वेण निर्वृत्तम् । तेननिर्वृत्तमित्यण् ॥

चैत्रावली । स्त्री । चैत्र्यांपूर्णिमायाम् । मधूत्सवे । सुवसन्ते ॥

चैत्रिकः । पुं । चैत्रे । मधुमासि ॥ चैत्रीपौर्णमास्यस्मिन् । विभाषाफाल्गुनी श्रवणाकार्त्तिकी चैत्रीभ्य इति पक्षे ठक् । ठस्येकः ॥

चैत्री । स्त्री । चैत्रपूर्णिमायाम् ॥ चित्रयायुक्ता पौर्णमासी । नक्षत्रेणयुक्तः कालइत्यण् । ततो ङीप् ॥

चैद्यः । पुं । दमघोषात्मजे । शिशुपाले ॥ चेदीनांजनपदानामयम् । वृद्धेत्कोशलाजादाञ्ञ्यङ् इतिञ्यङ् ॥ पुंभूम्नि । चेदिदेशोद्भवे । चेदिषु ॥

चैलम् । न । मृदुवस्त्रे ॥ चेलति चेल्यतेवा । चेलृगतौ । अच् घञ्वा । ततः प्रज्ञाद्यण् ॥

चोकम् । न । हेमाह्वायामूले ॥

चोक्षः । पुं । गीते ॥ त्रि । शुचौ ॥ स्वभावशुचौ वरस्त्र्यादिदेशे ॥ दक्षे ॥ अभीक्ष्णे ॥ मनोज्ञे । चोखा इति भाषा ॥

चोचम् । न । वल्के ॥ चर्मणि ॥ गुडत्वचि ॥ त्वक्पत्रे । तेजपातइतिभाषा ॥ प्रशस्तं चोचमस्त्यस्य । अर्शआद्यच् ॥

चोटी । स्त्री । शाट्याम् ॥ इति हे० ॥

चोडः । पुं । प्रावरणे ॥ कञ्चुके ॥ पुंभूम्नि । देशविशेषे । चोडाः ॥

चोदकः । त्रि । प्रेरके ॥ चोदयति । चुदप्रेरणे । हेतुमति णिच् । कर्त्तरि ण्वुल् ॥

चोदनम् । न । प्रेरणे ॥

चोदना । स्त्री । विधौ ॥ चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः इति भट्टोक्तिः ॥ विधिवाक्ये । क्रियायाः प्रवर्त्तकेवचने ॥ चोदना नामलिङ्लोट्तव्यदादिशब्दव्ययस्यापिसविधिनिषेधरूपयजनादिक्रियाप्रवर्त्तकं वचनमभिधीयते ॥ तर्कनायाम् ॥ प्रवर्त्तनायाम् ॥ प्रेरणायाम् ॥ शब्दभावनायाम् ॥ चोद्यते प्रवर्त्त्यतेऽनयेति । युच् ॥

चोदनागुडः । पुं । कन्दुके ॥

चोदितः । त्रि । प्रेरिते ॥

चोद्यम् । न । अद्भुते ॥ प्रश्ने ॥ पूर्वपक्षे ॥ चोद्यंवा परिहारोवा क्रियतां द्वैतभाषया । अद्वैतभाषया चोद्यं

मास्ति नापितदुस्तरम् ॥ त्रि । चोदनार्हे । प्रेर्ये । प्रेरणायोग्ये ॥ चोदितुं योग्यः । अर्हे कृत्यतृचश्चेति यत् ॥

चोपनम् । न । मन्दगमने ॥ मौने ॥ चुपेर्ल्युट् ॥

चोरः । पुं । स्तेयकर्त्तरि । तस्करे । दस्यौ । प्रच्छन्नापहारिणि ॥ गन्धद्रव्यविशेषे ॥ क्लीवेऽप्यस्याम् ॥ चोरयति । चुरस्तेये । पचाद्यच् ॥

चोरकः । पुं । पृक्कायाम् । ग्रन्थिपर्णभेदे । भंटिउरइति नैपालभाषा ॥

चोरघातः । पुं । रात्रौ पक्षिविशेषे ॥

चोरहन्ति । हन० । कृत्यल्युटोबहुलमितिल्युट् ॥

चोरपुष्पिका । स्त्री । शङ्खिन्याम् ॥ चोरपुष्प्येव । स्वार्थे कन् ॥

चोरपुष्पी । स्त्री । शङ्खिन्याम् । केशिन्याम् । सांखाहुली इति भाषा ॥ चोरस्येवपुष्पमस्याः राशिविशिकाश्विस्वात् । पाककर्णेतिङीप् ॥

चोरस्नायुः । स्त्री । काकनासाख्यलतायाम् ॥

चोरा । स्त्री । चोरपुष्प्याम् ॥

चोरिका । स्त्री । चौर्य्ये ॥

चोरितः । त्रि । मुषिते ॥ चोर्य्यतेस्म । चुर० । क्तः ॥

चोलः । पुं । कूर्पासके । स्त्रीणां कञ्चुलिकाख्ये आप्रपदीनकञ्चुके ॥ चोल्यते ऽनेनवा । चुलसमुच्छ्राये । घञ् चोलः ॥ चोला इति प्रसिद्धे पुंसो वस्त्रविशेषे ॥ अधुना ताञ्जोर इति प्रसिद्धे देशे । द्रविडतैलङ्गयोर्मध्ये चोलदेशः प्रकीर्त्तितः । चन्द्रकर्यावद्वते प्रोक्ता सङ्केता ऽर्थान्तरे भवेत् ॥ चीनदेशस्थेक्षदविशेषः ॥ शस्त्रधारिणि वेदयागानधिकारिणि म्लेच्छविशेषे ॥ पूर्वमयं क्षत्रिय आसीत् स गरोराज्ञास्य धर्मनाशं वेशान्यत्वञ्च चकार ॥ न । वसने ॥

चोलकः । पुं । वाणवारके । कवचे ॥ न । वल्कले ॥

चोलकी । पुं । करीरे ॥ नारङ्गे ॥ किष्कुपर्वणि ॥

चोलखण्डकः । पुं । शिरोवेष्टे ॥

चोलमम् । न । नागरङ्गे ॥ किष्कुपर्वणि ॥ करीरे ॥

चोलहृदः । पुं । चीनदेशीयसरोविशेषे ॥

चोली । स्त्री । कूर्पासके । अंगिया इति भाषा ॥ अल्पश्चोलः गौरादित्वात् ङीष् ॥

चोलोण्डुकः । पुं । शिरोवेष्टे । उष्णीषे ॥

चोषः । पुं । दाहविशेषे । पार्श्वस्थितस्य

चैमैया

म्लिनेवसन्तापे ॥ चूषणेनेवपीडायाम् ॥

चोष्यः । त्रि । इक्षुदण्डादौ । यद्दन्तैर्निष्पीड्य रसांशं निगीर्या ऽवशिष्टं त्यज्यतेतत् चोष्यमुच्यते ॥

चोक्ष । पुं । सिन्धुवारे । इयोत्तमे ॥

चौडम् । न । चूडाकरणकर्मणि ॥ चूडामयोजनमस्य । चूडादिभ्यउपसंख्यानमित्यण् ॥

चौक्षम् । न । जलाशयविशेषे ॥ तत्र वे ॥ शिलाकीर्णं स्वयं स्रवं नीलाञ्जनसमोदकम् । लतावितानसञ्छन्नं चौक्षमित्यभिधीयते ॥ चौक्षंच शिकरं नीरं रूक्षं कफहरं लघु । मधुरं पित्तनुद्रुच्यं पाचनं विशदं स्मृतम् ॥

चैमैया । स्त्री । मात्रावृत्तविशेषे ॥ यथा । चैमैयावृत्तं निगदन्ति कविपतिपिङ्गलचितम् कुरुसमसुरङ्गममतिहृदयङ्गमसमगुरुमुपनीतम् । यदिह वत्सुरविभिन्छन्दोविद्धि भियतैयतिरभिरामम् सपदिसुवसमये न्पति. कवये वितरति संसदि कामम् ॥ यथा । कालियकुलभञ्जन दुरितविभञ्जनसज्जनरञ्जनकारी गोवर्द्धनधारी गोपविहारी वृन्दावनसञ्चारी । शतदुर्जयदानवपातिच्युतिः तमालश्यामुदिताखण्डलपाली सङ्गतगोपालीनिधुवनशाली भवतुमुदे वनमालीति ॥

चौरः । पुं । पाटच्चरे । तस्करे । चोरपुष्पोषधौ ॥ सुगन्धे ॥ चोरयतम् । चुरस्तेये । अप्रत्ययात् । सञ्ज्ञापूर्वकत्वान्नगुण । चुराशीलमस्य । छत्रादिभ्योणः ॥ चोरएववा । स्वार्थिकः प्रज्ञाद्यण् ॥

चौरा । स्त्री । चोरपुष्पिकायाम् ॥

चौरिका । स्त्री । चौर्ये ॥ चोरस्य भावः कर्मवा । मनोज्ञादित्वाद् वुञ् ॥

चौर्यम् । न । चौरिकायाम् । स्तेये ॥ चोरस्य कर्म भावोवा । ब्राह्मणादित्वात् ष्यञ् ॥

चौलम् । न । मुण्डनकर्मणि । चूडाकरणे ॥

चौलुक्यः । पुं । राजर्षिविशेषे ॥ चुलुकस्य गोत्रापत्यम् । गर्गादित्वात् यञ् ॥ त्रि । चुलुकेन कृते ॥

च्यवन । पुं । भार्गवे ऋषिविशेषे ॥ । पतने ॥

च्युतः । त्रि । चलिते । गलिते ॥ च्युङ्गतौ । क्त ॥ गत्यर्थाकर्मकेतिकर्त्तरिक्तो वा ॥ चुटिते ।

च्युताचार । त्रि । स्खलितव्रते ॥

च्युति । स्त्री । चरणे ॥ यथा । धैर्यच्यु

...तिः ॥ भगे । योनौ ॥ गुदद्वारे ॥

च्युतोपलः । पुं । भद्रदन्ते ॥ अश्वपार्श्वे ।

च्युपः । पुं । वक्त्रे । मुखे ॥ च्यवन्ते भा

षन्तेऽनेन । च्युङ् अनेकार्थत्वा

ज्ज्ञापणे । च्युवः किच्चेतिपः ॥

च्योतत् । त्रि । क्षरति ॥

च्यौत्नः । पुं । गन्तरि ॥ अपरे ॥ बी

र्यापुत्रये । च्यवते । च्युङ् जनिदे

त्यादिना त्नप् ॥

छ

छः । पुं । छकारे ॥ छेदने ॥ त्रि । नि

र्मले ॥ तरले ॥ न । गृहे ॥

छगः । पुं । छागे । अजे ॥

छगणः । पुं । न । करीषे ॥ छाणा इ

ति भाषा ॥ इतिहेमचन्द्रः ॥

छगलः । पुं । छागे । ना । नीलवस्त्रे ॥

छायते । छोछेदने । छोगुगह्रस्वश्चे

तिकलच् ॥

छगलकः । पुं । छागे ॥ स्वार्थे कः ॥

छगलण्डः । पुं । दक्षिणदेशे समुद्रसन्नि

धौ प्रचण्डदेव्याः स्थाने ॥

छगला । स्त्री । वृद्धदारकवृक्षे ॥

छगलान्त्रिका । स्त्री । वृद्धदारकभेष

जे ॥ छगलस्येवान्त्रमस्याः । गौरादि

त्वान्ङीष् । कन् । ह्रस्वः ॥

छगलान्त्री । स्त्री । वृद्धदारकवृक्षे ॥

वृके ॥ छगलस्येवान्त्रमस्याः । गौरा

दित्वान्ङीष् ॥

छगली । स्त्री । वृद्धदारकभेषजे ॥ छा

गमातरि ॥

छच्छिका । स्त्री । छाछ इतिप्रसिद्धे त

क्रभेदे ॥ छच्छिका सरचीनं स्याद

च्छा प्रचुरवारिका ॥ छच्छिका ग्री

तला लघ्वी पित्तश्रमतृषापहरी ।

वातनुत् कफकृत् सा तु दीपनीलव

णान्विता ॥ सरचीनम् दधि इति

सम्बन्धः ॥

छटा । स्त्री । दीप्तौ ॥ परम्परायाम् ॥

छटाफलः । पुं । गुवाकवृक्षे ॥

छटाभा । स्त्री । विद्युति ॥

छत्रः । पुं । अतिच्छत्रे । मलेनपचेणाच

यत्राकारे वृक्षे । छातारियाविष छा

तनाविष खरविष इतिच गौडभा

षा ॥ भूतृणे ॥

छत्रम् । न । आतपत्रे । छाता इति

छत्री इतिचभाषा ॥ अथास्यलक्षणम् ।

निर्मितन्तु हंसपक्षैः कृकवाकुमयू

रसारसानांवा । दौकूलेन नवेनतु

समन्ततश्छादितं शुक्लम् । मुक्ताफ

लै रुपचितं प्रलम्बमालाविलं स्फटि

कमूलम् ॥ षड्ढस्तशुद्धहैमं नवपर्वन

गै कदण्डन्तु ॥ दण्डार्द्धविस्तृतं तत्

समार्हतं रत्नभूषितमुदग्रम् ॥ चाम
से सदातपत्रं कस्यापरं विजयद
स्य ॥ युवराजेन्द्रपतिपत्न्योः सेनाप
तिदण्डनायकानाञ्च । दण्डोर्द्धं पञ्च
वर्त्तः सर्वपञ्चकृतोर्द्धं विस्तारः ॥
अन्येषां मयूरं प्रसादपट्टविभूषित
शिरसाम् । वांशमविरलमात्रं छत्रं
कार्यन्तु मायूरम् ॥ अन्येषान्तु नरा
णां शीतातपवारणान्तु चतुरस्रम् ।
समदस्तदण्डयुक्तं छत्रं कार्यन्तु विप्रा
णाम् ॥ ६ ॥ इति वाराहसंहिता स-
प्तितमोऽध्यायः ॥ ७२ ॥ विशेषोऽ
स्याकल्पतरौ द्रष्टव्यः ॥ छादयति छा
द्यते ऽनेनवा । छदअपवारणे ॥ गृह
न्तः । पुंन् इत्यमरवत्तिकेषु चेति स्वः
॥ पत्रपादपवितेभ्यादिलिङ्गानुशास
नात् पुंस्त्वमपि बोध्यम् ॥
छत्रकः । पुं । मत्स्यरङ्गखगे ॥ मछि
भे । रांगाकुचियाखडा इति गौड
भाषा ॥ ईश्वरगृहविशेषे ॥ न । छ
त्रार्थे ॥
छत्रगुच्छः । पुं । गुण्डतृणे ॥
छत्रचक्रम् । न । राशीनां शुभाशुभ-
ज्ञानबोधके समयास्तोक्तचक्रवि
शेषे ॥
छत्रधरः । पुं । } छत्रस्य धारके । छा
छत्रधारः । पुं । } याकारे । छाताधा



र इति भाषा ॥
छत्रपत्रम् । न ॥ स्थलपद्मे ॥ पुं ॥ भूर्ज
वृक्षे ॥
छत्रपुष्पकः । पुं । तिलकवृक्षे ॥
छत्रभङ्गः । पुं । नृपक्षये । नृपनाशे ॥
स्वातन्त्र्ये ॥ वैधव्ये ॥
छत्रवृक्षः । पुं । मुचुकुन्दे । पुष्पवृक्ष
विशेषे ॥
छत्रा । स्त्री । मधुरिकायाम् । मिश्रौ
॥ अतिच्छत्रे ॥ धान्याके ॥ शिलीन्ध्रे
न्ध्रे ॥ छत्रमस्याः अस्ति । अच् । छ
त्राकारस्तवकत्वात् ॥ मञ्जिष्ठायाम्
॥ टाप् ॥
छत्राकः । पुं । जलबर्बुरवृक्षे ॥ न ।
शिलीन्ध्रे ॥
छत्राकी । स्त्री । रोचनायाम् ॥ छत्र मक
ति । अकःकुटिलायांगतौ । कर्म
ण्यण् ॥
छत्रातिच्छत्रः । पुं । छत्रातिच्छत्राय म्
। छत्रवत्तृणे । छत्राकारे जलोद्भवे
सुगन्धिदृव्यविशेषे ॥
छत्राधान्यम् । न । धन्याके ॥
छत्रिका । स्त्री । छिन्नीरे । शिलीन्ध्रे ॥
छत्री । त्रि । छत्रवति ॥ मत्वर्थीयइनिः
॥ पुं । नापिते ॥
छत्वरः । पुं । गृहे ॥ कुञ्ज ॥ छादयति
। छद० । छित्वरच्छत्वरेत्यादिना

। छर्दिमे ॥

छर्दिमः । पुं । अरिष्टे । निम्बे । मायके ॥

छर्दिः । स्त्री । वमी । वमने ॥ छर्दति । छृदी सन्दीपने । अर्चिशुचीत्यादि । मा इसिः ॥

छर्दी । स्त्री । वमने ॥ आमाशयोत्क्ले प्रभवाश्च सर्वाः स्कर्दे समसो वक्त्र मेवतस्मात् । प्रियीयते मारुतजां विनातु संशोधनं या कफपित्तहारी सिवैषकम् ॥ छर्दिकारोऽस्तीति इति । छिनीच् ॥

छलम् । नं । स्खलिते । कूटयुद्धादिना युद्धमर्यादायाश्चलने ॥ छद्मनि । शा ठ्ये । व्याजे । स्वरूपाच्छादने ॥ ता त्पर्यान्तरेण प्रयुक्तस्य शब्दस्यार्था न्तरेणाकथने ॥ तथाचाक्षपाद प्रणी तं सूत्रम् । वचनविघातोऽर्थविक ल्पोपपत्त्या छलम् । ५० ॥ अर्थस्या भिमतस्य योऽविकल्पो विरुद्धः क ल्पोऽर्थान्तरकल्पनेति यावत्, तदुप पत्त्या युक्तिविशेषेण यो वचनस्य वा युक्तस्य विघातो दूषणं तच्छलमि त्यर्थः । वक्तृतात्पर्याऽविषयार्थक ल्पनेन दूषणाभिधानमिति फलितम् । तात्पर्याविषयत्वम्, विशेष्ये विशे षणे संसर्गे वा ॥ यथा । नेपालादा गतोऽयं नवकम्बलवत्त्वादित्यत्र नेय संख्यापरत्वकल्पनयाऽसिद्ध्यभिधान म् । प्रमेयं धर्मत्वादित्यत्र पुरायत्वा र्थकल्पनया भागासिद्ध्यभिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् ॥ तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छ लञ्च ॥ ५१ ॥ छानम् । छो छेदने । ल्युडादित्वात् ॥

छलंना । स्त्री । परप्रतारणायाम् ॥

छलितः । पुं । स्खलिते । छले ॥

छल्ली । स्त्री । वितधि ॥ सन्ताने ॥ व ल्कले । छाल इति भाषा ॥ कुसुम विशेषे ॥

छविः । स्त्री । शोभायाम् ॥ त्विषि ॥ छ्यति असारम् । छो० । कृविघृष्वि च्छवीत्यादिना क्रिन्नन्तो निपातितः ॥ छिनत्ति तमो या । छिदिरद्वैधी करणे ॥

छा: । पुं । शावके ॥ इत्येकाक्षरः ॥

छा । स्त्री । छादने ॥

छाग: । पुं । पशौ । छागलके । अजे । वर्करे । बकरा इति भाषा ॥ तत्प रीक्षोक्ता युक्तिकल्पतरौ भोजराजे न । नक्षत्राणां विभेदेन तेषां तु गणत्रयम् । तेषां शुभाय निर्दिष्टं पशु वस्तुत्रयं वलौ ॥ ये कृष्णाः शुचयश्छागाः पशवोऽन्ये तथैव च ॥ द्विजातिभिरुत्



छागः

स्वंश्यास्ते सर्वार्थोपसिद्धये ॥ येपीता
रुचिताश्चापि नरजाते रुधीरिताः ।
ये शुक्लाध्वमहान्तोवास्योगातेः शु
भप्रदाः ॥ येभिः शादयवा धानाद-
विमन्यं प्रयच्छति । वधस्वफलं तस्य
नान्यत् किञ्चित् फलंभवेदिति ॥
अश्वमांसगुणाः । छागमांसं लघुस्नि
ग्धं स्वादुपाकं त्रिदोषनुत् नाति
शीत मदाहिस्यात् स्वादुपीनसनाश
नम् ॥ परंबलकरंरुच्यंहृंहणं वीर्यव
र्द्धनम् ॥ अजायाअप्रसूताया मांसं
पीनसनाशनम् । शुष्ककासेऽरुचौशो
षे हितमग्नेश्चदीपनम् ॥ मजासुत
स्तनाढ्य मांसं लघुतरंस्मृतम् । ह
द्यंज्वरघ्नं श्रेष्ठंसुस्वादुमलदं भृशम्
॥ मांसंनिष्कासितांडस्य छागस्य क
फप्रदम् । स्रोतः शुद्धिकरं वल्यं मां
सदं वातपित्तनुत् ॥ हद्दस्य वातलं
रूक्षं तथा व्याधिस्ततस्य । ऊर्द्धेन
तुविकारः मंछागमुपर्डकचिपदमिति॥
*॥ अथछागलक्षणम् । छागशुभाशु
भलक्षण मभिधास्ये नवदशाष्टदन्ता
स्ते । धन्याः स्थाप्यावेश्मनि सन्त्याज्याः
सप्तदन्तास्ते ॥ दक्षिणपार्श्वेमण्डल
मसितं शुक्लस्य शुभफलं भवति ।
ऋश्यनिभः कृष्णलोहितवर्णोनांग्ने
समतिशुभदम् ॥ कुम्भपटवक्षस्तेष

छागः

कण्ठेऽस्यानां मणिः सविशेषः । एक
मणिः शुभफलकृद् धन्यतमा द्विमि
भवयोर्ये ॥ मुण्डाः सर्वे शुभदाः सर्वे
सिताः सर्वकृष्णदेहाश्च । अर्द्धासि
ताः सितार्द्धा धन्याः कपिलार्द्धकृष्णश्च
॥*॥ अथचतुर्थी कुट्टकाकुट्टिकजटि
लवामनामी क्रमेणं लक्षणं करोति ।
विचरति यूथस्याये प्रथमं वाम्भोव
गाहते योऽजः । सशुभः सितमूर्द्धा
वा मूर्द्धनि वा कृत्तिकायस्य ॥ सपृष
तकण्ठशिरा वा तिलपृष्ठनिभश्चताम्रह
क्पिरक्तः । कृष्णचरणः सितो वा कृ
ष्णोवा श्वेतचरणोयः ॥ यः कृष्णाण्डः
श्वेतो मध्ये कृष्णेन भवतिपट्टेन ॥
योवाचरति सशब्दं मन्दञ्च सशो-
भनश्छागः ॥ ऋष्यशिरोवहपादो
योवाग्रकृपाण्डुरोऽपरेनीलः । स-
भवति शुभकृच्छागः श्लोकश्चाप्यत्र
गर्गोक्तः ॥ तमोष्ठ । कुट्टकः कुट्टिक
श्चैव जटिलो वामनस्तथा । तेच-
त्वारःश्रियः पुत्रा नालक्ष्मीके वस
न्तिवै ॥*॥ अथाऽप्रशस्तानां लक्षण
म् ॥ अथाऽप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः । निकृ
त्तकर्णाद्विपमस्तकाश्च भवन्ति तेचा
सिततालुजिह्वाः ॥*॥ अथ शुभलक्ष
णानि । वर्णाः प्रशस्ता मणिभिः प्रयुक्ता

भकमीरितम् ॥ चित्रमेघवृन्दमिमन्दं विद्यीच्छायं गुणोत्तरम् ॥

छान्दगपडः । पुं । पदार्थविदि । श्लोका ध्यपदवेत्तरि ॥

छान्दर्शनम् । न । हैयङ्गवीने ॥ इति शब्दचन्द्रिका ॥ मिथ्यावलोकने ॥

छावादिनिलयः । पुं । मठे ॥ छात्रोऽन्तेवासी आदिर्येषां परिव्राजकाद्य भकादीनाम् तेषांनिलयः ॥

छादनम् । न । दलेन पर्णे ॥ आच्छादने ॥ अन्तर्धाने ॥ पुं । नीलाम्लान वृक्षे ॥

छादितः । त्रि । संवृते । आच्छादिते ॥ यथा । घनतरघनवृन्दैश्छादितोपुष्पवन्तविच्छुन्नट ॥ छाद्यतेऽस । छ दंश्वादीन्तासयपद्वेसाधुः ॥

छादिषेयम् । न । तृणे ॥ छदिषे इदम् । छदिरुपधिबलेर्ढञ् ॥

छाद्मिकः । त्रि । कापटिके । व्याजेन व्यवहर्त्तरि ॥ छद्मना चरति । ठक् ॥

छान्दसः । पुं । श्रोत्रिये । वेदाध्ययन कर्त्तरि । वेदवेत्तरि ॥ छन्दोधीते वेत्ति वा ॥ पक्षे तदधीते तद्वेदेत्यण् ॥ छन्दसो व्याख्यानस्तत्र भवो वा । छन्दसो यदणा विषयः ॥ यतितु छन्दस्यः ॥ त्रि । छन्दस्सम्बन्धिनि ॥

छान्दोग्यम् । न । छन्दोगानां धर्म आम्नाये समूहे च ॥ चरणेभ्योधर्मवदिति छन्दोगौक्थिकेतिभ्यः ॥ सामवेदोपनिषदि ॥



छाया । स्त्री । आतपाभावे । भावानुशोभायाम् । श्यामायाम् ॥ प्रतिबिम्बे ॥ अर्कयोषिति ॥ संज्ञाप्रतिकृतौ ॥ पालने ॥ उत्कोचे ॥ कान्तौ ॥ सच्छोभायाम् ॥ पङ्क्तौ ॥ तमसि ॥ अतिधृतिसंज्ञकोन विंशाक्षरा इति विशेषे ॥ यथा । भवेत् सैवच्छाया संयुगयुतात्साद्ग्वादशान्ते यदा ॥ सैव मेघविस्फूर्जितैवेत्यर्थः । यथा । अभीष्टं पुष्टोयो विसरति वसद्ोध्यास्य भास्वोत्कयः स्फुरन्नानारत्नस्तबकितततनु शिखाशुकालम्बितः । नयस्याङ्घ्रिच्छाया सुभगतरतांसंसारतीवातप स्तनोतिमोचाप स्रग्भग हयतात्सुकं सारिकल्पद्रुमः ॥ छाति । छो० । घ्याद्धेतिकः ॥ आतो युक् ॥ यद्वा । माछासससिभ्योयः ॥ सादृश्ये ॥

छायाकरः । त्रि । छत्रधारे । आतपात्र इतिभाषा ॥

छायातनयः । पुं । शनैश्चरे ॥ छायायास्तनयः ॥

छायातरुः । पुं । विस्तीर्णवृक्षे ॥

छायात्मजः । पुं । शनिग्रहे ॥

छायापथः । पुं । आकाशे ॥ देवपथे ॥

नभः सरितिं ॥ स्वातीपथे ॥ छायापथो नाम ज्योतिश्चक्रमध्यवर्त्ती कश्चित्तिर्य्यगवस्थोऽवकाशः इति मल्लिनाथः ॥

छायापुत्रः । पुं । मन्दे । शनौ ॥

छायापुरुषः । पुं । आकाशे दृश्ये निजच्छायारूपे पुरुषे ॥ तद्दर्शनविधिर्योगप्रदीपिकायां द्रष्टव्यः ॥

छायाभृत् । पुं । चन्द्रे ॥

छायामित्रम् । न । आतपत्रे ॥ छत्रे ॥

छायामृगधरः । पुं । विधौ । चन्द्रे ॥

छायावृक्षः । पुं । छायाप्रधाने वृक्षे ॥ शाकपार्थिवादिः ॥

छायासुतः । पुं । शनौ ॥

छिः । पुं । गर्हायाम् ॥ इत्येकाक्षरकोषः ॥

छिक्कनी । स्त्री । क्षवकृति । नकछिक्कनी इति भुवि प्रसिद्धौ ॥ छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् । वातरक्तहरी कुष्ठकृमिवातकफापहा ॥

छिक्करः । पुं । मृगविशेषे ॥ मांसं छिक्करजं कृष्णसाख्ये तसे सुमृष्टकम् । दधिसैन्धवहिङ्ग्वाद्यं सुधूमेनाति धूपितम् ॥ कषायं मधुरं स्वादु कफपित्तानिलापहम् । विपाके कटुकं प्रोक्तं विशेषेणाग्निवर्द्धनम् ॥

छिक्का । स्त्री । क्षुते ॥ छींक इति भाषा ॥

छिक्किका । स्त्री । छिक्कन्याम् ॥

छितः । त्रि । लूने ॥ छ्यति स्म । छो॰ । क्तः । शाच्छोरन्यतरस्यामितीत्वं वा ॥

छित्तिः । स्त्री । छेदे ॥ छिदे ॥ छिद्यते छेदनं वा । छिदिर्॰ । स्त्रियां क्तिन् ॥ पुं । किरण शून्ये ॥

छित्वरः । त्रि । धूर्त्ते ॥ वैरिणि ॥ न । छेदनद्रव्ये ॥ छिनत्ति । छिदिर्॰ । छित्वरच्छत्वरेत्यादिना ष्वरच् निपातनादिकारस्तकारो गुणाभावश्च ॥

छिद् । त्रि । छेदनकर्त्तरि ॥ छिनत्ति । छिदिर्॰ । क्विप् ॥

छिदकम् । न । वज्रे ॥

छिदा । स्त्री । छेदने । द्वैधीकरणे ॥ छिदिर्॰ । षिद्भिदादिभ्योऽङ् । टाप् ॥

छिदिः । स्त्री । कुठारे ॥ शस्त्रे ॥ छिनत्ति । छिदिर्॰ । इन् ॥ कृगृशृपृकुटी त्यादिनाऽयं कित् ॥

छिदिरः । पुं । पावके ॥ रज्जौ ॥ करवाले ॥ परश्वधे ॥ छिनत्ति । छिदिर्॰ । इषिमदिमुदिखिदिच्छिदी त्यादिना किरच् ॥

छिदुरः । त्रि । वैरिणि ॥ धूर्त्ते ॥ न । छेदनद्रव्ये ॥ छेदके ॥ छिनत्ति तच्छीलः । छिदिर्॰ । विदिभिदिच्छिदेः कुरच् ॥

छिद्र । न । दूषणे ॥ रन्ध्रे ॥ निम्नं

छिद्रानुसार्यैरे: ॥ अवकाशे ॥ गर्ते ॥ अष्टमभवने ॥ छिद्यते । छिद्रभेदने । घञ् । यद्वा । छिद्यते । छिद्र० । स्फायितञ्चीतिरक् ॥

छिद्रवैदेही । स्त्री । गजपिप्पल्याम् ॥

छिद्रान्तः । पुं । नले । पोटगले ॥

छिद्रापलम् । न । मायाफले ॥

छिद्रित: । त्रि । विद्धे । कृतच्छिद्रे । वेधिते । बींधा इति भाषा ॥ छिद्रन्तोस्य । छिद्र० अदन्ता: । क्त: ॥

छिन्न: । त्रि । कृत्ते । छाते । लूने । कृतच्छेदने । काटा चीरा फाड़ा इति भाषा ॥ छिद्यतेस्म । छिदिर्० । क्त: ॥

छिन्नग्रन्थिनिका । स्त्री । त्रिपर्णिकायाम् ॥

छिन्नद्वैध: । त्रि । व्यवसायादिपरिपाकेण निष्पन्नसर्वसंशये ॥

छिन्नपत्री । स्त्री । अम्बष्ठायाम् ॥

छिन्नमस्ता । स्त्री । महाविद्याप्रभेदे । प्रचण्डचण्डिकायाम् ॥ छिन्नं मस्तं यस्या: ॥ त्रि । छिन्नमस्तके ॥

छिन्नरुह: । पुं । तिलकवृक्षे ॥

छिन्नरुहा । स्त्री । अमृतायाम् । गुडूच्याम् ॥ छिन्ना रोहति । रुह० । इगुपधेतिक: । ङ्यापोरितिह्रस्व: ॥ शल्लक्याम् ॥ स्वर्णकेतक्याम् ॥

छिन्नवेशिका । स्त्री । पाठायाम् ॥

छिन्ना । स्त्री । छिन्नमस्तायां देव्याम् ॥ गुडूच्याम् ॥ स्वैर्याम् । पुंश्चल्याम् ॥ क्तान्ताच्छिदेष्टाप् ॥

छिन्नोद्भवा । स्त्री । गुडूच्याम् । गिलोय इतिविख्यातायाम् ॥

छिलिहिण्ट: । पुं । पातालगरुड्याम् । पर्यायौ ॥ छिलिहिण्ट: परं वृष्य: कफघ्न: पवनापह: ॥ छिलिहिण्डोपि ॥

छुच्छुका । स्त्री । छुच्छुन्दर्याम् ॥

छुच्छुन्दरी । स्त्री । गन्धमूष्याम् । छुछुंदर इतिभाषा ॥

छुद्रम् । न । प्रतीकरणे ॥ रश्मौ ॥

छुप: । पुं । क्षुपे ॥ स्पर्शने ॥

छुरणम् । न । विलेपने ॥

छुरा । स्त्री । सुधायाम् । चूर्णे । लेपनद्रव्ये । चूना इति भाषा ॥

छुरिका । स्त्री । शस्त्रविशेषे । असिपुत्र्याम् ॥ छुरति । छुर्च्छेदने । क्वुन् ॥ इगुपधेतिके कन् वा । इत्त्वम् ॥

छुरित: । त्रि । खचिते ॥ रञ्जिते ॥ क्षिपिते ॥

छुरी । स्त्री । छुरिकायाम् ॥

छुरिकापत्री । स्त्री । श्वेतायाम् ॥

छूरी । स्त्री । छुरिकायाम् ॥ इति-भरत: ॥

छेक: । त्रि । गृह्यके । गृहाश्रिते मृगे पक्षिणिच ॥ नागरे । विदग्धे ॥ छे

ति छायते वा । छो० । वा० डेकन् ॥

छेका । स्त्री । मत्तायाम् ॥

छेकानुप्रासः । पुं । अलङ्कारविशेषे ॥ सोऽनेकस्य सकृत् पूर्व्वः । अनेकस्य अर्थोव्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः । उदाहरणं यथा । ततो ऽरुणपरिस्पन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

छेकोक्तिः । स्त्री । वक्रोक्तौ ॥ छेकाया उक्तिः ॥

छेत्ता । त्रि । छेदनकर्त्तरि ॥ छिनत्ति । छिदिर् ० । तृच् ॥

छेदः । पुं । खण्डे ॥ छेदने ॥ छेदनम् छिद्यते वा । छिदिर् ० । घञ् ॥

छेदनम् । न । भिदि ॥ कल्पने । वर्द्धने । कर्त्तने । अस्त्रेण द्विधाकरणे । छांगना काटना इति भाषा ॥ छिदिर् ० । ल्युट् ॥

छेदनीयः । पुं । कतकवृक्षे ॥ त्रि । छेद्ये ॥ छेदितुं योग्यः । अर्हे कृत्यतृचश्चेति अनीयर् ॥

छेदवत् । त्रि । विच्छेदयुक्ते ॥

छेदिः । त्रि । छेत्तरि ॥ छिनत्ति । छिदिर् ० । छपिभिदिछिदितिविदिच्छिदि कीर्त्तिभ्यश्चेति इन् ॥

छेदितः । त्रि । छिन्ने ॥



छेद्यः । त्रि । छेदनीये ॥ परिच्छेद्ये ॥ छेत्तुं शक्यः । शकिषहोश्चेति य त्याऽर्थे प्रत्ययः ॥

छेमण्डः । पुं । पितृहीने । छोंडा छोरा इत्यादिभाषा ॥ इत्युणादिकोषः ॥

छेलकः । पुं । छागे ॥

छेलिका । स्त्री । छागायाम् । छाग्याम् ॥

छक्कुः । पुं । सोमराज्याम् ॥

छैदिकः । पुं । वेतसे ॥ छिन्नप्ररूढत्वात् छेदं नित्यमर्हतीति छेदादिभ्यो नित्यमिति ठञ् ॥

छोटिका । स्त्री । तर्ज्जन्यङ्गुष्ठसंयोगध्वनौ । अङ्गुलिध्वनौ ॥

छोटी । पुं । कैवर्त्ते । नाविके ॥

छोरणम् । न । परित्यागे । छोडना इति भाषा ॥ इति त्रिकाण्डशेषः ॥

छोलङ्गः । पुं । मातुलुङ्गे । टाबानेबु इति गौड भाषा ॥

छोहारा । स्त्री । द्वीपान्तरखर्ज्जूरिकायाम् ॥ खर्ज्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्यते ॥

## जः

जः । पुं । जकारे ॥ मृत्युञ्जये ॥ जन्मा

म् ॥ तालमाचे ॥ जमार्दने ॥ वेगे । ॥ भुक्तौ ॥ क्षिपे ॥ मुकमध्यमे ( ।ऽ। ) ॥ चि । वेगिते ॥ जेतरि ॥ जायते । मनी॰ । मन्येभ्योपि दृश्यत इति डः ॥

जगुडः । पुं । सम्पयाच्चे ॥ वृनि ॥ न । वार्त्ताकुपुष्पे ॥

जगणम् । न ॥ भेदणे ॥

जग्धिः । स्त्री । भोजने ॥

जगच्चक्षुः । पुं । सूर्ये ॥

जगत् । पुं । वायौ ॥ त्रि । जङ्गमे ॥ न । विश्वस्मिन् । लोके । सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरसहिते मायामिये जन्तुचक्रे ॥ यथा । न निरूपयितुं शक्या विस्पष्टं भासते यथा । सामायेतीन्द्रजालं दैलोकाः सम्प्रतिपेदिरे ॥ स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् । मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ यथा । यदुपतेः क्वगता मथुरापुरी रघुपतेः क्वगतोत्तरकोशला । इति विचिन्त्य कुरुष्व मनस्थिरं न सदिदं जगदित्यवधारयेति रूपसनातन गोस्वामिनौ ॥ गच्छति । गम्लृ-गतौ । द्युतिगमिजुहोतीनां द्वे चेति क्विपि द्वित्वे गमःक्वाविति मलोपे तुकि जगत् जगतौ । यद्वा तु वर्त्तमाने पृषदृहन्महज्जगच्छतृवच्चेति व्युत्पत्ते तदा उगिदचामिति नुमि जगन् जगन्ता विश्वादिवोध्यम् ॥ साम विशेषे ॥

जगती । स्त्री । भुवने । लोके । जगति ॥ छायायाम् ॥ जने ॥ जम्बूवप्रे ॥ वास्तुविशेषे ॥ छन्दोविशेषे । द्वादशाक्षरायां वृत्तौ ॥ गच्छति । गम्लृ॰ । वर्त्तमाने पृषदिति साधुः । शतृवच्चाद्युगितश्चेति ङीप् ॥ यद्वा । द्युतिगमिजुहोतीनां द्वे चेति क्विप् । गमः क्वाविति मलोपे तुक् ॥

जगतीधरः । पुं । भूधरे ॥ जगत्याः धरः ॥

जगत्कर्त्ता । पुं । ब्रह्मणि ॥ जगतः कर्त्ता ॥

जगत्पतिः । पुं । परमेश्वरे । स्थित्याधितोपदेशकवेदमध्येत्वेन सर्वस्य जगतः पालयितरि ॥ जगतां पतिः ॥

जगत्प्रभुः । पुं । नारायणे ॥ जगत् जङ्गमाजङ्गमम् तस्य प्रभुः स्वामी ॥ बुद्धे ॥

जगत्प्राणः । पुं । समीरणे । वायौ ॥ जगतां प्राणः ॥

जगत्साक्षी । पुं । सूर्ये ॥ जगतां साक्षी ॥

जगदम्बा । स्त्री । जगज्जनन्याम् । गौर्याम् । पार्वत्याम् ॥ जगताम् अम्बा ॥

जगदम्बिका । स्त्री । दुर्गायाम् ॥

जगद्धात्री । स्त्री । दुर्गाप्रभेदे ॥

जगदाधारः । पुं । वायौ ॥ काले ॥ त्रि । जगतामाश्रये ॥ जगताम् आधारः ॥

जगदीशः । पुं । विष्णौ ॥ जगतामीशः ॥

जगद्गौरी । स्त्री । मनसादेव्याम् ॥

जगद्बलः । पुं । वायौ ॥ जगतो बलं येन ॥

जगद्योनिः । पुं । सदाशिवे ॥ विधातरि ॥ विष्णौ ॥ स्त्री । प्रकृतौ ॥ भूमौ ॥ जगतो योनिः ॥

जगद्रूपम् । न । नामरूपात्मके विश्वस्मिन् ॥ अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

जगद्वहा । स्त्री । धरित्र्याम् ॥

जगद्विनाशः । युगान्ते ॥ जगतां विनाशो यस्मिन् जगत्याः विनाशः ॥

जगनुः । पुं । जन्तौ ॥ वैश्वानरे ॥

जगन्नाथः । पुं । विष्णौ ॥ पुरुषोत्तमक्षेत्रे । उड्यानपीठस्थे भैरवे ॥ उड्यानेविमलाक्षेत्रे जगन्नाथस्तु भैरवः । इत्यागमशास्त्रम् ॥ आखण्डामो हरेर्मूर्त्तिर्जगन्नाथश्च भारतम् । कलौ देश सहस्राणि ययौ त्यक्त्वा हरेः पदमिति ब्रह्मवैवर्त्तम् ॥ वैशाखस्यामले पक्षे अष्टम्यां पुष्ययोगतः । कृता प्रतिष्ठा भो विप्राः शोभने गुरुवासरे ॥ कृता ब्रह्मविशेषः ॥ महापवित्रं शिखरे निवेदितं नियोजयेद् यः पितृदेवकर्मसु । तृप्यन्ति तस्य पितरः सुराश्च प्रयान्ति लोकं मधुसूदनस्येति महाप्रसादमाहात्म्यस्थं वचनम् ॥

जगन्निवासः । पुं । जगतामाधारे सर्वाश्रये परात्मनि ॥ जगतां निवासः ॥

जगन्नुः । पुं । अग्न्यर्थे ॥

जगरः । पुं । कवचे । सन्नाहे ॥ जगता गृह्यते । प्रातिपदिकाद्धात्वर्थे इति । णिच् । बाहुलकादरः । जागर्त्ति । अच् । पृषोदरादित्वात् ॥

जगलः । पुं । मदनद्रुमे ॥ मेदके । सुराकल्के ॥ पिष्टमद्ये ॥ त्रि । धूर्त्ते । कितवे ॥ भृशं गलति गल्यते वा । गल अदने । यङ्लुगन्तात् अच् । संज्ञापूर्वकत्वाद्दीर्घो ऽकित इति न दीर्घः ॥

जग्धम् । त्रि । भुक्ते । भक्षिते ॥ अद्यते स्म । अद॰ । क्तः । अदो जग्धिर्ल्यप्ति किति इति जग्धिः । इकार उच्चारणार्थः । धत्वम् । झरो झरि सवर्णे ॥

जग्धतृणः । त्रि । भक्षिततृणे ॥ जग्धं तृणमनेन ॥

जग्धिः । स्त्री । विघसे । भोजने । जेमने ॥ अदनम् । अद॰ । स्त्रियां क्तिन् । अदो जग्धिर्ल्यप्ति किति ॥

जघनम् । न । स्त्रियः श्रोणिपुरोभागे

॥ कटौ ॥ हन्यते । हन्तेः शरीराव यवेदेवे र्यच् ॥ यद्वा । वक्रं हन्ति । यङ्लुगन्तादच् । अनित्यमागमशा सनमित्यभ्यासस्यनुगतोनुनासिका न्तस्येतिनुक्न ॥

जघनकूपौ । पुं । कुकुन्दरयोः ॥ द्वि वचनान्तोयमिति शब्दार्थः ॥

जघनचपला । स्त्री । मात्राछन्दोभेदः आर्या प्रभेदे ॥ यथा । प्राक्प्रतिपादितम र्द्धे प्रथमेचरमेदलेतुचपलायाः । स ल्लाश्रयेत सोक्ता विशुद्धधीभिर्जघ नचपला ॥ यथा । कृष्णः शृङ्गारपटु र्वेशवनमद्दनचेष्टः सुललिताङ्गः । आसीद्व्रजाङ्गनानां मनोहरो जघ नचपलानामिति ॥

जघनेफला । स्त्री । काकोडुम्बरिका याम् । कठूम्बरी इति भाषा ॥ जघ नेफलमस्याः । अमूर्द्धेतिसप्तम्याः अ लुक् ॥

जघन्यः । त्रि । चरमे ॥ गर्हिते ॥ ध र्मार्थकामाः सममेवसेव्या योह्येक सक्तः सजनोजघन्यः ॥ अन्त्ये ॥ पुं । शूद्रे ॥ न । मेहने । शिश्ने ॥ अश्ले षा शतभिषा आर्द्रा स्वातिः ज्येष्ठा भरणी षड्नक्षत्रेषु ॥ जघनेभवः । दिगादित्वात् यत् शरीरावयवत्वा द्वा ॥ यद्वा । कुटिलं हन्यते । हन्ते



र्यङन्तादचोयत् । अनित्यमागम शासनमिति नुगतोऽनुनासिकान्त स्येति नुक् ॥ जघनमिवव्या प्यः ॥

जघन्यजः । पुं । स्त्री । वृषले । शूद्रे ॥ त्रि । कनिष्ठे ॥ जघन्येऽवरकाले जा तः ॥ सप्तम्यांजनेर्डः ॥ जघन्यात् न्या य्यात् जातः । पञ्च० । पञ्चम्यामजा ताविति डः ॥

जघन्यभम् । न । जघन्यसंज्ञकेषु ष ट्सु नक्षत्रेषु ॥ जघन्यनक्षत्रम् ॥

जघ्निः । पुं । हननयोग्यास्त्रे ॥

जघ्नुः । त्रि । घातके । हन्तरि ॥ हन्ति । हन० । क्रुम्बेश्चेतिचकारात् अन्य तोपि कृदितोद्वित्वञ्च ॥

जङ्गमः । त्रि । स्थावरेतरे । चरे । च रिष्णौ ॥ भृशंगच्छति । गत्यर्थानां नित्यंकौटिल्यइति यङ् भृशार्थे वा । पचाद्यच् ॥

जङ्गमकुटी । स्त्री । छत्रे ॥ वारिवा यास् ॥

जङ्गमगुल्मः । पुं । प्रचारिपदातिसमू हे । गस्त इति भाषा ॥

जङ्गमेतरः । त्रि । स्थावरे ॥

जङ्गलः । पुं । न । पिशिते ॥ त्रि । नि र्जनस्थाने ॥ वनप्रधानदेशे ॥

जङ्गालः । पुं । सेतौ ॥ रोधविशेषे ।

नोपकरणे ॥ रुद्रजटायाम् ॥ शताव-र्याम् ॥ जटति । जटसङ्घाते । अच् । टाप् ॥ जटाऽस्त्यस्याम् । अर्श आद्यच् ॥

जटाजूटः । पुं । जटासमूहे ॥ जटा नां जूटोबन्धः ॥

जटाज्वालः । पुं । प्रदीपे ॥

जटाटङ्कः । पुं । शिवे ॥ जटायां टङ्कोयस्य ॥

जटाटीरः । महादेवे । शिवे ॥

जटाधरः । पुं । महेश्वरे ॥ बुद्धभेदे ॥ धरति । धृञ्० । पचाद्यच् । जटानां धरः ॥ त्रि । जटाधारिणि ॥ जटाधरः सन् जुहुधीह पावकम् ॥

जटामांसी । स्त्री । नलदे । मांसाम् । सुगन्धिद्रव्यविशेषे ॥

जटायुः । पुं । अरुणपुत्रे सम्पातेः कनीयसि दशरथसखे गृध्रविशेषे ॥ जटां यातिप्राप्नोति । या० । सं० ज्ञः ॥ गुग्गुलौ ॥

जटायुध. । पुं । गुग्गुलौ ॥

जटायुष । पुं । जटायौ ॥ गुग्गुलौ ॥ जटाआयुरस्य ॥

जटालः । पुं । कर्चूरे ॥ गुग्गुलौ ॥ मुष्कके ॥ वटे ॥ त्रि । जटाधरे । जटावति ॥ जटाऽस्त्यस्य । प्राणिस्थादातोलजन्यतरस्याम् ॥

जटाला । स्त्री । जटामांस्याम् ॥ टाप् ॥

जटावान् । त्रि । जटिले ॥

जटावती । स्त्री । जटामांस्याम् ॥

जटावल्ली । स्त्री । गन्धमांस्याम् ॥ रुद्रजटायाम् ॥

जटिः । पुं । प्लक्षवृक्षे ॥ जटायाम् ॥ समूहे ॥ जटति । जट० । सर्वधातुभ्य इन् ॥

जटितः । त्रि । खचिते ॥

जटी । पुं । प्लक्षगमे । पाकरि इति भाषा ॥ सर्पविशेषे ॥ त्रि । जटायुक्ते ॥ मत्वर्थे व्रीहि० इनिः ॥

जटिलः । पुं । जटावति ब्रह्मचारिभेदे ॥ सिंहे । केशरिणि ॥ त्रि । जटायुक्ते ॥ यथा । यश्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गमितं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहं व्रजामि विपिने जटिल स्तपस्वीति ॥ जटाऽस्त्यस्य । पि० इलच् ॥

जटिला । स्त्री । जटामांस्याम् ॥ पिप्पल्याम् ॥ वचायाम् ॥ दमनकवृक्षे ॥ रासिकाम्बष्ठायाम् ॥ टाप् ॥

जटी । स्त्री । प्लक्षवृक्षे ॥ जटामांस्याम् ॥ गौरादित्वादिति ङीष् ॥

जटुलः । पुं । पिप्लौ । देहस्थे कृष्णलक्ष्मणि । लसन इति भाषा ॥ जटति । जट० । बाहुलकादुलच् ॥

जठरः । पुं । न । कुक्षौ ॥ त्रि । बद्धे ॥ कर्कशे । कठिने ॥ जायतेऽस्मिन् जन्तुर्मलोवा । जनेररष्ठचेत्यरः । पृषोदरादिः ॥

जठरनुत् । पुं । आरग्वधे ॥

जठरामयः । पुं । जलोदररोगे ॥

जडः । पुं । स्वनाम्ना प्रसिद्धे पुरुषे ॥ यथा । इष्टंवाऽनिष्टंवा सुखदुःखंवा नवेत्ति योमोहात् । परवशगः सम्भवेदिह नाम्नाजडसंज्ञकः पुरुषइति ॥ वेदग्रहणासमर्थे । मूर्खे ॥ न । वारिणि ॥ सीसके ॥ त्रि । हिमग्रस्ते ॥ मूके ॥ अप्रज्ञे । बुद्धिविकले ॥ अचिदात्मघटादीनां यत्स्वरूपंजडंहितत् ॥ अनुघने ॥ जलति घनीभवति । जल घातने । अच् । डलयोरैकत्वम् ॥

जडक्रियः । त्रि । चिरक्रिये । दीर्घसूत्रिणि ॥ जडाक्रियायस्य ॥

जडता । स्त्री । जाड्ये । स्तैमित्ये । अपाटवे ॥ विरहदुःखेनजीवमसाव-स्थितौ ॥

जडभरतः । पुं । ऋषभपुत्रे । राजर्षि ॥ यन्नाम्नेदं भारतं वर्षमभूत् ॥

जडा । स्त्री । शूकशिम्ब्याम् ॥ भूम्यामलक्याम् । अजायाम् ॥ जडयति । तत्करोतीतिणिजन्तात् अच् । टाप् ॥

जडिमा । पुं । जडतायाम् ॥ यथा । इष्टाऽनिष्टापरिज्ञानं यत्र प्रश्नेप्यऽनुत्तरम् । दर्शनश्रवणाभावो जडिमा सोऽभिधीयते ॥ जडस्य भावः । इमनिच् ॥

जडुल । पुं । जटुले ॥ जलति । जल । बा० उलच् । डलयोरैक्यम् ॥

जतु । न । अलक्ते । लाक्षायाम् ॥ जायते । जनी० । फलिपाटीत्यु तोऽन्तादेशश्च ॥

जतुकम् । न । हिङ्गुनि ॥ लाक्षायाम् ॥ जटुले ॥ जत्विव । इवेप्रतिकृताविति कन् ॥

जतुका । स्त्री । अजिनपत्रायाम् । चर्मचटिकायाम् ॥ गन्धद्रव्यविशेषे । जन्याम् ॥ पर्पट्याम् ॥ मालवदेश प्रसिद्धे लताविशेषे । तिर्यक्फलायाम् । निशान्धायाम् । जनेष्टायाम् ॥ कन्नन्तात् टाप् ॥

जतुकारी । स्त्री । जतुकालतायाम् ॥

जतुकृत् । स्त्री । जन्याम । चक्रवर्त्तिन्याम् । गन्धद्रव्यविशेषे । चकपत् इति भाषा ॥ जतुकरोति । क्विप् ॥

जतुकृष्णा । स्त्री । पर्पट्याम् ॥

जतुनी । स्त्री । चर्मचटिकायाम् ॥

जतुपुत्रक । पुं । नये । द्यूतोपकरणविशेषे । पाशकगुटिकायाम् ॥

जनीनामगन्धद्रव्ये ॥ जनयति । ज नी । कृत्यल्युटो बहुलमिति ल्युट् । टित्वात् ङीप् ॥

जनपदः । पुं । देशे । नीवृति ॥ जनाः पद्यं यस्तु यत्र ॥ जने ॥

जनपदी । पुं । जनपदस्वामिनि ॥

जनप्रवादः । पुं । कौलीने । वचनीयतायाम् । लोकापवादे ॥

जनप्रियः । पुं । धान्यके ॥ शोभाञ्जने ॥ त्रि । जनानां प्रीतिविषये ॥

जनमेजयः । पुं । परीक्षितराजस्य पुत्रे । पारीक्षिते ॥ पुरुराजपुत्रे ॥ जनमेजयति । शत्रूनादेजे. कर्तरि खश् । खजन्तश्चमुमागमः ॥

जनयिता । पुं । तातें । पितरि । जनयति । जनी । तृच् ॥

जनयित्री । स्त्री । जनन्याम् । मातरि ॥ तृजन्तात् । ऋन्नेभ्यो ङीप् ॥

जनरवः । पुं । लोकवादे ॥ यथा परीवाद सत्यो भवति वितथो वापि महतां तथा प्युच्चैर्भावो हरति महिमानं जनरवः । तुलोत्तीर्णस्यापि प्रकटनिहताशेषतमसो रवेस्तादृक् तेजो नहि भवति कन्यां गतवतः ॥ इति सद्भावसेनः ॥

जनलोकः । पुं । महर्लोको परिभुवने । महर्लोकः स्थितेरूर्ध्वं मेककोटि प्रमाणतः । कोटिद्वयेन संख्यातो जनोभूर्लोकतोचनैः ॥ निवसन्त्यमला यत्र मानसा ब्रह्मणः सुताः । सनन्दनाद्या योगीन्द्राः सर्वे ते ऊर्ध्वरेतस इति काशीखण्डम् ॥

जनवल्लभः । पुं । श्वेतरोहितवृक्षे ॥ त्रि । लोकप्रिये ॥

जनवादः । पुं । जनप्रवादे ॥

जनवार्त्ता । स्त्री । लोकानां किंवदन्त्याम् ॥

जनश्रुतिः । स्त्री । सत्यानृतसाधारण लोकप्रसिद्धौ ॥ किंवदन्त्याम् ॥ जनेभ्यः श्रूयते । श्रु श्रवणे । क्तिन् ॥

जनस्थानम् । न । दण्डकारण्ये ॥ दण्डकारण्यस्थानिके स्थानविशेषे ॥

जनातिगः । त्रि । लोकातिशयिनि ॥ जनमतिगच्छति । गम । ड । अन्यत्रापीति डः ॥

जनान्तः । पुं । देशे । जित्वा इति पारस्य भाषा ॥ इति अनञ्जयः ॥

जनान्तिकम् । न । अप्रकाशे । अगोचरे ॥ त्रिपताककरेणाऽन्यानपवार्य्यान्तिके कथाम् । अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम् ॥

जनार्दनः । पुं । नारायणे । विष्णौ ॥ सर्वैःसाधुभिर्जनैःस्वाभिलषिताभ्युदयनिःश्रेयससिद्धये अर्च्यते याच्यते

इति व्युत्पत्तौ। अर्द्दतेर्याच्यार्थात् कृत्यल्युटो बहुलमिति कर्म्मणि ल्युट्॥ यद्वा। जननं जनः जन्म। तमर्द्दयति इति जनार्द्दनः। अर्द्द हिंसायाम्। नन्द्यादित्वाल्ल्युः॥ जनाः समुद्रस्थादैत्यभेदाः। तेषामर्द्दन इतिवा॥ जनान् दुर्जनान् अर्द्दयति हिनस्ती तिवा॥

जनाशनः। पुं। वृके॥

जनाश्रयः। पुं। मण्डपे॥ जनानांलोकानामाश्रयः॥

जनिः। स्त्री। उत्पत्तौ। अभूतप्रादुर्भावे॥ नाऽसतोजन्मनाशोवा सतः तस्मान्नपेष्यते। कूटस्थेविक्रियानास्ति तस्मादत्रामतोजनिः॥ जननम्। जनी०। जनिघसिभ्यामिण्। जनिवध्योश्चेति वृद्धिनिषेधः॥

जनित। त्रि। उत्पादिते॥

जनित्रः। पुं। पितरि॥ जायतेऽस्मात्। जनी०। जनिदाच्युस्वादिना जनेरित्वन्। जनित्रौ मातापितरौ॥

जनित्री। स्त्री। मातरि॥ टाप्॥

जनिनीलिका। स्त्री। महानील्याम्॥

जनिमा। पुं। जन्मनि॥ जायते। जनी०। जनिसृड्भ्यामिमनिच्॥

जनी। स्त्री। सीमन्तिन्याम्॥ वध्वाम्। स्नुषायाम्॥ जायते गर्भोऽस्याम्॥ उत्पत्तौ॥ ओषधीभेदे। जतूकायाम्॥ जायते आरोग्यमनया। जनी०। जनिघसिभ्यामितीण्। जनिवध्योश्चेति नवृद्धिः। कृदिकारादिति ङीष्॥

जनुः। न। जन्मनि॥ जननम्। जनी०। जनेरुसिः॥

जनू। स्त्री। जनने। जन्मनि॥

जनेष्ट। पुं। मुद्गरवृक्षे॥

जनेष्टा। स्त्री। जतुकायाम्॥ जातीपुष्पे॥ वृद्धिनामौषधौ॥ हरिद्रायाम्॥

जनोदाहरणम्। न। यशसि॥

जनौघः। पुं। जनसंघे॥ जनान् अवति। अव०। कर्म्मण्यण्। वृद्धिः। क्लीबम्॥

जन्तुः। पुं। प्राणिनि। जननशीले॥ अविद्यादि हृदयग्रन्थिभिर्युते संसारिणि। वस्तुस्वरूपादर्शिनि ब्रह्मादिस्तम्बपर्य्यन्ते प्राणिजाते॥ जायते। जनी०। कमिमनिजनीति तुः॥

जन्तुकम्बुः। पुं। क्रमियुक्तशङ्खे॥

जन्तुका। स्त्री। नाडीहिङ्गुनि। रोमस्थाम्॥ लाक्षायाम्॥

जन्तुघ्न। पुं। बीजपूरे॥ न। विडङ्गे। हिङ्गुनि॥ त्रि। जन्तुघातिनि॥

जन्तुघ्नी। स्त्री। विडङ्गे॥

जन्तुनाशनम्। न। हिङ्गुनि॥ विडङ्गे॥

जन्तुपादपः । पुं । कोषाम्रवृक्षे ॥

जन्तुफलः । पुं । उदुम्बरे ॥ जन्तवः फलेऽस्य

जन्तुमारी । स्त्री । निम्बूके ॥

जन्तुला । स्त्री । काशतृणे ॥

जन्तुहन्त्री । स्त्री । विडङ्गे ॥

जन्मः । पुं । न । जन्मनि ॥ जननम् । इ युयुधीति बाहुलकात् जनेर्मक् ॥

जन्मकीलः । पुं । हरौ ॥

जन्मदः । पुं । पितरि ॥

जन्मदा । स्त्री । मातरि ॥

जन्म । न । आद्यन्तवत्सम्बन्धे । उत्पत्तौ । जनने । शुभाशुभकर्मवशात् पौनः पुन्येनसदसद्विविधयोनिषूद्भवे । गर्भवासयोनिद्वारनिस्सरणरूपे । विग्रहभेदग्रहणे ॥ वासना कर्म विद्याश्च यं जन्मप्रयोजकम् ॥ उक्तञ्च सारकालिकायाम् । गर्भात् कोटिगुणं दुःखं योनियन्त्रनिपीडने । संमूर्च्छितस्य जठराज्जायमानस्य देहिनः ॥ जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥ अधोमुखो वैक्रियतेप्रबलैः सूतिमारुतैः । क्लेशान्निष्क्रान्तिमायातिजठरान्मातुरातुर इति ॥ प्रेत्यभावे ॥ सच अपूर्वदेहेन्द्रियादिसम्बन्धः । निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म । नतु पुरुषस्य परिणामः तस्यापरिणामित्वात् । अन्नाद् नासतः सत्त्वं किन्तु देहेन संयुतिः । प्रादुर्भावो जनेरर्थः सतएवसयुज्यतेरत्युक्तः ॥ प्रथमतारायाम् ॥ जननम् जायतेऽस्मिन्वा । जनी० । मनिन् ॥

जन्मबन्धविनिर्मुक्तः । त्रि । जन्मात्मकेन बन्धेन विशेषेणात्यन्तिकत्वत्यागेन निरवशेषं त्यक्ते ॥

जन्ममासः । पुं । जन्मनो मासे ॥ आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयो वर्जितः सर्वकर्मसु ॥

जन्मर्क्षम् । न । जन्मनो नक्षत्रे ॥

जन्मवर्त्म । न । योनौ । भगे ॥ जन्मनो वर्त्म ॥

जन्मान्तरम् । न । परलोके । भवान्तरे । अमुत्र ॥

जन्माष्टमी । स्त्री । श्रीकृष्णस्य जन्मतिथौ ॥ सा तु मुख्यचान्द्रेण श्रावणस्य कृष्णाष्टमी । गौणचान्द्रेण भाद्रस्य कृष्णाष्टमी ॥ अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे । अष्टाविंशतिमे जातः कृष्णोऽसौ देवकी सुतः ॥

जन्मी । पुं । प्राणिनि ॥ जन्मोऽस्यास्ति । अतइनि ॥ जन्माऽस्यास्ति वा ।

त्री॰ इति. ॥

जन्मेजय. । पुं । जनमेजये राज्ञि ॥ जन्मनैवातिशुद्धेन शत्रूनेजितवान् यत. । एजृकम्पने धातोर्णिजन्तात् खश् । जन्मेजयइतिस्मृतइतिनिरुक्तिः ॥ अरुर्द्विषदजन्तस्य मुम् इति सूत्रात् परस्रुपम् ॥

जन्यः । पुं । जनके ॥ न । अट्टे ॥ परीवादे । कौलीने ॥ युधि । सङ्ग्रामे ॥ त्रि । उत्पाद्ये ॥ जनकस्य स्वभावोपि जन्येतिष्ठति निश्चितम् । यथा श्रीकृष्णपादाङ्कः कालीयवंशमस्तके ॥ नवोढाज्ञातिभिश्रभृत्येषु ॥ नववरस्यज्ञातिमिश्रभृत्येषु ॥ वरस्निग्धे । ज्ञातिहितस्ते ॥ देहे ॥ जननम् । जनेर्यक् ॥ जायते वा । भव्यगेयेतिसाधु ॥ यद्वा । जायते जनयति वा । अचोयत् तकिशसिचतियतिजनिभ्योयद्वाच्य । जनेर्यद्विधि स्वरार्थः । चाइलोपाश्चेदिति यत्तापिरूपसिद्धेः । नपश्चद्गिमतङ्ग अनिरथ्योण्मे तिनिषेधात् ॥ जनस्यजन्यः भावजन इत्यादिस्तियत् ॥ यद्वा । जनीं वधूं वहतिप्रापयति । संज्ञायामितिसाधु ॥

जन्या । स्त्री । मातृवयस्यायाम् ॥ मुदि । प्रीतौ ॥ जायते ऽस्याम् । जनयति वा । यदन्तात् यदन्ताद्वा टाप् ॥

जन्यु । पुं । प्राणिनि ॥ अग्नौ ॥ धातरि । परमेष्टिनि ॥ जायते । जनी॰ । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥

जपः । पुं । श्रुतिमन्त्राद्यावृत्तौ ॥ जपस्त्वक्षरपर्यां ध्येयसम्मुखी करणं मुने । मानसस्यान्त. स्वस्वरूपस्य उपांशुसंघकस्यच स्वसंवेद्यलघुध्वने र्भाष्यस्यच श्रूयमाणस्य मन्त्रस्य ध्येयसम्मुखीकरणायावर्त्तने ॥ मन्त्रार्थज्ञाने जपस्य फलाजनकत्वमुक्तं तन्त्रशास्त्रे । यथा । यथापशुर्भारवाही न तस्य भजते फलम् । तथैवार्थानभिज्ञो न जपस्यफलमश्नुतइति ॥ स्वाध्याये ॥ जपनम् जप्यतेवा । जपमानसेच । व्यधजपोरनुपसर्गे इत्यप् ॥

जपनम् । न । जपे ॥

जपपरायण । पुं । जपनशीले । जपासक्ते ॥

जपा । स्त्री । जपावृक्षे ॥ जपाराज्ञ्याचियी केश्या त्रिसन्ध्याकपालजित् ॥ जपति । जप॰ । पचाद्यच् । टाप् ॥

जप्यम् । त्रि । अघमर्षणादौ ॥ जप्यते । जप॰ । पोरदुपधादितियत् ॥

जप्येश्वर । पु । सिद्धस्थानविशेषे ॥ यथा । जप्येश्वरे महास्थाने शङ्करीच त्रिशूलिनो । त्रिशूलीशङ्करस्तत्रसर्वपापप्रणाशक इति ॥

जवाला । स्त्री । सत्यकामस्यर्षेर्मातरि ॥

जम्बीरः

जमजः । त्रि । यमजे ॥

जमदग्नि । पु । परशुरामपितरि । ऋचीकमुनिपुत्रे भृगुवंशजे यमदग्नि मुनौ ॥

जमनम् । न । भोजने ॥ जमुअदने । ल्युट् ॥

जम्पती । पुं । सहोक्त्या जायापत्यौ ॥ जाया च पतिश्च राजदन्तादिगणे पाठात् जायाशब्दस्य जमभावो निपात्यते ॥ नित्यं द्विवचनान्तः ॥

जम्बालः । पुं । शैवाले ॥ पङ्के ॥ जमति । जमु० । बाहुलकादालन् ॥ यद्वा । जम्ब अदने इति धातुः । भावे घञ् । जम्बं लाति । लादाने । आतोनुपे तिक । पृ० ॥

जम्बालिनी । स्त्री । नद्याम् । शैवलिन्याम् ॥

जम्बीरः । पुं । जंभीरी इति जमटु इति च पर्वतीय भाषा प्रसिद्धे दन्तशठे । जम्भीरे । जम्भले ॥ जम्बीरं गुरुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत् । शूलकासकफक्लेशच्छर्दितृष्णामदोषजित् ॥ आस्यवैरस्यहृत् पीडा वह्निमान्द्यकृमीन् हरेत् । स्वल्पजम्बीरिकातद्वत् तृष्णाच्छर्दिनिवारिणी ॥ प्रस्थपुष्पे । मरुवा इतिख्याते ॥ अर्जके ॥ सितार्जके ॥ जम्यते । जमु० । गम्भीरा

जम्बूः

द्यश्चेति ईरचन्त साधुः ॥ यद्वा । जम्यते । विच् । वीरयति । वीरविक्रान्तौ । अच् । जम् चासौ वीरश्च ॥

जम्बुः । स्त्री । जामन इति प्रसिद्धे वृक्षे । सुरभिपत्रायाम् । नीलफलायाम् ॥ मेघसरिति ॥ जम्बुद्वीपे ॥ जम्बुद्वीपं चितेनाभिख्यद्दृष्टं द्वयोजनम् । चाराब्धिना परिवृतं परिवृत्तेन तावता ॥ न । जम्बूफले । जाम्बवे ॥ जमति । जमु० अन्दहन्भूजम्बू इत्यादिना कू प्रत्ययो वुगागमश्च निपातितः । बाहुलकात् ह्रस्वः ॥ फलेतु जम्ब्वाः फलम् । जम्ब्वा वेत्यस्योऽभावे औरञ् । फलेलुक् । ह्रस्वो नपुंसके ॥

जम्बुकः । पुं । जम्बूकार्थेषु ॥ गोलाम जाम इति गौडभाषाप्रसिद्धे वृक्षे ॥ श्योनाकप्रभेदे ॥ जमति । जमु० । मृगय्वादयश्चेतिसाधुः ॥ शृगाले ॥

जम्बुद्वीपः । पुं । न । भूमेःसप्तद्वीपान्तर्गते द्वीपविशेषे । जम्बूद्वीपे ॥

जम्बुमार्गः । पुं । तीर्थविशेषे ॥

जम्बुलः । पुं । जम्बूले ॥

जम्बुघनकम् । न । श्वेतजवापुष्पे ॥

जम्बूः । स्त्री । मेघतरङ्गिण्याम् ॥ नागदमन्याम् ॥ जामनइति प्रसिद्धे वृक्षे । राजफलायाम् । सुरभिपत्राया

म्॥ सा वृहत्क्षुद्रभेदेन द्विविधा। तत्र वृहज्जम्ब्वाः पर्य्यायाः। महाजम्बूः महापत्रा राजजम्बूः वृहत्फला फलेन्द्रः नन्दः महाफला सुरभिपत्राचेति॥ विष्टम्भित्वं रोचनत्वं गुरुत्वञ्च फलेगुणाः॥ क्षुद्रायाःपर्य्यायाः। ह्रस्वा क्षुद्रफला दीर्घपत्रा मध्यमा॥ अथवनजम्बूपर्य्यायाः। भूमिजम्बूः काकजम्बूः नादेयी शीतपल्लवा सूक्ष्मपत्रा जलजम्बुका॥फलगुणाः। जम्बूः सङ्ग्राहिणी रूक्षा कफपित्तास्रदाहनुत्॥ जम्ब्वाःफले। जम्बुनि। जाम्बवे॥ जम्बूद्वीपे॥ जमति। जमु०। जम्ब्वदनभू जम्बूकादेषू कम्बूं न्यू दिधिषू रित्युणादि सूत्रेण कूप्रत्ययोवुगागमश्चनिपातितः॥ आयते वा। अनेकत्र तैस्तेनैवनिपातिता॥ फलेलुक् जम्ब्वाःफलम्। जम्ब्वा वैत्यणोऽभावपक्षे ओरञ्। तस्य लुप्चेतिलुप्। लुपियुक्तवत्॥ जम्बुद्वीपे॥

जम्बूकः। पुं। फेरवे। शृगाले॥ नीचे॥ पश्चिमाशापतौ। वरुणे॥ गुलापजामनइति प्रसिद्धे फलवृक्षे॥ श्योनाकभेदे। जमति। जमु०। उलूकादित्वात् साधुः॥

जम्बूका। स्त्री। काकलीद्राक्षायाम्।



निर्बीजायाम्। रसाधिकायाम्॥

जम्बूद्वीपम्। न। पुं। भूमेःसप्तद्वीपान्तर्गते द्वीपविशेषे॥ यथा। भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्ययाम्ये क्षारक्षीराद्यम्बुधीनांनिवेशः॥ इतिसिद्धान्तशिरोमणिः॥ पुराणमतेनतु। अयंद्वीपः पद्मकोषमध्यवर्त्तिकोपलक्षयोजनविस्तीर्णः पद्मपत्रमिवसमवर्त्तुलः लक्षयोजनविस्तृतलवणसमुद्रेण वेष्टितः। यस्मिन् प्रत्येकनवसहस्रयोजनायामानि नववर्षाणितेषामर्यादाभूता अष्टौ सीमापर्वताःसन्तीति॥

जम्बूलः। पुं। जम्बूविटपे॥ केतकीवृक्षे। क्रकचच्छदे॥ न। वरपक्षीयस्त्रीणांपरिहासवचने॥

जम्बूलमालिका। स्त्री। कन्यावरयोर्मुखचन्द्रिकायाम्॥ जम्बूलमालावरपक्षीयस्त्री परिहासवचनानांमालिका श्रेणी॥ इतिहरिवंशटीकायां नीलकण्ठः॥

जम्भः। पुं। दैत्यविशेषे॥ दन्ते॥ जम्बीरे॥ भक्षणे॥ अंशे॥ हनौ॥ तूणे॥ जम्भयति। जभीगात्रविनामे। पचाद्यच्। रधिजभोरचीति नुम्॥

जम्भकः । पुं । जम्भार्थेषु ॥ जभी । गत्रु लृटचाविति गत्रुल् । नुम् ॥ स्वार्थे कोवा ॥

जम्भका । स्त्री । जृम्भायाम् ॥

जम्भगः । पुं । राक्षसविशेषे ॥

जम्भद्विट् । पुं । इन्द्रे ॥

जम्भभेदी । पुं । हरितये । इन्द्रे ॥ जम्भमसुरं भेत्तुं शीलमस्य । सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः ॥

जम्भरः । पुं । जम्बीरे ॥

जम्भलः । पुं । जम्बीरे ॥ बुद्धदेवताविशेषे ॥ जम्भयति । जभी । इषा दिभ्यश्च, इलच् । रधिजभोरचीतिनुम् ॥

जम्भला । स्त्री । राक्षसीविशेषे ॥ यथा समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी । तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेदिति ॥

जम्भा । स्त्री । जृम्भायाम् ॥ इतिराजनिर्घण्टः ॥

जम्भारिः । पुं । इन्द्रे ॥ वह्नौ ॥ वज्रे ॥ जम्भस्यारिः ॥

जम्भी । पुं । जम्बीरे ॥ इतिशब्दचन्द्रिका ॥

जम्भीरः । पुं । जंभीरी इति ख्याते जम्बीरद्रुमे ॥ जम्भयति । जभी । गम्भीरादित्वात् ईरन् । रधिजभोरचीतिनुम् ॥

जयः । पुं । अभिमन्यौ ॥ जयन्ते ॥ युधिष्ठिरे ॥ शत्रुपराङ्मुखीकरणे । विजये । उत्कर्षप्राप्तौ । पराजितापेक्षयोत्कर्षलक्षणे ॥ जीत इति भाषा ॥ जयोऽस्त्यस्य इत्यर्शआद्यच् ॥ वीररसे ॥ नारायणस्य पार्षदविशेषे ॥ इन्द्रस्य अर्जुने विजयनन्दनराजे ॥ इन्द्रियनिग्रहे ॥ अष्टाविंशतितमे वत्सरे ॥ अस्मिन् तथा वैश्याः शूद्राश्च नटनर्त्तकाः । पीडितास्ते सरोगाः स्युर्जये सर्वे न संशयः ॥ जयनम् जीयतेऽनेनवा । जि । एरच् ॥ जयति वा । पचाद्यच् ॥ शास्त्रविशेषे ॥ यथोक्तं ब्रह्मचारिकाण्डे भविष्यपुराणे । अष्टादशपुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥ कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥ जयेति नाम एतेषां प्रवदन्ति मनीषिण इति ॥

जयकोलाहलः । पुं । पाशकभेदे ॥ जयस्य कोलाहलो यस्मिन् सः ॥ जयध्वनौ ॥

जयढक्का । स्त्री । जीतकाडङ्का इति भाषा प्रसिद्धे वाद्यविशेषे ॥

जयदत्तः । पुं । इन्द्रपुत्रे । पाकशासनौ ॥

जयद्रथः । पुं । सिन्धुराजे ॥

जैयनम् । न । तुरङ्गादिसन्नाहे ॥ जये ॥ जिजये । ल्युट् ॥

जयनी । स्त्री । इन्द्रसुतायाम् ॥

जयन्तः । पुं । इन्द्रपुत्रे ॥ पाकशासनौ ॥ भीमे ॥ चन्द्रे ॥ शिवे । शम्भौ ॥ कृष्णानुजे ॥ ध्रुवकविशेषे ॥ तल्लक्षणं यथा । आदितालो जयन्तःस्यात् शृङ्गाररससंयुतः । कन्संख्याक्षरपद आयुर्वृद्धिकरः परः इतिदामोदरः ॥ जयति । जि० तृभूवहिवसीत्यादि नाभच् । झोन्तः ॥ तीर्थविशेषे ॥

जयन्तिका । स्त्री । हरिद्रायाम् ॥ जायसी रत्नगिरिति प्रसिद्धेद्रव्ये ॥

जयन्ती । स्त्री । जयायाम् । तर्कारीम् ॥ नादेय्याम् ॥ अस्यागुणाः । मदगन्धयुक्तत्वम् । तिक्तत्वम् । कटुत्वम् । उष्णत्वम् । कृमिभूतनाशित्वम् । कण्ठविशोधनत्वम् । तथकुष्ठारसायनी । इतिराजनिर्घण्टः ॥ उमायाम् । गौर्याम् ॥ इन्द्रपुत्र्याम् ॥ पताकायाम् ॥ जीवन्त्याम् ॥ योगविशेषे ॥ यथा । जयं पुण्यञ्चकुरुते जयन्तीमिति तांविदुः । रोहिण्यां सहिताकृष्णा मासेच श्रावणे ऽष्टमी ॥ अर्द्धरात्रादधश्चोर्द्धं कलयापियदाभवेत् । जयन्तीनामसा प्रोक्ता सर्वपापप्रणाशिनी ॥ यात्रायोगविशेषे ॥ यथा । यच स्योच्चगतश्चन्द्रो लग्नादेकादशे स्थितः । जयन्तानामयोगोयं शत्रुपक्षविनाशकृत् ॥ जयति । जि० । तृभूवहिवसि भासि साधि गडि मण्डि जिनन्दिभ्यश्चेति झच् सच षित् । झोन्तः । षित्वात् ङीष् ॥

जयपत्रम् । न । डिक्री इति डिगरी इति च इङ्ग्रेजभाषा प्रसिद्धे विजयपत्रे । विवादविषयकजययोधकलिपौ ॥ यथा । यद्वृत्तं व्यवहारात्तु पूर्वपक्षोत्तरादिकम् । क्रियाऽवधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥ पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः । प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते इति ॥ अश्वमेधीययज्ञघोटकमस्तकबद्धायां लिपौ ॥ यथा । चैलोक्यविजयी रामो रावणान्तकरः प्रभुः । सदीक्षितो वाजिमेधे तस्यायं मोचितः पशुः ॥ पालितो लक्ष्मणेनैव सुलक्षणविलक्षितः । सम्पूज्य परित्याज्य सर्वैरितिच संस्कृताम् ॥ इतिवाशिष्ठरामायणम् ॥

जयपालः । पु । दन्तीबीजे । सारके । जमालगोटा इति भाषा ॥ त्रिधातरि ॥ विष्णौ ॥ नृपे ॥ इतिशब्दरत्नावली ॥

जयपुत्रकः । पुं । पाशकविशेषे ॥

जयमङ्गलः । पुं । ज्वरघ्नौषधविशेषे ॥ राजश्रेष्ठहस्तिनि ॥ ध्रुवकविशेषे ॥ यथा । चतुर्विंशतिवर्णाङ्घ्रिः कथितो जयमङ्गलः । शृङ्गारवीरयोरेष तालेऽचौपटेऽस्तदिति ॥

जयवाहिनी । स्त्री । शच्याम् । इन्द्राण्याम् ॥ चारुधारा महेन्द्राणी चेन्द्राणी जयवाहिनीतिरसः ॥ जयवादिनीति पाठान्तरम् ॥ मान्द्यो साम् ॥ जयसैन्ये ॥ जयस्य वाहिनी ॥

जयशेखरः । पुं । स्वर्णमूलत्रिकोणोच्चस्थानगोऽयदि गीष्पतिः । जयशेखरयोगोऽयं नानाऽमितफलप्रदः । इति वर्णिते योगयोगे ॥

जया । स्त्री । जयन्त्याम् ॥ तिथिविशेषे । यथोदश्यष्टमी चैव तृतीया च जया स्मृता ॥ पथ्यायाम् । हरीतक्याम् ॥ उमायाम् । दुर्गायाम् ॥ अस्याः विधैया । जय. कल्याणवचनो ह्याकारो दातृवाचकः । जयंददाति या नित्यं सा जया परिकीर्त्तितेति ब्रह्मवैवर्त्तपुराणम् ॥ दुर्गायाः सख्याम् ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ गणिकारिकायाम् । अग्निमन्थवृक्षे ॥ विजयायाम् । भङ्गायाम् ॥ पताकाविशेषे ॥ नीलदूर्वायाम् ॥ शान्तावृक्षे ॥ जयति । जि० । पचाद्यच् । टाप् ॥

जयारवः । पुं । वन्दिनां जयजयेतिशब्दे ॥

जयावहा । स्त्री । भद्रदन्तीवृक्षे ॥

जयाश्रया । स्त्री । जरडीतृणे ॥

जयाह्वा । स्त्री । भद्रदन्तीवृक्षे ॥

जयी । त्रि । जययुक्ते । विजयिनि ॥ जैतुंशीलमस्य । प्रजोरिनिरित्यधिकारे जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्चेति इनिः ॥

जय्यः । त्रि । जेतुं शक्ये ॥ विजये जिअभिभवेत्यस्मात् । क्षय्यजय्यौ शक्यार्थे इति यान्तादेशः ॥

जरठः । त्रि । कर्कशे ॥ पाण्डौ ॥ कठिने ॥ जीर्णे ॥ जीर्यति । जॄष् वयोहानौ । बाहुलकादठः ॥ पुं । जराया मिति विश्वः ॥

जरडी । स्त्री । तृणविशेषे । गण्डिकायाम् । सुनालायाम् ॥

जरणः । पुं । न । जीरके ॥ कलाज्याम् । कृष्णजीरके ॥ हिङ्गुनि ॥ सौवर्चले ॥ कुष्ठौषधौ ॥ पुं । कासमर्द्दे ॥ जरयति । जॄष्० । नन्द्यादित्वात् ल्युः

जरणाद्रुमः । पुं । अश्वकर्णवृक्षे ॥

जरणा । स्त्री । कृष्णजीरके ॥

जरन् । त्रि । जरातुरे । वृद्धे ॥ पुरातन

ने ॥ जीर्यति । जॄष् । जीर्यतेर्तृन् ॥

जरती । स्त्री । जीर्णायाम् । वृद्धायाम् ॥ उगितश्चेति ङीप् ॥

जरत्कारः । पुं । जरत्कारुमुनौ ॥

जरत्कारुः । पुं । मुनिविशेषे । यायावरे ॥ इति त्रिकाण्डशेषः ॥

जरत्कारुः । स्त्री । मनसादेव्याम् ॥

जरत्कारुप्रिया । स्त्री । मनसादेव्याम् ॥

जरद्गव । पुं । वृद्धोक्षे ॥ जरन् चासौ गौश्च । पूर्वकालैकेति समासः । गोरतद्धितलुकीति टच् ॥ ग्रन्थविशेषे ॥

जरन्तः । पुं । महिषे ॥ त्रि । वृद्धे ॥ जीर्यति । जॄष् । जॄविशिभ्यां झच् ॥

जरसानः । पुं । पुरुषे ॥ जीर्यते । जॄष् । छन्दस्यसानच् शुजॄभ्यामित्यसानच् ॥

जरा । स्त्री । विस्रसायाम् । वयः कृतस्थमांसाद्यवस्थाविशेषे । प्रज्ञाक्षिते जोनिरोधपरपरिभवादिरूपायां वलिपलितादिलक्षणायां वयोहानौ ॥ सा तु कालकन्या । यथा । कालकन्या जरा साक्षात् लोकस्तां नाभिनन्दति । स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वर ॥ इति श्रीभागवतम् ॥ एषां भेदाभेदेन चतुष्षष्टि रुजस्स्मृताः । मृत्युकन्यासुताश्चैव जरा तस्याश्च कन्यका ॥ जराया श्चा-

जरा

दृभिः सार्द्धं भ्रमन्निमति भूतलम् । एते चोपायवेत्तारं न गच्छन्ति च सम्मतम् ॥ पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥ चक्षुर्जलस्य व्यायामः पादाधस्तैलसेवनम् । कर्णे तैलं मूर्ध्नि तैलं जराव्याधिविनाशनम् ॥ वसन्ते भ्रमणं वह्निसेवा ऽस्वल्पं करोति यः । बालाञ्च सेवते काले जरा तं नोपगच्छति ॥ खातशीतोदकस्नायी सेवते चन्दनद्रवम् । नोपयाति जरा तञ्च निदाघे ऽनिलसेविनम् ॥ प्रावृड्डुष्णोदकस्नायी घनतोयं न सेवते । समये च समाहारी जरा तं नोपगच्छति ॥ शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत् । खातस्नायी समाहारी जरा तं नोपतिष्ठते ॥ खातस्नायी च हेमन्ते काले वह्निं निषेवते । भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति ॥ शिशिरे ऽशुकवह्निं च नवोष्णान्नञ्च सेवते । य उष्णोदकस्नायी जरा तं नोपगच्छति ॥ सद्योमांसं नवान्नञ्च बालस्त्रीक्षीरभोजनम् । घृतञ्च सेवते यो हि जरा तं नोपगच्छति ॥ भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम् ॥ । नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति ॥ दधि हैय

। तःस्मृतः ॥

जरासन्धजित् । पुं । भीमसेने ॥

जरी । त्रि । वृद्धे ॥ इति हेमचन्द्रः ॥

जरूथम् । न । मांसे ॥ क्षयमांसे ॥ जीर्यति । जृष० । जृवृभ्यां ऊथन् ॥ पुं । असुरविशेषः इति वेदभाष्यम् ॥

जर्जरम् । न । शैवले ॥ शक्रध्वजे ॥ त्रि । जरातुरे ॥ जीर्णे ॥ जर्जति । जर्ज परिभाषणभर्त्सनयोः । वाहुलकात् अरः ॥

जर्जरीकः । त्रि । बहुच्छिद्रद्रव्ये ॥ जरातुरे ॥ जर्जति । जर्ज० । पर्फरीकादयश्चेति साधुः ॥

जर्णः । पुं । चन्द्रे ॥ वृक्षे ॥ जीर्यति । जृष० । इत्यजूसीतिनन् ॥ त्रि । जीर्णे ॥

जर्त्तिकः । पुं । जर्त्त इति प्रसिद्धे वाहीकदेशस्थे शूद्रे ॥ यथा ॥ जर्त्तिकं नामनगरं सापगानामनिम्नगा । जर्त्तिका नाम वाहीका स्तेषां वृत्तं सुनिन्दितमिति भारते कर्णपर्व ॥

जर्त्तिलः । पुं । अरण्यतिले ॥ जर्त्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः ॥

जर्त्तुः । पुं । योनौ ॥ मतङ्गजे ॥ जायते । जनी० । जनेस्तुरश्च । तु इत्यविभक्तिको निर्द्देशः । तुप्रत्यये रेफश्चान्तादेशः ॥

जल । त्रि । जडे ॥ न । गोकलने ॥



ह्रीवेरे ॥ नीरे । अम्बुनि । तोये ॥ ॥ पञ्चभूतान्तर्गतभूतविशेष एतस् ॥ अस्योत्पत्त्यादयो निरूप्यन्ते ॥ रूपमात्रादि कुर्वाणात् तेजसो दैवचोदितात् । रसमात्रमभूत् तस्मादम्भो जिह्वारसग्रहः ॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥ नित्यतादि प्रथमवत् किन्तु देहमयोनिजम् । इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मत इति कारिकावली ॥ जलं चतुर्विधं प्राहुः रसरीत्याद्भवं बुधाः । धाराजं कारकञ्चैव तौषारं हैममित्यपि ॥ हेमन्ते सारसं तोयं ताडागं वा हितं स्मृतम् । हेमन्तविहितं तोयं शिशिरेऽपि प्रशस्यते ॥ वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं जलम् । नदेयं वारि नादेयं वसन्तप्रावृषोर्बुधैः । विषवद्वनवृक्षाणां पत्राद्यैर्दूषितं यतः ॥ औद्भिदं चान्तरीक्षं वा कौपं वा प्रावृषि स्मृतम् । जलं शरदि नादेयं नीरं अंशूदकं परम् ॥ दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः । चेयमंशूदकं नाम स्निग्धं दोषघ्नयापहम् ॥ अनभिष्यन्दि निर्द्दोषमान्तरीक्षजलोपमम् । बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ॥ अन्यच्च

।शरदि स्वच्छमुदयादगस्त्यस्याखिलं
हितम् ॥ वृद्धसुश्रुतस्तु । पौषे वारि
सरोजातं माघे तत्तु तडागजम् । फा
ल्गुने कूपसम्भूतं चैत्रे चौण्ड्यं हितंम
तम् ॥ वैशाखे नैर्झरं नीरं ज्येष्ठेऽभ
स्त्वं तथौद्भिदम् । आषाढे भस्तते कौ
पं श्रावणे दिव्यमेव च ॥ भाद्रे कौपं
पयः शस्त० माश्विने चौण्ड्यमेव च ।
कार्त्तिके मार्गशीर्षे च जलमात्रं प्रश
स्यते ॥ पानविधिस्तु । अत्यम्बुपान ।
न्नविपच्यतेन्न मनम्बुपानाच्च स एव दो
षः । तस्मान्नरो वह्निविवर्द्धना
य मुहुर्मुहुर्वारि पिबेदभूरि ॥
अत्यम्बुपानविपर्ययस्तु । कारोचके
प्रतिश्याये मन्देऽग्नौ श्वयथौ क्षये
। मुखप्रसेके जठरे कुष्ठे नेत्रामयेज्व
रे ॥ व्रणे च मधुमेहे च पिबेत् पानी
य मल्पकम् ॥ पानावश्यकन्तु । जी
वनं जीविनां जीवो जगत् सर्वन्तु तन्म
यम् । अतोऽत्यन्तनिषेधेऽपि न कश्चि
द्वारि वारयेत् ॥ अन्नेनापि विना जन्तुः
प्राणान् धारयते चिरम् । तोयाभा
वे पिपासार्त्तः क्षणात् प्राणैर्विमुच्य
ते ॥ हारीतोऽप्याह । तृष्णागरीय
सी घोरा सद्यः प्राणविनाशिनी । त
स्माद्देयं तृषार्त्ताय पानीयं प्राणधा
रणम् ॥ तृषितो मोहमायाति मो

हात् प्राणान् विमुञ्चति । अतः सर्वा
स्ववस्थासु न क्वचिद्वारि वारयेत् ॥ प्र
शस्तजलन्तु । अगन्धमव्यक्तरसं सु-
शीतं तर्षनाशनम् । अच्छं लघु च हृ
द्यञ्च तोयं गुणवदुच्यते ॥ निन्द्यजल
म् । पिच्छिलं कृमिलं क्लिन्नं पर्णशै
वालकर्दमैः । विवर्णं विरसं सान्द्रं
दुर्गन्धं न हितं जलम् ॥ अतिनिन्द्यं
जलम् । कलुषं छन्नमम्भोजपर्णनी
लीतृणादिभिः । दुर्दर्शनमसंस्पृष्टं
सौरचान्द्रमसांशुभिः ॥ अनार्त्तवं
चार्षिकमपि प्रथमं तच्च भूमिगम् ।
व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपन
म् ॥ तत् कुर्यात् स्नानपानाभ्यां तृ-
ष्णाध्मानोदरज्वरान् । कासाग्निमा-
न्द्याभिष्यन्दकण्डूगण्डादिकांस्तथा ॥
दुष्टोदकनिर्दोषीकरणोपायस्तु । नि-
न्दितञ्चापि पानीयं क्वथितं सूर्यतापि
तम् । सुवर्णरजतं लोहं पाषाणं सि
कतां सदन् ॥ भृशं सन्ताप्य निर्वाप्य
सप्तधा साधितं तथा । कर्पूरजातीपु
न्नागपाटलादिसुवासितम् ॥ शुचि
सान्द्रपटस्रावैः क्षुद्रजन्तुविवर्जितम्
। स्वच्छं कनकमुक्ताद्यैः शुद्धं स्याद्दोष
वर्जितम् ॥ पर्णमूलबिसग्रन्थिमुक्ता
कनकशैवलैः । गोमेदेन च वस्त्रेणाक
र्याद्वारिप्रसादनम् ॥ जलस्यपाकाव

धिस्तु । आमं जलं जीर्यति याममा-
त्रं तदर्द्धमात्रं शृतशीतलञ्च । तदर्द्ध
मात्रन्तु शृतं कदुष्णं पयः प्रपाके त्रय
एव कालाः ॥ विशेषः पानीये द्रष्टव्यः
॥ पूर्व्वाषाढाख्ये नक्षत्रे ॥ जलानि । ज
लमयपदार्थाः । पयांसि च ॥ ईशाने चा
पि पूर्वस्मिन् पश्चिमे च तथोत्तरे । शि
-रस्याक्षे मध्ये मन्यत्राशुभमेव च ॥

जलकण्टक । पुं । शृङ्गाटके ॥ कुम्भीरे ॥

जलकपि । पुं । शिशुमारे ॥

जलकपोतः । पुं । जलपारावते ॥

जलकरङ्कः । पुं । नारिकेलफले ॥ अम्बु
जे ॥ शङ्खे ॥ जलवतायाम् ॥ मेघे ॥

जलकल्कः । पुं । कम्बाले ॥

जलकाकः । पुं । जलकौवा इति प्रसि
द्धे दात्यूहे पक्षिणि । पानीकौडि
इति गौडभाषा ॥ स्निग्धं गुरु ह्विमं स्व
र्य्यं मांसं जलपक्षिणाम्तु वातहरम् ॥

जलकाङ्क्ष । पुं । हस्तिनि ॥

जलकाङ्क्षी । पुं । हस्तिनि ॥ त्रि । जला-
ऽभिलाषिणि ॥

जलकान्तार. । पुं । वरुणे ॥

जलकामुक. । पुं । कुटुम्बिनीवृक्षे ॥

जलकिराटः । पुं । ग्राहे ॥

जलकुक्कुट. । पुं । कारण्डवखगे । मद्गौ ॥

जलकुक्कुटी । स्त्री । गङ्गाचिल्लयाम् ॥

जलकुक्कुभ. । पुं । कोयष्टिखगे । कोडा-
पाखी इति गौडभाषा ॥

जलकुन्तलः । पुं । शैवाले ॥

जलकुब्जकः । पुं । पङ्कारे ॥

जलकूपी । स्त्री । कूपगर्त्ते ॥ पुष्करि
ण्याम् ॥

जलकूर्म्मः । पुं । शिशुमारे ॥

जलकेश । पुं । शैवाले ॥

जलक्रीडा । स्त्री । नद्यादौ वयस्यादि-
भिः सह जलैः क्षेपादिरूपायां खे
लायाम् । आस्फालनायाम् । करपत्रि
कायाम् ॥ परितापिषु वासरेषु म
ध्यं सटलेखाश्रितमात्तसौख्यकम् ।
सुविशोधितनक्रमीनजाले व्यवगा
हेत जलं सुहृत्समेतः ॥

जलगुल्मः । पुं । जलावर्त्ते ॥ कच्छपे ।
कमठे ॥ जलचत्वरे ॥

जलजः । पुं । ओषधिविशेषे । महा-
काले ॥

जलचत्वरम् । न । चदरहतिख्याते ज
लगुल्मे । चातरजल इति गौड
भाषा ॥

जलचरः । पुं । ग्राहादिषु यादस्सु ॥ जले
चरति । चर० । चरेष्टः ॥

जलचारी । पुं । मत्स्ये ॥ त्रि । जलच
रमात्रे ॥

जलजः । पुं । शिवालदले ॥ शैवले ॥
वानीरवृक्षे ॥ शङ्खे ॥ कुपीलौ ॥ क

किमीनोतु जलजावन्याहुं । मकर खचेति ॥ सिंदूरीशिंपु ॥ मत्स्य ॥ न । पद्मे ॥ शङ्खे ॥ वारविशेषे । लो गारे ॥ त्रि । जलजाते ॥ जलेजातः । जनी० । डः ॥

जलजन्तुः । पुं । यादसि ॥ जलानां जन्तुः ॥

जलजन्तुका । स्त्री । जलौकायाम् ॥

जलजन्म । न । पद्मे ॥ जले जन्मास्य ॥

जलजन्तुका । स्त्री । कुटुम्बयाम् । भु जिजालन वनकामन इतिभाषा ॥

जलजिह्वः । पुं । नक्रे ॥

जलडिम्बः । पुं । शम्बूके संबुला इति भाषा ॥

जलतण्डुलीयं । पुं । कङ्कटे ॥

जलतापिक. । पुं । इल्लीशमत्स्ये ॥ का कचीमत्स्ये ॥

जलतापी । पुं । जलतापिके ॥

जलताल । पुं । इल्लीशे ॥

जलतिक्तिका । स्त्री । मल्लकीवृक्षे ॥

जलदा । स्त्री । छले । वङ्गमकुष्ठाम् ॥

जलदः । पुं । मुस्तके ॥ मेघे ॥ त्रि । ज लदानकर्त्तरि ॥ जलंददाति । उ दाज्० । आतोनुपेतिक. ॥

जलदागमः । पुं । वर्षाकाले ॥

जलदाशनः । पुं । शालवृक्षे ॥

जलदुर्गम् । न । जलदुर्गे ॥

जलद्राची । स्त्री । शालिमुष्याम् ॥

जलद्रोणी । स्त्री । नौकायाः सेकभाजने । अवगाहे ॥

जलधरः । पुं । मेघे ॥ मुस्तके ॥ तिनि शवृक्षे ॥ समुद्रे ॥ त्रि । जलधारिणि ॥ जलस्यधरः ॥

जलधरमाला । स्त्री । मेघपङ्क्तौ ॥ अग तीसंयक्षदादशाक्षरावृत्तभेदे । मो भ्यौ चेज्जलधरमालाब्धृत्यङ्कैः ॥ या भक्तानां कलिदुरितोत्तप्तानां ताप च्छेदेजलधरमालानव्या । भव्याका रादिनकरपुत्रीकूले केलीलोलाह रिरतनुरव्यात्साबः ॥

जलधरमालाकांक्षः । पुं । वर्षाकाले ॥

जलधिः । पुं । समुद्रे । रसमावाप्त कविशेषात् । क्षारोदादिसप्त ॥ तेच । क्षारोदेक्षुरसोदसुरोदघृतो दक्षीरोददधिमण्डोदशुद्धोदाः सप्त द्वीपपरिखा इवाभ्यन्तरद्वीपसमाना ऐकैकश्येन यथापूर्वं सप्तस्वपि द्वीपेषु पृथक् परितउपकल्पिताः ॥ जलानिधीयन्ते ऽत्र । डुधाञ्० । कर्म एयधिकरणेचेतिकिः । आकारलोपः ॥ दशशङ्खसङ्ख्यायाम् । शतलक्ष कोटिषु १००००००००००००००॥

जलधिगा । स्त्री । नद्याम् । सरिति ॥ जलधिं गच्छति । गमल्ट० । डः ॥

माणुष्येकेदर्शीत्समानिशारे सारमा
गीताम् । यः करोति स वैमूढोम
खबुद्बुदसन्निभे ॥

जलभञ्जी । स्त्री । क्षिलमोच्याम् ॥

जलभूः । पुं । मेघे ॥ जलपिप्पल्याम् ॥

जलमक्षिका । स्त्री । वारिकृमौ ॥

जलमद्गुः । पुं । मत्स्यरङ्गविहङ्गमे ॥

जलमधूकः । पुं । जलमहुआ इतिख्या
ते मधूकवृक्षप्रभेदे । दीर्घपत्रे । म
धूल्ये ॥

जलमसिः । पुं । मेघे ॥ इतिहारावली ॥

जलमार्गः । पुं । प्रणालके । प्रणाल्या
म् । पनाला पनारा इतिच ख्याते ॥

जलमार्जारः । पुं । जलनकुले ॥

जलमुक्-ग् । पुं । धूमयोनौ । मेघे ॥
जलं मुञ्चति । मुक्षुमोचने । क्विप् ॥

जलमूर्त्तिः । पुं । शिवे ॥ जलं मूर्त्ति
र्यस्य ॥ स्त्री । करकायाम् ॥ जलस्य
मूर्त्तिः ॥

जलमोदम् । न । उशीरे ॥

जलयन्त्रम् । न । फुहारा इतिख्याते
धारायन्त्रे ॥

जलयन्त्रगृहम् । न । जलमध्यकृतगृहे
। जलभवने । जलमहल इति भाषा ॥
समुद्रगृहे । फुहारेकाघरइतिभाषा ॥

जलयन्त्रनिकेतनम् । न । जलयन्त्र
गृहे ॥



जलयन्त्रमन्दिरम् । न । समुद्रगृहे ।
फुहारेकाघरइतिभाषा ॥

जलरङ्कः । पुं ।
जलरङ्कुः । पुं । } दाव्यूहपक्षिणि ॥
जलरण्डः । पुं ।

जलरण्डः । पुं । जलकणे ॥ इतिहेमः ॥

जलरसः । पुं । लवणे ॥

जलरुण्डः । पुं । जलावर्त्ते ॥ पयोरेणौ ॥
भुजङ्गमे ॥ इतिमेदिनी ॥

जलरुट्-ह् । पुं । पद्मे ॥

जलरुहम् । न । पद्मे । जले रोहति ।
रुह० । इगुपधेतिकः ॥

जलरूपः । पुं । मकरे ॥ इतित्रिकाण्ड
शेषः ॥

जललता । स्त्री । तरङ्गे ॥ इतिहारा
वली ॥

जलवरण्टः । पुं । जलबिन्दुस्फोटकप्रभे ।
रोगे ॥ पानीबसन्त इतिगौडभाषा ॥

जलवल्कलः । पुं । कुम्भे । कुम्भिका
याम् ॥

जलवल्ली । स्त्री । शृङ्गाटके ॥

जलवानीरः । पुं । अम्बुवेतसे ॥ जले
जातोवानीरः । शाकपार्थिवादिः ॥

जलवायसः । पुं । मद्गुपक्षिणि ॥

जलवालकः । पुं । विन्ध्यपर्वते ॥

जलवालिका । स्त्री । विद्युति ॥

जलवासः । पुं । विष्णुकन्दे ॥ न । उशीरे ॥

जलवाहः । पुं । मेघे ॥ जलं वहतीति । वहेः कर्मण्यण् ॥

जलवाहकः । पुं । महिषे ॥ सुवामे ॥ जलस्य वाहकः ॥

जलविडालः । पुं । जलनकुले ॥

जलविन्दुजा । स्त्री । यावनालशर्करायाम् ॥

जलविल्वः । पुं । कर्कटे ॥ पञ्चाङ्ग जलचत्वरे । तातरजल इति गौड भाषा । पहर इतिभाषा ॥

जलविषुवम् । न । आश्विनचिक्रिते । तुलासङ्क्रान्तौ ॥ ज्योतिर्विदां चक्र विशेषे ॥

जलविहङ्गमः । पुं । सलिलकुक्कुटकार ण्डवकलहंसादिषु ॥

जलवृश्चिकः । पुं । चिङ्गटमत्स्ये ॥

जलवेतसः । पुं । परिव्याधे । वानीर द्रुमे ॥ जले जातो वेतसः । शाकपा र्थिवादिः । जलजो वेतसः शीतःस ङ्ग्राही वातकोपनः ॥

जलव्यधः । पुं । कङ्कणीटमत्स्ये ॥

जलव्यालः । पुं । अलगर्द्दे सर्पे । अला ध इतिभाषा ॥ जलस्थो व्यालः ॥ क्रूरकर्म्मापि जलजन्तौ ॥

जलशय । पुं । विष्णौ ॥ शेतेऽस्मिन् । पुंसीति घोऽधः । जले शयः शय्या यस्य ॥



जलशयनः । पुं । विष्णौ ॥ जले शयनं यस्य ॥

जलशायी । पुं । नारायणे ॥

जलशुक्तिः । स्त्री । शम्बूके ॥

जलशूकम् । न । शैवाले ॥

जलशूकरः । पुं । कुम्भीरे ॥

जलसर्पिणी । स्त्री । जलौकायाम् ॥

जलसूचिः । पुं । कङ्कत्रोटिमत्स्ये ॥ शृङ्गाटके ॥ शिशुमारे ॥ काके ॥ स्त्री । जलौकायाम् ॥

जलस्तम्भनम् । न । मन्त्रादिना जल गतिवारणे ॥

जलस्था । स्त्री । गण्डदूर्वायाम् ॥

जलहम् । न । स्वल्पजलयन्त्रगृहे ॥

जलहरणम् । न । मात्रावृत्तप्रभेदे ॥ यथा । लघुगुरुकनियमगत मिह फ णिपतिमत मयगत मतिसुखनिगद पदम् द्वयवसुभुवने यति रिह यदि भवतिहि रसिकजन हृदयविहितम दम् । वसुविमलचतुष्कलगणाहत गुणिगणवरगणविरामविहितसगणम् क्वचिदपि गुरुसहित भवति कवि हितं छन्दः सुन्दरि जलहरणम् ॥ यथा ॥ उपगम्य निभृततर मभिन वजलधर सुभगसुदर्शनचक्रधरम् सखिकमयहृदयकल मुरगराजभुज गमशकलसदृशनयनधरम् । अति

कुटिलकठिनशठ मंपनय मयि शठ दर्शनमपि न ददासि चिरा द्रचि राङ्गलतासदृशीनवयौवनकान्ति र चिरमिह रुचिरतरा ॥

जलहस्ती । पुं । ग्राहाख्ययादसि ॥

जलहासः । पुं । समुद्रफेने फेने ॥ इति त्रिकाण्डशेषः ॥

जलाकाशः । पुं । जलस्थाकाशे ॥ यथा । घटावच्छिन्नखे नीरे यत् तत्र प्रतिबिम्बितः । साभ्रनक्षत्र आकाशो जलाकाश उदीरितः ॥

जलाञ्ची । स्त्री । जलपिप्पल्याम् ॥

जलाखुः । पुं । जलाखे ॥

जलाञ्चलम् । न । स्रोतोवारिनिर्गमे ॥ शैवाले ॥

जलाटन । पुं । लोहपृष्ठे । कङ्कखगे ॥

जलाटनी । स्त्री । जलौकायाम् ॥

जलाण्टकः । पुं । नक्रराजे । सागर- शुक्तिभाषा ॥ न । पोताधाने ॥

जलालिका । स्त्री । जलौकायाम् ॥

जलाधारः । पुं । तडागादिजलाशये ॥ जलपात्रे । आध्रियतेऽस्मिन् । धृङ् अवस्थाने । अध्यायन्यायोद्यावसं- अवहाराधारावायानामुपसंख्यानाद् घञ् । जलस्य आधारः ॥

जलाधिदैवतः । पुं । न । वरुणे ॥ न । पूर्वाषाढानक्षत्रे ॥

जलाम्बिका । स्त्री । कूपे ॥

जलायुका । स्त्री । जलौकायाम् ॥ जलमस्याः आयुः इत्यर्थे पृषोदरादित्वात् साधुः ॥

जलार्णवः । पुं । वर्षाकाले ॥ जलसमुद्रे ॥

जलार्द्रः । पुं । आर्द्रवस्त्रे ॥

जलार्द्रा । स्त्री । यात्रिकानां व्यजनविशेषे । धुविचे ॥ धुविर्नामधर्मास्या दुत्क्षेपव्यजनवत् । जलेनार्द्रं जलार्द्रास्यादिति वैजयन्ती ॥ क्लिन्नवस्त्रे ॥

जलालः । पुं । पानीयालौ ॥

जलालिकम् । न । पद्मकन्दे ॥

जलालुका । स्त्री । जलौकायाम् ॥

जलालूकम् । न । शालूके । पद्मादिकन्दे । मृणालमूले ॥

जलालोका । स्त्री । जलौकायाम् ॥

जलावर्त्तः । पुं । अम्भसाम्भ्रमे । जलगुल्मे ॥

जलाशयः । पुं । तडागादिजलाधारे ॥ शृङ्गाटके ॥ समुद्रे ॥ न । उशीरे ॥ लामज्जके ॥ त्रि । जडाशये ॥ जलमाशयो हृदयमस्य ॥ जलमाशेते तिष्ठत्यनेन वा । पुंसीति घः ॥ जलेऽशेते वा । अच् ॥

जलाशया । स्त्री । गुण्डालातृणे ॥

जलाश्रयः । पुं । वृत्तगुण्डतृणे ॥

जलाश्रया । स्त्री । शूलीतृणे ॥ जलौकायाम् ॥

जलालोका । स्त्री । पुष्करिण्याम् ॥

जलाह्वयम् । न । उत्पले ॥

जलूका । स्त्री । जलौकायाम् ॥

जलेचरः । पुं । हंसमद्गुप्रभृतिजलचरपक्षिणि ॥ जले चरति । चरेष्टः । तत्पुरुषे कृतीत्यलुक् ॥

जलेच्छया । स्त्री । हस्तिशुण्डावृक्षे ॥

जलेजातम् । न । पद्मे ॥

जलेन्द्रः । पुं । वरुणे ॥ जम्भले । पूर्वयक्षे ॥ महोदधौ ॥ जलानामिन्द्रः ॥

जलेन्धनः । पुं । वाडवाग्नौ ॥ न । सौरविद्युदादितेजसि ॥

जलेरुहा । स्त्री । कुटुम्बिनीवृक्षे ॥

जलेवाहः । पुं । डूबा इति गौडाख्योर इति च ख्याते जातिविशेषे ॥ यथा । जलेवाहा मयाहूय यदङ्गस्य न्ययोजयत् । तत्कृत्वा परमं यत्नं प्राप रामरथं न तत् । इति पाद्मे पातालखण्डम् ॥

जलेशयः । पुं । मत्स्ये ॥ जले शेते । शीङ् । अधिकरणे शेतेरिति अच् । शयवासेष्वलुक् ॥

जलेश्वरः । पुं । वरुणे ॥ समुद्रे ॥ जलानामीश्वरः ॥



जलोका । स्त्री । जलौकायाम् ॥

जलोच्छ्वासः । पुं । परीवाहे । प्रवृद्धजलस्य निर्गममार्गे । समधिकजलस्य सर्वतो वहने वा । समधिकजलस्योपायैर्निष्कासने वा ॥ जलानि उच्छ्वस्यन्ते भिः । श्वसप्राणने । हलश्चेति घञ् ॥ जलानामुच्छ्वसनं वा । भावे घञ् ॥

जलोदरम् । न । जठरामये ॥ तस्य निदानादि यथा ॥ यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥ स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत् तत्परिवृत्तनाभिसमाततं पूर्णमिवाम्बुना च ॥ यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् । जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् । बलिनं तदजाताम्बु यत्नसाध्यं नवोत्थितमिति ॥

जलोद्धतगतिः । स्त्री । द्वादशाक्षरायाः जगत्याः प्रभेदे ॥ यथा । जसौ जसयुतौ जलोद्धतगतिः । यथा । यदीयहलतो विलोक्य विपदं कलिन्दतनया जलोद्धतगतिः । विलासविपिनं विवेश सहसा करोतु कुशलं हली स जगताम् ॥

जलोद्भवा । स्त्री । लघुब्राह्मयाम् ॥
जलोद्भूता । स्त्री । गुण्डालायाम् ॥
जलोरगी । स्त्री । जलौकायाम् ॥
जलौकाः । स्त्री । जलौकायाम् ॥ जल मोकः स्थानं यस्याः । ओकस् सान्तम् प्रसिद्धम् ॥
जलौकसः । स्त्री । भूम्नि । रक्तपायाम् । जलमोकः स्थानमासाम् । सान्तोऽयं बहुवचनान्त इत्यमरः ॥ जलोरगी जलौका तु जलौका च जलौकसीति संसारावर्त्ते बहुवचनं प्रायिकमिति वदन्ति ॥
जलौकसः । पुं । रक्तपायाम् ॥ जलमोकोऽस्यास्ति । अर्श आद्यच् । जलौकसेनैव रक्ताकृष्टिनिपुणेन वेश्याजनेनेति वासवदत्ता ॥
जलौका । स्त्री । जलोरग्याम् । रक्तपायाम् ॥ * ॥ अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः ॥ * ॥ नृपाढ्यबालस्थविरभीरुदुर्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः । तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं, शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्वाणि सर्वैर्वा ॥ * ॥ भवन्ति चात्र ॥ उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम् । तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ शीताधिवासा मधुरा जलौका वारिसम्भवा तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥ अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम् । तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ * ॥ तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात् । सान्तर्दीपयाऽलाब्वा ॥ * ॥ अथ जलायुका वक्ष्यन्ते । जलमासामायुरिति जलायुकाः जलमासामोक इति जलौकसः । ताः द्वादश तासां सविषाः षट् । ताः वत्य एव निर्विषाः । तत्र सविषाः । कृष्णा कर्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्वुरा । रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमि

जलौका

ति चिह्नानि भवन्ति । तत्र महागदः
पानालेपननस्यकर्मादिषूपयोज्यः ।
इन्द्रायुधादष्टमसाध्यमित्येताः सवि
षाः सचिकित्सिता व्याख्याताः ॥ *
॥ अथ निर्विषाः ॥ कपिला पिङ्गला
शङ्कुमुखी मूषिका पुण्डरीकमुखी
सावरिका चेति ॥ * ॥ तत्र मनःशि
लारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्नि
ग्धा मुद्गवर्णा कपिला । किञ्चिद्रक्ता वृ
त्तकाया पिङ्गाऽऽशुगा च पिङ्गला । य
कृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्ण
मुखी शङ्कुमुखी । मूषिकाकृतिव
र्णाऽनिष्टगन्धा च मूषिका । मुद्गव
र्णा पुण्डरीकतुल्यमुखी पुण्डरीक
मुखी । स्निग्धपद्मपत्रवर्णाऽष्टादशा-
ङ्गुलप्रमाणा सावरिका सा च पश्वर्थे
॥ इत्यविषा व्याख्याताः ॥ तासां
यवनपाण्ड्यसह्यपौतनादीनि क्षेत्रा-
णि । तेषु महाशरीरा बलव-
त्यः शीघ्रपायिन्यो महाशना निर्वि-
षाश्च विशेषेण भवन्ति ॥ तत्र सवि
षमत्स्यकीटदर्दुरमूत्रपुरीषकोथजा
ताः कलुषेष्वम्भःसु च सविषाः । प-
द्मोत्पलनलिनकुमुदसौगन्धिककुव-
लयपुण्डरीकशैवालकोथजाता वि-
मलेष्वम्भःसु च निर्विषाः ॥ * ॥
भवति चात्र ॥ क्षेत्रेषु विचरन्त्येता

जलौका

सलिलेषु सुगन्धिषु । न च सङ्कीर्ण
चारिण्यो न च पङ्कशयाः सुखाः ॥
* ॥ तासां ग्रहणमार्द्रचर्मणाऽन्यैर्वा
प्रयोगैर्गृह्णीयात् । अथैनां नवे मह
ति घटे सरस्तडागोदकपङ्कमावाप्य
निदध्यात् । भक्ष्यार्थे चासामुपहरे
च्छैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णी
कृत्य निदध्यात् । स्वापार्थं तृणमौद-
कानि च पत्राणि । त्र्यहात् त्र्यहाच्चा
न्यज्जलं भक्ष्यं च दद्यात् सप्तरात्रात्-
सप्तरात्राच्च घटमन्यं संक्रामयेत् ॥ *
॥ भवति चात्र ॥ स्थूलमध्याः परिक्लिष्टाः
पृथ्व्यो मन्दविचेष्टिताः । अग्राहिण्यो
ऽल्पपायिन्यः सविषाश्च न पूजिताः ॥
अथ जलौकोऽवसेकसाध्यव्याधितमु
पवेश्य संवेश्य वा विरूक्ष्य चास्य त
मवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात्
। गृहीताश्च ताः सर्षपरजनीकल्को
दकप्रदिग्धगात्रीः सलिलशरावमध्ये
मुहूर्तं स्थिता विगतक्लमा ज्ञात्वा ता
भी रोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्रपि
चुप्रोतावच्छन्नां कृत्वा मुखमपावृणुया
त् । अगृह्णन्त्यै क्षीरबिन्दुं शोणितबि
न्दुं वा दद्यात् शस्त्रपदानि वा कुर्वीत
यद्येवमपि न गृह्णीयात्तदान्यां ग्राहये
त् । यदा च निविशतेऽश्वखुरवदाननं
कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्

सम्बन्धीति ॥

जहल्लक्षणा । स्त्री । वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धिन्यर्थान्तरेप्र वृत्तिरूपायां लक्षणायाम् ॥ यथा । गङ्गायां घोषः प्रतिवसतीति वाक्ये । गङ्गाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वात् वाच्यार्थमशेषं परित्यज्य तत्सम्बन्धितीरलक्षणा युक्तत्वात् जहल्लक्षणा सङ्गच्छते ॥

जहत्स्वार्था । स्त्री । जहल्लक्षणायाम् ॥ जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी स्मृता ॥

जहा । स्त्री । मुण्डितिकायाम् ॥

जहानक. । पुं । प्रलये ॥ इति हेमचन्द्रः ॥

जहु. । पु । अपत्ये ॥ यथा । खगजहुना खगापत्येनेति श्रीधरस्वामी ॥

जह्नुः । पु । चन्द्रवंशोद्भवेकुरुराजपुत्रे ॥ गङ्गाऽऽगमनकाले येन गङ्गा पीता पुनर्भगीरथप्रार्थनया ऊरुं भित्त्वा बहिर्निर्गमिता तेन सा जाह्नवीति ख्याति मागता ॥ विष्णौ ॥ जनान् संहारसमये ऽपह्नुतेऽपनयति ह्नुङ् अपनयने । क्विप् ॥ जहाति त्यजति दुष्टभक्तान् नयति परमिति वा ॥ यद्वा । जहाति । ओहाक् त्यागे । जहातेर्द्वे ऽल्लोपश्चेति नु ॥



जह्नुतनया । स्त्री । गङ्गायाम् ॥ अमरः ॥ जह्नुतनया ॥

जह्नुसप्तमी । स्त्री । वैशाखसितसप्तम्याम् ॥ शुक्लपक्षस्य सप्तम्यां वैशाखे जह्नुपुत्रिकाम् । संपूजयेत् सुखार्थाय स्वर्गमोक्षफलाय चेत्युत्तरकामाख्यातन्त्रे ११ पटलः ॥

जह्नुसुता । स्त्री । गङ्गायाम् ॥

जां । स्त्री । यातरि । भर्त्तुर्भ्रातृभार्यायाम् ॥ इत्येकाक्षरकोषः ॥

जागतः । पुं । मगाद्यविशेषे ॥ जगती आदिरस्य । सोऽस्यादिरिति च्छन्दसः प्रगाथेष्विति अण् ॥ न । जगतीछन्दसि ॥ स्वार्थे ऽण् ॥

जागरः । पु । जागरणे ॥ कर्म्मकारणककृत्तत्सविकाशे ॥ जागृ निद्राक्षये । भावे घञ् ॥ जाग्रोऽविचिण्णलिङित्सु गुणः ॥

जागरणम् । न । जागरे । निद्राभावे ॥ प्रमितिर्जागरे जाग्रद्भ्रमः स्वप्नोऽथ मूढता । पानादिजन्यासुप्तिः स्यादेवं जागरता त्रिधा ॥ जागृ० । ल्युट् ॥

जागरा । स्त्री । जागर्य्यायाम् ॥ जागरणम् ॥ स्त्रियामधिकारे जागर्त्तेरकारो वा । जाग्रोविचिण्णल्ङित्स्विति गुणः ॥

जागरितम् । न । इन्द्रियैरर्थोपलब्धौ ॥ स्वप्नदर्शनहेतुकर्म्मक्षये जागरित

जागरूकान् स्थोपाध्यन्तःकरणेन्द्रियसचिवस्तत्तदिन्द्रियविषयाननुमेयांस्तंस्थूलान् व्यावहारिकान् पदार्थान् अनुभवतीति तदिदमस्य जागरितमित्युक्तम् ॥ जागृ० । क्तः ॥

जागरितस्थानः । पुं । विश्वोपाहितचैतन्ये विश्वशब्दवाच्ये ॥ जागरितं स्थानमस्य ॥

जागरितान्तम् । न । जागरितमध्ये जागरितविषये ॥

जागरिता । त्रि । सजागरे । जागरूके ॥ जागरणशीलः । जागृ० । तृन् ॥

जागरी । त्रि । जागरूके ॥ जागरणमस्यास्ति । इनिः ॥

जागरूकः । त्रि । अप्रमत्ते । सजागरे । जागरितरि । जागरणशीले ॥ जागर्तीत्येवंशीलः ॥ जागृ० । जागरूकः इति जागर्तेरूकः ॥

जागर्तिः । स्त्री । जागरणे ॥ स्त्रियां क्तिन् ॥

जागर्या । स्त्री । जागरे ॥ जागरणम् । जागर्तेरकारो वेति पक्षेशः । यक् । जाग्रोऽविचिण्णल्ङित्सु गुणः ॥

जागुडम् । न । कुङ्कुमे ॥ पुं । देशविशेषे ॥ तत्रत्यं कुङ्कुममप्यत्रार्थे भवति ॥

जागृत् । पुं । जागरणे ॥ जागृ० । क्विप्तुकौ ॥



जागृवान् । त्रि । जागरूके ॥

जागृविः । पुं । अग्नौ ॥ नृपे ॥ जागर्त्ति ॥ जागृ० ॥ जॄशॄस्तॄजागृभ्यः क्विन् ॥

जाग्रत् । त्रि । जागरणविशिष्टे ॥ स्त्री । जागरितावस्थायाम् ॥ यथा । श्रोत्रादिज्ञानेन्द्रियैः शब्दादिविषयं यत्र ज्ञायते सा जाग्रदवस्था । सा च त्रिधा । यथा ॥ प्रमितिर्जागरे जाग्रत् भ्रमः स्वप्नोऽथ सुप्तता । मानादिजन्यासुप्तिः स्यादेवं जागरणं त्रिधा ॥

जाग्रति । जागृ० । शतृ ॥

जाग्रिया । स्त्री । जागरणे ॥ जागरणम् । जागृ० । जागर्तेरकारो वेति पक्षेशः । यक् । गुणात् परत्वेन रिङ् आदेशइति धातुपारायणम् ॥

जाघनी । स्त्री । पुच्छे ॥ इति त्रिकाण्डशेषः ॥

जाङ्गलः । पुं । कपिञ्जले पक्षिणि ॥ स्वनामख्याते निर्जलदेशे ॥ आकाशशुभ्र उच्चश्च स्वल्पपानीयपादपः । शमीकरीरबिल्वार्कपीलुकर्कन्धुसङ्कुलः ॥ हरिणैणर्क्षपृषतगोकर्णखरसङ्कुलः । सुस्वादुफलवान् देशो वातलो जाङ्गलः स्मृतः ॥ * ॥ मांसवर्गेऽत्र बहुशो विष्किराश्च गुहाशयाः । तथा प्रसहा भेया विष्किराः प्रतुदा अपि ॥ प्रसहा अप्यथा

स्या अष्टौजाङ्गलजातयः ॥ जाङ्गला मधुराहृद्या सुवर्णा लघवःतथा । वल्यास्तर्पणा हृष्या दीपना दोषहारिणः ॥ मूकता मिन्मिनत्वञ्च गद्गदत्वादिके तथा । वाधिर्यमर्दितंचाहिं प्रमेहं मुखरोगान् गदान् । स्रीपदं गलगण्डञ्च नाशयन्त्यनिलामयान् ॥ जङ्गलेभवः । तत्रभवइत्यण् ॥ न । पललि । मांसे ॥ क्ली ॥ पानीयविशेषे ॥ यथा । अल्पोदकोल्पवृक्षश्च पित्तरक्तामयान्वितः । ज्ञातव्योजाङ्गलोदेशस्तत्रत्यं जाङ्गलंजलम् ॥ जाङ्गलंसलिलंरूक्षं लवणं लघुपित्तनुत् । वह्निकृत् कफहृत् पथ्यं विकारान् हरतेबहून् ॥ जालिनीफले ॥ त्रि । जङ्गलोत्पन्ने ॥

जाङ्गलदेशः । पुं । कुरुदेशसमीपस्थदेशे ॥ यथा । अल्पोदकतृणोयस्तुप्रवातः प्रचुरातपः । सज्ञेयो जाङ्गलोदेशो बहुधान्यादिसंयुत इति ॥ जाङ्गलश्चासौदेशश्च ॥

जाङ्गलिः । पुं । विषवैद्ये ॥

जाङ्गली । स्त्री । शूकशिम्ब्याम् । जाङ्गुली इति पर्वतीयभाषा ॥ विषविद्यायाम् ॥

जाङ्गुलम् । न । जालिनीफले ॥

जाङ्गुलिकः । पुं । विषवैद्ये ॥ जाङ्गुलीं विषविद्यामधीते वेद वा । वसन्तादिभ्यष्ठक् ॥ जाङ्गुल्या दीव्यति वा । तेनदीव्यतीतिठक् ॥ परीक्षितं समश्नीयात् जाङ्गुलीभिर्भिषग्वृतः ॥

जाङ्गुली । स्त्री । विषविद्यायाम् ॥ जाङ्गुलीविषघ्नोमन्त्र इति कश्चित् ॥

जाङ्घिकः । पुं । उष्ट्रे ॥ श्रीकारोहणे ॥ जङ्घाजीविनि । धावके ॥ जङ्घाकरिके ॥ जङ्घाभ्यांजीवति । वेतनादिभ्यो जीवतीतिठञ् ॥

जाजी । त्रि । योधिनि ॥ जजति । जजयुद्धे । ताच्छील्येणिनिः ॥

जाज्वल्यमानः । त्रि । देदीप्यमाने ॥ भृशंज्वलति । ज्वलदीप्तौ । धातोरेकाच-इति यङ् । ततोलटःशानजादेशः ॥

जाटलिः । पुं । स्त्री । वृक्षविशेषे ॥ जटनम् । जटसङ्घाते । घञ् । जाटं लाति । लादाने । बाहुलकात् क्विः ॥

जाठरः । पुं । उदरस्थेऽग्नौ ॥ जठरेभवः । तत्रभवइत्यण् ॥

जाडारः । पुं । जडात्मजे ॥ जडस्यापत्यम् । आरगुदीचामित्यारक् ॥

जाड्यम् । न । जडतायाम् । स्तम्भे ॥ जडस्यभावः । ष्यञ् ॥

जाड्यारिः । पुं । जम्बीरे ॥

जातः । त्रि । उत्पन्ने । स्वकृतधर्माधर्मादि

यथालब्धशरीरेन्द्रियसम्बन्धे ॥ यथा
। एकयोनौ संकृज्जातः कोऽपि सोढुं
शक्नुयात् । अनन्तयोनिष्वऽस
कृज्जायमानस्य का कथा ॥ न । उ
क्ते ॥ ओघे । सङ्घे ॥ जन्मनि ॥ जा
यतेऽनेन । जन्मप्रादुर्भावे । क्तिच्
तौ चेतिक्त । जमसनेऽच्यास्वम् ॥
जातकम् । न । जातस्य शुभाशुभनिर्णा
यके होराग्रन्थे । स्वज्जातकादौ
॥ जातकर्माख्यमङ्गले ॥ त्रि । जाते ॥
जातकर्म । न । जातस्य कर्त्तव्यमन्त्रवत्
सर्पिःप्राशनादिरूपे जननसंस्कारे ॥
प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म वि
धीयते । मन्त्रवत्प्राशनं चास्य हिर
ण्यमधुसर्पिषामितिमनुः ॥ जातस्य
कर्म । जातकर्मणा ॥
जातमात्र त्रि । सद्योजाते ॥ जातएव ॥
जातरूपम् । न । स्वर्णे ॥ धुस्तूरे ॥ आ
कारजे स्वर्णे ॥ त्रि । प्रासरूपे ॥ जातं
रूपं यस्य । यद्वा । प्रशस्तं जातम् ।
प्रशंसायां रूपप् ॥
जातवेदाः । पुं । पुनःपुनर्हवींषि भोक्तु
रि । हुताशने ॥ विद्यते लभ्यते । वि
विद्लृलाभे । असुन् ॥ जातं वेदो
धनं यस्मात् ॥ जातेजाते सर्वप्रपञ्च
स्य स्वस्मिन्नध्यस्तत्वेन ये विद्यते ।
विदसत्तायाम् । जातं वेत्ति वेदयते



वा । विद्चेतनादौ । असुन् ॥ जा
तानि भुवनानि चराचराणि सर्वज्ञ
त्वेन स्वस्मादुत्पन्नत्वेन च वेत्ति वा ।
जातानि सर्वकारणत्वेन यं विदन्ति वा
॥ चित्रकौषधौ ॥
जातापत्या । स्त्री । प्रसूतायाम् ॥ जा
तं संपन्नं यस्याः ॥
जातिः । स्त्री । गोत्रे ॥ जन्मनि ॥ चु
ल्ल्याम् । अश्मन्तिकायाम् ॥ आमल
क्याम् ॥ सामान्ये । ब्राह्मणक्षत्रिय
वैश्यशूद्रात्मके ॥ छन्दसि ॥ जाती
फले ॥ मालत्याम् । चमेली इति
भाषा ॥ श्वेताजातिस्तथापीता प्रो
च्यते स्वर्णजातिका । जातीयुगं ति
क्ता सुष्णं तुवरं लघु दोषजित् ।
शिरोऽक्षिमुखदन्तार्त्तिविषकुष्ठव्रणा
स्रजित् ॥ काम्पिल्ले ॥ * ॥ समान
प्रसवात्मिका जातिः ॥ २ । १३४ ।
इति न्यायसूत्रम् ॥ अस्यार्थः । समा
नःसमानाकारकः प्रसवो बुद्धिजनन
म् आत्मा स्वरूपं यस्याः सा । तथा च
समानाकारबुद्धिजननयोग्य समर्थः
। समानाकारबुद्धिजननयोग्यधर्मवि
शेषो नित्यानेकसमवेतत्वरूपार्थेऽ
प्यपिवदन्ति । इदन्तु बोध्यम् । एवं स
त्याकृतिविषयको गवादिपदात्
शाब्दबोधः । अनुभवोऽपि तथैव कार्य

जातिस्मरः । पुं । तीर्थविशेषे ॥ त्रि । पूर्वजन्मजातिस्मरणवति ॥

जाती । स्त्री । सुमनायाम् । सुमनसि । मालत्याम् । चमेली इतिभाषा ॥ तत्पुष्पे ॥ क्तिन्नन्तात् क्तिन्नन्ताद्वा ङीप् ॥ जात्याः पुष्पम् । पुष्पमूलेषु बहुलमित्यनुदात्तादेरञोऽस्य लुक् ॥

जातीकोषम् । न । जायफल इतिप्रसिद्धे जातीफले ॥

जातीपत्री । स्त्री । सुमनःपत्रिकायाम् । जावित्री इतिभाषा ॥ जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाकृमिविषापहा ॥

जातीफलम् । न । जातीकोषे ॥ जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु । कटुकं दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् ॥ निहन्ति मुखवैरस्यमलदौर्गन्ध्यकृष्णताः । कृमिकासवमिश्वासशोषपीनसहृद्रुजः ॥ जात्यं फलम् । जातीलतायाः फलं वा ॥

जातीयः । त्रि । जातौभवे ॥ वृद्धाच्छः ॥ प्रकारार्थबोधके तद्धितप्रत्ययविशेषे ॥ यथा । तार्किकप्रकारः । तार्किकजातीयः । प्रकारवचने जातीयर् ॥

जातीरसम् । न । बोले ॥

जातु । अ । कदाचिदर्थे ॥ यथा । जातु जनो नैति सुखं कर्मबाहुल्यात् कर्मयोगेन याति सुखं ज्ञानपुरस्तात् । ज्ञानरसं ब्रह्मरसं येन निपीतं दारभयं मारभयं तेनविगीतमिति ॥ शब्दे ॥ विगर्हणे ॥ अविकल्पे ॥ निषेधे ॥ जायसि । जैघये । बाहुलकात् तुन् ॥

जातुकम् । न । हिङ्गुनि ॥ इतिशब्दचन्द्रिका ॥

जातुधानः । पुं । राक्षसे ॥ जातु कदाचित् रन्ध्रं प्राप्य धानं सन्निधानमस्य ॥

जातुषम् । त्रि । लाक्षानिर्मिते ॥ जतुनो विकारः । त्रपुजतुनोः षुग्-त्यण् ॥

जातूकर्णः । पुं । ऋषिविशेषे ॥ वैद्यशास्त्रप्रवर्त्तके मुनिविशेषे ॥

जातेष्टिः । स्त्री । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात इतिजातकर्म्मणि विहितायामिष्ट्याम् ॥

जातोक्षः । पुं । दम्यवत्से । युवरूपे ॥ जातश्चासावुक्षा च । अचतुरेति साधुः ॥ उत्पन्न उक्षा जातोक्ष इत्यमरः ॥ अत्र उत्पन्नो दृष्टदम्यभावः प्राप्तबलीवर्दभावो वार्थः ॥

जात्यः । त्रि । श्रेष्ठे । कुलीने ॥ कान्ते

॥ कर्मणीयज्ञादिभ्यस्तीप्। चेति-
स्वामी ॥
जामिता। स्त्री। आलस्ये॥
जामि। स्त्री। कुलयोषायाम्॥ स्वसरि
॥ क्लीव ॥
जामेयः। पुं। भगिनेये॥ जाम्याश्च
त्यम्। स्त्रीभ्योढक्॥
जाम्बवम्। न। जम्बूफले॥ जम्बाफल
म्। जम्ब्वा विकारः। तस्य विधानाच
लुक्॥ सुवर्णे॥ कपिविशेषे॥ नगर
विशेषे॥
जाम्बवान्। पुं। ब्रह्मणः पुत्रे। रामाय
यादिम सद्दुपदा केमे ऋक्षराजे॥
जाम्बवती। स्त्री। जाम्बवतोदुहितरि
श्रीकृष्णपत्न्याम्॥ नागदमन्याम्॥
जाम्बवी। स्त्री। नागदमन्याम्॥
जाम्बुवान्। पुं। जाम्बवति॥
जाम्बूनदम्। न। स्वर्णे॥ धुस्तूरे॥ का
श्चनविशेषे॥ यथा जाम्बूनदेनाम्ब
सदृशं सेऽम्बमस्मिन्नेवेत्। तथा चक्षु-
स्यधर्मेषु समयेऽन्यः समोभवेदिति॥
समयः आचारः॥ जम्बूरसस्य नद्यां
भवम्। तच्चमवद्रत्यण्॥ तीरस्थ
द्रसंप्राप्य सुखवायुविशोषिता। जा
म्बूनदाख्यं भवति सुवर्णं सिद्धभूषण
म्। तद्रसं जम्बूरसम्॥ यथा। मेरु
मन्दरपर्वतस्य जम्बूफलाना मत्युच्च

निपातविशीर्णानां मनस्थिप्रायाणा
मिभकायनिभानां रसेन जम्बूनाम
नदी इत्यमृतं वहति॥ तस्या उभ-
योर्स्तीरयोः मृत्तिका जम्बूरसेनानु
विध्यमाना वाय्वर्कसंयोगविपाके-
न सदामरलोकाभरणं जाम्बूनदं-
नाम स्वर्णं भवति॥ इति श्रीभाग
वतम्॥
जाम्बूनदेश्वरी। स्त्री। देवीविशेषे॥
तत्स्थाने॥
जायकम्। न। कालीयके। पीतवर्णे
सुगन्धिकाष्ठप्रभेदे। काळिया इति
गौडभाषा। जयति गन्धान्तरम्।
जिजभिभवे। ण्वुल्॥
जायमानः। पुं। उपनीते॥
जाया। स्त्री। विधिनाविवाहितायां
स्त्रियाम्। पत्न्याम्। द्वितीयायाम्
॥ जायते ऽस्याम्। जनी०। जनेर्यक्।
येविभाषेत्यात्वम्। पतिर्भार्यां संप्र
विश्य गर्भोभूत्वेह जायते। जायाया
स्तद्धि जायात्वं यदस्यां जायते पुनः
॥ तस्मात् सप्तमभवने॥
जायाघ्नः। त्रि। तिलकालकादि चिह्न-
॥ जायांहन्ति। हन०। अमनुष्यक
र्तृके चेतिटक्॥ स्त्रीपि जायाघ्नी॥
जायाजीवः। पुं। नटे॥ जायया जीव
ति। जीव०। इगुपधेतिकः॥

जायानुजीवी । पुं । नटे ॥ बकपक्षिणि ॥ वेश्यापतौ ॥ दुःखे ॥
जायापती । पुं । द्विवचनान्तः । सह्योक्त्या भार्याभर्त्तारौ ॥ जाया च पतिश्च । राजदन्तादिषु निपातनात् पूर्वनिपातः ॥
जायुः । पुं । औषधे ॥ जयति रोगान् । कृवापाजिमिस्वदिसाध्यशूभ्य उण् इत्युण् ॥
जारः । पुं । उपपतौ ॥ जरयति । जृष् । दारजारौ कर्त्तरि णिलुक् इति घञ् । जीर्य्यतेऽनेनेति करणे वा घञ् ॥
जारजः । त्रि । विजन्मनि । अनियुक्तासुते ॥ जारात् जातः । जनी० डः ॥
जारणी । स्त्री । स्थूलजीरके ॥
जारद्गवी । स्त्री । मध्यममार्गे नक्षत्रविशेषाणां संज्ञाविशेषे ॥ यथा । ज्येष्ठा मूलाधाविशाखावीथीजारद्गवीमता । एतास्तुवीथयस्तिस्रो मध्यमोमार्ग उच्यत इति ॥
जारित । त्रि । शोधिते ॥
जारी । स्त्री । औषधीभेदे । जाडी इतिगौडभाषा ॥
जारुथ्यः । पुं । त्रिगुणदक्षिणाकयज्ञे ॥
जालः । पुं । नीपवृक्षे ॥ न । गवाक्षे । जाली इतिभाषा ॥ आनाये । सूत्रादिनिर्मिते मत्स्यादिजन्तुरोधकवस्तुनि ॥ क्षारके । पक्ष्यादिधारणार्थे पाशे ॥ दम्भे ॥ वृन्दे ॥ गवाक्षे ॥ इन्द्रजाले ॥ जले क्षिप्यते । शेषस्त्यच् ॥ जलवति घनीभवति । जलघातने । ज्वलितीति वा ॥ यद्वा । जालयति । जलसंवरणे । चु० । पचाद्यच् ॥
जालकः । पुं । गवाक्षे ॥ न । कोरके ॥ दम्भे ॥ कलापे ॥ आनाये ॥ न । स्त्री । मोचकफले ॥ नवकलिकावृन्दे ॥ क्षारके ॥ समूहे ॥
जालकारः । त्रि । जालकर्त्तरि ॥
जालकारकः । पुं । मर्कटके ॥ लूतायाम् ॥ त्रि । जालकर्त्तरि ॥ जालस्य कारकः ॥
जालकिनी । स्त्री । मेष्याम् ॥
जालगर्द्दभः । पुं । रोगविशेषे ॥ तस्य लक्षणं यथा ॥ विसर्पवत् सर्पति यः शोथस्तनुरपाकवान् । दाहज्वरकरः पित्तात् स ज्ञेयो जालगर्द्दभ इति ॥
जालगोणिका । स्त्री । कण्डालायाम् ॥
जालजीवी । पुं । धीवरे ॥
जालन्धरः । पुं । पीठविशेषे ॥ त्रिगर्त्तदेशे ॥ पुंभूम्नि । जालन्धराः ॥ तद्देश्येषु । त्रिगर्त्तेषु ॥
जालपात् । पुं । हंसे ॥
जालपादः । पुं । शरारिप्रभृतिपक्षिविशेषेषु ॥ जालाकारपादत्वादेषाम् ॥
जालप्राया । स्त्री । योद्धॄणां लोहमय्या

जिगत्नुः । पुं । प्राणेषु ॥ जिगंसति । ग
[illegible] गमेः सन्वच्चेति क्नुः । अनुदा
त्तोपदेशेत्यादिना मलोपः ॥ [illegible]
जिगमिषा । स्त्री । गमनेच्छायाम् । ग
न्तुमिच्छायाम् ॥ [illegible]
जिगमिषुः । त्रि । गन्तुमिच्छौ ॥ [illegible]
जिगीषा । स्त्री । जेतुमिच्छायाम् ॥ [illegible]
[illegible] ॥ जेतुमिच्छति जिगी
षति । जिगीषतीति जिगीषा । अ
प्रत्ययात् । टाप् ॥ व्यवसाये ॥ म-
[illegible]
जिगीषुः । त्रि । जयेच्छौ । जेतुमिच्छौ
॥ नित्योत्साहवति ॥ [illegible]
जिघत्सा । स्त्री । क्षुधायाम् । बुभुक्षा
यायाम् ॥ अत्तुमिच्छा अत्तुमिच्छाया
। अदेः सन्नन्तादप्रत्ययः । लुङ्सनो
र्घस्लृ इति घस्लादेशः ॥ [illegible]
जिघत्सुः । त्रि । क्षुधार्ते । बुभुक्षिते
॥ अत्तुमिच्छुः । अदेः सनि लुङ्स
नोर्घस्लृ । ततः सनाशंसभिक्ष उः ॥
जिघांसकः । त्रि । हननेच्छुके ॥ [illegible]
जिघांसा । स्त्री । हननेच्छायाम् ॥ ह
न्तुमिच्छेत्यर्थः ॥ [illegible]
जिघांसुः । पुं । शत्रौ ॥ त्रि । हन्तुमि
च्छौ ॥ हन्तेः सन्नन्तादुप्रत्ययः । अ
भ्यासाच्चेति कुत्वम् । अज्झनगमां स
नीति दीर्घः ॥



जिघृक्षा । स्त्री । ग्रहीतुमिच्छायाम् ॥
जिघृक्षुः । त्रि । ग्रहीतुमिच्छौ । ग्रहेः
सन्नन्तादुः ॥ [illegible]
जिघ्रः । त्रि । आघ्राणकर्तरि ॥ [illegible]
जिङ्गिनी । स्त्री । वृक्षविशेषे । प्रसिद्धि
[illegible] न्यामे । जिङ्गिन्याम् ॥ जिङ्गीमधु
रा सोष्णा कषाया योनिदोषिणी ।
कटुका व्रणहृद्रोगवातातीसारहृत्
स्मृता ॥ [illegible]
जिङ्गी । स्त्री । मञ्जिष्ठायाम् ॥ जिङ्गति
[illegible] । जिगिगती । पचाद्यच् । गौरादि
त्वात् ङीष् ॥ [illegible]
जिजीविषा । स्त्री । जीवितुमिच्छा-
याम् ॥ [illegible]
जिजीविषुः । त्रि । जीवितुमिच्छौ ॥
जिज्ञासनीयः । त्रि । जिज्ञासितव्ये ।
जिज्ञास्ये ॥ [illegible]
जिज्ञासा । स्त्री । ज्ञातुमिच्छायाम् ॥
जिज्ञासितम् । त्रि । ज्ञातुमिष्टे ॥ विचा
रिते ॥ कृतजिज्ञासे ॥ [illegible]
जिज्ञासुः । त्रि । मुमुक्षौ । आत्मज्ञा-
नार्थिनि ॥ ज्ञातुमिच्छौ ॥ बहुश्रुतः
स्वल्पभाषी जिज्ञासुर्ज्ञानवानपीति
तन्त्रम् ॥ [illegible]
जितः । त्रि । प्राप्तपराजये । परिभूते ।
पराजिते ॥ यथा । नहि जिते जेतु
रग्रे स्यात् सुचितम् ॥ भजते विदे

त्र मधिकेन जितं तदनुप्रवेश अथवा कुशलः ॥ वश्ये । स्वायत्तीकृते । वशीकृते ॥ पुं । अर्हदुपासकविशेषे ॥

जितकामः । त्रि । सदाशिवे ॥ जितः कामो येन ॥

जितकाशी । त्रि । दृढमुष्टौ ॥ इति महाभारते टीकाकृतः ॥

जितकाशी । त्रि । जितं करोति जयिनि ॥ जितेन जयेन काशते प्रकाशते । काशृ दीप्तौ । शीले णिनिः ॥

जितक्रोधः । पुं । शिवे ॥ विष्णौ । त्रि । जितः क्रोधो येन ॥ जितक्रोधः कथं तर्हि सुरारीन् हन्ति माधवः । विद्रमाणां स्थापनार्थं न तु कोपवशात् प्रभुः ॥ भृगुपादहतो तेनापि क्रोधमुत्पत्तेः ॥ त्रि । जितामर्षे ॥

जितनेमिः । पुं । आश्वत्थे । अश्वत्थनिर्मिते दण्डे ॥ त्रि । जितनेमिके ॥

जितशत्रुः । पुं । हस्तार्हत्पितरि ॥ त्रि । कृतशत्रुपराजये ॥

जितसङ्गदोषः । त्रि । प्रियाप्रियसन्निधावपि रागद्वेषविवर्जिते ॥ जिताः सङ्गजनिता दोषा येन ॥

जितात्मा । त्रि । जितेन्द्रिये ॥ जित आत्मा येन ॥

जितामित्रः । पुं । हरौ ॥ जिता अमित्रा बाह्या आभ्यन्तराश्च येन ॥ त्रि ॥ कृतशत्रुपराजये ॥

जितारिः । पुं । बुद्धे ॥ तृतार्हत्पितरि ॥ त्रि । जितशत्रौ ॥ जिता अरयो येन ॥

जिताष्टमी । स्त्री । जीमूताष्टम्याम् ॥

जिताक्षः । पुं । जितकाशिनि ॥

जितुमः । पुं । मिथुनराशौ ॥

जितेन्द्रियः । त्रि । स्ववशीकृतसर्वबाह्येन्द्रिये । शान्ते ॥ यथा । श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ जितानि वशीकृतानि इन्द्रियाणि श्रोत्रादीनि येन ॥ दान्ते ॥ पुं । कामवृक्षाख्ये क्षुपविशेषे ॥

जितेन्द्रियाह्वः । पुं । कामवृद्धिवृक्षे ॥

जित्तमः । त्रि । जयशीलानामर्थे उत्तमे ॥

जित्यः । पुं । हलौ । हलवत्ते । कृष्टसमीकरणार्थे स्थूलकाष्ठे ॥ विपूयविनीयजित्या मुञ्जकल्कहलिषु इति निपातनात् क्यप् ॥

जित्वा । पुं । जयिनि ॥ जयति । जि । श्रीङ्कुशीर्ध्यादिना क्वनिप् ॥

जित्वरः । त्रि । जेतरि ॥ जयशीलः । इण्नशजिसर्तिभ्यः क्वरप् ॥

जित्वरी । स्त्री । काशिकापुर्याम् ॥ टिड्ढेति ङीप् ॥ जयशीलायाम् ॥

जिनः । पुं । अर्हति ॥ बुद्धे ॥ विष्णौ ॥

रोगघ्नश्चिकीर्तिस्त्वचेतिराजवल्लभः॥

जिह्वापः। पुं। शुनि॥ मार्जारे॥ व्याघ्रे॥ द्वीपिनि। चित्रव्याघ्रे॥ भल्लूके॥ सिंहे॥ जिह्वयापिबतिः पा०। कः॥

जिह्वामलम्। नं। कुसुमे॥

जिह्वामूलीयः। पुं। कखाभ्यां प्रागर्द्धविसर्गसदृशो (ᳵ) विसर्गप्रभेदे॥ जिह्वामूलेभवः। जिह्वामूलाङ्गुलेश्छः॥

जिह्वारदः। पुं। खगे॥

जिह्वालिट्। पुं। कुक्कुरे॥ मार्जारे॥ जिह्वयालेढि। लिह०। क्विप्॥

जिह्वाशल्यः। पुं। खदिरवृक्षे॥

जिह्वास्वादः। पुं। लेहने॥ आस्वादनम्। स्वद०। घञ्। जिह्वयास्वादः॥

जीनः। त्रि। वृद्धे॥ जिनातिस्म। ज्या०। गत्यर्थेतिक्तः। ग्रहिज्येतिसम्प्रसारणम्॥ हलइतिदीर्घः। ल्वादिभ्यश्चेतिनत्वम्॥ चर्मपुटे॥

जीमूतः। पुं। अद्रौ॥ भृतिकरेइति मेदिनी॥ भृतिकरे चतिहेमः॥ देवताडे॥ जीमूतश्च॥ पयोधरे॥ वासवे॥ घोषके॥ मुस्तके॥ जयति नभः। जीयतेऽनिलेनवा। जि। जेर्मूट्चोदात्तइतिक्त। लेर्दीर्घश्च॥ जीवस्योदकस्यमूतःपटबन्धोयस्येतिवा। पृ०॥ जीवनं जलं मूतं बद्धमनेन। मूङ्बन्धने। कर्मणिक्तः। पृषोदरादित्वात् वनशब्दलोपः॥ ज्यानंजीः। ज्या०। सं०। क्विप्। जियावयोहान्यामूतोबद्धइतिवा॥ जीवनं मुञ्चतिवा। पृ०॥

जीमूतकः। पुं। देवदाल्याम्॥

जीमूतकूटः। पुं। पर्वते॥

जीमूतमूलम्। नं। शट्याम्॥

जीमूतवाहनः। पुं। इन्द्रे॥ जीमूतावाहनमस्य॥ धर्मरत्नप्रकरणकर्तरि॥

जीमूतवाही। पुं। धूमे॥

जीमूताष्टमी। स्त्री। गौणाश्विनकृष्णाष्टम्याम्॥

जीरः। पुं। जीरके॥ खड्गे॥ अणौ॥ जुषति। जुष्वेः। जोरीघेतिरक्॥ जिनातिवा। ज्या०। स्फायितिरग्वा॥

जीरकः। पुं। अजाज्याम्। जीरादृति भाषा॥ जीरस्तु संज्ञायामितिकन्॥ अस्यगुणायथा। जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु। संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्॥ ज्वरघ्नं पाचनं बल्यं वृष्यं रुच्यं कफापहम्। चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृदिति भावप्रकाशः॥

जीरणः। पुं। जीरके॥

जीरिका। स्त्री। वंशपत्रीतृणे॥

जीर्णः। पुं। जीरके॥ नं। शैलजे॥ त्रि।

वृक्षे । जरति ॥ पुरातने॥ परिपक्वे॥

जीर्य्यतिस्म । जृष० । गत्यर्थेतिक्तः । ऋल्वादिभ्यः । निष्ठानत्वम् ॥

जीर्णज्वरः । पुं । पुरातनज्वरे ॥ अस्य सामान्यलक्षणं यथा । योद्वादशभ्योदिवसेभ्य ऊर्द्धं दोषत्रयस्तद्दिगुणेभ्यऊर्द्धम् । न्यूणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तोज्वरएष जीर्ण-इति ॥

जीर्णदारु । न । विधारा इति प्रसिद्धे वृद्धदारकभेदे । सुपुष्पिकायाम् ॥

जीर्णपत्र. । पुं । पट्टिकालोध्रे ॥

जीर्णपत्रिका । स्त्री । वंशपत्रीतृणे ॥

जीर्णपर्णः । पुं । कदम्बे ॥ न । पुरातनपर्णे ॥ त्रि । तद्वति ॥

जीर्णफञ्जी । स्त्री । जीर्णदारुणि ॥

जीर्णवज्रम् । न । वैक्रान्तमणौ ॥

जीर्णवस्त्रम् । न । पटच्चरे । मलवस्त्रे ॥ जीर्णञ्च तद्वस्त्रञ्च ॥ त्रि । तद्युक्ते ॥

जीर्णबुध्नः । पुं । पट्टिकालोध्रे ॥ कैवर्त्तीमुस्तके ॥

जीर्णबुध्नकम् । न । परिपेले ॥

जीर्णा । स्त्री । स्थूलजीरके ॥

जीर्णास्थिमृत्तिका । स्त्री । अर्कादीनां कृत्रिममृद्विशेषे ॥ यथा । अश्वत्थे तुजीर्णास्थिमृत्तिकाकरणं प्रिये । भि-लातुस्थले कुर्य्याद्दीर्घं गर्त्तं म-नोहरम् ॥ निःक्षिपेत्तत्रमांनास्थि सर्व्वं द्विचतुष्पदाम् । सर्जिक्षारं म-हाक्षारं समुक्षारं लवणानि च ॥ ग-न्धकोष्णजलं क्षेप्यं नानामूत्राणि च । एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम् ॥ काष्ठास्थ्यूर्द्धं त-दूर्द्धन्तु कुर्य्याद्भूमिं शुभाम् । त्रि-वर्षाज्जायते सर्वमेकीभूतं ह्यतःस-मम् ॥ ततोमिश्रास्य तच्चूर्णं कृत्वा पात्राणि निर्मिमेत् । प्रयुक्तं भोजनं तत्र सूचयेद्वक्तृदूषणम् ॥ अन्नावि-षस्य संयोगात्तस्य भङ्गः प्रजायते । दूषीविषादिसंयोगात् पात्रे स्फो-टाभवन्तिहि ॥ तत्रचिरं चतुर्विधं पात्रं कृष्णं प्रजायते । एवंज्ञात्वा त-त्र दद्यान्नकदाचिद्विषादिकमितिरा-वणः ॥

जीर्णिः । स्त्री । ज्यानौ । जीर्णत्वे ॥ जरणम् । जृष्वयोहानौ । क्तिन् । ऋल्वादिभ्यःक्तिन्निष्ठावत् । रदाभ्यामि-तिनत्वम् ॥

जीर्णोद्धारः । पुं । भग्नमन्दिरादेः सं-स्कारे ॥

जीर्य्यन् । त्रि । वयोहानिंप्राप्नुवति ॥

जीर्व्विः । पुं । कुठारे । परशौ ॥ जृष० । जृशस्तृजागृभ्यः क्विन् ॥

जीवः । पुं । प्राणिनि ॥ दर्भ्यां ॥ दृक्ष

भेदे ॥ बृहस्पतौ ॥ असुधारणे ॥ कर्णे ॥ मनुष्यादिकीटपर्यन्ते प्राणिमात्रे । कार्यकरणसङ्घाते ॥ अनेकान्तवादिनां जीवास्तिकायसंज्ञया परिभाषिते जीवपदार्थे ॥ त्रिविधस्त्वसौ अनादिसिद्धमुक्तबद्धभेदात् । अनादिसिद्धो ऽर्हन् जीवास्तिकायाख्यः । व्यपेतमोहादिबन्धो मुक्तः । मोहाद्याक्रान्तस्तु बद्ध इति ॥ * ॥ उपाधिप्रविष्टे ब्रह्मणि । यद्वा नः प्राणकरणग्रामानुप्रविष्टे । घटावच्छिन्नाकाशवत् शरीरचितयावच्छिन्ने चैतन्ये ॥ दर्पणस्थमुखप्रतिबिम्बवत् बुद्धिस्थे चैतन्यप्रतिबिम्बे ॥ साभासाहङ्कारे । चित्प्रतिबिम्बे ॥ प्राणादिकलापस्य धारयितरि ॥ प्राणान् चोपक्रमेण धारयन् जीव उच्यते ॥ लिङ्गदेहे ॥ एवं पञ्चविधं लिङ्गं त्रिवृत् षोडश विस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते ॥ इति श्रीभागवतम् ॥ पञ्चविधं पञ्चतन्मात्रात्मकम् । त्रिवृत् त्रिगुणम् । षोडशविकारात्मना विस्तृतमित्यर्थः ॥ * ॥ विज्ञानमयकोशावच्छिन्नचिदात्मा कर्तृत्वभोक्तृत्वाद्यभिमानित्वेन इहलोकपरलोकगामी व्यावहारिको जीव उच्यते ॥ वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ * ॥ जीवो नाम देहादिव्यतिरिक्तस्तत्साक्षीत्वम्पदार्थो योऽयं विज्ञानमयः योऽयं संसरति योऽयं संसारी न तु देहादिर्जीवः तस्यदृश्यस्य द्रष्टृत्वानुपपत्तेः ॥ * ॥ अस्ति देवि परब्रह्मस्वरूपी निष्कलः शिवः । सर्वज्ञः सर्वकर्त्ता च सर्वेशो निर्मलो ऽव्ययः ॥ स्वयंज्योतिरनाद्यन्तो निर्विकारः परात्परः । निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः । देहाद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः ॥ सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः । तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् ॥ प्रतिजन्म प्रपद्यन्ते तेषामप्यपरं पुनः । सूक्ष्मं लिङ्गशरीरं तदामोक्षादक्षयं प्रिये ॥ इति कुलार्णवे १ उल्लासः ॥ पुं । न । जीविते ॥ जीवनम् । जीव० । इत्यत्वे ति घञ् ॥ जीवति वा । इगुपधलक्षणः कः ॥ जीवयति वा । अच् । स्तनसञ्जीवनमन्त्रत्वात् ॥

जीवकः । पुं । प्राणके द्रुमे ॥ पीतसाले । विजयसार इति ख्याते ॥ क्षपणके ॥ व्यालग्राहिणि ॥ अष्टवर्गान्तर्गतौषधविशेष

कूर्चशीर्षे । ह्रस्वाङ्गे ॥ अस्यस्वरूप पर्यायगुणाः । यथा । जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥ जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत् ॥ जीवको मधुरः शृङ्गी ह्रस्वाङ्गः कूर्चशीर्षकः । ऋषभो वृषभो धीरो विषाणी ध्वाङ्क्ष इत्यपि ॥ जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहाविति ॥ त्रि । सेवके । सेविनि ॥ वृद्ध्याजीविनि ॥ जीविनि ॥ आहितुण्डिके ॥ जीवयति । जीव० । ण्वुल् ॥ जीवतात् आशिषि चेतिवुन् ॥

जीवघनः । पुं । हिरण्यगर्भे ॥ घनोमूर्त्तिः । जीवलक्षणो घनः जीवघनः सैन्धवखिल्यवत् ॥

जीवजीवः । पुं । चकोरे ॥

जीवञ्जीवः । पुं । चकोरे ॥ जीवंजीवयति । तद्दर्शनेनविषनाशात् । कृञ्ज्युटो बहुलमिति बाहुलकात् खच् ॥ खगान्तरे ॥ द्रुमभेदे ॥

जीवत्तोका । स्त्री । जीवद्वत्सायाम् । जीवत्सुतायाम् ॥ इति हेमः ॥

जीवत्वम् । न । कूटस्थादीनां चतुर्णां समूहे ॥ तथा हि । कूटसंज्ञ अन्तःकरणम् अन्तःकरणाश्रयाऽविद्या चिदाभासश्चेति चतुष्टयमिलितं जीवत्वमितिनीलकण्ठश्चैवः ॥

जीवत्पतिः । स्त्री । सधवायाम् ॥

जीवत्पितृकः । त्रि । विद्यमानपितृके ॥ यथा । अमावास्यं गयाश्राद्धं दक्षिणामुखभोजनम् । न जीवत्पितृकः कुर्यात् कृतेपि पितृहाभवेदितिरघुनन्दनः ॥

जीवथः । पुं । कूर्मे ॥ प्राणे ॥ मयूरे ॥ मेघे ॥ त्रि । चिरायुषि ॥ धार्मिके ॥ जीवति । जीव० शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥

जीवदः । पुं । वैद्ये ॥ रिपौ ॥ ऋद्धिनामौषधौ ॥ ग्रन्थिपर्णे ॥ त्रि । जीवनदातरि ॥ जीवं ददाति । डुदाञ्० । कः ॥

जीवदात्री । स्त्री । ऋद्धिनामौषधौ ॥

जीवधनम् । न । गवादिपशुषु ॥

जीवनम् । न । वर्त्तने । जीविकायाम् ॥ जीव्यत्यनेन । जीव० ल्युट् ॥ नीरे । जले ॥ प्राणधारणे । आयुषि । जन्ममृत्योर्मध्यकाले ॥ हीनजीवनाद जीवनं वरम् ॥ मज्जनि ॥ हैयङ्गवीने ॥ पुं । पुत्रे । जीवकौषधे ॥ वाते ॥ क्षुद्रफलकवृक्षे ॥ जीव्यतेऽनेन । जीव० करणाऽधिकरणयोश्चेतिकरणे ल्युट् ॥

जीवनकम् । न । अन्ने ॥

जीवनयोनिः । स्त्री । यत्नविशेषे ॥ स-तु । अतीन्द्रियः शरीरे प्राणसञ्चारकारणम् । इति भाषापरिच्छेदः ॥

जीवनहेतुः । पुं । वर्त्तनोपाये ॥ मिथा शिलंभृतिःसेवागोरक्षं विपणिःकृषिः । इतिमे वंकुसीदञ्च दशजीवनहेतवः ॥

जीवना । स्त्री । मेदौषधे ॥

जीवनाघातम् । न । विषे ॥

जीवनावासः । पुं । वरुणे ॥ जीवनमावासो यस्य ॥

जीवनिका । स्त्री । हरीतक्याम् ॥

जीवनी । स्त्री । गुर्जरदेशे डोडी इति प्रसिद्धायां जीवन्त्याम् । मधुस्रवायाम् । काकोल्याम् ॥ डोड्याम् ॥ मेदायाम् ॥ महामेदायाम् ॥ यूथ्याम् ॥ जीव्यतेऽनया । जीव० करणेल्युट् ॥

जीवनीयकम् । न । } जले । वारि- जीवनीयकम् । न । } णि ॥ जीवनायहितम् । छः ॥ जीवनीयगणे ॥

जीवनीयगण । पुं । औषधविशेषे ॥ यथा । अष्टवर्गः सयष्टीको जीवन्ती मुद्गपर्णिका । माषपर्णी शणोऽयन्तु जीवनीय इतिस्मृतः ॥ जीवनो मधुरश्चापि नाम्ना सपरिकीर्त्तितः ॥ जीवनीयगणः प्रोक्तः शुक्रकृद् बृंहणो हिमः ॥ गुरुर्गर्भप्रदः स्तन्यः कफकृत् पित्तरक्तहृत् । तृष्णां शोषं ज्वरंदाहं श्रमं मूर्च्छां व्यपोहति ॥ अपिच । अष्टवर्गश्च यष्ट्यन्यौ जीवन्ती मधुकस्तथा । जीवनीयगणःप्रोक्तो जीवन स्तु पुन स्तथेतिवैद्यक परिभाषा ॥

जीवनीया । स्त्री । जीवन्त्याम् । गुर्जरे डोडी इति प्रसिद्धायाम् ॥ जीवनायहिता । तस्मैहितमिति छः ॥

जीवनेत्री । स्त्री । सैंहल्याम् ॥

जीवनौषधम् । न । जीवातौ । मृतस्य जीवनौषधे ॥ येनम्रियमाणो जीवति । जीवनस्य चौषधम् ॥

जीवन्तः । पुं । प्राणे ॥ औषधे ॥ जीवशाके ॥ त्रि । आयुष्मति ॥ जीव्यार्हे । जीव० ऋच्छिनन्दि जीविप्राणिभ्यःषिद्वाशिषीतिझच् । झोन्तः ॥

जीवन्तिका । स्त्री । गुडूच्याम् ॥ जीवशाके ॥ वन्दायाम् ॥ हरीतक्याम् । जीवति । जीव० ऋच्छिनन्दीति झचःषित्वात् ङीष् । कन् ॥

जीवन्ती । स्त्री । जीवन्त्याम् । मधुस्रवायाम् ॥ जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ॥ रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः ॥ शाकप्रकारस्तु जीवन्त्याः कोमलं

पत्रं स्विन्नं तक्रसुभर्जितम्। हिङ्गुना संयुते तैले तक्रं चिञ्चा प्रलेहयेत् ॥ डोडी इति गुर्जरेऽस्याः प्रसिद्धिः॥ शम्याम्॥ गुडूच्याम्॥ वन्दायाम्॥ डोड्याम्॥ हरीतक्याम्॥ जीवन्ती स्वर्णवर्णिनीति लक्षणाम्॥ जीवति जीवयति वा। जीव०। झटःशतुत्व गित्त्वात् ङीप्॥

जीवन्मुक्तः। त्रि। आत्मविद्। जीवन्नेव मुक्तसंसारे॥ जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वात् दखिलबन्धरहितो ब्रह्मनिष्ठ इति॥*॥ ननु जीवन्मुक्तो व्यवहरति न वा। आद्ये तस्य ब्रह्मविच्छयता। द्वितीये देहस्यानुपयोगात् सद्यः पातप्रसङ्ग इत्यत आह। अयन्तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेणान्ध्यमान्द्यपटुत्वादिभाजनेनेन्द्रियग्रामेण अशनायापिपासाशोकमोहादिभाजनेनान्तःकरणेन पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धान्यारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यतीति। दृष्टान्तेनोक्तमर्थं स्पष्टयति। यथेन्द्रजालमिति ज्ञानवान् तदिदमिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति। उक्तञ्च। सुषुप्तिवज्जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि चाऽद्वयत्वतः। तथाच कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः इति॥ वेदविद्यारतं ज्ञानं देशिकस्य मुखात् स्वयम्। गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः। प्रारब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते॥ अष्टोत्तरशतमुपनिषदाम्॥ कौलिके॥ यथा। धन्या माहेश्वराः स्वीयं प्रत्यभिज्ञानशालिनः। स्वपरिज्ञानमात्रेण जीवन्मुक्ता भवन्ति हि॥ महामन्त्रप्रभावेण कुलाचारप्रभावतः। स्वेच्छाचारा निर्विकल्पा जीवन्मुक्ता हि कौलिकाः॥ योऽन्तर्व्योमवदच्छः स जीवन्मुक्त उच्यते॥ जीवन्नेव मुक्तः॥

जीवन्मुक्तिः। स्त्री। जीवतो बन्धनिवृत्तौ॥ जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति तन्निरस्ति-स्वरूपाजीवन्मुक्तिः॥

जीवन्मुक्त्युपायः। पुं। कुलमार्गः॥ जी

यन्मुक्तो रूपायत्तु कुसमार्गविनापर इतिसद्भिर्विमोक्तः ॥

जीवपुत्रः । पुं । } जीयापोतादृति प्रसिद्धे पुत्रजीव द्रुमे ॥
जीवपुत्रकः । पुं । }

जीवपुष्पा । स्त्री । बृहज्जीवन्त्याम् ॥

जीवप्रिया । स्त्री । हरीतक्याम् ॥

जीवभद्रा । स्त्री । जीवन्तीलतायाम् ॥ ऋद्धिनामौषधे ॥

जीवभूतः । त्रि । प्राणधारणोपाधिना कर्ता भोक्ता संसारीति रूपेण प्रतिबिम्बगते ॥

जीवमन्दिरम् । न । शरीरे ॥

जीवला । स्त्री । सैंहल्याम् ॥

जीवलोकः । पुं । संसारे ॥ यथा । माता पिता गुरुजनः स्वजनो ममेति मायोपमे जगति कस्य भवेत् प्रतिबन्धः । एको यतो व्रजति कर्मपुरः सरोऽयं विश्रामवृक्षसदृशः खलु जीवलोकः ॥ सायंसायं वासवृक्षं समेताः प्रातः प्रातस्तेन तेन प्रयान्ति । त्यक्त्वान्योन्यं तञ्च वृक्षं विहङ्गा यद्वत् तद्वत् ज्ञातयोऽज्ञातयश्चेति ॥ जीवानांलोकः ॥

जीवपक्षी । स्त्री । क्षीरकाकोल्याम् ॥

जीवशाकः । पुं । मालवप्रसिद्धे शाकविशेषे । जीवन्ते । रक्तनाले । ताम्र



वधे ॥

जीवशुक्ला । स्त्री । क्षीरकाकोल्याम् ॥

जीवश्रेष्ठा । स्त्री । ऋद्धिनामौषधे ॥

जीवसञ्ज्ञः । पुं । कामवृद्धिवृक्षे ॥

जीवसाधनम् । न । धान्ये ॥

जीवसूः । स्त्री । जीवद्वत्सायाम् । जीवत्तोकायाम् ॥

जीवस्थानम् । न । मर्मणि ॥

जीवा । स्त्री । जीवन्तिकायाम् । धनुर्ज्यायाम् । शिञ्जी इति गुर्जरभाषा ॥ मौर्व्याम् । धनुर्गुणे ॥ वचायाम् ॥ शिञ्जिते ॥ भूमौ ॥ वृत्तौ ॥ जीवति । जीव० । पचाद्यच् । टाप् ॥

जीवातुः । पुं । न । अन्ने । भक्ते ॥ जीविते ॥ जीवनौषधे । मृतस्य जीवनौषधे ॥ जीवयति जीवत्यनेन वा । जीव० । जीवेरातुः ॥

जीवात्मा । पुं । देहिनि । जीवे । पुनर्भविनि ॥

जीवाधारः । पुं । वक्षे ॥ हृदये ॥

जीवान्तकः । पुं । जीवनार्थं पक्ष्यादीनां घातके । शाकुनिके ॥ त्रि । जीवनाशके ॥ जीवानामन्तकः ॥

जीवाख्या । स्त्री । सैंहल्याम् ॥

जीवास्तिकायः । पुं । अनेकान्तवादिनां जीवपदार्थे ॥

जीविका । स्त्री । आजीवे । जीवनो-

पाये ॥ जीवन्त्याम् ॥ जीव्यते ऽन या । जीव० । गुरोश्चहलइत्यः । सं ज्ञायां कन् । कुन्वा ॥

जीवितम् । न । प्राणने । जीवने ॥ वि । जीवनान्विते ॥ ब्रह्मादीनामपि जीवितं स्वल्पमेव ॥ यथा । ये समर्था जगत्यस्मिन् सृष्टिस्थित्यन्तकारिणः । तेपि काले प्रलीयन्ते कालोहि बलव- त्तर इतिस्मृतेः ॥

जीवितकालः । पुं । जीवनावच्छिन्नका- ले । आयुषि ॥ जीवितस्यकालः ॥

जीवितज्ञा । स्त्री । नाड्याम् ॥ श०रा० ॥

जीविताशा । स्त्री । जीवनलोभे ॥ जी र्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीविताशा धनाशा च जी र्यतो ऽपिनजीर्यति ॥

जीवितेशः । पुं । यमे । पितृपतौ ॥ प्रा णनाथे ॥ चन्द्रे ॥ सूर्ये ॥ वि । जी- वितेश्वरे ॥ प्रिये ॥ जीवितस्वामिनि ॥ जयपालौ ॥

जीवी । पुं । प्राणिनि ॥ जीविनां द्वाव शो रोगः कर्मभोगः शुभाशुभः । भ क्तो वैद्यस्तं निहन्ति कृष्णभक्तिरसा यनात् ॥

जीवेष्टिः । स्त्री । रक्तसातिसने ॥

जीवोत्पत्तिवादः । पुं । पाञ्चरात्राणां वादे ॥ तयथा । ब्रह्मणो वासुदेवा- ख्यात् जीवः सङ्कर्षणाभिधः । जायते च मन सस्तस्मात् प्रद्युम्नाख्यं ततः पु नः ॥ अहङ्कारो ऽनिरुद्धाख्य इत्येवा रो विश्वरूपकाः । वासुदेवाराधना द्वैऔत्पत्तेर्मोक्षमिति ॥

जीवोपाधिः । पुं । सुषुप्त्यादिषु ॥ त्रयो जीवोपाधयः । तथाहि । सुषुप्तौ सु खादिसंस्कारोपरक्तित मज्ञानमात्र मुपाधिः । स्वप्ने जाग्रद्वासनामयं लिं ङ्गशरीर मुपाधिः । जाग्रदवस्थाया- न्तु सूक्ष्मशरीरसंसृष्टस्थूलशरीरमु- पाधिरिति ॥

जीव्या । स्त्री । गोक्षुरदुग्धायाम् ॥ जी वन्त्याम् ॥ हरीतक्याम् ॥

जुः । स्त्री । त्वरागमने ॥ सामान्यग मने ॥

जुगुप्सनम् । न । निन्दने ॥ वि । जुगु- प्साशीले ॥ जुगुप्सते तच्छीलः । गु पेरनुदात्तेतश्चेतियुच् ॥

जुगुप्सा । स्त्री । निन्दायाम् ॥ घृणायाम् । घिन् इतिभाषा ॥ जुगुप्सनम् । गुपगो पनकुत्सनयोः । गुपेर्निन्दायांसन् । अप्रत्ययादिति भावेस्त्रियामः । टाप् ॥

जुगुप्सितः । वि । निन्द्ये ॥

जुङ्गः । पुं । वृद्धदारके ॥ जुङ्गति । जु गिवर्जने । अच् ॥ जुङ्ग्यते वा । घञ् ॥

जुङ्गकः । पुं । वृद्धदारकवृक्षे ॥ स्वार्थ

कम् ॥

जुटकम् । न ॥ जटायाम् ॥ इति शब्दरत्नावली ॥

जुटिका । स्त्री । शिखायाम् । चोटी इति भाषा ॥ संहतकेशेषु ॥ जूडा जटी इति भाषा ॥

जुषन् । त्रि । सेवमाने ॥

जुषमाणः । त्रि । प्रीयमाणे ॥ सेवमाने ॥

जुष्कंकः । पुं । मुञ्जयूपे ॥

जुष्टम् । न । उच्छिष्टे । झूठ झूंठइतिच भाषा ॥ त्रि । सेविते ॥ प्रीते । जुष्यते स्म । जुषीप्रीतिसेवनयोः । क्तः ॥

जुष्यः । त्रि । सेव्ये ॥

जुहुराणः । त्रि । कुटिले ॥ चन्द्रे ॥ जुहूर्षति । हुर्च्छाकौटिल्ये ॥ हुर्च्छेः सनोलुक् छलोपश्चेत्यानच् ॥ जुहुराणं कौटिल्यकारि इतिभाष्यम् ॥

जुहुवान् । पुं । अनले ॥

जुहुषाणः । पुं । अध्वर्यौ ॥ जातवेदसि ॥ चन्द्रे ॥

जुहूः । स्त्री । स्रुग्भेदे । पलाशकाष्ठनिर्मिते ऽर्द्धचन्द्राकृतिरूपे यज्ञपात्रे ॥ पर्णमये यज्ञपात्रविशेषे ॥ जुहोति अनया वा । हुदानादनयोः । सुति शमि जुहोतीनां द्वेचेति क्विप् जुहोतेर्दीर्घश्च ॥ त्रैलोक्यात्मनः कोषस्य प्राग्भागे ॥ जुह्वास्यसादिशिकार्मि-

षः प्राङ्मुखाः सम्मः इति ॥

जूः । स्त्री । आकाशे ॥ सरस्वत्याम् ॥ पिशाच्याम् ॥ जवने ॥ जुः सौत्रोगतौ भाज भासेतिक्विप् दीर्घश्च । जूः जुवौ जुवः ॥ क्विब्वचिप्रच्छीत्यादिना क्विब्दीर्घौ वा ॥

जूटः । पुं । जटायाम् । जूडा इतिभाषा ॥ बन्धे ॥

जूटकः । पुं । न । केशबन्धे । जटायाम् ॥

जूतिः । स्त्री । जवने । वेगे ॥ जुः सौत्रो वेगे । क्तिन् । ऊतियूतीत्यादिना निपातनाद्दीर्घः ॥

जूतिका । स्त्री । कर्पूरविशेषे ॥

जूर्णः । पुं । उलपे ॥

जूर्णाख्यः । पुं । उलू इति गौडप्रसिद्धे तृणविशेषे । खरच्छदे । तृणाग्रे ॥

जूर्णाह्वयः । पुं । देवधान्ये । जुवार इति भाषा ॥ इति हेमचन्द्रः ॥

जूर्णिः । स्त्री । वेगे ॥ आदित्ये ॥ ज्वरति । ज्वररोगे । वीज्याज्वरिभ्योनिः ॥

जूर्त्तिः । स्त्री । ज्वरे ॥ ज्वरणम् । ज्वरः । क्तिन् । ज्वरत्वरेत्यूठ् ॥

जूषः । पुं । न । यूषे ॥

जूषणम् । न । धातपुष्प्याम् । धाइका फूल इतिभाषा ॥

जृम्भः । त्रि । मुखादिविकाशे । जृम्भायाम् ॥ जृम्भात्यर्थं समीरणात् ॥

च्योऽपत्यम् । इञ् ॥

जैवातृकः । पुं । ग्लौवि । सोमे ॥ भेषजे ॥ कर्पूरे ॥ त्रि । आयुष्मति । दीर्घायुषि ॥ कृशे ॥ जीवति जीवयति वा । जीव० । जीवेरातृकन् वृत्तौ आतृकन् इहिस्वेतिसाधुः ॥

जैह्माशिनेयः । पुं । जिह्माशिनोऽपत्ये ॥ शुभ्रादित्वाड्ढक् । हाफिडनायने तिटिलोपाभावः ॥

जैह्म्यम् । न । कुटिलत्वे ॥

जोङ्गकम् । न । अगुरुणि ॥ जुङ्गति जुङ्ग्यते वा ॥ जुगिवर्जने । बुन् । पृषोदरादिः ॥

जोङ्गटः । पुं । गर्भिण्यभिलाषे । दोहदे ॥ इति हारावली ॥

जोटिङ्गः । पुं । महादेवे ॥ महाव्रतिनि ॥

जोडः । पुं । जोडने ॥ जोडनम् । जुड बन्धने । घञ् ॥

जोडनम् । न । बन्धने ॥

जोन्नाकः । पुं । }
जोन्नाला । स्त्री । } देवधान्ये ॥

जोषणम् । न । सेवने ॥

जोषम् । अ । सुखे ॥ प्रशंसायाम् ॥ तूष्णीमर्थे ॥ जल्पने ॥ जुषते । जुषत्यसौ । बाहुलकादम् ॥

जोषा । स्त्री । योषिति ॥ जुषते जुष्यते वा । जुषी प्रीतिसेवनयोः ।



अच् पच्या ॥

जोषिका । स्त्री । आलिकायाम् ॥

जोषित् । स्त्री । योषिति ॥ इष्टषितुषिभ्य इतिपाठे जुषेरितिः ॥

जोषिता । स्त्री । स्त्रियाम् ॥ जोष्यते स्म । णिजन्तात्कर्मणि क्तः ॥

जोष्यः । त्रि । प्रियेविषये ॥ जोष्यान् धि जुषतः कामः संप्रीतोऽभिष्ठतोमम ॥

जोहलम् । न । }
जोहलकम् । न । } पश्चिमायामस्थितीर्थे (ऽ।ऽ) पर्याये ॥

ज्ञः । पुं । ब्रह्मणि । स्वप्रकाशे ॥ चान्द्रमसायने । बुधग्रहे ॥ विचक्षणे । विदुषि ॥ पद्मासने । चतुरानने ॥ भौमे ॥ जानाति । ज्ञा अवबोधने । इगुपधेतिकः । आतोलोपइटिचेत्यालोपः ॥

ज्ञपितः । त्रि । ज्ञप्ते ॥ ज्ञप्यते स्म । ज्ञा मारणादौ मित् । ण्यन्तः क्तः । वादान्तशान्तेतिसाधुः ॥

ज्ञप्तः । त्रि । ज्ञपिते ॥ ज्ञप्यते स्म । ज्ञा अवबोधने मारणादौ च वर्त्तते । मारणादौ मित् । ण्यन्तः । क्तः । वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः- इतिसाधुः ॥

ज्ञप्तिः । स्त्री । बुद्धौ । मनीषायाम् ॥

ज्ञपयति । ज्ञपमिच्च । अयं ज्ञाने ज्ञापने मारणतोषणनिशामनेषु च वर्त्तते । चुरादिः । तत्र ज्ञानार्थकात् अपेक्षितत्वात् प्राप्तं युषं बाधित्वा बाहुलकात् क्तिन् ॥ ज्ञाते ॥ अस्ते स्तु कार्यं रोम विष्यप्रश्नेषकेभ्यस्था ॥

ज्ञातः । त्रि । ज्ञानेन विषयीकृते । प्रतीते । बुद्धे । प्रमिते ॥ ज्ञा० क्तः ॥

ज्ञातनन्दनः । पुं । वर्द्धमानाख्यविशेषे ॥

ज्ञातव्यः । त्रि । अवगन्तव्ये । बोध्ये ॥ मन्तव्ये ॥

ज्ञातसिद्धान्तः । पुं । तान्त्रिके । शास्त्रतत्त्वज्ञे । तत्त्वार्थज्ञातरि ॥ ज्ञाताः सिद्धान्ता येन ॥ आगमभाषया सर्वसिद्धान्तोपरि विराजमाने कौले ॥ यथा । सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् । वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥ दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् । सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हीति ॥

ज्ञातिः । पुं । ताते । पितरि ॥ पितृभ्रात्रादिपितृपक्षे । सगोत्रे । सपिण्डसहोदरादौ । स्वजने ॥ स चतुर्विधः । सप्तमपुरुषपर्य्यन्तं सपिण्डः । ततस्त्रिपुरुषपर्यन्तं सकुल्यः । ततश्चतुर्थपुरुषपर्यन्तं समानोदकः । जन्मनामस्मृतिपर्य्यन्तमपि समानोदकः । ततःपरं गोत्रजः ॥ ज्ञातिद्रोहे दोषो यथा । यानि कानिच पापानि ब्रह्महत्यादिकानि च । ज्ञातिद्रोहस्य पापस्य कलां नार्हन्ति षोडशीम् ॥ जानाति । ज्ञा० । क्तिच् ॥ ज्ञायते वा । क्तिन् ॥

ज्ञाता । त्रि । ज्ञानशीले । विदुरे । ज्ञानिनि ॥ ज्ञानाश्रये । अहङ्कारादिप्रकाशकत्वेन चेतने ॥ जानाति । ज्ञा० । तृन् ॥ इन्द्रियद्वारा विषयज्ञानवति ॥

ज्ञातेयम् । नं । ज्ञातित्वे ॥ ज्ञातेर्भावः कर्म वा । कपिज्ञात्योर्ढक् ॥

ज्ञानः । पुं । बोधे ॥ ज्ञश्चासावनश्च । *विषयान् जानाति मा ज्ञासि चेत्यर्थः* ॥

ज्ञानम् । नं । विशेषेण सामान्येन वार्थबोधे ॥ पदार्थग्राहिकायां बुद्धौ ॥ यथा । ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु संज्ञादिद्योतकत्वादनेकधा ॥ संशयसंभ्रमभ्रान्तिस्मृतिसादृश्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथान्येऽनुभवा अपि ॥ इत्यादिभेदेनानेकविधा भवन्तीत्यर्थः ॥ सम्यगवबोधे ॥ न्यायमते । अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते । तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ॥ तत्प्र

पञ्चौ विपर्यासः संशयोऽपि प्रकीर्त्तितः । आद्यो देहात्मबुद्धिः शङ्खादौ पीततामतिः ॥ अनेकनिश्चयरूपासा संशयोऽथ प्रदर्श्यते । किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ॥ तदभावाऽप्रकारा धीस्तत् प्रकारानुभवः ॥ ससंशयो भवेद्धीरेकत्राभावभावयोः । साधारण्यादिधर्मस्य ज्ञानं संशयकारणम् ॥ दोषोऽप्रमाजनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधो मतः ॥ गुणः स्याद्भ्रमभिन्नस्तु ज्ञानमित्युच्यते प्रमा । अथवा तत्प्रकारं यज्ज्ञानं तद्धि विशेष्यकम् ॥ ज्ञानं निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । न प्रमा नाऽप्रमा नापि ज्ञानं यन्निर्विकल्पकम् ॥ प्रकारतादिशून्यं हि सम्बन्धानवगाहनात् ॥ इति भाषापरिच्छेदः ॥ * ॥ योगे तु । एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः । आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम् ॥ इति मोक्षधर्मः ॥ एकत्वं बुद्धिमावेशाभ्यसनम् बुद्धिवृत्तिनिरोध इति यावत् ॥ देवताध्यानादौ ॥ विवेकविज्ञाने । शास्त्राचार्योपदेशजे परमात्मविषये साक्षान्मोक्षफले आत्मनिश्चये ॥ तत्त्वज्ञाने ॥ शास्त्रे ॥



मोक्षफलिकायां धियि ॥ श्रीवेश्वरजगद्देवसमाधिष्ठानभूते निरस्तप्रकाशे सच्चिदानन्दरूपाद्वितीये परमार्थसत्ये ॥ आत्मानात्मसर्वपदार्थावबोधे ॥ विवेकसामर्थ्ये ॥ अहङ्कारोपासने ॥ शब्दयुक्तिभ्यामात्मनिश्चये ॥ अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ सात्त्विकादिभेदात् तत् त्रिविधम् । यथा । सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ सात्त्विकं सर्वसंसारोच्छित्तिकारणम् ॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ यत्तु कृत्स्नवदेकस्मिन् कार्ये स-

स्तोभिचौ ॥ ज्ञानदग्धशरीरस्य पुन र्दाहो नास्ति यश्शौनकः । सर्वस ङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रि या ॥ निदध्यात् प्रणवेनैव बिले भि क्षोः कलेवरम् । प्रोक्षणं खननञ्चा पि सर्वं तेनैव कारयेत् ॥

ज्ञानदर्पणः । पुं । पूर्वजिने । मञ्जुघोषे ॥

ज्ञानदा । स्त्री । शारदायाम् ॥ ज्ञानं ददाति । दुदाञ् । आतश्चोपसर्गे इति कः ॥ त्रि । ज्ञानप्रदातरि ॥

ज्ञानदाता । पुं । तत्त्वोपदेष्टरि श्रीगुरौ ॥ पितुर्दशगुणा माता गौरवेणेति निश्चितम् । मातुः शतगुणः पूज्यो ज्ञानदाता गुरुः प्रभो ॥ ज्ञानस्य दाता ॥

ज्ञानदीपः । पुं । दीपसदृशे ज्ञाने ॥ स्वप्रकाशचैतन्यात्मकाद्वितीयस्वरूप आत्मा स एव स्वविषयान्तःकरणपरि णामरूपो दीप उच्यते ॥ ज्ञानं दी पश्च ॥

ज्ञानदीपितः । त्रि । ज्ञानेन प्रकाशिते ॥ यावनूर्धकसमाधौ ॥ ज्ञानं वेदान्तवा क्यजन्यो ब्रह्मात्मैक्यसाक्षात्कारः तेन अविद्यातत्कार्यनाशद्वारा दीपितः प्र त्यगात्मोद्भासित ॥

ज्ञाननिर्धूतकल्मषः । त्रि । अवधूते । प रमहंसे ॥ ज्ञानेन निर्धूतं समुन्मू लितं पुनर्देहसम्बन्धकारणं कल्मषं पुण्यपापात्मकं कर्म यस्य ॥

ज्ञाननिष्ठः । त्रि । ज्ञानिनि ॥ ज्ञाने नि ष्ठाऽस्य ॥

ज्ञानप्लवः । पुं । ज्ञानपोते ॥

ज्ञानमयः । पुं । शिवे ॥ त्रि । अखण्ड ब्रह्माकारे प्रकाशस्वरूपे ॥ ज्ञानं तत्तत्समस्तपदार्थावबोधस्तदा त्मकः ॥

ज्ञानयज्ञः । पुं । न्यायेन वेदार्थनिश्चय परे ॥ ब्रह्मार्पणपरे यज्ञं यज्ञेनैवो पजुह्वति । ब्रह्माग्नौ सत्यज्ञानान न्तानन्दरूपं निरस्तसमस्तविशेषं ब्र ह्म तत्पदार्थः तस्मिन्नग्नौ यज्ञं प्र त्यगात्मानं त्वं पदार्थम् यज्ञेनैव य ज्ञशब्दः आत्मनामसु यास्कपठितः इत्थम्भूतलक्षणे तृतीया एवकारो भे दाभेदव्यावृत्त्यर्थः त्वं पदार्थाभेदेनै वोपजुह्वति तत्स्वरूपतया पश्यन्ती त्यर्थः । अपरे पूर्वस्मात् कर्मयोगि नो विलक्षणास्तत्त्वदर्शननिष्ठाः सन्या सिनइत्यर्थः ॥ * ॥ महापापवतां नृणां ज्ञानयज्ञो न रोचते । प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः ॥ भोगसारस्वविभ्रान्त्या ज्ञाने भोगौ घघातिनि । प्रद्वेषो ॥ गुरुचित्तस्य

। महापापवनोभवेत् ॥

ज्ञानयोगः । पुं । निष्ठाविशेषे । ज्ञानमेव ब्रह्मणा युज्यते इति ज्ञानयोगः निष्ठायाम् ॥ ब्रह्मज्ञानप्राप्त्युपाये ॥

ज्ञानयोगव्यवस्थितिः । स्त्री । जीवन्मुक्तौ ॥ आत्मसाक्षात्कारमनोनाशवासनाक्षयात्मकत्रयप्रयत्नार्थाविच्छिन्नसंसारविलयावस्थितिः ॥

ज्ञानलक्षणा । स्त्री । विविधालौकिकसन्निकर्षान्तर्गतसन्निकर्षे ॥ तल्लक्षणं यथा । विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणइति । अस्यार्थः । तद्विषयकज्ञानकतद्विषयज्ञानम् । यथा पूर्वं घटादिज्ञाने सति पश्चात् घटादिज्ञानम् ॥

ज्ञानवान् । त्रि । ज्ञानिनि । तत्त्वविदि । ज्ञानमस्यास्ति । मतुप् ॥

ज्ञानवापी । स्त्री । काश्यन्तर्गततीर्थविशेषे । ज्ञानोदतीर्थे ॥

ज्ञानसाधनम् । न । इन्द्रिये ॥

ज्ञानसिद्धिः । स्त्री । ब्रह्मात्मैक्यबोधे ॥

ज्ञानस्कन्धः । पुं । निर्विकल्पके ।

ज्ञानस्वरूपः । पुं । जीवे ॥ प्रज्ञासावनश्च । विषयान् जानाति प्राणितिच । तादृशस्वरूपोजीवः ॥

ज्ञानाग्निदग्धकर्मा । त्रि । पण्डिते ॥ कर्मादावकर्मादिदर्शनं ज्ञानं तदेवा

ग्नि स्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य सः ॥

ज्ञानापोहः । पुं । विस्मरणे ॥

ज्ञानाभ्यासः । पुं । श्रवणादावृत्तौ ॥ तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधाः ॥ सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत् सदा । इदं जगदहञ्चेति बोधाभ्यासं विदुः परम् ॥

ज्ञानावस्थितचेताः । पुं । स्थितप्रज्ञे ॥ निर्विकल्पकब्रह्मात्मैक्यबोधएवावस्थितं चेतो यस्य सः ॥

ज्ञानाग्निः । पुं । आत्मविषयकनिश्चये ॥

ज्ञानी । त्रि । पदवाक्यन्यायादिमानविपुणे । तत्त्वदर्शिनि । कृतसाक्षात्कारे ॥ परोक्षज्ञानवति ॥ स्वतोऽपरोक्षं ज्ञानं सत्सम्पादनादिप्रतिबन्धेन कवलमनयत् परोक्षनिश्चयपर्यवसते ॥ भगवत्तत्त्वसाक्षात्कारो ज्ञानं तेन नित्ययुक्ते ॥ तीर्थमाये । निवृत्तसर्वकामे । निष्कामभक्ते । तत्त्वज्ञानवति ॥ ज्ञानिनो हृदयाम्भोजे ह्यन्तेवा परमेश्वरीति देवीगीता ॥ पुं । दैवज्ञे ॥ ज्ञानमस्यास्ति । अतइनिठनाविति इनिः ॥

ज्ञानेन्द्रियम् । न । धीन्द्रिये । श्रोत्र

त्वक्चक्षुर्जिह्वाघ्राणश्रोत्राणि ॥ एता
न्याकाशादीनां सात्त्विकांशेभ्यो व्य
स्तेभ्यः पृथक् पृथक् क्रमेणोत्पन्नानि ॥
यथोक्तं देवीभागवते । पञ्चभूतस्य स
त्त्वांशैः श्रोत्रादीनां समुद्भवः । ज्ञाने
न्द्रियाणां राजेन्द्र प्रत्येकमिति ॥ ज्ञा
नसाधनमिन्द्रियम् ज्ञानार्थमिन्द्रियं
वा ॥ क्रमशो दिग्वातार्कप्रचेतोऽश्वि
नो ज्ञानेन्द्रियाणां देवताः ॥ शब्दस्प
र्शरूपरसगन्धाश्च क्रमशो ज्ञानेन्द्रि
याणां विषयाः ॥

ज्ञापकम् ॥ त्रि । गमके । बोधके ॥ नि
दर्शने ॥ ज्ञापयति । ज्ञा० ण्वुल् ॥

ज्ञापनम् । न । बोधने । जनावना इति
भाषा ॥

ज्ञापिका । स्त्री । बोधिकायाम् ॥

ज्ञापितः । त्रि । ज्ञप्ते ॥ सूचिते ॥
प्रबोधिते ॥

ज्ञीप्समानः । त्रि । बोधयितुमिष्टे ॥

ज्ञेयम् । त्रि । वेदितव्ये । ज्ञानविषये
। ज्ञा कर्मणि यत् ॥ अघातित्वात् ज्ञातु
मर्हे ब्रह्मणि ॥ जडत्वाज्ज्ञातत्वाभावेन
ज्ञातुमनर्हत्वात् ॥ ज्ञेयं यत्तत्
प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते
। अनादिमत् परं ब्रह्म न सत्तन्ना
सदुच्यते ॥ सर्वतः पाणिपादं तत्
सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रु
तिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविव
र्जितम् । असक्तं सर्वभृच्चैव निर्गु
णं गुणभोक्तृ च ॥ बहिरन्तश्च भूता
नामचरं चरमेव च । सूक्ष्मत्वात्
तदविज्ञेयं दूरस्थं चान्तिके च तत्
॥ अविभक्तं विभक्तेषु विभक्तमिव
च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्र
सिष्णु प्रभविष्णु च ॥ ज्योतिषामपि
तज्ज्योतिस्तमसः परमुच्यते । ज्ञा
नं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धि
ष्ठितम् ॥ ज्ञातुं योग्यम् । ज्ञा० ॥ अ
चोयत् । ईयति । गुणः ॥

ज्या । स्त्री । मातरि ॥ वसुधायाम् ॥
मौर्व्याम् । धनुर्गुणे ॥ जिनाति । ज्या
वयोहानौ । अघ्न्यादित्वात् यग
न्तो निपातितः ॥ अन्येभ्योऽपीति डो
था ॥ टाप् ॥

ज्याघातवारणम् । न । गोधायाम् । त
ले ॥ ज्यायाः शिञ्जिन्या गुणस्य आ
घात संवारणम् ॥

ज्यानिः । स्त्री । जीर्णौ ॥ हानौ । तटि
न्याम् ॥ ज्यानम् । ज्या० । ग्लाज्याहा
भ्यो निः ॥ यद्वा । जिनाति । ज्या० ।
वीज्याज्वरिभ्यो निः ॥

ज्यायान् ॥ त्रि । अतिवृद्धे । वर्षीयसि
॥ अतिप्रशस्ते ॥ अयमनयोरतिश

येन वृद्धः प्रशस्यो वा । ज्यच वृद्धस्य च । द्विवचनेतीयसुनि वृद्धप्रशस्ययोर्ज्यादेशः । ज्यादादीयसः इत्याकारः ॥

ज्यायसी । स्त्री । अतिप्रशस्तायाम् ॥ वृद्धायाम् ॥ ज्येष्ठायाम् ॥ ङीप् ॥

ज्येष्ठः । पुं । मुके ॥ चौपर्णाः प्रथमेनास्ति ॥ ज्येष्ठी पूर्णमासे ऽस्मिन् । ...स्मिन्, पौर्णमासीत्यण् । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः ॥ त्रि । अतिवृद्धे ॥ ज्येष्ठे ॥ अयमेषामतिशयेन वृद्धः प्रशस्यो वा । अतिशायने तमबिष्ठनाविति इष्ठनि वृद्धस्य च । ज्येनेन च वृद्धप्रशस्ययोर्ज्यादेशः ॥ अग्रजे ॥

ज्येष्ठतातः । पुं । पितुरग्रजे ॥ तातस्य ज्येष्ठः । राज० ज्येष्ठस्य पूर्वनिपातः ॥

ज्येष्ठवर्णः । पुं । ब्राह्मणे ॥ वर्णानां ज्येष्ठः । राज० ॥ कर्मधारयो वा ॥ त्रि । श्रेष्ठवर्णे ॥

ज्येष्ठबला । स्त्री । सहदेव्याम् ॥

ज्येष्ठश्वश्रूः । स्त्री । कुल्याम् । पत्न्या ज्येष्ठभगिन्याम् ॥ वडीसाली इति जेठसास इतिच भाषा ॥

ज्येष्ठसामगः । पुं । ज्येष्ठसाम्नां गातरि ॥ तानि च आरण्यके गीयन्ते ॥

ज्येष्ठसाम । न । सामप्रभेदे । आरण्यके गीयमाने सामनि ॥ तदध्ययना



कृतो ॥

ज्येष्ठस्थानम् । न । तीर्थविशेषे ॥ अत्र महादेवस्तिष्ठति ॥

ज्येष्ठा । स्त्री । अश्विन्यादिष्वष्टादशे नक्षत्रे ॥ सत्तारिंतपुष्पैर्विविधैः सुमेतो विसाम्बितो ऽस्यंतचसत्प्रतापः । ज्येष्ठप्रतिष्ठो विकचत्स्वभावो ज्येष्ठा भवेद्यस्य च जन्मकाले ॥ गृहगोधायाम् ॥ मध्यमाङ्गुल्याम् ॥ गङ्गायाम् ॥ अलक्ष्म्याम् ॥ नायिकाभेदे । परिणीतत्वे सति भर्तुरधिकस्नेहायाम् ॥ प्रथमजायायाम् ॥ ज्येष्ठस्त्रियाम् ॥ ज्येष्ठस्त्री । पुंयोगलक्षणं ङीषं बाधित्वा अजादित्वाट्टाप् ॥

ज्येष्ठामूलीयः । पुं । ज्येष्ठे ॥ ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वकम् ॥

ज्येष्ठाम्बु । न । तण्डुलाम्बुनि । मण्डे ॥

ज्येष्ठाश्रमः । पुं । गृहिणि ॥ यस्मात्त्रयोप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् । गृहस्थेनैव धार्यन्ते तस्मात् ज्येष्ठाश्रमो गृही ॥ ज्येष्ठ आश्रमोऽस्य । कर्मधारयो वा ॥

ज्येष्ठाश्रमी । पुं । गृहस्थे । गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः । चत्वार आश्रमाः प्रोक्ताः, सर्वे गार्हस्थ्यमूलकाः ॥ ज्येष्ठस्य, सा वाश्रमीच ॥

ज्योत्स्निका । स्त्री । चन्द्रिकायुक्तायां रात्रौ ॥ पटोल्याम् ॥

ज्योत्स्नी । स्त्री । ज्योत्स्नया युक्तायां रात्रौ ॥ ज्योत्स्न्याम् ॥ अण्णन्तत्वान्ङीप् ॥

ज्वरः । पुं । स्वनामख्याते प्रसिद्धे रोगे ॥ रोगश्रेष्ठ ॥ सन्तापे ॥ तस्योत्पत्तिः संख्या चोक्ता भिषग्भिः । दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः । ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ तथाहि । वातिकः पैत्तिकश्चैव कफजो वातपित्तजः । वातश्लेष्मभवश्चैव पित्तश्लेष्मोद्भवस्तथा ॥ संघातागन्तुजो चेयं ज्वरोऽष्टविध उच्यते इति ॥ अपिच । जनकः सर्वरोगाणां दुर्वारो दारुणो ज्वरः । शिवभक्तश्च योगी च सएव विकृताकृतिः ॥ भीमस्त्रिपाद्त्रिशिराः षड्भुजो नवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ मन्दाग्निस्तस्य जनको मान्द्येर्नकाश्रयः । पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥ इत्यादि वैद्यशास्त्रे विशेषोऽवगन्तव्यः ॥ ज्वरणम् । ज्वररोगे । घञ् । संज्ञापूर्वकत्वात् वृद्ध्यभावः ॥ ज्वरति । कन् वा ॥ सन्तापहेतुत्वात् ज्वरो के ॥ ज्वरमुक्तस्य लक्षणं यथा । स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च । देवस्थाने विषये च ज्वरमुक्तस्य लक्षणम् ॥

ज्वरघ्नः । पुं । गुडूच्याम् ॥ वास्तुके ॥ त्रि । ज्वरनाशके ॥

ज्वरघ्नी । स्त्री ।

ज्वरहन्त्री । स्त्री । मञ्जिष्ठायाम् ॥

ज्वराग्निः । पुं । आधिर्मन्यवे । ज्वररूपोष्मणि ॥

ज्वराघ्नी । स्त्री । भद्रदन्तिकायाम् ॥

ज्वरान्तकः । पुं । नेपालनिम्बे ॥ आरग्वधे ॥ औषधविशेषे ॥ त्रि । ज्वरनाशके ॥

ज्वरापहा । स्त्री । बिल्वपुष्प्याम् । बिल्वपत्र्याम् ॥ त्रि । ज्वरनाशके ॥

ज्वरारिः । पुं । ज्वरौषधविशेषे ॥

ज्वरितः । त्रि । ज्वरी ॥ ज्वरः सञ्जातोऽस्य । तारकादित्वादितच् ॥

ज्वरी । त्रि । ज्वरयुक्ते ॥ गुर्वभिष्यन्दि कालेवा ज्वरी नाद्यात् कथञ्चन ॥

ज्वलः । पुं । ज्वाले । दीप्तौ ॥ त्रि । दीप्तिविशिष्टे ॥ ज्वलति । ज्वल दीप्तौ । अच् ॥

ज्वलका । स्त्री । अग्निशिखायाम् ॥ इति हेमचन्द्रः ॥

ज्वलत् । त्रि । दीप्तिमति ॥

ज्वलनः । पुं । अग्नौ ॥ चित्रकवृक्षे ॥ त्रि । दहने ॥ ज्वलति । ज्वल णे जुष

ङकान्यदन्त्यस्वरादिज्वलिशुचवर्षप-
सपदः इति ताच्छील्यादिषु युच् ॥
ज्वलनाश्मा । पुं । सूर्यकान्तमणौ ॥
ज्वलितः । त्रि । दग्धे ॥ उज्ज्वले ॥ भा-
स्वरे ॥ उज्ज्वलिते । ज्वल० । क्तः ॥
ज्वलिनी । स्त्री । मूर्वालतायाम् ॥
ज्वालः । पुं । अग्निशिखायाम् ॥ त्रि ।
दीप्तिविशिष्टे ॥ ज्वलति । ज्वल० ।
ज्वलितकसन्तेभ्यो णः ॥
ज्वाला । स्त्री । अग्निशिखायाम् । टाप् ॥
ज्वालागर्दभकः । पुं । जालगर्दभरोगे ॥
ज्वालाजिह्वः । पुं । अग्नौ ॥
ज्वालामरिचम् । न । रक्तमरिचे । मि-
रची लालमरिच इत्यादि भाषा ॥
ज्वालामुखी । स्त्री । जालन्धरपीठान्त-
र्गतपीठस्थानविशेषे ॥ तत्र भगवत्या
जिह्वा पतिता । तत्राम्बिकादेवी ।
उन्मत्तनामको भैरवश्च ॥ तथाहि ।
ज्वालामुख्यां महाजिह्वा देव उन्म-
त्तभैरवः । अम्बिका सिद्धिदानाम्नी
स्तनं जालन्धरे ममेति तन्त्रचूडाम-
णिः ॥ देशान्तरे ॥ ज्वालामुखं यस्याः ॥
ज्वालिका । स्त्री । ज्वालायाम् । झाल
इति भाषा ॥



झः । पुं । झणीभे ॥ सुरगुरौ ॥ दै-
त्यराजे ॥ ध्वनौ ॥ झञ्झावाते ।
झंखड इति ख्याते प्रचण्डानिले ॥
वृष्टौ ॥ त्रि । नष्टवस्तुनि ॥
झगझगायमानः । त्रि । चाकचिक्य-
युक्ते ॥
झगिति । अ । शैघ्ये ॥
झङ्कारः । पुं । भ्रमरादिसमूहशब्दे ॥
झङ्कृतिः । पुं । कांस्यतालादिध्वनौ ॥
झञ्झा । स्त्री । वाते ॥ तारवारौ ॥
मेघे ॥ ध्वनिविशेषे ॥ अम्बुकणवर्षण ॥
झञ्झानिलः । पुं । सवृष्टिकवायौ ॥
झञ्झावातः । पुं । झञ्झानिले ॥
झटा । स्त्री । भूम्यामलक्याम् ॥ वित्तु-
न्नकौषधौ ॥ झटयति । झट सङ्घाते ।
घञ् । संज्ञापूर्वकत्वान्न वृद्धिः ॥
झटिः । पुं । क्षुद्रवृक्षे ॥ झट० । इन् ॥
झटिति । अ । शीघ्रार्थे ॥ तदर्थार्थे
॥ झट० । सम्पदादित्वात् क्विप् । झट
मेति । इण्० । क्तिच् ॥
झणत्कारः । पुं । } कङ्कणादिध्वने र-
झनत्कारः । पुं । } नुकरणशब्दे ॥
झम्पः । पुं । सम्पातपतने । लम्फे ॥ स्वे-
च्छाधीनपतने ॥
झम्पारुः । पुं । वानरे ॥
झम्पाशी । पुं । मत्स्यरङ्कविहङ्गमे ॥
झम्पी । पुं । वानरे ॥

झरः । पुं । निर्झरे ॥ उत्सादिर्गतेति गि रिवारि प्रवाहे ॥ जरणम् । कृष्य योषनो । कन्दोरण ॥

झरा । स्त्री । झरे निर्झरे ॥ श्विस्वा दूर्वा ॥

झरिः । स्त्री । झरे ॥ जरणम् । कृष्० अचरः ॥

झरी । स्त्री । गिरिवारिप्रवाहे ॥ कृ दिकारादिति ङीष् ॥

झर्झरः । पुं । कलियुगे ॥ वाद्यभाण्ड विशेषे । वडीजॉज इतिभाषा ॥ गौ वास्तु चर्मपुटाच्छादितकाष्ठस्थाने इति करड इतिख्यातेच । डिण्डि मोथ झर्झरी प्रोक्तो झर्झरः पटहः स्मृ तः । इति तत्पर्यायाः । झल्लकी झ ल्ली झल्लरी झर्झरी इतिशब्दरत्नाव लीस्थाहुः ॥

नेपालभाषया झ्यालीति प्रसिद्धे कां स्यवाद्ये ॥ मद्यविशेषे ॥ झझरः इ ति प्रसिद्धे जलपात्र विशेषे ॥ जरया जर्ज इतिच ख्याते पाकसाधने लो हद्रव्ये ॥ झर्झ इति शब्दंराति । आ तोनुपेतिकः ॥ यद्वा । झर्झति । झर्झ परिभाषणभर्त्सनयोः । बाहुलका दरः ॥

झर्झरकः । पुं । कलियुगे ॥ अल्पार्थ बोधकेषु झर्झरशब्दार्थेषु ॥ कः ॥

झर्झरा । स्त्री । वेश्यायाम् ॥

झर्झरिका । स्त्री । रोटिकाविशेषे ॥ यथा । घूमसीरचिता रोटी प्रोक्ता झर्झरिकाबुधैः । झर्झरी कफपित्तघ्नी किंचिद्वातकरी स्मृतेति ॥

झर्झरी । स्त्री । झर्झरवाद्ये ॥ झझरी इ ति ख्याते स्वल्पेशारिपात्रे ॥ घूमसी रोटिकायाम् ॥

झर्झरीकः । पुं । नं । शरीरे ॥ झर्झति । झर्झ परिभाषणभर्त्सनयोः । पर्फरी कादित्वात् साधुः ॥

झलज्झला । स्त्री । हस्तिकर्णास्फालने ॥

झल्लरी । स्त्री । हुडुक्के । झर्झरवाद्ये ॥ बालकुन्तले । केशचक्रे ॥

झला । स्त्री । आतपस्रोतसि । कन्यायाम् ॥

झल्लः । पुं । वात्यात् क्षत्रियात् सवर्णा यामुत्पन्नेवर्णसङ्करजातिविशेषे ॥ क रखे ॥ मल्ले ॥ भाँड इति प्रख्याते मद्यासके ॥

झल्लकम् । न । कांस्यनिष्पन्ने करता ले ॥ यथा । शिवागारे झल्लकञ्च सू र्यागारेच शङ्खकम् । दुर्गागारे वंशि वाद्यं मधुरीञ्च न वादयेत् ॥

झल्लकण्ठः । पुं । कपोते ॥

झल्लरी । स्त्री । हुडुक्कवाद्ये ॥ वक्के शेषु ॥ झर्झते । झर्झ । बाहुलकाद रन् । पृषोदरादिः । गौरादित्वात्

डाम्॥ शुद्रे॥ क्षोदे॥

झल्लिका। स्त्री। उद्वर्त्तनमले। झिल्ली इति भाषा॥ द्योते॥ दीप्तौ। आतपरुचौ॥

झल्ली। स्त्री। झर्झरवाद्ये॥

झल्लोलः। पुं। तर्कुलासके। चरखा इति भाषा॥

झषः। पुं। मत्स्ये। मीने॥ मीनराशौ॥ तापे॥ अटव्याम्॥ न। खिले॥ झषति। झष हिंसार्थे। पचाद्यच्॥ यद्वा। झष्यते। खनो घ चेति घः॥

झषकेतनः। पुं। } झषकेतुः। पुं। } कामदेवे। मदने॥ झषो मकरः केतनञ्च केतुर्वा यस्य॥

झषा। स्त्री। नागबलायाम्॥ टाप्॥

झषाङ्कः। पुं। अनिरुद्धे। कन्दर्पे॥

झषाशन। पुं। शिशुमारे॥ त्रि। मत्स्यादे॥

झषोदरी। स्त्री। व्यासमातरि॥

झाङ्कृतम्। न। चरणालङ्कारविशेषे॥

झाटः। पुं। निकुञ्जे॥ कान्तारे॥ व्रणादीनामार्जने॥ न। सङ्घाते॥ झटनम्। झट०। घञ्॥

झाटलः। पुं। घण्टापाटलौ। लोध्रविशेषे॥ झाटं सङ्घातं लाति। ला०। आतोनुमेतिकः॥

झाटलिः। पुं। स्त्री। जाटलिरचे॥

झाटा। स्त्री। भूम्यामलक्याम्॥ यूथी रुचे॥ झाट्यते। झटसङ्घाते। घञ्॥

झाटामला। स्त्री। } झाटिका। स्त्री। } झाटी। स्त्री। } भूम्यामलक्याम्॥

झामकम्। न। दग्धेष्टकाविशेषे। झामा इति झांवां इति च भाषा॥

झामरः। पुं। तर्कुशाणे। तकुवेकीसान इतिभाषा॥

झार्झरः। त्रि। झार्झरिके। झर्झरवाद्यकर्त्तरि॥ झर्झरवादनं शिल्पं यस्य। मड्डुकझर्झरादन्यतरस्यामित्यण्॥

झार्झरिकः। त्रि। झार्झरे॥ झर्झरवादनं शिल्पं यस्य। पचेठक्॥

झालिः। स्त्री। पानकविशेषे॥ यथा। आमकाम्रफलं पिष्टं राजिकालवणान्वितम्। भृष्टहिङ्गुयुतं पूतं घोलितं झालिरुच्यते॥ झालि सैरतिजिह्वायाः कारत्वं कण्ठशोधिनी। मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी॥

झावुः। पुं। झाउ इतिख्याते पिचुलवृक्षे॥ झामितिशब्दं वेति गच्छति। वी गत्यादिषु। मित०डुः॥

झावुकः। पुं। पिचुले। झाउ इतिभाषा॥ संज्ञायांकन्॥

झिङ्गाकम् । न । फलविशेषे ॥

झिङ्गिनी । स्त्री । उल्कायाम् ॥ जिङ्गिनीवृक्षे ॥

झिङ्गी । स्त्री । जिङ्गिनीवृक्षे ॥

झिञ्झिमः । पुं । दावाग्नौ ॥

झिञ्झिरिष्टा । स्त्री । झिञ्झरी इति गौडप्रसिद्धक्षुपविशेषे । पीतपुष्पायाम् । रोमाञ्चयफलायाम् ॥

झिञ्झी । स्त्री । झिल्याम् ॥ यथा । "झिञ्झारावाऽव्यक्तमधुरा कूजन्तीमधुराकृतिरित्यागमः ॥"

झिण्टिका । स्त्री । झिण्ट्याम् ॥ कन् ॥

झिण्टी । स्त्री । सैरीयके ॥ झिमिति रटति । रट० । अच् । पृषोदरादिः । गौरादित्वान्ङीष् ॥ अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । दन्तामयशूलवातकफशोफकासत्वग्दोषनाशित्वञ्चेति राजनिर्घण्टः ॥ कुन्दरवृक्षे ॥

झिरिका । स्त्री । झिरी । स्त्री । झिरीका । स्त्री । } झिल्याम् । झींगुर इति च भाषा ॥

झिल्लि । स्त्री । वाद्यविशेषे ॥ यथा । "घण्टा शङ्खस्तथा भेरीमृदङ्गो झिल्लिरेव च । एषानां शस्ते वाद्यं देवराधनेषु चेति गूढार्थदीपिका ॥"

झिल्लिका । स्त्री । झिल्लीकायाम् । चीर्याम् ॥ उद्वर्त्तनांशुके ॥ आतपस्य च ॥ विलेपनस्य मले ॥ स्वार्थे कन् ॥

झिल्ली । स्त्री । कीटविशेषे । झींगर इति भाषाप्रसिद्धे । झिरिकायाम् । चीर्याम् ॥ आतपरुचि ॥ वर्त्याम् ॥ उद्वर्त्तनांशुके ॥ स्थालीलग्नदग्धान्ने ॥ चिल्लति । चिल्ल शैथिल्ये । अच् । पृषोदरादित्वात् साधुः । गौरादित्वात् ङीष् ॥

झिल्लीकण्ठः । पुं । गृहकपोते ॥

झिल्लीका । स्त्री । झिल्लिकार्थेषु ॥

झीरुका । स्त्री । झिल्याम् । झींगुर इति भाषा । झीति रौति । रु शब्दे । बाहुलकात् कक् ॥

झुण्टः । पुं । अप्रकाण्डद्रुमे । स्तम्बे । गुल्मे । झुण्ड इति भाषा ॥

झुमरि । स्त्री । रागिणीविशेषे ॥ यथा । "प्राय शृङ्गारबहुला माध्वीकमधुरा मृदुः । एकैव झुमरिर्लोके वर्णादिनियमोज्झिता ॥ अतो रागण मेतस्या नोदाहारि विशेषकम् । इदन्तु ग्राम्यगीतं प्रसिद्धं त्वपरञ्जनम् ॥" इति सङ्गीतदामोदरः ॥

झूषिः । स्त्री । क्रमुकभेदे ॥ दुष्टदेवस्रुतौ ॥

झोडः । पुं । गुवाकवृक्षे ॥ इति भूरिप्रयोगः ॥

ञः । पुं । ञकारे ॥ बलीवर्द्दे ॥ शुक्रे ॥ वाममतौ ॥ गायने ॥ घर्घरध्वनौ ॥ *॥*॥ इत्यादिगौडकुलोत्पन्नोडी चवाघमधानोपनामसुखारामसिंश्रात्मजश्रीधर्मपतिमिश्रापरनाम्ना स्वयाश्रीसद्गुरुकृपावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण व्राह्मावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ चवर्गः समाप्तिमगात् ॥ १ ॥

तम् सत्

---

## टः

टः । पुं । टकारे ॥ वामने ॥ पादे ॥ निस्वने ॥ न । करङ्के ॥ टङ्कारे ॥ टगणे ॥

टक्कदेशीयः । पुं । वास्तूकशाके ॥ इति त्रिकाण्डशेषः ॥

टक्कनामानः । पुभूम्नि । देशविशेषे । वाहीकेषु ॥ वाहीकाष्टक्कनामानः



इति हेमचन्द्रः ॥

टगणः । पुं । त्रयोदशभेदभिन्नेषु मात्रिके । यथा । (ऽऽऽ शिवः १) (।।ऽऽ शशि. २) (।ऽ।ऽ दिनपतिः ३) (ऽ।।ऽ सुरपति. ४) (।।।ऽ शेषः ५) (।ऽऽ। अहि. ६) (ऽ।ऽ। सरोजम् ७) (।।ऽ। धाता ८) (ऽऽ।। कलिः ९) (।।ऽ।। चन्द्रः १०) (।ऽ।।। ध्रुवः ११) (ऽ।।।। धर्मः १२) (।।।।। शालिकर. १३) इति षण्मात्रे त्रयोदशभेदाः ॥

टगर । पुं । टङ्कणक्षारे ॥ हेलाविभ्रमगोचरे ॥ त्रि । केकराक्षे ॥

टङ्क । पुं । कोपे ॥ असिकोशे ॥ खड्गे ॥ शावदारणे । टाँकी इति भाषा ॥ चतुर्माषकस्वरूपमाने । चतुर्थिंशतिरक्तिकारूपे वा ॥ दर्पे ॥ परश्वे ॥ रानाशे ॥ पुं न । नीलकपित्थे ॥ खनित्रे ॥ टङ्कने ॥ टङ्कयति । टकि बन्धे । चुरादिः । अच् ॥ टम् इति शब्दं कायति वा । कै० । आतो ऽनुपेतिकः सुपीति वा ॥

टङ्ककः । पुं । रजतमुद्रायाम् । रूपा इति भाषा इत्यमरटीका सारसुन्दरी ॥

टङ्ककपतिः । पुं । रूप्याध्यक्षे ॥

टङ्कशाला । स्त्री । रजतमुद्रागृहे । टकशाल इति भाषा ॥ इत्यमरटीका सारसुन्दरी ॥

टङ्कटीकः । पुं । शिवे ॥ इति त्रिकाण्डशेषः ॥

टङ्कणः । पुं । न । रसशोधने । मालतीतीरजे । लोहद्राविणि । सुहागा इति प्रसिद्धे क्षारे ॥ टङ्कणं वह्निकृद्रूक्षं कफघ्नं वातपित्तकृत् ॥ टङ्कयते ल्युट् । पृषोदरादिः ॥

टङ्कनम् । न । टङ्कणे ॥

टङ्का । स्त्री । जङ्घायाम् । टाँग इति भाषा इति मेदिनी ॥

टङ्कानकः । पुं । [illegible] ॥

टङ्कारः । पुं । विस्मये ॥ प्रसिद्धौ ॥ शिञ्जिनीध्वनौ ॥ टमिति शब्दं करोति । कृ । अण् ॥

टङ्कारी । स्त्री । टेंकारी इति गौड प्रसिद्धे क्षुपविशेषे ॥ टङ्कारी वातजित् तिक्ता श्लेष्मघ्नी दीपनी लघुः । शोथोदरव्यथाध्मानी हिता प्लीहविसर्पिणाम् ॥

टङ्कः । पुं । न । खनित्रे ॥ खड्ग विशेषे । असौ ॥ जङ्घायाम् । टाँग इति भाषा ॥

टङ्गणः । पुं । न । } टङ्कणे ॥ इति राजवल्लभः ॥
टङ्गनः । पुं । न । }

टङ्गिनी । स्त्री । पाठायाम् । अम्बष्ठायाम् । आकनादी इति गौडभाषा ॥

टट्टनी । स्त्री । ज्येष्ठ्याम् । छिपकली इति हिन्दुस्थानी इति च भाषा ॥



टट्टरी । स्त्री । अनृतभाषणे । यथा वादे । टरटर इति भाषा ॥ लम्पावादे ॥ पटहवाद्ये ॥

टट्टरः । पुं । भेरीरवे ॥

टलनम् । न । विक्लवे ॥

टवर्गः । पुं । टादिपञ्चवर्णेषु ॥

टवर्गीयः । पुं । टवर्गस्थे वर्णे । वर्गान्ताच्चेति छः ॥

टा । स्त्री । पृथिव्याम् ॥

टाङ्कम् । न । मद्यभेदे ॥

टाङ्करः । पुं । नागवीटे ॥

टारः । पुं । रङ्गे ॥ तुरङ्गे ॥ षण्डे ॥

टिटिभः । पुं । } टिट्टिभे ॥
टिटिभकः । पुं । }

टिट्टिभः । पुं । टटीहरी इति भाषा प्रसिद्धे कोयष्टिखगे । टीठि इति गौड भाषा ॥ टिट्टि शब्दं भाषते । टिट्टि शब्देन भाति वा । अन्येष्वपीति डः ॥ दानवविशेषे ॥

टिट्टिभकः । पुं । कोयष्टिके । टिट्टिभे ॥ स्वार्थे कन् ॥

टिण्टिणिका । स्त्री । अम्लशिम्बिकायाम् ॥

टिण्डिशः । पुं । ढिंडसी इति टिण्डा इति च भाषाप्रसिद्धे फलशाकविशेषे मुनिनिर्मिते । रोमशफले । डिण्डिशे ॥

डङ्गारी । स्त्री । डङ्गरीफले ॥

डण्डः । पुं । डंडारीतिख्याते मत्स्ये ॥ डण्डमत्स्यो रसे तिक्तः पित्तं रक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्रदो बलवर्द्धनः ॥

डमः । पुं । चाण्डालस्त्री लेटाख्याते डो म इति प्रसिद्धेऽन्त्यजे ॥

डमरः । पुं । कलहककलहे ॥ विप्लवे । धावकुक्कुटनादे ॥ डाका इति धाङ्डा इति च भाषा ॥ परचक्रादिभये ॥ न । भीत्यापलायने । शृंगालिकायाम् ॥ डम इति शब्दस्य रानम् । रा० । बाहुलकात् घञर्थे कः ॥

डमरुः । पुं । वाद्यभेदे । कापालिक योगिवाद्य ॥ चमत्कारे ॥ डमिति शब्दं मियर्त्ति । मृगय्वादित्वादर्थे कुः । गणपाठादेवगुणः ॥

डयनम् । न । पुरुषस्कन्धवाह्ययानविशेषे । कर्णीरथे । चौडोल इतिख्याते ॥ डीयतेऽनेन । डीङ् विहायसा गतौ । ल्युट् ॥ नभोगतौ ॥

डल्लकम् । न । वंशादिरचितपात्र विशेषे । डगरा डाला छवड़ा छाबी इतिभाषा ॥ त्रिंशतञ्च पञ्चाधिकं डल्लकं वल्लसंयुतम् । सभोज्यं सोपवीतञ्च सोपहारं मनोहरमितिब्रह्मवैवर्त्तप्रकृतिखण्डम् ॥



डवित्थः । पुं । काष्ठमये मृगे ॥ डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृग इति सुपद्मव्याकरणोक्तेः ॥

डहुः । पुं । लकुचे । लिकुचे । मडहर इति प्रसिद्धवृक्षे ॥ दहति तोडति वा । दहभस्मीकरणे । तुडिर् तर्द्दने वा । मृगय्वादिषु निपातितः ॥

डा । स्त्री । डाकिन्याम् ॥

डाकिनी । स्त्री । कालीगणविशेषे ॥ डाकानां समूहे ॥ खलादित्वादिनिः ॥

डाङ्गरी । स्त्री । डङ्गरीफले ॥

डामरः । पुं । चमत्कारे ॥ शिवोक्त ष
ड्विधे शास्त्रविशेषे ॥ तेषां नामानि
श्लोकसङ्ख्याश्चोक्ता वाराहीतन्त्रे ।
यथा । डामरः षड्विधो ज्ञेयः प्रथमो
योगडामरः । श्लोकास्तत्र त्रयस्त्रिंशत्
तथा पञ्चशतानि च । त्रिविंशतिसह
स्राणि श्लोकानि चैव सङ्ख्यया ॥ १
॥ एकादशसहस्राणि सङ्ख्याताः
शिवडामरे । श्लोकाः सप्तैव निश्चि
त्य ईश्वरेणैव भाषिताः ॥ २ ॥ ताव
च्छ्लोकसहस्राणि पञ्चश्लोकशतानि
च । गुणोत्तराणि दुर्गाया डामरे क
थितानि च ॥ ३ ॥ नवश्लोकसहस्रा
णि नवश्लोकशतानि च । सारस्वते
तथा श्लोकाः पञ्चैव परिकीर्त्तिताः ॥
४ ॥ ब्रह्मसङ्ख्या सहस्राणि श्लोका

नाब्रह्मडामरे। पञ्चोत्तरशतान्यत्र सङ्ख्यातानि शिवेन तु ॥ ५ ॥ षष्टिः श्लोकसहस्राणि गान्धर्वडामरोत्तमे। श्लोकाश्चपष्टिसङ्ख्याता ब्रह्म ॥ ण्यायामलयोर्मिनेति ॥ तथाहि। योगडामरः २३५३३। शिवडामरः ११००७। दुर्गाडामरः ११५०२। सारस्वतडामरः ९९०५। ब्रह्मडामरः ७१०५। गन्धर्वडामरः ६००६० ॥ इति ॥ भूतडामरादयोऽप्येपि सन्ति। भूतानां डामरश्चमत्कारोऽत्रेति निर्वचनात्। ॥ डमरे ॥

डाहलः। पुं। चैद्य। चेदिदेशे ॥

डाहुकः। पुं। दात्यूहखगे ॥

डिक्करी। स्त्री। तिक्कर्याम् ॥

डिङ्गरः। पुं। डङ्गरे ॥ क्षेपे ॥ खले ॥ धूर्ते ॥ सेवके ॥

डिण्डिमभाण्डम्। नं। वादित्रविशेषे ॥ पटहमृदङ्गकरटाः समेता यत्र वाद्यन्ते तानि डिण्डिमभाण्डानीतिव्याख्यानात् ॥

डिण्डिमः। पुं। ढोंडी इतिख्याते वाद्यभेदे ॥ यथा। स्रोकार्द्धेनच यत् प्रोक्तं तदुक्तं ग्रन्थकोटिभिः ॥ ब्रह्म सत्यं जगन्मिथ्येत्येवं वेदान्तडिण्डिमः ॥ गजघण्टानादे ॥ यथा। मतिरेव बला गरीयसी तदभावे करिणामियं दशा। इतिघोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ पामीयामयके ॥ डिण्डि इतिशब्दं मिनोति प्रकाशयति। डुमिञ्०। डः ॥

डिण्डिरः। पुं। समुद्रफेने ॥

डिण्डिशः। पुं। डिंडसी ढेंडस टिण्डा इत्यादि भाषाप्रसिद्धे मुनिनिर्मिते। रोमशफले ॥ डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः। सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥ * ॥ भिक्षेयबीजं स्वतिवृत्तखण्डं सहितं कं प्रोज्झितचण्डमब्दम्। सेहेप्रतप्तं यवदर्विदण्डं च मिष्टं डिण्डिशकं सपिण्डम् ॥

डिण्डीरः। पुं। अब्धिकफे। समुद्रफेने ॥ डिण्डि इतिशब्दम् ईरयति। ईरगतौ कम्पनेच। अच्। अक्षः ॥

डिण्डीरमोदकम्। न। गृञ्जने ॥

डित्यः। पुं। काष्ठमये गजे ॥ डित्यः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगइतिसुपद्मव्याकरणोक्तेः ॥ विशेषवचनायुक्ते पुरुषे ॥ यथा। श्यामस्तरुणोयुवाविद्वान् सुन्दरः प्रियदर्शनः। सर्वशास्त्रार्थवेत्ताच डित्यइत्यभिधीयतइति कलापटीका ॥

डिमः। पुं। नाटकस्य रूपकविशेषे ॥

डिम्बः। पुं। भयध्वनौ ॥ अण्डे ॥ पु-

डुलिः । स्त्री । कमठ्याम् ॥ डोलयति । डुलउत्क्षेपे । इगुपधादिति किः ॥

डुलिका । स्त्री । खञ्जनाकृतिपक्षिविशेषे ॥

डुली । स्त्री । चिल्लीशाके ॥

डोडिका । स्त्री । सुमुण्ड्याम् । करे ढका इति प्रसिद्धे फलशाकविशेषे ॥ डोडिकापुष्टिदा वृष्या रुच्या वह्निप्रदा लघुः । हन्ति पित्तकफार्शांसि कृमिगुल्मविषामयान् ॥ * ॥ सार्द्धं डोडीफलं सविकलं स्विन्नमीषच्च तोये स्नेहे हिङ्गुप्रकथितसितो वेसवारेण सिद्धम् ॥ गव्यं तक्रं कथितमिलिते साधितं रामठेन खादन् खादन् निभृतमनसं निर्दिशं भोक्तृभिः कैः ॥ * ॥ सन्धूक्ष्य शुष्कांतरयोःप्रतापात् प्रतप्त माज्ये नवडोडिशाकम् । सवैन्धवं रामठदत्तवासं खादन्नरो निन्दति व्यञ्जनानि ॥ डोडिका घासला रुच्या शीता गुर्वी विष्टम्भदा । सुस्विन्ना रोचनी प्रोक्ता अस्विन्ना कण्ठकर्त्तरी ॥

डोडी । स्त्री । डोडिकायाम् ॥ क्षुपविशेषे । जीवन्त्याम् । सुखालुकायाम् ॥

डोमः । पुं । स्वनामख्याते ऽस्पृश्यजातौ ॥ यथा । चण्डालश्चैव डोमश्च स्थानकस्तथा इति । दण्डीरश्चैव भण्डीरो भूषण्डश्च श्याश्रमी ॥ हवामुण्डी लिङ्गधारी संन्यासी यत्र स्त्रिनि । स्पृष्ट्वा प्रमादतः स्नात्वा गायत्र्यष्टशतं जपेदिति मत्स्यसूक्तमहातन्त्रे ३९ पटलः ॥

डोरम् । न । }
डोरकम् । न । } हस्तादिबन्धनसूत्रे ॥

डोरडी । स्त्री । वृहत्याम् ॥ इति राजनिर्घण्टः ॥

ढः

ढः । पुं । ढकारे ॥ ढक्कायाम् ॥ शुनि ॥ श्वलाङ्गूले ॥ निर्गुणे ॥ ध्वनौ ॥ ढगणे ॥

ढक्का । स्त्री । यशःपटहे ॥ ढगिलिका यति । कैशब्दे । ढाल इति ख्यात ॥

ढक्कारी । स्त्री । तारिणीदेव्याम् ॥

ढगणः । पुं । भेदत्रयविशिष्टे त्रिमात्रिके ॥ यथा । (ऽ। अ. १) (।ऽ। ला. २) (।।। ताण्डवम् ३) इति ॥

ढालम् । न । फलके ॥

ढाली । त्रि । चर्म्मिणि ॥

ढामरा । स्त्री । हंस्याम् ॥

ढुण्ढिः । पुं । श्रीगणेशविशेषे ॥ यथा । अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः

ढः

सर्वार्थढुण्ढिसतया भवढुण्ढिनामा । काशीप्रवेशमपि कोऽलभतेऽत्र देही तोषं विना तव विनायक ढुण्ढिराज ॥ इति काशीखण्डगणेशं प्रति शिववाक्यम् ॥

ढोलः । पुं । स्वनामख्याते वाद्यविशेषे ॥

णः

णः । पुं । णकारे ॥ बुद्धदेवताविशेषे । बिन्दुदेवे ॥ भूषणे ॥ गुणवर्जिते ॥ पानीयनिलये ॥ निर्णये ॥ ज्ञाने ॥

णहः । पुं । ब्रह्मलोकस्थे समुद्रोपमे सरोविशेषे ॥

* ॥ * ॥ इत्यादिगौडकुलोत्पन्नोदीच्याध्वप्रधानोपनामतुलारामसिश्रात्मजश्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकृष्णावधूतश्रीपरमहंसपरिव्राजकाचार्यश्रीमद्धरिहरानन्दनाथभारतिशिष्येण बालावधूतश्रीसुखानन्दनाथपरनामधेयेन विरचिते शब्दार्थचिन्तामणौ टवर्गः समाप्तः ॥ १ ॥ * ॥ * ॥ * ॥ * ॥ * ॥



तत् सत्

तः

तः । पुं । तकारः ॥ चौरे ॥ अन्हे ॥ पुच्छे ॥ क्रोडे ॥ म्लेच्छे ॥ रत्ने ॥ सुगते ॥ योधे ॥ गौरविवर्जितपुच्छे ॥ क्रोडपुच्छे ॥ स्त्री । न । तरणे ॥ पुण्ये ॥ तटति । तटउच्छ्राये । डः ॥

तकिलः । त्रि । धूर्ते ॥

तक्किला । स्त्री । औषधे ॥

तक्रम् । न । चतुर्थांशजलसंयुक्ते दधिनि । गोरसभेदे । दण्डाहते । कालशेये ॥ तत्पञ्चविधम् ॥ यथा । ससरं निर्जलं घोलं मथितञ्च सरोदकम् । तक्रं पादजलं प्रोक्तं मुदश्विच्चार्द्धवारिकम् ॥ छच्छिका सरहीनास्यादच्छाप्रचुरवारिका ॥ * ॥ तुर्यांशेन जलेन संयुतमतिस्थूलं सदम्लं दधि मायो माहिषमंशुकेन विमले मृद्भाजने गालयेत् । भृष्टं हिङ्गु च जीरकञ्च लवणं राजीञ्च किञ्चिन्मितां पिष्ट्वा तत्र विमिश्रयेद्भवति तत् तक्रं नृणां सुप्रियम् ॥ अस्य गुणा यथा । तक्रं रुचिकरं वह्निदीपनं पाचनं परम् । उदरे ये गदास्तेषां नाशनं तृप्तिकारकम् ॥ अपि च । तक्रं ग्राहि कषायाम्लं स्वादु

तक्रम्

पाकरसं लघु । वीर्य्योष्णं दीपनं हृद्यं प्रीणनं वातनाशनम् ॥ ग्रहण्यादिमतां पथ्यं भवेत् संग्राहि लाघवात् ॥ * ॥ किञ्चित्स्वादुविपाकित्वाच्च पित्तप्रकोपकम् । कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफापहम् ॥ न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ॥ समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफापहम् ॥ अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥ * ॥ वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् । पित्ते स्वादुसितायुक्तं सव्योषं सर्जितं कफे ॥ * ॥ हिङ्गुजीरयुतं घोलं सैन्धवेन सुसंयुतम् । भवेदतीव वातघ्नमर्शोऽतीसारहृत् परम् ॥ रुच्यं पुष्टिप्रदं बल्यं वस्तिशूलविनाशनम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ॥ शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च । अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् ॥ तत्तु हन्ति गरच्छर्द्दिप्रसेकविषमज्वरान् । पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् ॥ मेहं गुल्ममतीसारं शूलप्लीहोदरारुचीः । श्वित्रकोठघृतव्याधीन् कुष्ठशोथतृषाकृमीन् ॥ नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्ब्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ * ॥ यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ॥ अथामपक्वतक्रगुणाः । तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥ तक्यते हस्यते वा । तक्रगतौ । स्फायितञ्चीतिरक् । व्याङ्कादिः ॥

तक्रकूर्च्चिका । स्त्री । छाना इति गौडभाषाप्रसिद्धे दुग्धविकृतौ ॥ उष्णदुग्धे तक्रयोगात् जाता स्यात् तक्रकूर्च्चिका ॥ तक्रेण सह पक्वक्षीरे ॥ तक्रेणापक्वं यत्क्षीरं तामभेत् तक्रकूर्च्चिकेति ॥

तक्रपिण्डः । पुं । क्षीरविकृतौ ॥ इमा तक्रेणावा नष्टं दुग्धं बद्धं सुवाससा । द्रवभागेन हीनं यत् तक्रपिण्डः स उच्यते ॥

तक्रमांसम् । न । मांसप्रकारविशेषे ॥ यथा । पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गुभर्ज्जयेत् । छागादेः सकलञ्चापि खण्डान्यष्टौ च भर्ज्जयेत् ॥ सिद्धियोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा । राजिकादियुते तक्रे मांसखण्डान् निधापयेत् ॥ तक्रमांसन्तु मांसं स

बोधकत्वमिति च वाच्यचित्तैः स्वरू-
पेतरत्वलक्षणे ॥ स्वरूपान्नन्वयित्वे
सति विशेषणान्तरं संसृज्येतरथावर्त्त-
कस्वरूपे, संचये ॥

तटाकः । पुं । तडागे । पद्माकरे ॥ त-
टमकति । अक कुटिलायां गतौ । क-
र्मण्यण् ॥

तटागः । पुं । तडागे ॥ तटमगति । अग
कुटिलायां गतौ । कर्मण्यण् ॥

तटिनी । स्त्री । नद्याम् ॥ तटमस्त्यस्याः
अतइनिठनाविति इनिः । पुष्करादि-
भ्यो देशे इति इनिर्वा । ऋन्नेभ्यो ङीप् इति
ङीप् ॥

तटी । स्त्री । तीरे । कूले ॥ तटति ।
तट । अच् । जातित्वात् ङीप् ॥

तडाकः । पुं । तडागे । तड्यते । तड
आघाते । पिनाकादयश्चेति साधुः ॥

तडागः । पुं । जलाधारविशेषे । पद्मा-
करे ॥ प्रशस्तभूमिभागस्थो बहुस-
स्यसरोपितः । जलाशयस्तडागः
स्यादित्याहुःशास्त्रकोविदाः ॥ * ॥
पञ्चशतधनुः परिमिते जलाशये ॥
यथा । चतुर्विंशाङ्गुलोहस्तो धनुस्त-
च्चतुरस्रः । शतधन्वन्तरश्चैव तावत्
पुष्करिणी शुभा । एतत् पञ्चगुणः प्रो-
क्तस्तडाग इति निर्णयः ॥ इति नव्य-
वर्द्धमानधृतोत्सर्गविधिः ॥ यन्त्रकूटके ॥



तड्यते । तड आघाते । तडागादय
श्चेति निपातितः ॥

तडाघातः । पुं । ऊर्द्ध्वीकृत्य हस्तेन शु-
ण्डाघाते ॥ यथा । "हस्तैः करिराज-
प्रे तडाघातं विदुर्बुधाः ॥" इति ॥

तडित् । स्त्री । विद्युति ॥ तडयत्यभ्र-
म् । तड आघाते णिजन्तादितीति प्र-
त्ययः ॥ अन्तिके ॥

तडित्वान् । पुं । वारिदे मेघे ॥ तडि-
तोऽस्त्यस्मिन् । मतुप् ॥ मुस्तके ॥

तण्डकः । पुं । स्वञ्जने । फेने ॥
समस्तसमीपशाखि । समस्तमिद्भाम-
के ॥ गृहदारुणि ॥ तरुस्कन्धे ॥ बिग-
मायाबहुले ॥ तर्कणे । ताडिमखिने
॥ खर्वे ॥ उपघातके ॥

तण्डुः । पुं । शिवद्वारपालविशेषे ॥

तण्डुरीयः । पुं । कीटमात्रे ॥ त-
ण्डुलोदके ॥ त्रि । स्वने ॥ इति है-
मचन्द्रः ॥

तण्डुलः । पुं । धान्यादिनिकरे । धान्या-
दिसारे । वाजदर्शितिपाँचलाईतिभा-
षा ॥ तण्डुलो मेदसन्तुषः सनवेल्व
तिदुर्ज्जरः ॥ ताड्यते । तड आघाते
। सानसिवर्णसिपर्णसितण्डुलाङ्कशे-
त्यादिना निपातनादुलच् प्रत्ययो
नुमागमश्च ॥ यथा । नियन्ते लुप्यन्ते
तन्यन्ते ताड्यन्ते वा इति तण्डुलाः ।

धूम्रलुटितनितम्बिम्बउत्तर्णा। तण्ड-
स्यादेश: ॥ विडङ्गे ॥ अल्पमारिषे ॥
तण्डुलपरीक्षा । स्त्री । नवविधदिव्या
न्तर्गतदिव्यविशेषे ॥
तण्डुला । स्त्री । अवोसमङ्गायाम् ॥
विडङ्गे ॥
तण्डुलाम्बु । न । कृष्टाम्बुनि । तण्डुलो
दके ॥
तण्डुलिकाश्रमः । पुं । तीर्थविशेषे ॥
तण्डुली । स्त्री । यवतिक्ताख्यलतायाम्
॥ शाखाण्ड्याम् ॥ तण्डुलीयशाके ॥
तण्डुलीकः । पुं । अल्पमारिषे ॥
तण्डुलीयः । पुं । मेघनादे । अल्पमा
रिषे । तण्डुलीये । सुशाके । चौला-
इ इतिभाषा ॥ तण्डुलीयो लघुः
शीतो रूक्षः पित्तकफास्रजित् । स
ष्टमूत्रमलो रुच्यो दीपनो विषहार
कः ॥ तण्डुलायहितः । विभाषाच
विरूपादिभ्य इति छः ॥ विडङ्गत
रौ ॥ ताप्ये ॥
तण्डुलीयकः । पुं । तण्डुलीयशाके ॥
विडङ्गे ॥ स्वार्थेकन् ॥
तण्डुलीयिका । स्त्री । } विडङ्गे ॥
तण्डुलुः । पुं । }
तण्डुलेयः । पुं । } तण्डुलीयशाके ॥
तण्डुलेरः । पुं । }
तण्डुलोत्थम् । न । तण्डुलाम्बुनि ॥

तण्डुलोदकम् । न । तण्डुलाम्बुनि ॥
यथा । जलमष्टगुणं दत्त्वा पलं क-
ण्डिततण्डुलात् । भावयित्वा ततो
देयं तण्डुलोदककर्मणीति वैद्यकप
रिभाषा ॥
तण्डुलौघः । पुं । वेष्टवंशे ॥ तण्डुलस
मूहे ॥
तण्डुल्यः । पुं । तण्डुलीयशाके ॥ तण्डु
लायहितः । विभाषाविरूपादि-
भ्य इति यत् ॥
तण्डुलीक्षः । पुं । कीटभापे ॥ न । तण्डु
लोदके ॥ त्रि । अर्वरे ॥ इति मेदि-
निकरः ॥
तत् । अ । मैत्रौ ॥ तनोति । तनुवि-
स्तारे । क्विप् । गमादीनामिति लोप
अनुनासिकलोपे तुक् ॥
ततम् । न । वीणादिवाद्ये ॥ पुं । वा-
यौ ॥ त्रि । व्याप्ते ॥ विस्तृते । पृथौ ॥
तन्यते । तन् । तनिमृङ्भ्यां किच्चे
ति तनोतेः क्तन् ॥ बन्धसेर्मा वा । त
नु । क्तः । यमुदात्तोपदेशेति अ-
लोपः ॥
ततपत्री । स्त्री । कदलीवृक्षे ॥
ततमः । त्रि । बहुषु मध्ये एकस्मिन् ॥
ततरः । त्रि । द्वयोर्मध्ये एकस्मिन् ॥
ततवत् । त्रि । विस्तारयुक्ते ॥
ततः । अ । आदौ ॥ परिप्रश्ने ॥ स्थान

…वृतस्तुटितमिताडिभ्यउलच् । तण्ड-
श्चादेश. ॥ विडङ्गे ॥ अल्पमारिषे ॥

तण्डुलपरीक्षा । स्त्री । नवविधदिव्या
न्तर्गतदिव्यविशेषे ॥

तण्डुला । स्त्री । यवासमञ्जायाम् ॥
विडङ्गे ॥

तण्डुलाम्बु । न । धौत म्बुनि । तण्डुलो
दके ॥

तण्डुलिकाश्रमः । पुं । तीर्थविशेषे ॥

तण्डुली । स्त्री । यवतिक्ताख्यलतायाम्
॥ ग्रैष्माण्डुल्याम् ॥ तण्डुलीयशाके ॥

तण्डुलीकः । पुं । अल्पमारिषे ॥

तण्डुलीयः । पुं । मेघनादे । अल्पमा
रिषे । तण्डुलीये । सुशाके । चौंला-
इ इतिभाषा ॥ तण्डुलीयो लघुः
शीतो रूक्षः पित्तकफास्रजित् । स
ष्टमूत्रमलो रुच्यो दीपनो विषहार
कः ॥ तण्डुलायहितः । विभाषाह
विरपूपादिभ्य इति छः ॥ विडङ्गत
दौ ॥ ताप्ये ॥

तण्डुलीयकः । पुं । तण्डुलीयशाके ॥
विडङ्गे ॥ स्वार्थेकन् ॥

तण्डुलीविका । स्त्री ।
तण्डुलुः । पुं । } विडङ्गे ॥

तण्डुलेयः । पुं ।
तण्डुलेरः । पुं । } तण्डुलीयशाके ॥

तण्डुलोत्थम् । न । तण्डुलाम्बुनि ॥

तण्डुलोदकम् । न । तण्डुलाम्बुनि ॥
यथा । कण्डनष्टगुण इत्यो पलं क-
विण्डतण्डुलात् । भावयित्वा ततो
देयं तण्डुलोदककर्मणीति वैद्यकप
रिभाषा ॥

तण्डुलौघः । पुं । वेष्टवंशे ॥ तण्डुलस
मूहे ॥

तण्डुल्यः । पुं । तण्डुलीयशाके ॥ तण्डु
लायहितः । विभाषाहविरपूपादि-
भ्य इतिपक्षेयत् ॥

तण्डुलीक्षः । पुं । कीटभावे ॥ अ । तण्डु
लोदके ॥ त्रि । बर्बरे ॥ इतिमेदि-
निकरः ॥

तत् । अ । हेतौ ॥ तनोति । तनुवि-
स्तारे । क्विप् । गमादीनामितिवस्य
नुनःतिकलोपे तुक् ॥

ततम् । न । वीणादिवाद्ये ॥ पुं । वा-
यौ ॥ त्रि । व्याप्ते ॥ विस्तृते । इष्टौ ॥
तन्यते । तनु० । यमिरमनम्यादिनावे
ति तनोतेर्क्तान् ॥ वन्यतेस्म वा । त
नु० । क्तः । अनुदात्तोपदेशेति न-
लोपः ॥

ततपत्री । स्त्री । कदलीवृक्षे ॥

ततमः । त्रि । बहुषु मध्ये एकस्मिन् ॥

ततरः । त्रि । द्वयोर्मध्ये एकस्मिन् ॥

ततवत् । त्रि । विस्तारयुक्ते ॥

ततः । अ । आदौ ॥ परिणामे ॥ आन

प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनि
र्णयवादजल्पवितण्डाहेत्वाभासच्छ-
लजातिनिग्रहस्थानानां तत्त्वज्ञा
नान्निःश्रेयसाधिगमः । इति गौतमः ॥
अनारोपितवस्तुप्रत्यये ॥ इदं सर्वं दे
हजातमद्वितीये चिदानन्दात्मनि मा
यया कल्पितमसत्यमनृतम् आत्मैव क
परमार्थसत्यः सच्चिदानन्दोऽहमेव
अस्मीतिपरिज्ञाने ॥ तत्त्वध्यानम् ॥
तत्त्वज्ञानार्थदर्शनम् । न । तत्त्वज्ञाना
र्थालोचने ॥ तत्त्वज्ञानस्यार्थस्तु
स्मीतिसाक्षात्कारस्य वेदान्तवाक्य क
रणकस्यामानित्वादिसर्वसाधनप-
रिपाकफलस्य अर्थः प्रयोजनमविद्या
तत्कार्यनिवृत्तिनिखिलदुःखनिवृत्तिरू
पः परमानन्दावाप्तिरूपश्च मोक्षः-
तस्य दर्शनम् आलोचनम् । तत्त्वज्ञा
नफलालोचने हि तत्साधनेप्रवृत्तिः-
स्यात् ॥
तत्त्वतः । अ । यथावदर्थे ॥
तत्त्वदर्शी । त्रि । वस्तुयाथात्म्यदर्शनशी
ले ब्रह्मविदि कृतसाक्षात्कारे ॥ त
त्त्वं वस्तुनो याथात्म्यम् तद्द्रष्टुं शीलं य
स्य । णिनिः ॥
तत्त्वभावः । पुं । नेतिनेतीत्यादिश्रुति
निर्दिष्टे विदिताविदिताभ्यामन्यस्मि
न्नद्वयस्वभावे ॥



तत्त्वविचारः । पुं । भूतार्थचिन्तायाम् ॥
तत्त्ववित्-द् । त्रि । स्वरूपविदि । याथात्म्य
विदि । ब्रह्मविदि ॥ गीते ॥ गीतेऽपि
कालविभागविभा इति सम्बोधसखी
चितत्त्वानि सर्वजगत्प्रवर्त्तकानी
तिमन्यते ॥ तत्त्वं स्वरूपं सकलसंसा
रधर्मविलक्षणं सच्चित्सुखरूपं ब्रह्मा
हमस्मीति वेत्ति जानातीति तत्त्ववित् ॥
तत्परी । स्त्री । त्रिवृत्तपत्न्याम् ॥
तत्पदलक्ष्यार्थः । त्रि । अज्ञानादिसम
ष्ट्युपाध्युपहिताधारभूतेऽनुपहित
चैतन्ये । चिदेकरसरूपिणि ॥
तत्पदलक्ष्यः । त्रि । तत्पदाभिधेये ॥
तत्पदवाच्यार्थः । त्रि । अज्ञानादिसम
ष्टिः एतदुपहितसर्वज्ञत्वादिविशि
ष्टचैतन्यम् एतदनुपहितचैतन्यञ्चै
तत्त्रयं समस्तं पिण्डवदेकत्वेनावभा
समानं तत्पदवाच्यार्थो भवतीत्यु
क्तत्वादितेर्थः ॥
तत्पदाभिधः । त्रि । तत्पदवाच्ये ॥ मा
योपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्ष
णः । पारोक्ष्यशबलः सत्याद्यात्मक
स्तत्पदाभिध इत्याहुः ॥
तत्पदार्थः । पुं । जगत्कारणे परमात्म
नि ॥ यज्जगत्कारणं तत्त्वं तत्पदार्थः
स उच्यते ॥ तदिति पदस्य अर्थः ॥
तत्परः । त्रि । तद्गते ॥ आसक्ते ॥ तत्

परमुत्तमं यस्य । तेनपूर्यते वा । पू पालनपूरणयोः । कर्त्तरि अप् ॥

तत्परायणः । त्रि । तदासक्ते ॥

तत्पुरुषः । पुं । प्रायउत्तरपदार्थप्रधाने समासविशेषे ॥ स च षोढा । व्यधिकरणपदः समानाधिकरणपदः सङ्ख्यापूर्वपदश्चेति ॥

तत्पर्णः । पुं । कुबेरालये ॥ कुष्ठाख्यौषधौ ॥ चोरनामसुगन्धिद्रव्ये ॥

तत्र । अ । तस्मिन् । सप्तम्यर्थे ॥ तस्मादित्यत्र तस्यामवस्थायाम् ॥

तत्रत्यः । त्रि । तत्रभवे ॥ अव्ययात् त्यप् ॥

तत्रभवान् । त्रि । श्लाघ्ये । पूज्ये ॥ इतराभ्योपिदृश्यन्त इतिप्राग्दीव्यतीयः प्रथमार्थेत्रल् । सुप्सुपेतिसमासः ॥

तथा । अ । साम्ये ॥ अभ्युपगमे ॥ पृष्टप्रतिवाक्ये ॥ समुच्चये ॥ निश्चये ॥ तेन प्रकारेण । प्रकारवचनेथाल् । विभक्तित्वात् त्यदाद्यत्वम् ॥

तथागतः । पुं । बुद्धमुनौ । सुगते ॥ तथा सत्यं गतं ज्ञानं यस्य यथापुनरावृत्तिर्नभवति तथा तेनप्रकारेण गत इति तथागतः । सुप्सुपेतिसमासः । तथाच सुगतिसाधकताप्योक्ता भवति । तदुक्तंबौद्धागमे । यथागतास्ते मुनयः प्रियोगतिं तथागतः सो-पि तथात्वागतइति ॥ त्रि । प्रकारान्तरप्राप्ति... ॥ तथाभूते ॥

तथाच । अ । पूर्वोक्तार्थदृढीकरणे ॥

तथाहि । अ । निदर्शने ॥ प्रसिद्धमेवेत्यर्थे ॥ तथाच हित ॥

तथैव । अ । तद्वदेवेत्यर्थे ॥

तथ्यम् । न । सत्ये । ऋते ॥ त्रि । तदस्ति ॥ तथा साधुः । तथंसाधुरितियत् ॥

तदः । त्रि । पूर्वोक्ते । बुद्धिस्थस्य परामर्शे । सो । इतिभाषा ॥ तद्दशकाद्यवस्थाद्वा दृष्टः स इति कथ्यते ॥ विप्रकृष्टविषये ॥ स्त्री । सा ॥ न । तत् तद् । सर्वनामादिगणपठितस्य सत्त्वमस्यादिश्रुतिप्रसिद्धस्य ब्रह्मणो-नाम्नि ॥ यथा । तदित्यनभिसन्धाय फलं यज्ञतपः क्रियाः । दानक्रियाश्चविविधाः क्रियन्तेमोक्षकाङ्क्षिभिरिति ॥ तदिति ब्रह्माभिधानमुच्चार्य फलमभिसन्धायकर्मणः फलमिच्छन्तः ॥ तनोति । तनु० । त्यजितनियजिभ्यो डिदित्यद्रिः ॥

तदनन्यत्वम् । न । तदभिन्नत्वे ॥ तस्मात् अनन्यत्वं नाम पृथक्सत्ताविरहम् ॥

तदन्यबाधितार्थप्रसङ्गः । पुं । दोषविशेषे ॥ यथा । भूमौ यदि वह्निरभि

चारी स्यात्तदन्ययोः ॥ न । स्वादि-
त्यादिः ॥

तदर्पणम् । न । वस्तुनः प्रत्यर्पणे प्रति-
दाने ॥ स्वामिने निक्षेपार्पणे ॥ त-
स्य अर्पणम् ॥

तदा । अ । तस्मिन् काले ॥ तदो दा च
॥ सर्वैकान्येति धा दा ॥

तदात्मा । पुं । तत्स्वरूपे ॥ तस्यात्मा ॥

तदात्वम् । न । वर्त्तमानकाले ॥ त-
दित्यस्य भावः ॥ तस्य भावस्त्वतलौ ॥

तदादिः । त्रि । तदाप्रभृतौ ॥ स आ-
दिर्येषु यस्मिन्वा ॥

तदानीम् । अ । तस्मिन्काले । तदार्थे
॥ तदो दा च । दानीम् च ॥

तदारम्भम् । अ । आरम्भे ॥

तदेवः । त्रि । सदैकधा प्रत्यक्षमेवे
स्वार्थे ॥

तद्गत । त्रि । तत्परे ॥

तद्गतमानसः । त्रि । एकाग्रचित्ततेये
तद्गतान्तःकरणे ॥

तद्गुणः । पुं । काव्यालङ्कारप्रभेदे ॥
स्वमुत्सृज्य गुणं योगा दत्युज्ज्वल
गुणस्य यत् । वस्तु तद्गुणतामेति भ
ण्यते स तु तद्गुणः ॥ वस्तु तिरस्कृत
निजरूपं केनापि समीपगतेन प्रगुणत
या स्वगुणसम्पदा परस्तात् तमसि भा
समेव यत् समासादयति स तद्गुणः ॥ तस्याऽप्रकृतस्य गुणोऽस्यास्तीति ।
उदाहरणम् । विभिन्नवर्णा गरुडा
ग्रजेन सूर्यस्य रथ्याः परितः स्फुर
न्त्या । रत्नैः पुनर्यत्र रुचा रुचं स्वा
मानिन्यिरे वंशकरीरनीलैः ॥ अत्र
रवितुरगापेक्षया गरुडाग्रजस्य तद्रूपे
चयाच हरिन्मणीनां प्रगुणवर्णता ॥

तद्ग्रहः । त्रि । तदभिनिवेशे ॥ तस्मिन्
ग्रहस्तद्ग्रहः ॥

तद्दिनम् । अ । दिनमध्ये ॥ प्रतिदिने
इति हेमचन्द्रः ॥ न । पूर्वोक्तदिने ॥

तद्धनः । त्रि । कृपणे ॥ इति हेमः ॥

तद्धर्म्मा । पुं । विनापि शीलेन स्वधर्म्मी
यमिति यः प्रवर्त्तते स तद्धर्म्मा ॥

तद्धितः । पुं । प्रत्ययविशेषे ॥ तद्धिताद्
यधिकारविहितप्रत्ययेषु ॥ ते च द्वि
विधाः । प्रकृत्यर्थभिन्नार्थाः स्वार्थिका
श्च ॥ तेभ्यः प्रयोगेभ्यो हितः ॥

तद्वत् । त्रि । पूर्वोक्तवति ॥ स यथास्ति
। मतुप् ॥ तत्सदृशे ॥ तेन तुल्ये ॥
तुल्यार्थे वतिः ॥

तद्वला । स्त्री । वाद्यविशेषे ॥ इति हेम
चन्द्रः ॥

तद्बुद्धिः । स्त्री । परमात्मसाक्षात्कार
पर्य्यायबुद्धौ ॥ त्रि । सर्वदा निर्वीज
समाधिभाजिकृतसाक्षात्कारे ॥ त
स्मिन् ज्ञानप्रकाशिते परमात्मतत्त्वे

सच्चिदानन्दघने एव बाह्यसर्व्वविषयपरित्यागेन साधनपरिपाकात् पर्य्यवसिता बुद्धिरन्तःकरणवृत्तिः सा व्यापारश्चयायस्य स तथा ॥

तनयः । त्रि । पुत्रे ॥ तनोति कुलम् तन्यते वा । तनु० । बहिमसितनिभ्यः कयम् ॥

तनया । स्त्री । दुहितरि । पुत्र्याम् ॥ टाप् ॥ चक्रकुल्यायां लतायाम् ॥ घृतकुमार्य्याम् ॥

तनिका । स्त्री । तनी इति भाषाप्रसिद्धे बन्धनरज्जौ ॥ यथा । विलासनतनिका ॥

तनिमा । पुं । तनुत्वे । तानवे ॥ तनोर्भावः । पृथ्वादित्वात् इमनिच् ॥

तनिष्ठः । त्रि । वृद्धे ॥ अयमेषामतिशयेनतनुः । अ तमायने इष्ठन् ॥

तनीयान् । त्रि । अल्पे ॥ अयमनयोरतिशयेन तनुः । द्विवचनविभज्योपपदे ईयसुन् ॥

तनु' । स्त्री । काये । शरीरे ॥ त्वचि ॥ स्त्रियाम् ॥ तन्व्याम् ॥ वोतोगुणवचनादिति पाक्षिकोङीषभावः ॥ त्रि । अल्पे ॥ विरले ॥ कृशे ॥ तनोति तन्यते वा । तनु० भृमृशीत्यु: ॥ लग्ने ॥

तनुकम् । न । त्वचे ॥ तनुसूत्र इति यावादिषु पाठात् कन् ॥

तनुचीरः । पुं । आम्रातके ॥

तनुच्छदः । पुं । वर्म्मणि ॥ तनुश्छाद्यते ऽनेन । छद० । पुंसिसंज्ञायामिति घः ॥

तनुच्छायः । पु । आश्ववर्बुरकवृक्षे ॥ ॥ स्त्री । न । शरीरच्छायायाम् ॥ तनोश्छाया । विभाषासेनेति वा क्लीवत्वम् ॥

तनुजः । पुं । पुत्रे ॥ तनोर्जातः । जः ॥

तनुजा । स्त्री । पुत्र्याम् ॥ टाप् ॥

तनुत्रम् । न । वर्म्मणि । सन्नाहे ॥ तनुस्त्रायते । त्रैङ्० । आतोनुपेति कः ॥

तनुत्राणम् । न । कवचे । तनुत्रे ॥ शरीररक्षणे ॥

तनुत्वचा । स्त्री । क्षुद्राग्निमन्थे ॥

तनुपत्रः । पुं । इङ्गुदीवृक्षे ॥

तनुभस्त्रा । स्त्री । नासिकायाम् ॥ तनोर्भस्त्रेव ॥ तन्वग्रोदर्ध्वमक्षिकायाम् । छोटी भाथी इति छोटीमसक इति च भाषा ॥

तनुभृत् । पुं । जीवे ॥

तनुमध्या । स्त्री । गायत्रीछन्द प्रभेदे ॥ त्यौचेत्तनुमध्या । य० मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा । आस्तां मम चित्ते नित्यं तनुमध्या ॥

तनुरसः । पुं । घर्म्मे । स्वेदजले ॥ कल्प

रसे ॥ त्रि । तद्विशिष्टे ॥

तनुरुट् । न । रोमणि ॥

तनुरुहम् । न । तनुरुहे ॥ त्रि । तनौ रुहे ॥

तनुवातः । पुं । नरकविशेषे ॥

तनुवारम् । न । वर्म्मणि । सन्नाहे ॥ तनुं वृणोति आवृणोति आच्छादयति । वृञ्० । कर्म्मण्यण् ॥

तनुवीजः । पुं । राजवदरे ॥

तनुव्रणः । पुं । वल्मीकरोगे ॥

तनुः । न । शरीरे ॥ तनोति तन्यते वा । तनु० । अर्त्तिपृवपियजितनिधनितपिभ्योनिदित्युसिप्रत्ययः । तनुषी तनूंषि ॥

तनुसञ्चारिणी । स्त्री । बालिकायाम् ॥

तनुसरः । स्वेदे ॥ तनोःसरति । सृ० । अच् ॥

तनूः । स्त्री । काये । शरीरे ॥ तनोति तन्यते वा । तनु० । भृमृशीत्युः । प्राणिजातेरियङ् ॥ कृषिचमितनिधनीत्यूर्वा ॥

तनूकृतः । त्रि । तष्टे । सूक्ष्मीकृते ॥ अतनुस्तनुरकारि । कृञः क्तः ॥

तनूजः । पुं । पुत्रे ॥ त्रि । शरीरजे ॥ तन्वाःजातः । पञ्चम्यामितिडः ।

तनूजनिः । पुं । पुत्रे ॥ तन्वाःजनिर्यस्य ॥

तनूजा । स्त्री । पुत्रिकायाम् । टाप् ॥

तनूनपम् । न । आज्ये । घृते ॥ तन्वा जनं कृशं पाति । पा० । कः ॥

तनूनपात् । पुं । अग्नौ । पावके ॥ तनूं शरीरं न पातयति । नभ्राण्नपादिति निपातितः । तनूनपातौ । तनूनपातः ॥ तनूंस्यस्वरूपं न पाति रक्षति । आशुविनाशित्वात् इति तनूनपाच्छब्दः । उगिदचामिति नुमि तनूनपान् तनूनपान्तौ तनूनपान्त इति वा ॥ तन्वा जनं कृशं पाति । तनूनपं घृतादि तत् अस्ति । अदो ऽस्य इतिविद् । तनूनपात् तनूनपादौ तनूनपादइतिवा ॥ चित्रके ॥

तनूरुहम् । न । रोमणि ॥ पक्षिपक्षे । पतत्रे ॥ पुत्रे ॥ तन्वां रोहति । रुह० । इगुपधेतिकः । मूर्द्धोवा ॥

तनूह्रदः । पुं । पायौ । गुदे ॥

तन्तिः । स्त्री । प्रसारितरज्ज्वाम् ॥ दामन्याम् ॥

तन्तुः । पुं । सूत्रे ॥ ग्राहे ॥ अपत्ये ॥ सन्ततौ ॥ तनोति तन्यते वा । तनु० । सितनीतितुन् ॥

तन्तुकाष्ठम् । न । तूल्याम् । तांतका काठ इति भाषा ॥

तन्तुकी । स्त्री । नाड्याम् ॥

तन्तुकीटः । पुं । कोषकारे । गुटिपोका इतिगौड भाषा । रेशमकाकीडा

इति भाषा ॥

तन्तुणः । पुं । ग्राहे । घाँगर इतिगौड़भाषा ॥

तन्तुनागः । पुं । ग्राहे ॥

तन्तुनाभः । पुं । लूतायाम् ॥

तन्तुनिर्य्यासः । पुं । तालवृक्षे ॥

तन्तुपर्व्व । न । परमेश्वरोपवीतदानतिथौ । श्रावण्यां पूर्णिमायाम् ॥

तन्तुभः । पुं । सर्षपे ॥ तन्तुना भाति । भा० । सुपीतिकः ॥ वत्से ॥

तन्तुरम् । न । } मृणाले ॥
तन्तुलम् । न । }

तन्तुली । स्त्री । सितापाके । चासनी इतिभाषा ॥

तन्तुवापः । पुं । तन्त्रवाये । कुविन्दे ॥ तन्तून् वपति । दुवप्० । कर्म्मण्यण् ॥

तन्तुवायः । पुं । लूतायाम् ॥ तन्तून् वयति । वेञ्० । ह्वावामश्चेत्यण् ॥ तन्त्रवाये । कुविन्दे । कोष्टी इतितांती इतिचभाषा ॥

तन्तुविग्रहा । स्त्री । कदल्याम् ॥

तन्तुशाला । स्त्री । गर्त्तिकायाम् । तन्तुवपनगृहे ॥ तन्तूनां शाला ॥

तन्तुसन्ततम् । न । ऊते । स्यूते । बुना कपड़ा इतिभाषा ॥

तन्तुसारः । पुं । गुवाकवृक्षे ॥

तन्त्रम् । न । कुटुम्बकृत्ये ॥ सिद्धान्ते ॥ उत्तमौषधे ॥ प्रधाने ॥ तन्तुवाये ॥ परिच्छदे ॥ हेतौ ॥ उभयार्थ प्रयोजके । उभयोद्देशेनसकृत्प्रवृत्तौ ॥ इतिकर्त्तव्यतायाम् ॥ राष्ट्रे ॥ परच्छन्दे ॥ करणे ॥ अर्थसाधके ॥ तन्त्रौ ॥ स्वराष्ट्रचिन्तायाम् ॥ परिजने ॥ वापसाधने । तन्तुवायशलाकायाम् ॥ तन्यते तन्त्रयो ऽस्मिन् । ष्ट्रन् ॥ प्रबन्धे ॥ शपथे ॥ धने ॥ गृहे ॥ वपनसाधने ॥ कुले ॥ श्रुतिशाखाविशेषे ॥ शास्त्रविशेषे ॥ तल्लक्षणं यथा । सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णयएव च । देवतानाञ्च संस्थानं तीर्थानां चैव वर्णनम् ॥ तथैवाश्रमधर्मश्चविप्रसंस्थानमेवच । संस्थानञ्चैवभूतानां यन्त्राणाञ्चैवनिर्णयः ॥ उत्पत्तिर्विबुधानाञ्च तरूणांकल्पसंज्ञितम् । संस्थानं ज्योतिषां चैव पुराणाख्यानमेव च ॥ कोषस्य कथनञ्चैव व्रतानां परिभाषणम् । शौचाशौचस्यचाख्यानं नरकाणाञ्चवर्णनम् ॥ हरचक्रस्य चाख्यानं स्त्री पुंसोश्चैवलक्षणम् । राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥ व्यवहारः कथ्यतेच तथाचाध्यात्मवर्णनम् । इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ * ॥ अथतस्य माहात्म्यम् । विष्णुर्वरिष्ठोदेवानां ह्र-

तन्त्रम्

दानानुदधिस्तथा । नदीनाञ्चयथा गङ्गा पर्वतानांहिमालयः॥ अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रोयथावरः । देवीनाञ्चयथादुर्गा वर्णानां ब्राह्मणोयथा ॥ तथासमस्तशास्त्राणां सन्त्रशास्त्र मनुत्तमम् । सर्वकामप्रदं पुण्यं तन्त्रं वैवेदसम्मितम् ॥ श्रीसं मदेवदेवस्य वक्त्रमसमेवच । पाव नं श्रद्दधानानामिहलोकेपरत्रचेति ॥ तच्च चतुःषष्टिसंख्यकम् । यथा । सिद्धीश्वरं महातन्त्रं कालीतन्त्रंकु लार्णवम् । ज्ञानार्णवंनीलतन्त्रं फेत्कारी तन्त्रमुत्तमम् ॥ देव्यागमम् त्तराख्यं श्रीक्रमं सिद्धियामलम्। म त्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं त था ॥ वाराहीतन्त्रं देवेशि योगिनीतन्त्रमुत्तमम् । गणेशविमर्षिणी तन्त्रं नित्यातन्त्रं शिवागमम् ॥ चा मुण्डाख्यं महेशानि मुण्डमालाख्य तन्त्रकम् । हंसमाहेश्वरं तन्त्रं नि रुत्तरमनुत्तमम् ॥ कुलप्रकाशकं दे विकल्पं गान्धर्वकंशिवे । क्रियासारं निबन्धाख्यं स्वतन्त्रतन्त्रमुत्तमम् ॥ सम्मोहनं तन्त्रराजं ललिताख्यं त थाशिवे । राधाख्यं मालिनी तन्त्रं

तन्त्रम्

देवरतन्त्रञ्च मालिनीविजयं तथा ॥ समयाचारतन्त्रञ्च भैरवीतन्त्रमु त्तमम् । योगिनी हृदयं तन्त्रं भैरवं परमेश्वरि ॥ सनत्कुमारकं तन्त्रंयो नितन्त्रं प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशि नवरत्नेश्वरंतथा॥ कुलचूडा मणितन्त्रं भावचूडामणीयकम् । म न्त्रदेवप्रकाशञ्च कामाख्यानामकं तथा ॥ कामधेनुःकुमारीचभूतडा मरवंशकम् । मालिनीविजयंतन्त्रं यामलं ब्रह्मयामलम् ॥ विश्वसारं महातन्त्रं महाकालं कुलामृतम् । कुलोड्डीशं कुब्जिकाख्यं यन्त्रचिन्ता मणीयकम् ॥ एतानितन्त्ररत्नानि सफलानियुगेयुगे । कालीविलास-कादीनि तन्त्राणि परमेश्वरि ॥ का लकल्पे सुसिद्धानि अश्वक्रान्तासु भू मिषु । मत्स्यादिनादितन्त्राणि कलि काले महेश्वरि ॥ सुसिद्धानि वरारोहे रथक्रान्तासु भूमिषु इति सि द्धिसारस्वतम् ॥ ४॥ अपिच । चतुः षष्टि [illegible] तन्त्राणि यामलादीनि पा र्वति । सफलानीह वाराहे विष्णु-क्रान्तासु भूमिषु ॥ कल्पभेदेन तन्त्रा णि कथितानिच यानिच । प.परङ मोहनायैव विफलानीह सुन्दरीति विश्वसारतन्त्रम् ॥ चि। आयस्से

॥ साङ्ख्यादिशास्त्रविशेषे ॥ तन्यन्ते व्युत्पाद्यन्ते तत्त्वान्यनेनेति व्युत्पत्तेः ॥ तन्त्रणम् । तन्यते ऽनेन वा । तनु० ) ष्ट्रन् ॥ यद्वा । तन्त्रणम् । तन्त्र्यते वा । तन्त्रि कुटुम्बधारणे । घञ् ॥

तन्त्रकम् । न । अनाहते । नवीनवस्त्रे ॥ तन्त्रादचिरापहृते इति साधु ॥

तन्त्रकाष्ठम् । न । तन्त्रवायस्य तुरीम् ॥

तन्त्रता । स्त्री । अनेकमुद्दिश्य सकृत्प्रवृत्तौ ॥ यथा । आग्नेयाष्टकपालैन्द्रैन्द्रपयोयागानां यथा वा आग्नेयाष्टकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां यथा वा सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति । तथा नानाप्रायश्चित्तप्रसक्ते सर्वोद्देशेन सकृत् प्रायश्चित्तकृते प्रत्यवायजन्यपापनाशः । तन्त्रतायाहेतुश्च । अदृष्टार्थैकजातीयकर्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धवैधहेतुभूतानामभेदे उद्देश्यविशेषाग्रह इति । एवञ्च स्नातोऽधिकारीभवति दैवे पैत्रे च कर्मणि । पवित्राणां तथा जाप्ये दाने च विधिदर्शिते इति विष्णूक्तम् । असात्वा नाचरेत् कर्मजपहोमादि किञ्चनेति दक्षोक्तञ्च क्रियाङ्गस्नानं कर्तृसंस्कारद्वारैव तद्दिनकर्तव्याशेषकर्मार्थं मेकमेव नतु प्रतिकर्मकर्तव्यम् । इति प्रायश्चित्ततत्त्वम् ॥

तन्त्रवापः । पुं । तन्त्रवाये ॥ तन्त्राणि वितन्यन्ते यत्र तत् तन्त्रम् । तद् वपति । टुवप० । कर्मण्यण् ॥

तन्त्रवायः । पुं । कुविन्दे ॥ वर्णसङ्करजातिरयम् ॥ अस्योत्पत्तिर्यथा । ताम्रकुट्टाद् ब्रह्मक्षत्रकन्यायां मणिकारः प्रजायते । मणिकारात् ताम्रकुट्ट्यां मणिबन्धो बभूव ह ॥ मणिबन्धात् मणिकार्यां तन्त्रवायाश्च जज्ञिरे । इति पराशरपद्धतिः ॥ तन्त्रो वितन्यन्ते यस्मिन् । तत् तन्त्रम् । तद् वयति । वेञ्० । ह्वावामश्चेति कापवादो ऽण् ॥

तन्त्रिका । स्त्री । गुडूच्याम् ॥ तन्त्र्यते । तन्त्रि० । ण्वुल् ॥ तन्त्र्येव वा । कन् । ह्रस्वः ॥

तन्त्रिपालकः । पुं । जयद्रथन्वमे ॥

तन्त्रीः । स्त्री । वीणागुणे ॥ अन्त्रतावाम् । गुडूच्याम् ॥ देहशिरायाम् ॥ नाड्याम् ॥ रज्ज्वाम् ॥ नदीविशेषे ॥ युवतीप्रभेदे ॥ वीणाप्रभेदे । तन्त्र्यते । तनि० । अवितॄस्तन्त्रिभ्य ईः ॥

तन्द्रा । स्त्री । निद्रायाम् ॥ आलस्ये । प्रमीलायाम् ॥ तस्या निदानं लक्षणञ्च । यथा । तमोवातकफात् तन्द्रेति ॥ इन्द्रियार्थेष्वसंवित्तिर्गौर-

वं जृम्भणं क्लमः । निद्रार्त्तस्येव यस्ये
हा तस्य तन्द्रां विनिर्दिशेदिति ॥ नि
द्रायां प्रबुद्धस्य क्लमाभावः । तन्द्रा-
यान्तु प्रबोधितस्यापि क्लम इत्यनयो
र्भेदः ॥ तत् द्राति । तत्पूर्व्वाद्द्रातेरा
तोऽनुपसर्गे कः । टाप् ॥ तत् द्रातिवा
। द्रा कुत्सायां गतौ । मृगय्वादीत्या
दिना तदोनान्तत्वं निपात्यते ॥ नि
द्रातन्द्रेतिवा निपात्यते ॥ तन्द्रा च
सुखस्य भार्य्या निद्रायाःकन्या प्रीतेर्भ
गिनी । यथा । निद्राकन्या च तन्द्रा
सा प्रीतिरन्या सुखप्रिये । याभ्यां व्याप्तं
जगत्सर्व्वं विधिपुत्रविधेर्विधाविति ॥

तन्द्रालुः । त्रि । निद्रालौ ॥ तत् द्राति
। द्रा० । स्पृहिगृहिपतिदयिनिद्रातन्द्रा
श्रद्धाभ्य आलुजिति तन्द्रीत्यादिषु आ
लुच् । तच्छब्दस्य नान्तत्वं समासस्य
निपात्यते ॥

तन्द्रिः । स्त्री । आलस्ये ॥ निद्रायाम् ॥ त
न्द्रायाः करणम् । तत्करोतीति णिच्
तस्मादच इः ॥ यद्वा । तन्द्रः सौत्रोधा-
तुः ॥ तस्मात् बहुलमन्यत्रापीत्यौ
णादिकः क्रिन् ॥

तन्द्रिका । स्त्री । तन्द्र्याम् ॥

तन्द्रितः । त्रि । अलसे ॥ तन्द्रा सञ्जाता
अस्य । ता० इतच् ॥

तन्द्री । स्त्री । अत्यन्तश्रमादिना सर्व-



न्द्रियासामर्थ्ये । प्रमीलायाम् ॥ त-
न्द्र्याः कृदिकारादिति ङीष् ॥ तत्
द्रातिवा । आतोऽनुपसर्गे कः । गौ० ङी
ष् ॥ तत् द्रातिवा । द्रा० । निद्रातन्द्रे
ति तदोनान्तत्वं निपात्यते ॥

तन्निष्ठः । त्रि । सर्व्वकर्म्मसन्न्यासेन ब्रह्मा
त्मैक्यविचारपरे ॥ तस्मिन्नेव ब्रह्मणि
सर्व्वकर्म्मानुष्ठानविघेयमनिष्ठया स्थि
तिर्यस्य सः ॥ तस्मिन्स्थिते ॥

तन्मयः । त्रि । तद्भावभाविते ॥ अभे
दे ॥

तन्मात्रम् । न । शब्दादीनां सूक्ष्मेषु ।
शब्दतन्मात्रादि स्पर्शतन्मात्राणीत्या
दिपदवाच्येषु ॥ नह्येषां शान्तादिवि
शेषोऽस्ति । यथोक्तं विष्णुपुराणे । त
स्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता
स्मृता । तन्मात्राण्यविशेषाणि अवि-
शेषास्ततो हि ते ॥ न शान्ता नापि घो
रास्ते न मूढाश्चाविशेषिण इति ॥ स्या
मात्रा यस्मिन् तत् । त्रि । तावन्मात्रे ॥

तन्वलुः । पुं । वायौ ॥ निशि ॥ तनोति
। तनु० । कृतन्यञ्जीत्यादिना वलुच्
॥ तन्वलुर्गर्जितमिति तन्वलुरत्र नि
रितिच मेदभाष्यम् ॥

तन्वयस्था । स्त्री । अभिव्यक्तस्यापि स
त्कार्य्येऽस्याभात कार्य्याजनने ॥

तन्विः । स्त्री । पृश्निपर्ण्याम् ॥

ने ॥ तपो नानशनात्परम् ॥ क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहने ॥ चित्तप्रसादहेतुभूते व्रतनियमोपासनादिकर्मणि ॥ काष्ठमौनाकारमौनादिव्रते ॥ कायेन्द्रियमनसां समाधाने ॥ शास्त्रीयमार्गेण कायेन्द्रियमनसां शोषणे ॥ कृच्छ्रचान्द्रायणप्राजापत्यादिरूपे प्रायश्चित्ते ॥ अग्न्याधिचितसमधिकारोहणादौ ॥ वानप्रस्थाश्रमधारणधर्मे ॥ तच्च शारीरादिभेदात्त्रिविधम्। यथा। देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ तदपि सात्त्विकादिभेदात् त्रिविधं यथा। श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः। अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ सत्कारमानपूजार्थं तपो दम्भेन चैव यत्। क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ मूढग्राहेणात्मनो यत् पीडया क्रियते तपः। परस्योत्सादनार्थं वा तत्तामसमुदाहृतमि-

ति ॥ मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमन्तपः ॥ ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्। वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम् ॥ तपनम् तप्यतेऽनेन वा। तप०। तपति ऐश्वर्ये वा। असुन् ॥

तपसः। पुं। चन्द्रे ॥ तपति। तप०। अत्यविचमितमिनमीत्यादिना असच् ॥ पक्षिणि ॥

तपस्तक्षः। पुं। इन्द्रे ॥ इति हेमचन्द्रः ॥

तपस्थः। त्रि। तपस्विनि ॥ सुपिस्थ इति कः। खर्परे शरि वा इति पाक्षिको विसर्गलोपः ॥

तपस्यः। पुं। फाल्गुनमासि ॥ अर्जुने ॥ तपसि साधुः। तत्र साधुरिति यत् ॥ कुन्दपुष्पद्रुमे ॥

तपस्या। स्त्री। नियमस्थितौ। व्रतचर्यायाम्। तपश्चर्यायाम् ॥ तपश्चरति तपस्यति। कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ्। तपस्यतीति तपस्या। अप्रत्ययादिति स्त्रियां अप्रत्ययः। टाप् ॥

तपस्वी। त्रि। तापसे। परिकाङ्क्षिणि ॥ कृच्छ्रचान्द्रायणादितपःप्रधाने नारदादौ ॥ अनुकम्प्ये। दीने ॥ प्रशस्तं तपोऽस्यास्तीति। तपःसहस्राभ्यामिति विनिः ॥ पुं। ना

रदे ॥ घृतकरञ्जे ॥ तपस्यामाछ इति गौडभाषा प्रसिद्धे मत्स्ये । चैत्रे ॥ इति राजनिर्घण्टः ॥

तपस्विनी । स्त्री । तपोयुक्तायाम् ॥ जटामांस्याम् ॥ कटुरोहिण्याम् ॥ महाश्रावणिकायाम् ॥ सन्तापयन्त्याम् ॥ कन्येभ्य इति ङीप् ॥

तपस्विपत्रः । पुं । दमनकवृक्षे ॥

तपात्ययः । पुं । वर्षाकाले ॥ तपस्यात्ययो यस्मिन् ॥

तपितः । त्रि । तप्ते । तपा इति भाषा ॥

तपिनी । स्त्री । जयन्तारे ॥

तपुः । न । सूर्य्ये ॥ अग्नौ ॥ शत्रौ ॥ तपति । तप० । अर्त्तिपृवपियजितनिधनितपिभ्यो नित् इत्युसिः । तपुषी तपूंषि ॥

तपोधनः । पुं । तापसे । तपस्विनि ॥ दमनकवृक्षे ॥ तपोधनं यस्य ॥

तपोधना । स्त्री । मुण्डीर्य्याम् ॥

तपोनिष्ठः । पुं । सदाध्ययननिष्ठे तापसविशेषे ॥

तपोयज्ञः । पुं । तपस्विनि ॥ कृच्छ्रचान्द्रायणादितपएव यज्ञो ऽस्य ॥

तपोवटः । पुं । ब्रह्मावर्त्तदेशे ॥

तपोवनम् । न । गुह्यकलोकवसफलके तीर्थविशेषे ॥

तप्तः । त्रि । प्रज्वलिते ॥ तप्यतेस्म । तप० । क्तः ॥ तापयुक्ते । सन्तापिते ॥

तप्तकम् । न । तवा इति लोकप्रसिद्धे पोलिकादिसाधने ॥

तप्तकुम्भः । पुं । नरकविशेषे ॥

तप्तकृच्छ्रः । पुं । व्रतविशेषे ॥ यथा । तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान् । प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः इति ॥ अथ पराशरोक्तो विशेषः ॥ यथा । षट्पलन्तु पिबेदम्भ स्त्रिपलन्तु पयः पिबेत् । पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते । इति ॥ पयोघृतमुदकं वायुं प्रतित्र्यहं पिबेत् तप्तकृच्छ्रः । इति गौतमः ॥

तप्तपाषाणकुण्डम् । न । नरकविशेषे ॥

तप्तवालुकः । पुं । नरकविशेषे ॥

तप्तमाषकम् । न । पुरुषमाषयोःपरीक्षाविशेषे ॥

तप्तमुद्रा । स्त्री । शरीरधार्य्याग्नितप्तधातुमयभगवदायुधचिह्ने ॥ यथा । आषाढशुक्लद्वादश्यां शरीरेशिशयिषोस्तति । वैष्णवःपारणं कृत्वा तप्तमुद्रास्तु धारयेत् ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैकान्तितद्वये । कुर्व्वन्त्यार्पिषं तप्तमुद्राभिर्देहं मङ्कयेत् ॥ * ॥ तप्तमुद्राधारणनिन्दयोक्ता वायुपुराणे । यस्मिन्नेव च सन्तापं चक्र

माद्याय वैष्णवः । धारयेत् सर्वथा धर्मं हरिसालोक्यसिद्धये ॥ ब्रह्माण्डे । कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम् । चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः ॥ नारदीयपञ्चरात्रे । ब्राह्मणस्तु षट्कोणं वलयञ्च यथायुतम् । हरेः सुदर्शनं तप्तं धारयेत् तद्विचक्षणः ॥ सौपर्णेच श्रीभगवद्गरुडसंवादे तप्तमुद्राप्रकरणे । गरुडस्य विशेषेण सर्वेषामप्ययं विधिः । विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च ॥ पाद्मे । अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम् ॥ किञ्च तत्रैवोत्तरखण्डे श्रीशिवोमासंवादे । भक्त्या चक्राङ्कनं कुर्याद्ब्राह्मणो मातुरूपये । कृताग्निं नैव सन्तप्य सर्वपापक्षये ॥ चक्रं वा शङ्खचक्रे वा तथान्यायुध निवा । धारयित्वैव विधिवद् ब्रह्मकर्मसमारभेत् ॥ * ॥ किञ्च तत्प्रसङ्ग एव । अधृत्वाविधिना चक्रं ब्राह्मणः प्राकृतो भवेत् । किञ्च । न तस्य किञ्चिदस्तीया दृपिकतु सहस्रिणः । सर्ववेदविदो वापि सर्वशास्त्रविशारदः । अधृत्वाविधिना चक्रं ब्राह्मणः पतितो भवेत् ॥ किञ्च । तप्तेनैवाङ्कनं कुर्याद्ब्राह्मणस्य विधा-नतः । श्रौतस्मार्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च ॥ हरेः पूजाधिकारार्थं चक्रं धार्यं विधानतः । वैष्णवत्वस्य सिद्ध्यर्थं भक्तिसिद्ध्यै विशेषतः ॥ किञ्च । उदकीतादिवद्धार्याः शङ्खचक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥ * ॥ अथ । देवैसुस्रोकमौले धर्माननुतिष्ठमानोऽग्निना चक्रं धत्ते । अग्निर्वैसंस्कारः सम्प्रदायो नेमिर्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीत्याद्याः श्रुतयो बहुभ्यवहाप्नताः सम्मिवेङ्कटाचार्यादिभिः । तद्विरुद्धानि पुराणवचनानि चैतानि गौरवभिया न लिखितानि । मन्वादिस्मृतिषु रामायणभारतादिष्वदृष्टत्वात् मन्वर्थविपरीतायाः स्मृतेरप्रशस्तत्वाच्च ॥

तप्तरूपकम् । न । रौप्ये ॥

तप्तसुराकुण्डम् । न । नरकान्तरे ॥

तप्तसूर्मीकुण्डम् । न । नरकविशेषे ॥

तप्ताङ्गारः । पुं । महानरकान्तरे ॥

तमः । पुं । तमोगुणे ॥ तमालवृक्षे ॥ स्वर्भानौ ॥ न । पाद्ये ॥ अन्धकारे ॥ ताम्यति । तमुग्लानौ । पचाद्यच् ॥

तमनम् । भावेघञ्वा । नोदात्तोपदेशस्येतिनवृद्धिः ॥

तमःपतिः । पुं । क्रियाहड्निरोद्धरि वा





मदेषमार्थे ॥

तमःप्रधानः । पुं । तमोगुणप्रधानमायोपाधिके परमात्मनि ॥ त्रि । तमोगुणप्रधाने ॥

तमःप्रभः । पुं । नरकविशेषे ॥

तमःप्रभा । स्त्री । नरकभूमिभेदे ॥

तमकः । पुं । श्वासरोगप्रभेदे ॥

तमङ्गकः । पुं । इन्द्रकोषे । मण्डपे ॥

तमतः । त्रि । तृषिते ॥ तृष्णापरे ॥ ताम्यति । समुत्काङ्क्षायाम् । भृम इषिपजीत्यादिना ऽतच् ॥

तमप्रभः । पुं । नरकविशेषे ॥

तमरम् । न । वङ्गे ॥ इति हेमः ॥

तमः । न । चक्षुर्वृत्तेर्निरोधके भावे राहिग्रासे ॥ शोके ॥ पापे ॥ कार्याकार्याविवेके ॥ अविद्यायाम् ॥ मन्दान्धकारे ॥ मोहान्धकारे ॥ विशेषदर्शनविरोधिदोषे ॥ सर्वदेहिनां मोहनेप्रकृतेर्गुणविशेषे ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नाति ॥ गुणत्रयात्मकमेव तमः इति साङ्ख्यापायैः । तमस्त्वयमविक्रियम् । यन्मोह हेतु तन्मोहात्मकं तमः । भेदस्तमसोऽष्टविधः । तमसोऽविद्याया अष्टविधो भेदः । अष्टसु अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरविद्या तमस्तस्याष्टविधविषयत्वादष्टविधत्वम् ॥ मले ॥ ताम्यति-ताम्यतेऽनेनवा । तमुग्लानौ । असुन् ॥ पुं । न । विधुन्तुदे ॥

तमसम् । न । अन्धकारे ॥ ताम्यति ग्लानिं प्राप्नोत्यनेनास्मिन्वा । तमु° । अत्यविचमितमीत्यादिना ऽसच् ॥

तमसा । स्त्री । नदीविशेषे ॥

तमस्ततिः । स्त्री । ध्वान्ते । अन्धकारसमूहे ॥ तमस ततिः ॥

तमस्विनी । स्त्री । क्षपायाम् । रात्रौ ॥ तमो ऽस्त्यस्याम् । अस्मायामेधास्रजो विनिः ॥ हरिद्रायाम् ॥

तमा । स्त्री । रजन्याम् ॥ तमालद्रुमे ॥ ताम्यत्यस्याम् । तमु° । अच् । टाप् ॥

तमालः । पुं । तिलके । पुण्ड्रे ॥ खड्गे । अर्सौ ॥ वरुणद्रुमे ॥ तापिञ्छे । कालस्कन्धे ॥ तमालः श्यामलदेशो, दावविस्फोटहृत्पुनः ॥ कृष्णखदिरे ॥ ताम्यति । तमु° । तमिविशिविडीत्यादिना कालन् ॥ न । पत्रके । तेजपात इतिभाषा ॥

तमालकम् । न । सुनिषण्णशाके ॥ पत्रके ॥ पुं । न । तमालद्रुमे ॥

तमालपत्रम् । न । तापिञ्छ । कालस्कन्धे ॥ तिलके ॥ पत्रके । तेजपात इतिभाषा ॥ तमालस्य पत्रमिव तदा

कुतित्वात् ॥

तमालिका । स्त्री । ताम्रवल्ल्याम् ॥ भूम्यामलक्याम् ॥ ताम्रलिप्तदेशे ॥

तमाली । स्त्री । ताम्रवल्ल्याम् ॥ वरुणवृक्षे ॥

तमिः । स्त्री । रात्रौ ॥

तमिस्रम् । न । कोपे ॥ तिमिरे । अन्धकारे ॥ तमोऽस्त्यत्र । मत्वर्थीयो निर्देशः । ज्योत्स्नातमिस्रेति साधुः ॥ तमिस्रास्त्यस्य येनाद्योतित । अर्थे चाप् ॥

तमिस्रपक्षः । पुं । कृष्णपक्षे ॥

तमिस्रा । स्त्री । कृष्णपक्षनिशायाम् ॥ भूतरात्रौ ॥ दर्शयामिन्याम् ॥ तमस्तती । तमसां समूहे ॥ तत्रत्यमयभूतानि तमांसि विद्यन्ते । तमोबहुत्वमस्त्यस्याम् । ज्योत्स्नातमिस्रेति तमसउपधाया इत्वं प्रत्ययश्च निपातितः । टाप् ॥

तमी । स्त्री । यामिन्याम् । रात्र्याम् ॥ साम्रवल्ल्याम् । तमु । वृन् । कृदिकारादितिङीष् ॥ हरिद्रायाम् ॥

तमोगुणः । पुं । विषादात्मके । विषादे । मोहस्वरूपे ॥

तमोघ्नः । पुं । सूर्ये ॥ वह्नौ ॥ चन्द्रे ॥ बुद्धे ॥ शङ्करे ॥ विष्णौ ॥ तमो हन्ति । हन० । अमनुष्यकर्तृके चेति टक् ॥

तमोज्योतिः । पुं । खद्योते ॥ तमसि ज्योतिरस्य ॥

तमोनुत्-द् । पुं । चन्द्रे ॥ सूर्ये ॥ अग्नौ ॥ दीपे ॥ तमो नुदति । णुद० । क्विप् ॥

तमोनुदः । पुं । प्रकृतेः प्रेरके स्वयम्भुवि ॥ आदित्ये ॥

तमोपहः । पुं । सहस्रांशौ ॥ मृगाङ्के ॥ वह्नौ ॥ तमोऽपहन्तीति विग्रहे अपेक्षितमसोरित्यनेन अपपूर्वाद्धन्तेस्तमसिकर्मोपपदे कर्तरि डः ॥ जिने ॥

तमोभित्-द् । पुं । तमोनुदर्थे ॥ खद्योते ॥ तमो भिनत्ति । भिदिर्० । क्विप् तु कौ ॥

तमोमणिः । पुं । खद्योते ॥ तमसो मणिरिव ॥ गोमेदकमणौ ॥

तमोलिप्ती । स्त्री । तमोलुक इति नाम्ना प्रसिद्धे देशे । ताम्रलिप्ते । वेलाकूले ॥

तमोविकारः । पुं । रोगे ॥

तमोविशालः । पुं । मूलतःसर्गे पश्वादिस्थावरान्ते ॥ मूलतः सर्गो यस्मिन् तमोबहुलः ॥

तमोहरः । पुं । चन्द्रे ॥ न । ज्योतिषि ॥ निर्गुणनामभागोऽच सत्त्वभागेऽद्भुतानिवा । मध्येनाथः स्वयं ज्योतिरस्यो

तिमिंतमोऽपहरम् ॥ त्रि । तमसोऽपहारकर्त्तरि ॥ हरति । हृञ् । अच् । तमसोऽपहरः ॥

तम्पा । स्त्री । } गवि । सौरभेय्याम् ॥
तम्बा । स्त्री । } इति हेमचन्द्रः ॥

ताम्बिका । स्त्री । तम्बायाम् ॥

तम्बी । स्त्री । तयी इति भाषाप्रसिद्धे कान्दविकभाण्डे ॥

तयः । पुं । रक्षके ॥ तयति । तय रक्षणे गतौ च । अच् ॥

तरः । पुं । तरणे ॥ न । लोभे ॥ तरति । तॄ० । अप् । तरणं वा । ऋदोरप् ॥

तरक्षः । पुं । तरक्ष इति प्रसिद्धे तरक्षौ ॥

तरक्षुः । पुं । मृगादने । तेंदुवाघ इति तरख इत्यादिभाषाख्याते व्याघ्रभेदे ॥ तरं गतिं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् । मित० डुः ॥

तरक्षुकः । पुं । तरक्षौ ॥ संज्ञायां कन् ॥

तरङ्गः । पुं । वायुना नद्यादिजलस्य तिर्यगूर्ध्वगमने । भङ्गे । ऊर्म्याम् । लहर ढेउ इत्यादि भाषा ॥ तरति । तॄ प्लवनसन्तरणयोः । तरत्यादिभ्यश्चेत्यङ्गच् ॥ वस्त्रादिसमुत्काले ॥

तरङ्गिणी । स्त्री । नद्याम् । तटिन्याम् ॥ तरङ्गाः सन्त्यस्याम् । अत इनिः । पुष्करादित्वादिनिर्वा । ऋन्नेभ्यो ङीप् ॥

तरङ्गितः । त्रि । भङ्गिमति । सञ्जाततरङ्गे ॥ तरङ्गाः सञ्जाता अस्य । ता० इतच् ॥ यद्वा । तरङ्गवत्कृतः अस्मात् तत्करोतीतिणिच् कर्मणि क्तः । णाविष्ठवद्भावान्मतुपो लुक् ॥

तरणः । पुं । भेलके । उडुपे । डेंगा इति भाषा ॥ स्वर्गे ॥ न । पारगमने । सन्तरणे ॥ प्लवनपूर्वकदेशान्तरगमने ॥

तरणिः । पुं । द्युमणौ । सूर्ये ॥ भेलके ॥ अंशौ । किरणे ॥ ताम्रे ॥ स्त्री । नौकायाम् ॥ घृतकुमार्याम् ॥ तरन्त्यनेन संसारम् । तरन्त्यनया वा । तॄ० । अर्त्तिसृधृधमीत्यादिना तरतेरनिः ॥

तरणिपेटकः । पुं । काष्ठाम्बुवाहिन्याम् ॥

तरणिरत्नम् । न । माणिक्ये ॥

तरणी । स्त्री । नावि ॥ घृतकुमार्याम् ॥ पद्मचारिण्याम् ॥ कृदिकारादिति ङीष् ॥

तरण्डः । पुं । न । बडिशीसूत्रबन्धनकाष्ठे । छड इति लगन इति च भाषा ॥ प्लवे ॥ नौकायाम् ॥ कुम्भतुम्बीरम्भादिकप्लवे ॥ पुं । देशविशेषे ॥ तरति । तॄ० । बाहुलकादण्डन् ॥

तरण्डपादा । स्त्री । } नावि ॥ इति शब्दरत्नावली ॥
तरण्डा । स्त्री । }
तरण्डी । स्त्री । }

ते । कम्पिते । धूते । प्रेङ्खिते । त्रुटिते । ता० इतच् ॥

तरवारिः । पुं । तरवार इतिप्रसिद्धे खड्गे ॥ इतिहेमचन्द्रः ॥ चतुरङ्गारिपोः [illegible] न्यवराजस्य ॥ विशेषस्त्वस्यान्यत्र खड्गपरीक्षायांयुक्तिकल्पतरौ चद्रष्टव्यः ॥

तरः । न । बले ॥ रोगे ॥ जवे । वेगे ॥ सवेगगतिवचने ऽस्यप्रयोगः ॥ तीरे ॥ कपौ । प्लवगे ॥ वेगाख्यगुणे ॥ तरन्त्यनेन । तॄ० । असुन् ॥

तरसम् । न । मांसे ॥ तरोबलमस्त्यस्मिन् । अर्शआद्यच् ॥

तरसा । अ । झटित्यर्थे । शैघ्र्ये ॥

तरस्थानम् । न । घट्टे ॥ तरस्थस्थानम् ॥

तरस्वी । पुं । गरुडे ॥ वायौ ॥ त्रि । शूरे ॥ वेगिनि ॥ तरोबलं वेगोवाऽस्त्यस्मिन् । अस्मायामेधास्रजोविनिः ॥

तरान्धुः । पुं । नौविशेषे । डोङ्गे । वहने ॥

तरालुः । पु । नौकाविशेषे ॥

तरिः । स्त्री । नौकायाम् ॥ वस्त्रादीनां पेटके ॥ दशायाम् ॥ तरन्त्यनया । तॄ० । अच्प्रत्ययः ॥

तरिकः । पुं । प्लवे । भेलके ॥

तरिका । स्त्री । नावि ॥

तरिणी । स्त्री । नौकायाम् ॥

तरिता । स्त्री । तर्जन्याम् ॥ गांजा इतिभाषाप्रसिद्धमङ्गर्याम् ॥ यथा । संविदा कालकूटश्च ताम्रकूटश्च धुस्तूरम् । अहिफेनं खर्जुरसं तारि [illegible]

तरिरथः । पुं । अरित्रे ॥ इतिहारावली ॥

तरी । स्त्री । वस्त्रादिपेटके ॥ द्रोण्याम् ॥ वेलायाम् । नावि ॥ गदायाम् ॥ धूमे ॥ दशायाम् ॥ तरन्त्यनया । तॄ । अपः । कृदिकारादिति ङीष् ॥ पचादेराकृतिगणत्वात्पाठात् ङीप् वा ॥

तरीः । स्त्री । नावि ॥ तरन्त्यनया । तॄ० । अवितॄस्तृतन्त्रिभ्यईः ॥

तरीषः । पुं । स्वर्गे ॥ महोदधौ ॥ शोभनाकारे ॥ भेले ॥ व्यवसाये ॥ समर्थे ॥ वोधे ॥ तरन्ति येन । तॄ० । तॄभूभ्यामीषन् ॥

तरीषी । स्त्री । शक्रकन्यायाम् ॥

तरुः । पु । आगमे । द्रुमे ॥ तरन्ति नरकमनेन रोपकाः । तॄ० । भृमृशीतॄचरीति उप्रत्ययः ॥

तरुकुषिः । पुं । पक्षिविशेषे । वागुदे । वागुड इतिभाषा ॥

तरुखण्डः । पु । तरूणां समूहे ॥ इत्यादिश्च खण्डः ॥

तरुजीवनम् । न । द्रुममूले ॥

तरुणः । पुं । एरण्डे ॥ स्थूलजीरके ॥ न । कुब्जपुष्पे ॥ त्रि । यूनि । जाततारुण्ये ॥ नूतने ॥ तरति । तॄ० । चोरस्व [illegible]

तरुणज्वरः । पुं । सप्ताहावधिज्वरे ॥ यथा । आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥

तरुणदधि । न । पञ्चदिनातीतदधिनि ॥

तरुणी । स्त्री । युवत्याम् । द्वितीयवयःप्राप्तायां नार्याम् ॥ आषोडशाद्भवेद्बाला तरुणी त्रिंशता मतेत्युक्तः ॥ तरति । तॄ० । चोरस्वोषेत्युनन् । वयस्य चरम इति ङीप् । नम्नकोकगिति वा ॥ गौरादित्वात् ङीष् वा । स्वरे विशेषः ॥ घृतकुमार्याम् । सहायाम् ॥ दन्तीवृक्षे ॥ चीडानामगन्धद्रव्ये ॥ सेवतीइति भाषाप्रसिद्धे पुष्पे । सहायाम् । गन्धाढ्यायाम् ॥

तरुणीकटाक्षमालः । पुं । तिलकवृक्षे ॥

तरुतूलिका । स्त्री । } वादुल्याम् । वा
तरुदूषिका । स्त्री । } दुड पचीइतिभाषा ॥

तरुनखः । पुं । कण्टके ॥

तरुभुक् । पुं । वन्दाके ॥

तरुमृगः । पुं । वानरे ॥

तरुरागः । पुं । नवीनपल्लवे । किसलये ॥

तरुराजः । पुं । तालद्रुमे ॥

तरुरुहा । स्त्री । }
[illegible] । } वन्दाके ॥

तरुवल्ली । स्त्री । जतुकालतायाम् ॥

तरुविलासिनी । स्त्री । नवमल्लिकायाम् । सप्तलालतायाम् ॥ तरोर्विलासिनी ॥

तरुशायी । पुं । खगे । पक्षिणि ॥

तरुसारः । पुं । कर्पूरे ॥ इतिशारावली ॥

तरुस्था । स्त्री । वन्दाके ॥

तरूटः । पुं । उत्पलकन्दे ॥

तर्कः । पुं । आकाङ्क्षायाम् ॥ वितर्के । व्यभिचारशङ्कानिवर्तके ॥ स च पञ्चविधः । यथा । आत्माश्रयः १ । अन्योन्याश्रयः २ । चक्रकः ३ । अनवस्था ४ । प्रमाणबाधितार्थकः ५ इति ॥ ऊहे । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थे ऊहे ॥ अनुमाने ॥ व्याप्यारोपेण व्यापकारोपे । व्याप्यारोपात् व्यापकप्रसञ्जने । यथा । वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात् ॥ मीमांसादितर्कशास्त्रे । आगमाविरोधिन्यायेन आगमार्थपरीक्षणे । विचारे ॥ बुद्धिसाध्ये । स्वबुद्ध्यभ्यूहसाध्ये ॥ हेतुदृष्टान्तात्मनि ॥ तर्कणम् ।

तर्कभाषार्थप्रचुरो दैवं सटपुटेतिदण्डके पठितः । भावेघञ् ॥ तर्कोऽर्थवाद इति कर्कोपाध्यायः । यथा । अक्ताः शर्करा उपदधातीति विधिः श्रूयते । तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते । अतस्तर्कोऽर्थवादः ॥ तर्को मीमांसेति कल्पतरुकारः ॥ * ॥ अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । मा ऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः ॥

तर्ककः । पुं । याचके ॥ तर्ककारके ॥

तर्कणम् । क्लि । उत्प्रेक्ष्यमाणे ॥

तर्कविद्या । स्त्री । आन्वीक्षिकाम् ॥ तर्कस्य न्यायस्य विद्या ॥ तथाहि । चतुर्विधेभ्यः पृथिव्यादिपरमाणुभ्यो विश्वमुत्पद्यते स एवोपादानभूता नान्यत् । निमित्तकारणमीशः कर्तृत्वात् कुलालवदिति तर्कविद्यायाः प्रमेयम् ॥ * ॥ अहो दुर्मतयः सर्वा पुरुषस्य निरूपणे । तर्कविद्या न जानन्ति प्रमेयं पुरुषोत्तमम् ॥ अप्रमेयम् अभिन्ननिमित्तोपादानत्वात् । यतएतदपि न जानन्ति सर्वं प्रमेयजातं घटादिवत् कार्यमिति परमाणूपादानकारणमप्यपेक्षणीयमेवेति । परमाणूनां प्रमेयत्वहेतुना कार्यत्वसिद्धौ तदुपादानमपेक्षणीयम् । एवं तत्रतत्रापि अनवस्था स्यात् । अतोऽप्रमेयः परमात्मैवोपादानं नान्यदन्यत्किञ्चित् तर्कं समपेक्षणात् । तथाहि । अन्यः पीतकराम्बरोचनगरस्यमेकस्मात्रादिवत् कार्यं मेयमसत्यमेतत् । दुष्टयवंसादियुक्तं जगत् । मुक्तौ रूप्यमिव स्वजीवभुजङ्गः स्वात्मावबोधे हरौ वचाते प्रभवप्रलयात्मयते तज्ज्ञापने धीरवादिति प्रबोधचन्द्रोदयः ॥

तर्कारी । स्त्री । जयाद्रुमे । अरणी इति भाषा । शाक्षी इति कश्चित् । तर्कयति । तर्क गतौ । कर्मण्यण् । ङीप् । गौरादित्वान् ङीष् वा ॥

तर्किणः । पुं । } दद्रुमे ॥ इति रत्न-
तर्किलः । पुं । } माला ॥

तर्की । त्रि । तर्कविशिष्टे । मीमांसके ॥ यथा । त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरेति मनुः ॥

तर्कुः । पुं । कपालनालिकायाम् । तर्कुयाम् ॥ कृन्तत्यनेन । कृती वेष्टने । कृतेराद्यन्तविपर्ययश्चेष्यु. । ककारतकारयोर्विनिमयः । तकुआ इति भाषा ॥

तर्कुटम् । न । कर्त्तने । कातना इति भाषा ॥ इति त्रिकाण्डशेषः ॥

तर्कुटी । स्त्री । तर्कुः ॥ इति हारावली ॥

तर्कुपिण्डः । पुं । तर्कुस्थितमृत्पिण्डे । वर्त्तुलायाम् ॥ इति हारावली ॥

तर्कुपीठी । स्त्री । तर्कुपिण्डे ॥ इति हारावली ॥

तर्कुलासकः । पुं । तर्कुभ्रमणयन्त्रे । जोले । चरखा इतिभाषा ॥ इ०शा० ॥

तर्कुशाणः । पुं । तर्कुघर्षणपाषाणे । जामरे । सामके ॥ इति त्रिकाण्डशेषः ॥

तर्क्षुः । पुं । तरक्षुके ॥ इत्यम० ॥

तर्क्ष्यः । पुं । यवक्षारे ॥

तर्जनम् । न । भर्त्सने ॥ भयजनने ॥ तर्ज० । ल्युट् ॥

तर्जनी । स्त्री । प्रदेशिन्याम् । अङ्गुष्ठनिकटाङ्गुलौ ॥ तर्ज्यतेऽनया । तर्जभर्त्सने । करणे ल्युट् ॥

तर्जिकः । पुं । देशविशेषे । तायिके ॥

तर्जितः । त्रि । भर्त्सिते ॥ तर्ज्यते स्म । तर्जभर्त्सने । क्तः ॥

तर्णः । पुं । वत्से ॥ तृणोति तर्णोति वा । तृणु अदने । अच् ॥

तर्णकः । पुं । गोपुत्रे । वत्से । वच्छा इतिभाषा ॥ सद्योजातस्तु तर्णकः ॥ तृणोति तर्णोति वा । तृणु० । ण्वुल् ॥

तर्णिः । पुं । सूर्ये ॥ प्लवे ॥ इतिशब्द० ॥

तर्त्तरीकम् । न । वहित्रे । पोते । जहाज इतियवनभाषा ॥ त्रि । पारगे ॥

तर्द्दः । त्रि । हिंसके ॥ तर्द्द हिंसायाम् । अच् ॥

तर्द्दूः । पुं । दारुनिर्म्मितदर्व्याम् । दारुहस्तके । डोर इतिभाषा ॥ अयन्त रत्नोपकरणे ॥ तरति० । तॄ० । बो-दुट्पेश्यूर्डागमश्च ॥ तर्द्दति । हन्ति वा । तर्द्द० । उणादिर् हिंसानादरयोर्वा । बाहुलकात् ऊः ॥

तर्पणम् । न । तृप्तौ ॥ प्रीणने ॥ यज्ञकाष्ठे ॥ महायज्ञविशेषे । पितृयज्ञे । पितृद्देश्याम्बुदाने । पितॄणां कव्यवाहादीनाञ्च विधिना जलाद्यदाने न तृप्तिसम्पादने ॥ तद्विधिम् । [illegible]धानमन्त्रश्च ॥ तत्राद्यं यथा । तर्पणञ्च शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः । देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥ विधवामधिकृत्य । तर्पणं प्रत्यहं कार्यं भर्त्तुः कुशतिलोदकैः । तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकमिति ॥ * ॥ द्वितीयं यथा । नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते । तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥ तर्पणाकरणे दोषो यथा । नास्ति-

काभार्या सुतचापि न तर्पयति वैसु
नः। पिबन्ति लेहनिःस्रावं पितरो
ऽस्य जलार्थिन इति ॥ जीवत्पितृ-
कस्य तन्निषेधो यथा। दर्शस्नानं गया
श्राद्धं तिलैस्तर्पणमेव च। न जीव
त् पितृको भूप कुर्यात् कृत्वाघमा
प्नुयादिति ॥ तृप्तीकरणे। भावेल्युट्॥
तर्पणी। स्त्री। गुरुस्कन्धद्रुमे॥
तर्पणेच्छुः। पुं। भीष्मे॥ त्रि। तर्पणा
काङ्क्षे॥
तर्पिणी। स्त्री। चारव्याम्। पद्मचारि
ण्यामोषधौ॥
तर्म्म। न। यूपाग्रे॥ तरति। तॄ०। सर्व
धातुभ्योमनिन्॥
तर्द्दः। पुं। वत्सरे॥ चक्रमर्द्दे॥
तर्षः। पुं। लिप्सायाम्॥ उदन्यायाम्
॥ भेलके॥ तर्षणम्। ञितृष पिपा
सायाम्। घञ्॥ तरत्यनेन। तॄ०।
वृतृवदीतबेः सः।
तर्षणम्। न। तृषि। पिपासायाम्॥
ञितृष०। ल्युट्॥
तर्षितः। त्रि। सतृष्णे। तृषिते।
तिसाया इति भाषा॥
तर्हि। अ। विशेषे॥ तदार्थे॥ तस्मिन्
काले। अनद्यतने र्हिलन्यतरस्याम्॥
तलः। पुं। तालमहीरुहे॥ चपेटे॥ त्स
रौ॥ सव्येन पाणिना तन्त्रीघाते॥

आधारे॥ स्वभावे॥ पुं। न। अधो
भागे। अनूर्द्ध्वे। तलेइतिनीचेइतिच
भाषा॥ स्वरूपे॥ यथा। महीतल
म्॥ न। कानने। वने॥ कार्यबीजे
॥ चाखवाले। गर्त्ते॥ पादतलस्तम
ध्ये॥ स्त्री। न। ज्याघातवारणे॥
तलति। तलप्रतिष्ठाम्। पचाद्यच्॥
तलकम्। न। पुष्करिण्याम्। तलाव
इतिहिंदूभाषा॥ इतिहारावली॥
तलप्रहारः। पुं। चपेटे। चर्पटि। त-
लाघाते॥
तलसारकम्। न। अश्वस्य वक्षस्स्थबन्ध
नरज्जौ। वक्षपट्टे। तङ्गइतिभाषा॥
तलहृदयम्। न। पादतलस्यमध्ये॥
तला। स्त्री। गोधायाम्। ज्याघात
वारणे॥
तलाची। स्त्री। नखनिर्मितेकटे॥
तलातलम्। न। अतलादिपुषत्वमे ऽ
धोभुवने॥
तलिका। स्त्री। वक्षपट्टे। तलसारके॥
तलित्। स्त्री। विद्युति। तडिति॥
लडयोरैकस्मरणात्वर्णविपर्ययः॥
तलितः। त्रि। आज्यादिभृष्टमांसादौ॥
तलितमांसम्। न। पक्वमांसप्रभेदे।
भृष्टमांसे॥ यथा। शुद्धमांसविधाने
न मांसं सम्यक् प्रसाधितम्। पुन-
राज्ये सम्भृष्टं तलितं प्रोच्यते बु-

धैः ॥ तल्लितं वंशमेधाधिमांसौव: युक्तद्दिकृत् । तल्पं लघुसुल्लिग्धं रो चनं दृढताकरम् ॥

तल्लिमः । त्रि । विरले ॥ स्तोके ॥ स्वच्छे ॥ दुर्लले ॥ न । शय्यायाम् ॥ तल्पति तल्प्यते वा । तल० । तल्लि । पुल्लिभ्यामिनन् ॥

तल्लिमम् । न । कुट्टिमे ॥ तल्पे ॥ च-न्द्रहासे ॥ विताने ॥

तल्लुनः । पुं । पवने ॥ यूनि ॥ तरति । सू० चोरप्रत्नोने लुनन् ॥

तल्लुनी । स्त्री । युवत्याम् । तरुण्याम् ॥ वयस्यचरम इति नमूलाभिति वा ङीप् । गौ० ङीप् वा ॥

तल्लेचयः । पुं । शूकरे ॥ इतिशब्दाऽ ॥

तल्लोदरी । स्त्री । भार्यायाम् ॥

तल्लोद्दा । स्त्री । नद्याम् ॥

तल्कम् । न । वने ॥ इतित्रिकाण्डशेषः ॥

तल्पम् । न । अट्टे ॥ कलत्रे । दारेषु ॥ शय्यायाम् ॥ तल्प्यतेऽस्मिन् ॥ तल० । खष्पशिल्पशष्पेतिसाधु ॥

तल्पकीटः । पुं । मत्कुणे ॥

तल्पनम् । न । करिपृष्ठे ॥ पृष्ठवंशस्य मांसे ॥

तल्लः । पुं । जलाधारविशेषे । तलाव इति हिन्दूभाषा ॥ न । विले । आल



वाले ॥ त्रि । तस्मिन् लीने ॥

तल्लजः । पुं । मतल्लिकायाम् । प्रशस्ते ॥ लजति । लजकान्तौ । पचाद्यच् । तल्लजः । अयमनलङ्लिङ्गः समासे उत्तरपदे भवति । यथा । प्रशस्ताकुमारी कुमारीतल्लजः । तस्य अप्रत्यक्षशब्दत्वात् प्रशंसावचनैश्चेतिसमास. ॥

तल्लिका । स्त्री । कुञ्चिकायाम् । कूञ्चिकायाम् । कूंची ताली इत्यादि भाषा ॥

तल्ली । स्त्री । तरुण्याम् ॥

तवक्षीरम् । न । पयःक्षीरे । यवजे । तीखुर इतिभाषा ॥ तवक्षीरंगुरुमधुरंशिशिरं दाहपित्तहृत् । क्षयकास कफश्वासास्रदोषं हन्तिचसेवनात् ॥

तवक्षीरी । स्त्री । गन्धपत्रायाम् ॥

तवराजः । पुं । यवासशर्करायाम् ॥

तवराजोद्भवखण्डः । पुं । यवासशर्करा भवखण्डे । सिद्धमोदके ॥

तवर्गः । पुं । तादिपञ्चवर्णेषु ॥

तवर्गीयः । पुं । तवर्गभवेवर्णे ॥ वर्गान्ताच्चेति ठक् ॥

तविषः । पुं । स्वर्गे ॥ महोदधौ ॥ तव्यतेतिसौत्रोधातुः । तवेर्णिद्वेतिटिषच् ॥ सुवर्णे ॥ शोभनाकृतौ ॥ व्यवसाये ॥ भेले ॥

तविषी । स्त्री । अर्ककन्यायाम् ॥ पृथिव्याम् ॥ नद्याम् ॥ वैदिकनिघण्टौ तु वलेपि ॥ टित्त्वात् ङीप् ॥

तष्टः । त्रि । तनूकृते ॥ तक्ष्यते स्म । तक्षू० । क्तः । क्षोरितिकलोपेष्टुत्वम् ॥

तष्टिः । स्त्री । काष्ठतक्षणे ॥

तसरः । पुं । वस्त्रजात्यन्तरे । टसर इति भाषा ॥ त्रसवेष्टने । तसनी इति गौडभाषाप्रसिद्धे तन्त्रवायोपकरणे ॥ तनोति । तनु० । तनुपृष्ठ्याक्षरन् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

तस्करः । पुं । चोरे ॥ द्विविधास्तस्करान् विद्यात् परद्रव्यापहारकान् । प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः । प्रच्छन्नवञ्चकास्त्वेते येस्तेनाटविकादयः ॥ तत्करोति । दिवाविभेत्यत्र किंयत्तद्बहुष्विच्चयप्रत्ययः ॥ तद्बृहतोः करपत्योरिति सुट् तलोपौ ॥ दमनवृक्षे ॥ वृक्षशाके ॥

तस्करस्नायुः । पुं । काकनासालतायाम् ॥

तस्करी । स्त्री । कोपनायां नार्याम् ॥

तस्थिवान् । त्रि । स्थितिमति । स्थिते ॥ ष्ठा० । छन्दसि लिट् । द्वित्वादिकार्यम् । लिटः कानजादेशः ॥ क्वसु- श्चेति कसुर्वान्त्योर्वा ॥

तस्थुः । पुं । स्थावरे ॥

ताच्छील्यम् । न । नियततत्स्वभावतायाम् ॥ भावेष्यञ् ॥

ताटङ्कः । पुं । तालपत्रे । कर्णिकायाम् ॥ ताडङ्के ॥ गुर्वक्षरे ऽ ॥

ताटस्थ्यम् । न । उदासीनत्वे ॥ निकटस्थत्वे ॥

ताडः । पुं । ताडने ॥ घोषे । शब्दे ॥ मुष्टिमेयतृणादिषु ॥ अद्री ॥

ताडका । स्त्री । राक्षसीविशेषे ॥

ताडकान्तकः । पुं । श्रीरामे ॥

ताडकाफलम् । न । स्थूलैलायाम् ॥

ताडकेयः । पुं । मारीचराक्षसे ॥ ताडकाया अपत्यम् । स्त्रीभ्योढक् ॥

ताडङ्कः । पुं । कर्णभूषायाम् । कर्णाभरणे । कानतडङ्का इति भाषा ॥

ताडनम् । न । आघाते ॥ यथा । शतापराधे वनिता पुष्पेणापि न ताडयेत् । दोषान्न गमयेत् स्त्रीणां गुणानेव प्रकाशयेदिति मान्त्रिकाः ॥ लालने बहवो दोषाः ताडने बहवो गुणाः । तस्मात् पुत्रञ्च शिष्यञ्च ताडयेन्नतु लालयेत् ॥

ताडनी । स्त्री । अश्वताडनयष्ट्याम् । कशायाम् ॥ ताड्यतेऽनया । तड आघाते । चुरादिः । ल्युट् । ङीप् ॥

ताडपत्रम् । न । ताडङ्के ॥

ताडागम् । न । तडागोदके ॥ यथा । प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तडागः स्यात्ताडागंतज्जलं स्मृतम् ॥ ताडागमुदकं स्वादु कषायं कटुपाकि च । वातलं बहुविष्टम्भ मधुकृत्पित्तकफापहम् ॥ तडागस्येदम् । अण् ॥

ताडिः । स्त्री । ताडीद्रुमे । ताडियात इतिगौड भाषाप्रसिद्धे ॥

ताडी । स्त्री । पत्रद्रुमे । ताडियात इतिगौडभाषा ॥ आभरणविशेष इतिदुर्गसिंहः ॥

ताड्यमानः । त्रि । पटहादिवाद्ये ॥ त्रि । तत्कालताडिते । हन्यमाने । ताडनयुक्ते ॥

ताण्ड्यः । पुं । मुन्यन्तरे ॥

ताण्डवः । पुं । न । लास्ये । नृत्ये ॥ पुंनृत्यं ताण्डवमाहुः स्त्रीनृत्यं लास्यमुच्यते ॥ तण्डुना प्रोक्तम् । तेनप्रोक्तमित्यण् ॥ तृणान्तरे ॥ उद्धतनृत्ये ॥ त्रिमुनि (॥।) ॥

ताण्डवतालिकः । पुं । नन्दिनि । शिवद्वारस्थे ॥

ताण्डवप्रियः । पुं । शिवे ॥ त्रि । नृत्यप्रिये ॥ ताण्डवं प्रियं यस्य ॥

ताण्डवितम् । न । नर्त्तिते ॥

ताण्डि । न । नृत्यशास्त्रे ॥

ताण्डी । पुं । साम्नः शाखाविशेषाध्यायिनि ॥

तातः । पुं । जनके । पितरि ॥ अनुकम्प्ये ॥ त्रि । पूज्ये ॥ चतुष्कले (ऽ॥) आदिगुरौ ॥ तनोति । तनु० । दुतनिभ्यां दीर्घश्चेति क्तः । अनुदात्तेति नलोपः ॥

तातगुः । पुं । बृहत्ताते । काका चाचा इतिभाषा ॥ त्रि । जनकस्यहिते ॥

तातजनयित्र्यौ । स्त्री । मातापित्रोः ॥ द्विवचनान्तोयम् ॥

ताततुल्यः । त्रि । पितृसमे । मनोजवसे ॥ तातेन तुल्यः ॥

तातनः । पुं । खञ्जने ॥

तातलः । पुं । व्याधि । रोगे ॥ पाके ॥ लोहकूटे ॥ मनोजवे । ताततुल्ये ॥ त्रि । तप्तमाचे ॥

तातिः । पुं । पुत्रे ॥ इतिजटाधरः ॥

तात्कालिकः । पुं । तत्कालभवे ॥

तात्कालिकविकारः । पुं । चित्तासाध्ये भावे ॥ तात्कालिकविकारः स्वेदि- लासेऽङ्कक्रियादिषु ॥

तात्पर्य्यम् । न । तत्परतायाम् ॥ वक्तुरिच्छायाम् ॥ अभिप्राये ॥ तत्परस्य भावः । ष्यञ् ॥

तादर्थ्यम् । न । तदर्थत्वे । तस्मैइदम्

दोषसारकमिति ॥

तापः । पुं । सन्तापे ॥ कृच्छ्रे ॥ तपनम् । तपसन्तापे । घञ् ॥

तापकः । पुं । ज्वरे ॥ त्रि । तापकृति ॥ तापयति । तप० । ण्वुल् ॥

तापत्यः । पुं । अर्जुने ॥ इति पु० ॥

तापत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रये ॥ आध्यात्मिकादिभेदेन ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यःप्राप्नोत्यात्यन्तिकं फलम् ॥ तापानां त्रयम् ॥

तापनः । पुं । सूर्ये ॥ कामबाणे ॥ असुरविशेषे ॥ सूर्यकान्तमणौ ॥ त्रि । तापके । तापयितरि ॥ तापयति । तप० । कर्त्तरिल्युः ॥

तापनीयः । पुं । निष्कपरिमिते सुवर्णे ॥ तपनीयस्य विकारःपरिमाणः । जातरूपेभ्य.परिमाण इत्यण् ॥

तापसः । पुं । दमनकवृक्षे ॥ बकपक्षिणि ॥ न । तमालपत्रे । तेजपात इतिभाषा ॥ त्रि । तपस्विनि ॥ वानप्रस्थे ॥ तपोऽस्यास्ति । अण्चेत्यण् ॥ यद्वा । तपःशीलमस्य । छत्रादिभ्योणः ॥

तापसतरुः । पुं । } इङ्गुदीवृक्षे । ह-
तापसद्रुमः । पुं । } गुआ इतिभाषा ॥ तापसैरुपयुक्तस्तरुः ॥

तापसद्रुमसन्निभा । स्त्री । गर्भदात्री

त्युपे ॥

तापसप्रियः । पुं । पियालद्रुमे ॥

तापसप्रिया । स्त्री । द्राक्षायाम् ॥

तापसेष्टः । पुं ॥ पियाले । चारे ॥

तापहरी । स्त्री । ताहरी इति प्रसिद्धे व्यञ्जनपदार्थे ॥ यथा । घृते हरिद्रा संयुक्ते माषार्धा भर्जयेद्वटीः । तण्डुलाँश्चाऽपि निर्दोषांस्तान् सहैव परिभर्जयेत् ॥ सिद्धियोग्यं जलं तत्रक्षिप्य कुशलः पचेत् । लवणार्द्रकपिण्डानि मात्रया तत्रनिःक्षिपेत् ॥ एषासिद्धिं समायाता प्रोक्ता तापहरीबुधैः ॥ भवेत्तापहरीबल्या वृष्या श्लेष्मसमाचरेत् । दृंहणीतर्पणीरुच्यागुर्वी सब गुणाःस्मृताः ॥

तापिञ्छः । पुं । तमालवृक्षे ॥ तापिं छादयति । छद० । कर्मण्यण् । पृषोदरादिः ॥ न । तमालपुष्पे ॥ तापिञ्छस्यपुष्पम् । फलेलुगितितद्धितलुक् । क्लिवीनं प्रसवे सर्वमिति क्लीवता ॥

तापिञ्जम् । न । धातुमाक्षिके ॥ इति राजनिर्घण्टः ॥

तापितः । त्रि । पीडिते ॥ जातसन्तापे ॥ तपाया इति भाषा ॥ तापःसञ्जातोस्य । ता० इतच् ॥

तापी । पुं । बुद्धे ॥ त्रि । तापवति ॥

फलमाह । न पृथक् फलानि-
तेषां शिखिकीलकराहुदर्शनानि
यदि । तदुदयकारण मेषां केत्वा
दीनां फलं क्रमाद् ब्रूयात् ॥*॥ ताम
सकीलानां दर्शनवशात् फलमाह ।
यस्मिन् यस्मिन् देशे दर्शनमाया
न्ति सूर्यबिम्बस्थाः । तस्मिंस्तस्मिन्
व्यसनं महीपतीनां परिज्ञेयम् ॥
॥ क्षुत्प्रम्लानशरीरा मुनयोऽप्युत्
सृष्टधर्मसच्चरिताः । निर्मांसबालह
स्ताः कृच्छ्रेणायान्ति परदेशम् ॥ त
स्करविलुप्तवित्ताः प्रदीर्घनिःश्वास
मुकुलितविपुटाः । सन्नाः सन्नश
रीराः शोकोद्भववाष्परुद्धदृशः ॥ क्षा
मा जुगुप्समानाः स्वनृपतिपरचक्र
पीडिताः मनुजाः । स्वनृपतिचरितं क
र्म च पुराकृतं प्रब्रुवन्त्यन्ये ॥ गर्भेष्व
पि निष्पन्ना वारिमुचो न प्रभूतवारि
मुचः । सरितो यान्ति तनुत्वं क्वचित्
क्वचिज्जायते सस्यम् ॥*॥ तेषामाकृ
तिवशेन फलमाह । दण्डेनरेन्द्रमृत्यु
र्व्याधिभयं स्यात् कबन्धसंस्थाने । ध्वा
ङ्क्षे चैतस्करभयं दुर्भिक्षं कीलकेऽ
र्कस्थे ॥ राजोपकरणरूपैः छत्रध्वज
चामरादिभिर्विद्धः । राजान्यत्वकृद
र्कः स्फुलिङ्गधूमादिभिर्जनहा ॥ ए
कोदुर्भिक्षकरो द्याद्याःसुनरपनेर्वि

नाशाय । सितरक्तपीतकृष्णैस्तैर्विद्धो
ऽर्कोऽनुवर्णघ्नः ॥*॥ विशेषफलान्याह
। दृश्यन्तेऽथ यत स्ते रविबिम्बस्थोत्थि
तामसकोत्पाताः । आगच्छति लोका
नां तेनैव भयं प्रदेशेनेति वाराहीसं
हिता ॥

तामसयज्ञः । पुं । यज्ञविशेषे ॥ यथा ।
विधिहीन मसृष्टान्नं मन्त्रहीनमद
क्षिणम् । श्रद्धाविरहितं यज्ञं ताम
सं परिचक्षते ॥ तामसानां यज्ञः ॥

तामसाहारः । पुं । तामसप्रकृतीना-
माहारे ॥ यातयामं गतरसं पूतिप
र्युषितञ्च यत् । उच्छिष्टमपि चामे-
ध्यं भोजनं तामसप्रियम् ॥

तामसिकः । त्रि । तामसे । तमोगुण-
कार्ये ॥

तामसी । स्त्री । निशायाम् ॥ दुर्गाया
म् ॥ तमोन्वितायाम् ॥ जटामां-
स्याम् ॥

तामिस्रः । पुं । विपर्ययविशेषे ॥ स चा
ष्टादशधा । यथा । शब्दादयो दशवि
षया रञ्जनीयाः स्वरूपतः । ऐश्वर्य
ञ्चाणिमादिकं न स्वरूपतो रञ्जनीयम्
। किन्तु रञ्जनीयशब्दाद्युपायः । ते
च शब्दादय उपस्थिताः परेणोपह-
न्यमानाः तदुपायाश्चाणिमादयः
स्वरूपेणैव कोपनीया भवन्तीति शा

ब्दादिभिर्दशभिः सहाभिमादष्टकमष्टादशेति । तद्विषयो द्वेषस्तामिस्रो ऽष्टादशविषयत्वादष्टादशधेति साङ्ख्याः ॥ भोगेच्छाप्रतिघाते सति क्रोधे ॥ राक्षसे ॥ तमिस्रासारिणि ॥ न । अन्धकारमये नरके ॥ परवित्तापत्यकलत्रापहर्त्ता यमदूतैर्यत्र निपात्यते ॥ तमिस्रं भीषणम् अस्या ऽस्तिवा ॥ ज्योत्स्ना तमिस्रम् ॥

**ताम्बूलम्** । न । क्रमुके । गुवाके ॥ नागवल्लीदले । पानइति प्रसिद्धे ॥ ताम्बूलि । तस्य गुणाः ॥ पिच्छादिभ्यात् ऊष्मघातेषितम् दीर्घत्वञ्च ॥ ताम्बूलं कटु तिक्तं मुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम् । वक्त्राभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥ अपिचाऽन्यत् । ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् । वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु ॥ बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ॥ * ॥ अनिधाय मुखे पर्णं पूगं स्वादयते नरः । मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते हरिम् ॥ * ॥ पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसञ्चयः । चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥ नागरस्य विधमूले मध्ये ऽलक्ष्मी श्रिये स्थिता । तस्मादग्रञ्च मूलञ्च मध्यं पर्णस्य वर्जयेत् ॥ चूर्णाधिकं हरतिगन्धमथाधिपूगं रागं तथाधिकदलञ्च सुगन्धिकारि । ताम्बूलमुक्तमिदं रसनाग्रभिस्तपर्णनिशास्वधिकश्चिन्त पर्णमह्नि ॥ ताम्बूलं न हितं प्रोक्तं शरीरे हृदयदुर्बले । ज्वरास्यशोषपित्तास्रमदमूर्च्छादिरोगिषु ॥ ताम्बूलास्युपयोगात् स्याच्छोषः पित्तानिलास्रता । देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥ * ॥ विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद् यदि । तावद्भवति चण्डालो यावद्गङ्गां नगच्छति ॥ * ॥ ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् । तपस्विनाञ्च विप्रेन्द्र गोमांससदृशं ध्रुवम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

**ताम्बूलकरङ्कः** । पुं । पानवट्टा इति प्रसिद्धे ताम्बूलपात्रे । स्वग्याम् ॥

**ताम्बूलदः** । त्रि । साम्बुलिके । ताम्बूलदातरि ॥ इति त्रिकाण्डशेषः ॥ ताम्बूलं ददाति । दुदाञ् । आतइतिकः ॥

**ताम्बूलपत्रः** । पुं । पिण्डालौ ॥

**ताम्बूलरागः** । पुं । मसूरे ॥ ताम्बूल

रक्ते ॥

ताम्बूलवल्लिका । स्त्री । ताम्बूल्याम् ॥

ताम्बूलवल्ली । स्त्री । ताम्बूल्याम् ॥ ताम्यति । तमु० । क्विप् । अनुनासिकस्येति दीर्घः । वा लति । वृणमञ्जने । कुराडीनां च त्वा । इगुपधेति कः । ताम् चासौ वुलश्च । पृषोदरादिः । ताम्बूलाख्या वल्ली । शाकपार्थिवादिः ॥

ताम्बूलिकः । पुं । ताम्बूलिनि ॥

ताम्बूली । त्रि । राज्ञां ताम्बूलाधिकृते । तमोली इति प्रसिद्धे आत्यन्तरे ॥

ताम्बूली । स्त्री । ताम्बूलवल्ल्याम् ॥ ताम्बूलात् गौरादिङीष् ॥

ताम्रम् । न । तामा इति प्रसिद्धे तैजसधातुविशेषे । शुल्बे । म्लेच्छमुखे । नैपालिके ॥ अस्योत्पत्त्यादयो यथा । शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले । तस्मात् ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥ जपाकुसुमसङ्काशं स्निग्धं मृदुघनक्षमम् । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम् । लोहनागयुतञ्चेति शुल्वं दुष्टं प्रकीर्त्तितम् ॥ ताम्रं कषायं मधुरं सतिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च ॥ पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम् । शोथं कृमिं शूलमपाकरोति प्राहुः परे बृंहणमल्पमेतत् ॥ एको दोषो विषे ताम्रे त्वसम्यङ्मारिते ऽष्टते । दाहः स्वेदोऽरुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः ॥ तस्य शोधनविधिर्यथा ॥ पत्रीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत् तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते ॥ तस्य मारणविधिर्यथा ॥ सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः । वासरत्रयमम्लेन ततः खल्वे विनिः क्षिपेत् ॥ पादांशं सूतकं दत्त्वा यामसम्मर्दयेत् । तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेन च ॥ गन्धकेनाम्लघृष्टेन तस्य कुर्याच्च गोलकम् । ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं सपुनर्नवाम् ॥ तत्कल्केन बहिर्गोलं लेपयेद् द्व्यङ्गुलोन्मितम् । धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत् ॥ वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः । दत्त्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपा

चयेत् ॥ क्रमवृद्ध्याग्निना सम्यक् यामचतुष्टयम् । स्वाङ्गशीतं समुद्धृत्य मर्दयेच्छूरणद्रवैः ॥ यामैकं गोलकं तच्च निःक्षिपेच्छूरणोदरे । मृदालेपस्तु कर्त्तव्यः सर्व्वतोऽङ्गुष्ठमात्रकः ॥ पाच्यं गजपुटे चित्तं मृतं भवति निश्चितम् । वमनञ्च विरेकञ्च भ्रमं क्रममथारुचिम् ॥ विदाहं स्वेदमुत्क्लेदं न करोति कदाचनेति ॥ मरणे । गुल्मनिभे ॥ पुं । कुष्ठरोगप्रभेदे ॥ त्रि । अरुणवर्णविशिष्टे ॥ ताम्रमस्ति अस्य इत्यर्श आद्यच् । ताम्रवति । तद्वति ॥ (ताम्रमस्ति अस्य) तम्यतेऽसा । तमु० अमितम्योर्दीर्घश्चेति रक्तदीर्घौ ॥

ताम्रकम् । न । ताम्रे ॥ स्वार्थे कः ॥

ताम्रकर्णी । स्त्री । अञ्जननामपश्चिमदिग्हस्तिकरिण्याम् ॥ ताम्रौ कर्णौ यस्याः । पाककर्णेति नासिकेति वा ङीष् ॥

ताम्रकारः । पुं । ताम्रकुट्टके । थोंव्वेके । कसेरा इति भाषा प्रसिद्धे वर्णसङ्करजातौ ॥ उत्पत्तिः कांसकारे द्रष्टव्या । ताम्रं करोति । कृञ्० । कर्म्मण्यण् ॥

ताम्रकुट्टकः । पुं । कांस्यकारे ॥ ताम्रं कुट्टयति । पुं । कुट्टच्छेदे । कर्म्मण्यण् । स्वार्थे कः ॥

ताम्रकूटः । तमाखु इति प्रसिद्धे क्षुपे ॥ यथा । सम्विदाकाशकूटञ्च ताम्रकूटञ्च धुस्तूरम् । अहिफेनं खर्जुरसन्ताडिकातरिता तथा ॥ इत्येष्टौ सिद्धिद्रव्याणि यथा स्वेष्टकं प्रिये इति कुलार्णवतन्त्रम् ॥

ताम्रकृमिः । पुं । इन्द्रगोपकीटे ॥

ताम्रगर्भम् । न । तुत्थे ॥

ताम्रचूडः । पुं । कुक्कुटे ॥ ताम्रा चूडा अस्य ॥ कुकुरद्रुमे ॥

ताम्रत्रपुजम् । न । कांस्ये ॥

ताम्रदुग्धा । स्त्री । गोरक्षदुग्धायाम् ॥

ताम्रपट्टम् । न । ताम्रनिर्म्मितलेखनपत्रे ॥ यथा । दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् । आगामिभद्रनृपतेः परिज्ञानाय पार्थिवः ॥ पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितमिति मिताक्षरा ॥

ताम्रपत्रः । पुं । जीवशाके ॥ न । ताम्रनिर्म्मितपत्रे ॥

ताम्रपर्णः । पुं । भारतवर्षीयोपद्वीपे ॥

ताम्रपर्णी । स्त्री । चोलदेशप्रसिद्धायां सरिद्वरायाम् ॥

ताम्रपल्लवः । पुं । अशोकतरौ ॥

ताम्रपाकी । पुं । गर्द्दभाण्डवृक्षे ॥

ताम्रपादी । स्त्री । हंसपद्याम् ॥

ताम्रपुष्पः । पुं । भूमिचम्पके । भूँइचाँपा इति भाषा ॥ कोविदारे । रक्तकाञ्चने ॥

मध्ये ॥ कनीनिकायाम् ॥ न । रूप्ये ॥ अध्ययनरूपायां सिद्धौ ॥ त्रि । स्फुरितदीधितौ ॥ उच्चस्वनादे ॥ निर्मले ॥ अत्युच्चैः ॥ तारयति अतिक्रामति अन्यान् शब्दान् । तृ० वहुलमेतन्निदर्शनमिति सुरादिगणसूत्रात् स्वार्थे णिच् । पचाद्यच् ॥ यद्वा तार्यते ऽनेन वा । घञ् । घोषा ॥

तारकः । पुं । दैत्यविशेषे ॥ कर्णधारे ॥ भेलके ॥ न । दृशि ॥ स्त्री । कनीनिकायाम् ॥ ऋक्षे ॥ त्रि । मातरि ॥ संसारसमुद्रस्य तरणकारणे तारयितरि ॥ अतिजगतीभेदे छन्दोविशेषे । यथा । यदि तोटकवृत्तपदे गुरुरन्त्यम् भवतीह तदा किल तारकवृत्तम् । फणिनायकपिङ्गलवर्णित मेतं हर पण्डितमण्डलिका कृतचित्तम् ॥ यथा । अतिभारतरं यदि चन्दनपङ्कं मनुते सरसीपयसं विषपङ्कम् । तमदुस्तरतारवियोगपयोधे र्नहि पारमसौ भविता प्रसमाधेः ॥ तारयति । तृ० । ण्वुल् ॥

तारकजित् । पुं । कार्त्तिकेये । षडानने ॥ तारकं जयति । जि० । क्विप् । तुक् ॥

तारकराजः । पुं । चन्द्रे ॥

तारका । स्त्री । न । नेत्रकनीनिकायाम् ॥ ऋक्षे । नक्षत्रे ॥ तारका ज्योतिषीत्येतद्द्वयं न ॥ स्त्री । इन्द्रवारुण्याम् ॥



तारकारिः । पुं । कार्त्तिकेये । षडानने ॥ तारकस्य दैत्यविशेषस्य अरिः ॥

तारकिणी । स्त्री । निशायाम् ॥

तारकितम् । न । नभसि ॥ तारकाः संजाता अस्य । तदस्य संजातं तारकादिभ्य इतच् ॥

तारणः । पुं । भेलके ॥ अष्टादशवत्सरे ॥ अतिवृष्टिस्तु जायेत धान्यस्याप्यपीडनम् । यस्य भवति सामान्यं तारणे सुरवन्दिते ॥ त्रि । तरणकारयितरि ॥ तारयति । तृ० । ल्युः ॥ सन्तारणे ॥

तारणिः । स्त्री । नावि ॥

तारतण्डुलः । पुं । श्वेतयावनाले ॥

तारतम्यम् । न । तरतमयोर्भावे । न्यूनाधिक्ये ॥ यथा । निर्धने निधनमेतयोर्द्वयोस्तारतम्यविधिमुग्धचेतसाम् ॥ वेधनाम विधिना विनिर्मितो रेफएव जयवैजयन्तिका ॥

तारतारम् । न । आगमाविरोधिना न्यायेन आगमार्थपरीक्षारूपे ऊहे । तृतीयायां सिद्धौ ॥

तारदी । स्त्री । तरदीवृक्षे ॥

तारपुष्पः । पुं । कुन्दवृक्षे ॥

तारमाचिकम् । न । रूप्यमाचिके । रजतो पधातौ ॥ तारमाचिकमन्यत्तु तद्भवेद्रजतोपमम् । किञ्चित्तद्रससाहित्यात् तारमाचिकमीरितम् ॥ अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः । न केवलं रूप्यगुणा यर्न्तन्ते तारमाचिके ॥ द्रव्यान्तरस्य संसर्गात् सन्त्यन्येपि गुणा यतः ॥ स्यात् तारमाचिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं बस्तिरुक्कुष्ठपाण्डुमेहविषोदरम् ॥ अर्शः शोथं चार्य कण्डुं त्रिदोषमपि नाशयेत् ॥ मन्दानलत्वं बलहानि मुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान् । तथैव मालां व्रणपूर्विकाञ्च करोत्यशुद्धं रजताख्यमाचिकम् ॥ शोधनन्तु । कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम् । भावयेदातपे तीव्रे विमला शुद्धतिमृच्छेत् ॥ विमलां तारमाचिकम् । कर्कोटी खखसा । मारणन्तु कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत् ॥ तैलेन वाजमूत्रेण म्रियते तारमाचिकम् ॥

तारकः । पुं । विटे ॥ इतिभूरिप्रयोगः ॥

तारवायुः । पुं । शब्दवत्पवने ॥

तारविमला । स्त्री । तारमाचिके ॥

तारशुद्धिकरम् । न । सीसके ॥

तारा । स्त्री । बुद्धदेवताभेदे ॥ पञ्चकन्यान्तर्गतकन्यायाम् । वालिसुग्रीवयोर्भार्यायाम् ॥ सुरगुरोर्भार्यायाम् ॥ कनीनिकायाम् ॥ नक्षत्रे ॥ यथा । एकतारं नभो दृष्ट्वा यः सन्ध्यो नारदो मुनिः । तावद्भवति अप्राज्ञो यावदन्यं न पश्यति ॥ तन्निबन्धानुशासनं यथा । स्त्री स्त्री ... अथवा ... सगभिरा नपुंसि ... स्यात् । पुंसि पुंसि सुपुष्ये । मूलनं ... स्त्री । स्त्रियां ... शेषाः ॥ शेषाः तारादि ... ॥ चीडायाम् ॥ मुक्ता ... ॥ त्रिकटावस्थाम् ॥ चितीतर ... सदाशिवायाम् ॥ यथा । ... तेना । पुं । ... मानुमर्दा ... सहे । पुं । शीलसरस्वती । तारकाम् ... दौ ॥ तारा सुकर्मप्रदायिनी ॥ ... तारा ... निभ ... यया ... तारा ... तन्त्रमया ॥ ... गुणः । ... ॥

ताराकूटम् । न । तुलो नाटके । तारामैव्याम् ॥ यथा । वरर्चादिपिकन्यर्चा कन्यर्चादरभावधि । पृथगङ्कं हि तेषां चित्कस्वसमन्वसदिति ॥

तारापतिः । पुं । शिवे ॥ चन्द्रे ॥ बृहस्पतौ ॥ वालिनि ॥ सुग्रीवे ॥

तारापथः । पुं । आकाशे ॥

तारापीडः । पुं । निशाकरे । चन्द्रे ॥
ताराभूषा । स्त्री । रात्र्याम् ॥
ताराभ्रः । पुं । कर्पूरे ॥
तारामण्डलः । पुं । ईश्वरगृहविशेषे ॥
तारामार्गः । पुं । आकाशे ॥
ताराराविः । स्त्री । आगमोक्तपर्वविशेषे ॥ यथा । भाद्रे मासि कृष्णपक्षे भौमवारे कुलर्क्षगे । अङ्गारावौ सङ्क्रमस्य सातारा राविरीरितेति ॥
तारारिः । पुं । विट्माक्षिके ॥
तारावती । स्त्री । कालिकापुराणप्रसिद्धायां चन्द्रशेखरभूपपत्न्याम् ॥
तारिकम् । न । तरमूल्ये ॥
तारिका । स्त्री । ताडीतिख्याते ताडरसे ॥
तारिणी । स्त्री । बुद्धदेव्यन्तरे । लोकेश्वरात्मजायाम् ॥ * ॥ शिवपत्न्याम् । द्वितीयायां महाविद्यायाम् ॥
तारुण्यम् । न । यौवने ॥ तरुणस्य भावः । ब्राह्मणादित्वात् ष्यञ् ॥
तारेयः । पुं । वालिवानरपुत्रे । अङ्गदे ॥ ताराया अपत्यम् । ढक् ॥
तार्क्षम् । न । तर्काधिकारे ॥ तद्वयये ॥ कोपयाचेस्वण ॥
तार्किकः । त्रि । तर्कतत्परे । तर्कशास्त्रविदि ॥ तर्कमधीते । ठक् ॥ स च षड्विधो यथा । स्याद्वादवादार्हतः स्यात् शून्यवादीतु सौगतः १ । नैयायिकस्त्वक्षपादः २ । योगः साङ्ख्यस्तु कापिलः ३ । वैशेषिकः स्यादौलुक्यो ४ । बार्हस्पत्यस्तु नास्तिकः ५ । चार्वाको लौकायतिकश्चेति ६ ते षड् मिताक्षिकाः ॥ आत्मनोऽस्तित्वमवादिनोऽनात्मवादित्वे स्वबुद्धिपरिकल्पितं यद्दिच्छन्ति तद्वदन्ति ॥
तार्क्षः । पुं । कश्यपे ॥
तार्क्षी । स्त्री । पातालगरुडीलतायाम् ॥
तार्क्ष्यः । पुं । अश्वे ॥ सर्पे ॥ गरुडाग्रजे ॥ गरुडे ॥ तार्क्षस्य कश्यपस्यापत्यम् । गर्गादित्वात् यञ् । बहुत्वे तार्क्षाः ॥ एकस्मिन्कल्पे तार्क्ष्यमुनेरपत्यत्वात्तार्क्ष्यो गरुडः । गर्गादित्वात् यञ् । बहुत्वे यञन्त्वे सुपेति लुकि तार्क्ष्याः स्युः ॥ सुवर्णे ॥ स्यन्दने ॥ अश्वकर्णाख्यतरौ ॥ न । रसाञ्जने ॥
तार्क्ष्यजम् । न । रसाञ्जने ॥
तार्क्ष्यध्वजः । पुं । हरौ । विष्णौ ॥ इति हेमचन्द्रः ॥
तार्क्ष्यनायकः । पुं । गरुडे ॥ इति राजनिर्घण्टः ॥
तार्क्ष्यप्रसवः । पुं । अश्वकर्णवृक्षे ॥
तार्क्ष्यशैलम् । न । सतुत्थया दार्व्या कृताञ्जने । रसगर्भे । रसाञ्जने ॥ तार्क्ष्य

अदाम्भिको निरारम्भो लघ्वाहारो
जितेन्द्रियः ॥ विमुक्तः सर्वसङ्गैर्यः स
तीर्थ० ॥ अक्रोधनोऽमलमतिः सत्य
वादी दृढव्रतः । आत्मोपमश्च भूते
षु स तीर्थ० ॥ अश्रद्दधानः पापात्मा ना
स्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्च
पञ्चैते न तीर्थफलभागिनः ॥ इति
काशीखण्डम् ॥ कृते तु पुष्करं तीर्थं
त्रेतायां नैमिषं तथा । द्वापरे तु कुरु
क्षेत्रं कलौ गङ्गां समाश्रयेत् ॥
तीर्थकरः । पुं । जिने ॥ करोति इति
करः । तीर्थस्य करः ॥ कपिलकणाभु
गादिशास्त्रकारेषु ॥
तीर्थकृत् । पुं । } जिने ॥
तीर्थङ्करः । पुं । }
तीर्थराजिः । स्त्री । } अविमुक्ते । का
तीर्थराजी । स्त्री । } श्याम् ॥
तीर्थवाकः । पुं । केशे ॥ इति हेमचन्द्रः ॥
तीर्थसेवी । पुं । बकपक्षिणि ॥ इति रा
जनिर्घण्टः ॥ त्रि । तीर्थवासिनि ॥
तीवरः । पुं । अम्बुधौ ॥ व्याधे ॥ ते-
ओर इति गौडप्रसिद्धे वर्णसङ्करजा-
तिविशेषे ॥ स तु राजपुत्रस्त्रियां क्षत्रि
याज्जात इति ब्रह्मवैवर्त्तपुराणम् ॥ चु
ण्डीकभार्यायां पुण्ड्रकाज्जात इति
पराशरपद्धतिः ॥ तरति तीर्थं तेना
। तॄ० । छित्वरच्छत्वरेत्यादिना ष्व

रजन्तो निपातितः ॥
तीवरी । स्त्री । तीवरस्त्रियाम् ॥ षित्वा
न्ङीष् ॥
तीव्रः । पुं । शिवे ॥ न । लोहे ॥ तीरे
॥ त्रपुणि । सीसके ॥ तीक्ष्णे ॥ त्रि ।
दुःसहे ॥ अत्युष्णे ॥ नितान्ते । अ-
तिशये ॥ अत्यर्थे वर्त्तमानः क्लीबे । इ-
त्यमरसिंहः साध्यलिङ्गः । यथा । तीव्र
भुक्ते । तीव्रो नरः । कटौ । कटुर
सादौ ॥ तीक्ष्णे ॥ तीवति । तीव-
स्थौल्ये । बाहुलकात् रक् । यद्वा ।
तेजति । तिजनिशाने । बाहुलका
द्रन् दीर्घो जश्च वः ॥
तीव्रकण्ठः । पुं । शूरणे ॥
तीव्रगन्धा । स्त्री । यवान्याम् ॥
तीव्रज्वाला । स्त्री । धातक्याम् ॥
तीव्रबन्धः । पुं । तामसत्सी ॥
तीव्रवेदना । स्त्री । यातनायाम् ॥ ती
व्रा चासौ वेदना च ॥
तीव्रा । स्त्री । कटुरोहिण्याम् ॥ राजि
कायाम् ॥ गण्डदूर्वायाम् ॥ नदीवि
शेषे ॥ महाज्योतिष्मत्याम् ॥ तर
दीवृक्षे ॥ तुलस्याम् ॥
तु । अ । पादपूरणे ॥ भेदे ॥ समुच्च
ये ॥ अवधारणे ॥ पक्षान्तरे ॥ नियो
गे ॥ प्रशंसायाम् ॥ विनिग्रहे ॥ उ
त्काशङ्कानिरस्यर्थे ॥ तुदति । तुद

व्यथने । मितङ्गादित्वात् घुः ॥

तुकाक्षीरी । स्त्री । वंशरोचनायाम् ॥

तुगा । स्त्री । वंशरोचनायाम् ॥

तुगाक्षीरी । स्त्री । वंशरोचनायाम् ॥ तद्भेदपीतिकश्चित् ॥

तुङ्गः । पुं । पुन्नागद्रुमे ॥ पर्वते ॥ बुधग्रहे ॥ नारिकेले ॥ गण्डके ॥ योगविशेषे ॥ यथा । अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ अपि च । सूर्यात्तुङ्गान् क्रियवृषभमृगस्त्रीकुलीरान्ययूके द्विगुणकृदयतिथिशरान् सप्तविंशांश्च विंशान् । क्रमादेतान् वदति यवनस्वाम्यतुङ्गान् सुतुङ्गांशानेवाप्याम् मदनभवनेष्वाह नीचान् सुनीचानिति ॥ न । किञ्जल्के ॥ त्रि । उन्नते ॥ उग्रे ॥ प्रधाने ॥ तुङ्ग्यते । तुजि हिंसायाम् । घञ् । न्यङ्क्वादि ॥

तुङ्गकः । पुं । पुन्नागवृक्षे ॥

तुङ्गकारण्यम् । न । तीर्थविशेषे ॥

तुङ्गभद्रः । पुं । मदोत्कटे ॥

तुङ्गभद्रा । स्त्री । दक्षिणदेशप्रसिद्धे सरिद्विशेषे ॥ अस्या जलगुणा यथा । तज्जलं निर्मलं स्निग्धं स्वादुप्रोक्तं तथा गुरु । कण्डुप्रशमनं प्रायः साल्यं मेधाकरं समभिति ॥



तुङ्गशेखरः । पुं । पर्वते ॥

तुङ्गा । स्त्री । वंशलोचनायाम् ॥ शम्याम् ॥ अनुष्टुप्छन्दोभेदे ॥ द्विगुणनगणकर्णैः सुललितपसुवर्णैः । रसिकविहितरङ्गा भवति हि किल तुङ्गा ॥ यथा । विहरसि मम चित्ते मदनविशिखकृत्ते । न नयनविपथं त्वं व्रजसि तदपि मे त्वम् ॥

तुङ्गी । पुं । उच्चस्थानस्थिते ग्रहे ॥

तुङ्गिनी । स्त्री । महाशतावर्याम् ॥

तुङ्गी । स्त्री । हरिद्रायाम् ॥ शाकभेदे ॥ वर्वरायाम् ॥ तुङ्गति । तुजि० । अच् । न्यङ्क्वादिः । गौरादि ङीष् ॥ निशायाम् ॥

तुङ्गीपतिः । पुं । चन्द्रे ॥ इ० त्रि० ॥

तुङ्गीशः । पुं । शिवे ॥ कृष्णे ॥ सूर्ये ॥

तुच्छ । त्रि । शून्ये ॥ अल्पे ॥ दीने ॥ न । पुलाकके । भुस इति भाषा ॥ तोदनं तुद् । संपदादित्वात् भावे क्विप् । तुदा व्यथया छ्यति । छो छेदने मूलविभुजादित्वात् कः ॥ तुदयति वा । आतश्चेति कः ॥

तुच्छद्रुः । पुं । एरण्डवृक्षे ॥

तुच्छधान्यकम् । न । पुलाके ॥

तुच्छा । स्त्री । तुत्थायाम् । नीलीवृक्षे ॥

तुजः । पुं । दैत्ये ॥ तुजते । तुजि हि

भ्रा पुटं चौद्रे दैर्य तुल्यविमुक्ते ॥

तुद्यति । तुद्व्यथने । पाहतुदीति ष्यक् ॥ तुल्यंयतिवा । तुल आवरणे । अच् ॥ कर्पूरीतुल्ये ॥

तुत्थकम् । न । तुत्थे ॥

तुत्था । स्त्री । नील्याम् ॥ सूक्ष्मैलायाम् ॥ महानीलाम् ॥

तुत्थाञ्जनम् । न । अञ्जनभेदे । खर्परीषे । वितुन्नके ॥ तुत्थयति तुत्थेतेवा । तुत्थ० । अवृन्दरत्वा । तुत्थञ्च सद्धञ्जनञ्च ॥

तुत्तुभः । पुं । सर्षपे ॥ तुदति । तुद० । बाहुलकादुभच् । पृषोदरादिः ॥

तुन्दम् । न । उदरे । कुक्षौ ॥ तुदति । तुद० । इगुपधेतिकः । आच्छीनद्योरित्यत्र नुमिति योगविभागान्नुम् ॥ यद्वा । तर्व्यतेऽनम् । तुन्द अर्दने । अच्चादयश्चेतिसाधु ॥ त्रि । तुन्दिले ॥ तुन्दमस्यास्ति । अर्शआदिभ्योऽच् ॥

तुन्दकूपिका । स्त्री । } नाभौ ॥
तुन्दकूपी । स्त्री । }

तुन्दपरिमृजः । त्रि । अलसे । मन्दे ॥ तुन्दमुदरं परिमार्ष्टि । संज्ञायाम् । तुन्दशोकयोः परिमृजापनुदोरिति कः ॥

तुन्दवान् । त्रि । तुन्दिले ॥ अतिशयितं तुन्दमुदरमस्य । तुन्दादिभ्य इलच्चेति वान्मतुप् ॥

तुन्दिः । पुं । गन्धर्वविशेषे ॥ न । उदरे ॥ स्त्री । नाभौ ॥

तुन्दिकः । त्रि । वृहत्कुक्षौ । तुन्दिले ॥ अतिशयितं तुन्दमुदरमस्य । तुन्दादिभ्य इलच्चेति चकाराट्ठन् ॥

तुन्दिका । स्त्री । नाभौ ॥

तुन्दी । त्रि । पीनकुक्षौ । पिचण्डिले । तुन्दिले ॥ अतिशयितं तुन्दमस्यास्ति । तुन्दादिभ्य इलच्चेति चकारादिनिः ॥

तुन्दिभः । त्रि । तुण्डिभे ॥ तुन्दिर्वृद्धा नाभिरस्त्यस्य । तुन्दिबलिवटेर्भः ॥

तुन्दिलः । त्रि । वृहत्कुक्षौ । पिचिण्डिले ॥ अतिशयितं तुन्दमस्यास्य । तुन्दादिभ्य इलच्चेति इलच् ॥

तुन्दिलफला । स्त्री । त्रपुष्याम् ॥

तुन्नः । पुं । नन्दीवृक्षे ॥ तुद्यते । तुद० । क्तः ॥ त्रि । छिन्ने । द्विधाकृते ॥ व्यथिते ॥

तुन्नकः । पुं । तुन्ने ॥

तुन्नवत् । त्रि । वहुच्छिद्रे ॥

तुन्नवायः । पुं । सौचिके । दर्जी इति भाषाप्रसिद्धे ॥ तुन्नं छिन्नं वयति । वेञ् तन्तुसन्ताने । ह्वावामश्चेत्यण् ॥

तुभः । पुं । छागे ॥ तोभते । तुभ हिंसायाम् । इगुपधेतिकः ॥

चैतन्यस्य तुरीयत्वं विश्वाद्यपेक्षया इत्यवम् ॥ त्रि । चतुर्थे ॥ यथा तुरीयं भागो मनुष्या वदन्तीति । वाचस्तु रीयत्वं पराद्यपेक्षया कुलगुरोरुपदेशात् ज्ञातव्यम् ॥ चतुर्णां पूरणः चतुरश्छयतावाद्यक्षरलोपश्चेति छः ॥

तुरीयवर्णः । पुं । शूद्रे ॥ तुरीयश्चासौ वर्णश्च ॥

तुरुष्कः । पुं । गन्धद्रव्यविशेषे । धूपे । सिह्लके । पीतसारे । शिलारस इति भाषा ॥ म्लेच्छजातिविशेषे । तुरक इति भाषा ॥ देशविशेषे । तुरकस्थान इति भाषा ॥ श्रीवासे ॥ तुरोषति । तुर० । बाहुलकादुष्क-गुणाभावश्च । स्वार्थे कन् ॥ पारसद्रुमे इति केचित् ॥

तुर्यः । त्रि । तुरीये । चतुर्थे ॥ चतुर्णां पूरणः । चतुरश्छयताविति यत् आद्यक्षरलोपश्च ॥

तुर्वसुः । पुं । म्लेच्छानां राजि । म्लेच्छाचारदेशे । ययातिराजस्य पुत्रविशेषे ॥

तुलजापुरम् । न । दक्षिणदेशप्रसिद्धे दुर्गास्थाने ॥

तुलसी । स्त्री । स्वनामख्यातप्रसिद्धायां वैष्णव्याम् । वृन्दायाम् । पर्णासे ॥ तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित् ॥ शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्तिता ॥ तुलायाः सादृश्यम् स्यति । असु क्षेपणे । कर्मण्यण् । ङीप् । शकन्ध्वादिः ॥ यस्या देव्यास्तुलना नास्ति विश्वेषु चाखिलेषु च । तुलसी तेन विख्याता इति देवीभागवतम् ॥ * ॥ यद्धर्मकर्म कुरुते मनुजः पृथिव्यां नारायणप्रियतमां तुलसीं विना च । तत्सर्वमेव विफलं भवति द्विजेन्द्र यद्यप्यसौ विचरितुं यदि देवदेवः ॥ * ॥ तुलसीकाष्ठनिर्मितमालां गृह्णाति येन राः । पदे पदेऽश्वमेधानां लभन्ते निश्चितं फलम् ॥ प्रभाते तुलसीं दृष्ट्वा स्वर्णदानफलं लभेत् । मालतीं यूथिकां कुन्दं माधवीं केतकीं तथेत्यादि ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे १०२ अध्यायः ॥

तुलसीदेवी । स्त्री । सर्षपाम् । सुरसायाम् ॥

तुला । स्त्री । सादृश्ये । माने । गृहाणां दारुबन्धाय पीठिकायाम् । उपरिस्थाप्यदार्वाधारभूते स्तम्भाग्रपीठे ॥ पलशते ॥ भाण्डे ॥ सप्तमराशौ । यूके । घटे ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । वृषतुरङ्गगजक्रयविक्रयो विबुधराधनदानमनाः पु

रणिकानामेषा प्राकारविकानामेव-या । क्रमेणोदाहरणम् । पाण्डुच्छा मंवदनं हृदयं सरसं तथालसञ्च वपुः । आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का । अमृतममृतरश्मिरम्बुजन्मप्रतिहतमेकपदे तवाननस्य ॥ अन्यदपि । प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति ॥

तुवरः । पुं । न ॥ कषायरसे ॥ तवति हिनस्ति रोगान् । तुरितिसौत्रोधातुः । छित्वरच्छत्वरेत्यादिना ष्वरच् ॥ धान्यविशेषे । तुवरयावनाले ॥ त्रि । कषायरसवति ॥

तुवरयावनालः । पुं । धान्यविशेषे । तुवरे । रक्तयावनाले ॥ तुवरोयावनालस्तु कषायोग्राहे विरेचकः । सक्षारो वातशमनो विदाही शोषकारकः ॥

तुवरिका । स्त्री । तुवर्याम् । आढक्याम् । तुवर इति अरहर इतिच भाषा ॥ तुवरोऽस्त्यस्याः । अतइनिठनावितिठन् । टाप् ॥ सुराष्ट्रजमृत्तिकायाम् । फिट्करी इतिभाषा ॥

तुवरी । स्त्री । आढक्याम् । अरहर इ तिलूर इतिच भाषा ॥ काच्याम् । सौराष्ट्रमृदि । फिट्करी इतिभाषा ॥ तोरी इतिप्रसिद्धे धान्ये ॥ यथा । तुवरी ग्राहिणी शीता लघ्वी कफविषास्रजित् । तीक्ष्णोष्णा वह्निदा कच्छ्रकुष्ठकोठकृमि प्रणुत् ॥

तुवरीतैलम् । न । तुवर्याः स्नेहे ॥ स्नेहे तैलम् । तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् । वह्निकृद्विषहृत् कण्डूकुष्ठकोठकृमिप्रणुत् ॥ मेदोदोषापहञ्चापि व्रणशोधनरोपणम् ॥

तुवरीशिम्बः । पुं । रक्तचणमर्दके ॥

तुषिः । स्त्री । तुरुष्काम् ॥ इ० श० र्ष० ॥

तुषः । पुं । धान्यत्वचि ॥ विभीतकद्रुमे ॥ तुष्यति । तुषतुष्टौ । इगुपधेति कः ॥

तुषग्रहः । पुं । वह्नौ ॥

तुषधान्यम् । न । मुद्गादिषु ॥ मुद्गोमाषो राजमाषो निष्पावश्च मकुष्ठकः । यवाकोढकिमक्षस्या स्त्रितुटः सकलायकः ॥ तुषधान्यानि प्रोक्तानि वैद्यशास्त्रे भिषग्वरैः ॥

तुषसारः । पुं । अग्नौ ॥ इतिशब्दमाला ॥

तुषानलः । पुं । तुषवाग्नौ । कुकूले ॥

तुषाम्बु । न । तुषोदके ॥

तुषारः । पुं । सीकरे ॥ हिमे ॥ देश

रश्मिजालानामेवाभ्याकर्षिकाणामेव । क्रमेणोदाहरणम् । पाण्डुरास्यं मन्दं हृदयं सरसं तथालसम्लवपुः । आवेदयसि नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ कुमुदकमलनीलनीरजालिः ललितविलासजुषोर्दृशोः पुरःका । अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ अन्यदपि । प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति ॥

तुवरः । पुं । न । कषायरसे ॥ तवति हिनस्ति रोगान् । तुरिति सौत्रो धातुः । छित्वरच्छत्वरेत्यादिना ष्वरच् ॥ धान्यविशेषे । तुवरयावनाले ॥ त्रि । कषायरसवति ॥

तुवरयावनालः । पुं । धान्यविशेषे । तुवरे । रक्तयावनाले ॥ तुवरयावनालस्तु कषायोष्णो विरेचकः । सक्षारो वातशमनो विदाही शोषकारकः ॥

तुवरिका । स्त्री । तुवर्याम् । आढक्याम् । तुवर इति अरहर इति च भाषा ॥ तुवरो ऽस्त्यस्याः । अतइनिठनाविति ठन् । टाप् ॥ सुराष्ट्रजमृत्तिकायाम् । फिट्करी इतिभाषा ॥

तुवरी । स्त्री । आढक्याम् । अरहर इति सूर इति च भाषा ॥ काक्ष्याम् । सौराष्ट्रमृदि । फिट्करी इति भाषा ॥ तोरी इति प्रसिद्धे धान्ये ॥ यथा । तुवरी ग्राहिणी शीता लघ्वी कफविषास्रजित् । तीक्ष्णोष्णा वह्निदा कण्डूकुष्ठकोठकृमि प्रणुत् ॥

तुवरीतैलम् । न । तुवर्याः स्नेहे ॥ स्नेहे तैलं च ॥ तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् । वह्निकृद्विषहृत् कण्डूकुष्ठकोठकृमिप्रणुत् ॥ मेदोदोषापहञ्चापि व्रणशोधनकं परम् ॥

तुवरीशिम्बः । पुं । रक्तचक्रमर्दके ॥

तुविः । स्त्री । तुम्ब्याम् ॥ इ० सं० ला ॥

तुषः । पुं । धान्यत्वचि ॥ विभीतकद्रुमे ॥ तुष्यति । तुष तुष्टौ । इगुपधेति कः ॥

तुषग्रहः । पुं । वह्नौ ॥

तुषधान्यम् । न । मुद्गादिषु ॥ मुद्गो माषो राजमाषो निष्पावश्च मकुष्ठकः । चणकाढकिमसूरास्त्रिपुटः सकुलत्थकः ॥ तुषधान्यानि प्रोक्तानि वैद्यशास्त्रे भिषग्वरैः ॥

तुषसारः । पुं । अग्नौ ॥ इति शब्दमाला ॥

तुषानलः । पुं । तुषजाग्नौ । कुकूले ॥

तुषाम्बु । न । तुषोदके ॥

तुषारः । पुं । शीकरे ॥ हिमे ॥ स्वेद

गाख्याः । प्रकृत्याद्याख्यायास्तां ता
स्तथोक्ताः । प्रकृत्याद्यर्थविभागश्चैत
च्छब्दार्थं निरूपणे यथास्थानं द्रष्ट
व्यः ॥ बाह्या दर्शयति । बाह्याविषयो
परमादित्यादिना । बाह्यास्तुष्टयो
विषयोपरमात् ॥ पञ्च । याः खल्व-
नात्मनः प्रकृतिमहदहङ्कारादीना
मात्माभिमन्यमानस्य वैराग्ये सति
तुष्टयस्ता बाह्याः आत्मज्ञानाभावे ऽ
नात्मानमधिकृत्यप्रवृत्ताः । ताश्च वै
राग्ये सति भवन्ति तुष्टयः सति वैराग्य हे
तुपञ्चकत्वाद्वैराग्याणि पञ्च तत् पञ्च
त्वात् तुष्टयः पञ्चेति । उपरम्यते ऽ
नेनेत्युपरमो वैराग्यम् विषयादुप
रमो विषयोपरमस्तस्मात् । विषया
भोग्याः शब्दादयः पञ्च उपरमाश्चापि
पञ्च । तथा हि अर्जनरक्षणक्षयभोग
हिंसादोषदर्शनहेतुजन्मानः एका
पारपारापारपारतः पारानुत्तमाख्यो
त्तमाम्भसंज्ञकाः पञ्चोपरमा भवन्ति
। एकापाराद्यर्थविभागश्च यथास्थानं
द्रष्टव्यः । तदेवमाध्यात्मिकाभिश्चत
सृभिर्बाह्याभिश्च पञ्चभिर्नव तुष्टयो
ऽभिहिताः साङ्ख्याचार्यैः ॥ तोषण
म् । तुष० । क्तिन् ॥ तुष्टिर्नुरकृता
र्थस्य कृतार्थोस्मीति यामतिः ॥

दानमेव धारायां हि वेतनम् तेहि
तस्माभात् स्वामिकार्ये प्रवर्तीवत्वरय
न्ते इति नीतिवाक्यामृतम् ॥
तुट्टः । पुं । कर्णमणौ ॥ इति शब्दच
न्द्रिका ॥
तुट्टुषितः । त्रि । स्तोतुमभिप्रेते ॥
तुहिनम् । न । हिमे ॥ चन्द्रतेजसि ॥
तोषति तुह्यते ऽनेनवा । तुहिर्द
र्दने । वेधितुद्योर्हस्वश्चेतीनन्प्र
त्ययः लघूपधगुणो कृते ह्रस्वश्च ॥
तुहिनांशुः । पुं । चन्द्रे ॥ कर्पूरे ॥
तुहिनांशुतैलम् । न । कर्पूरतैले ॥
तूषः । पुं । उपासङ्गे ॥ तूणीरे । निष
ङ्गे ॥ तूष्यते ऽनेन । तूणसङ्कोचने ।
तु० घञ् ॥ तूणयति ग्रा । अच् ॥
तूणकम् । न । अतिशर्करीसंज्ञकच्छन्दो
विशेषे ॥ यथा । तूणकं समानिका
पदद्वयं विनान्तिमम् ॥ यथा । सा
सुवर्णकेतकं विकाशि भृङ्गपूरितं प
क्ष्मकाग्रकालपूर्णहेमतूणकम् ।
राधिकाचितकी माधवाय मासि माध
वे मोहमेति निर्भरं त्वया विनाक
लानिधेः ॥
तूणा । स्त्री । इषुधौ । तूणे ॥ टाप् ॥
तूणी । [illegible] । नन्दीवृक्षे । पोतके ॥ चि ।
तूणयुक्ते ॥

तुष्टिदानम् । न । पारितोषिके ॥ तुष्टि, तूणी । स्त्री । तूणे ॥ नीलिकायाम् ॥ तूण्य

ते इत्यन्ये। तूणपूरणे। वृषश्चेति घ ञ्। गौरादित्वात् ङीष्॥

तूणीकः। पुं। नन्दीवृक्षे॥

तूणीरः। पुं। तूणे। निषङ्गे॥ तूणीं शरैः सङ्कोचं राति। रा दाने आदानेच आतोऽनुपसर्गे कः॥ यद्वा तूर्यते। तूण० वाहुलकादीरन्॥

तूतकम्। न। तुत्थे॥ तूतिया इति भाषा॥

तूदः। पुं। तूदे। अश्वत्थाकारे पार्श्व पिप्पल इति ख्याते तूत इति च प्रसिद्धे वृक्षे॥ अस्य फलगुणाः। तूदं पक्वं गुरु स्वादु हिमं पित्तानिलापहम्। तदेवामं गुरु सरं सक्षोष्णं रक्तपित्तकृत्॥ तूदति। तुद व्यथने। इगुपधेति कः। पृषोदरादिः॥

तूरम्। न। वाद्यसामान्ये॥ तोध्माने पटहादौ॥

तूरी। स्त्री। धत्तूरे॥ इति भावप्रकाशः॥

तूर्णम्। न। शीघ्रे। सत्वरे॥ त्रि। त इति॥ त्वरतेस्म। ञित्वरा सम्भ्रमे। गत्यर्थाकर्मकेति कर्त्तरि क्तः। रुष्यमत्वरसङ्घुषास्वनामितीड् वा वृषे। ज्वरत्वरेत्यूठ्। रदाभ्यामिति निष्ठा त्वम्॥

तूर्णिः। पुं। मनसि॥ त्वरायाम्॥ त्वरते त्वरते वा। ञित्वरा०। वक्षिश्रि अयक्ष्म्याशालरिभ्यो निदिति निः॥

तूर्यम्। न। वाद्ये॥ वाद्यप्रभेदे॥ आदिगुरु (ऽ।) त्रिकले॥

तूर्यखण्डः। पुं। मृगडवाद्ये॥

तूलम्। न। ब्रह्मदारुणि। ब्रह्मवृक्षे। तूदे॥ आकाशे॥ पुं। न। पिचौ। निर्बीजकार्पासे। तुयी इति भाषा॥ तूलयति तूल्यते वा। तूल निष्कर्षे। इगुपधेति कः। घञ् वा॥

तूलकम्। न। तूले॥

तूलकार्मुकम्। न। तूलस्फोटनार्थे धनुषि। पिञ्जले। तूलधनुषि॥

तूलचापः। पुं। } तूलकार्मुके। धुनकि इति भाषा॥
तूलधनुः। न। }

तूलनालिका। स्त्री। पिञ्जिकायाम्। पोरज इति गौडभाषा॥

तूलनाली। स्त्री। तूलनालिकायाम्॥

तूलपिचुः। पुं। तूले॥

तूलवृक्षः। पुं। शाल्मलीवृक्षे॥

तूलशय्या। स्त्री। तूलिकायाम्॥ तूलशय्या। तूलेननिर्मिता शय्या वा। शाकपार्थिवादिः॥

तूलशर्करा। स्त्री। कार्पासबीजे। बिनौरा इति बिनौला इति कपासिया इति च भाषा॥

तूलसेचनम्। न। कर्त्तने। सूत्रकर्त्तने। कातना इति भाषा॥ इ०श०स०॥

तूला । स्त्री । कार्पासाम् ॥ वर्त्याम् ॥

तूलिः । स्त्री । तूल्याम् ॥ स्वनामाख्याते चित्रकरोपकरणे । ईषिकायाम् ॥ तूलति । तूल० । इगुपधात्किदितीन् ॥

तूलिका । स्त्री । शय्योपकरणे । तोसक इति भाषा ॥ आलेख्यसमालेखन्याम् । कूर्चिकायाम् ॥ यथा । जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि । स्वयमेव समालोक्य प्रीणाति भगवान् शिवः ॥ आत्ममये महति पटे विविधजगच्चित्रमात्मनालिखितम् । स्वयमेव केवलमसौ पश्यन् प्रमुदं प्रयाति परमात्मेति ॥ ईषिकायाम् । धीरध्वादिशलाकायाम् ॥ सुवर्णादेरावर्त्तनपरीक्षणार्थं निक्षिप्य मांसायां शलाकायाम् ॥ तूलति तूल्यते वा । तूल० । क्वुन् ॥

तूलिनी । स्त्री । शाल्मलिद्रुमे ॥ सञ्ज्ञायां कन्वे ॥

तूलिफला । स्त्री । शाल्मली ॥

तूली । स्त्री । नील्याम् ॥ वर्त्याम् ॥ तूलिकायाम् ॥ चित्रलेखन्याम् । चित्रसाधनद्रव्ये । कूर्चिकायाम् ॥ ङीष् ॥

तूवरः । पुं । काले ऽश्मश्रुपुरुषे ॥ प्रौढायामप्यनुद्भिन्न । काले ऽजातशृङ्गे गवि ॥ पुरुषव्यञ्जनव्यक्ते ॥ कषाय रसे ॥ तौति । तुः सौत्रो गत्यादौ । बाहुलकादरो दीर्घश्च ॥ यद्वा । तनोति । बाहुलकाट् डुः । तूश्चासौ वरश्च आच्छादकः ॥

तूवरी । स्त्री आढक्याम् ॥ सौराष्ट्रमृत्तिकायाम् ॥

तूष्णींशीलः । त्रि । तूष्णीके । मौनयुक्ते ॥ तूष्णीं शीलं यस्य ॥

तूष्णीकः । त्रि । मौनयुक्ते । मौनशीले ॥ तूष्णींशीलः । शीलेकोमलोपश्च । केन इति प्रत्ययेन मलोपश्च मर्य्यात् अर्थ्याठपमेवविदध्यात् । ठपि अव्ययानामिति टिलोपेन सिद्धत्वात् ॥

तूष्णीकाम् । अ । मौने ॥ अकच्प्रकरणे तूष्णीमःकाम्वक्तव्यः ॥ चित्त्वादन्त्यादचःपरः ॥

तूष्णीम् । अ । मौने ॥ तोषयाम् । तुषतुष्टौ । बाहुलकात् नीम् उपधाया कन् ॥ घटाकाशं मठाकाशमिवात्मानं परात्मनि । विलाप्याखण्डभावेन तूष्णीं भव सदामुने इत्युपदेशः ॥

तूस्तम् । न । रेणौ ॥ जटायाम् ॥ तोसति । तुसशब्दे । बाहुलकात्-तन् धातोर्दीर्घश्च ॥

तृक्षम् । न । जातीफले ॥

तृखम् । न । भर्त्सने । तृणमात्रे ॥ तृ

राजघण्टाद्वयोयस्य ॥

तृणवल्लजा । स्त्री । वल्लजायाम् ॥

तृणवीजः । पुं । श्यामाके ॥

तृणवीजोत्तमः । पुं । श्यामाके ॥

तृणशीतम् । न । गन्धतृणे । कत्तृणे ॥

तृणशीता । स्त्री । जलपिप्पल्याम् ॥

तृणशून्यम् । न । मल्लिकायाम् ॥ केतकीयाखिनः फले ॥ तृणशून्येस्य नैसाधु । तत्साधुरितियत् ॥ छि । तृणरहिते ॥

तृणषट्पदः । पुं । वरोले । वरटाया म् । वरटे इति ततैया इतिच भाषा ॥

तृणसारा । स्त्री । कदल्याम् ॥ तृणानि सारमस्याम् ॥

तृणसिंहः । पुं । कुठारे ॥

तृणहर्म्यः । पुं । मयटे । तृणनिर्मिता ॥ ह्रस्विकायाम् । कैश इतिभाषा ॥

तृणाग्निः । पुं । मल्लके । तृणोत्थवह्नौ ॥

तृणाङ्घ्रिपः । पुं । मन्थानकतृणे ॥

तृणाञ्जनः । पुं । कृकलासे ॥

तृणाढ्यम् । न । पर्वततृणे । तृणप्रिये ॥

तृणाम्लम् । न । लवणतृणे । लूनिया शाक इतिभाषा ॥

तृणाह्वक् । पुं । तृणकुङ्कुमे ॥

तृणेक्षुः । पुं । वल्वजायाम् ॥

तृणोत्तमः । पुं । उलपतृणे ॥

तृणोद्भवः । पुं । नीवारे ॥

तृणौकः । न । कायमाने । तृणनिर्मितगृहे ॥

तृणौषधम् । न । एलवालुकाख्यगन्धद्रव्ये ॥

तृण्या । स्त्री । तृणसमूहे । तृणानां संहतिः ॥ तृणानांसमूहः । पाशादिभ्योयः ॥

तृतीयः । त्रि । त्रयाणां पूरणे । तीसरा इतिभाषा ॥ त्रेःसम्प्रसारणञ्चेतितीयप्रत्ययः सम्प्रसारणञ्च ॥

तृतीयकः । पुं । तृतीयकस्तृतीयेऽह्नि तिसंभवविषमज्वरविशेषे ॥ तृतीयेऽह्नीत्यागमदिनंगृहीत्वा । यस्तु कालम् । दिनमेकमतिक्रम्य योभवेत् सतृतीयक इति ॥ तृतीयेऽह्निभवः । कालप्रयोजनाद्रोगइतिकन् ॥ चिके ॥ तृतीयेन रूपेण ग्रहणम् । तावतिथंग्रहणमितिलुग्वा इतिकन् ॥

तृतीयप्रकृतिः । स्त्री । क्लीबे ॥ स्त्रीपुंसावपेक्ष्य तृतीयाचासौप्रकृतिश्चेति विग्रहः ॥

तृतीया । स्त्री । तिथिविशेषे । चन्द्रमण्डलस्य तृतीयकलाक्रियारूपायाम् । तत्क्रियोपलक्षिते काले वा ॥ सकलगुणगभीरो भूमिपालानुरागी, परनगरविगाही सर्वलोकोपकारी । परविषयनिवासी कौतुकी सत्य

यथा हंसस्य । धारामये जितानाम्
निसर्गात् मेरुं विना । अविच्छिन्न
मिवाभाति तत् तेजः सततोत्थित
म् ॥ कणपादादिघातैर्यत् साध्वसा
त् स्फुरितन्तदिति ॥ * ॥ अन्यस्य
शैतन्मात्रसहिताद्रूपतन्मात्रादुत्पन्नो
ऽव्यस्पर्शरूपगुणो तृतीयमहाभूते
॥ यथा । तृतीयं ज्योतिरित्याहुः
चक्षुरध्यात्ममुच्यते । अधिभूतं ततो रूपं
सूर्यस्तत्राधिदैवतम् ॥ उष्णस्पर्शवत्ते-
जः । तद्द्विविधम् । नित्यमनित्यञ्च
। नित्यं परमाणुरूपम् । अनित्यं का
र्यरूपम् । पुनस्त्रिविधम् । शरीरेन्द्रिय
विषयभेदात् । शरीरमादित्यलोके
। इन्द्रियं रूपग्राहकं चक्षुः कृष्णतारा-
ग्रवर्त्ति । विषयस्तु चतुर्विधः । भौमदि
व्योदर्याकरजभेदात् । भौमं वह्न्या
दिकम् । अबिन्धनं दिव्यं विद्युदादि ।
भुक्तान्नस्य परिणामहेतुरौदर्यम् । आ
करजं सुवर्णादीति तर्कसंग्रहः ॥ रूप
ञ्चैतस्य तेजसस्तु स्याद्रूपं शुक्लभास्व
रम् । नैमित्तिकं द्रवत्वन्तु नित्यतादि
च पूर्ववत् ॥ इन्द्रियं नयनं वह्निः स्वर्णादि
विषयो मतः इति भाषापरिच्छेदः ॥
तेजयति तेजते ऽनेन वा । तिज०
असुन् ॥ तेजोजलमिति छन्दोनि-
घण्टुः ॥

तेजस्करः । त्रि । तेजोवृद्धिकारके ॥
तेजस्वी । त्रि । तेजोयुक्ते ॥ त्वष्टा-
निमति ॥ तेजोऽस्त्यस्य विनि ।
इति विनिः ॥
तेजस्विनी । स्त्री । ज्योतिष्मत्याम् ॥
महाज्योतिष्मत्याम् ॥ तेजवती तै
जवत्याम् तेजवलइत्यादि भाषा
ते तेजःफले ॥ तेजस्विनी कफवा
तकासाऽऽश्रामयवातहृत् । पाच
न्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीप-
नी ॥ नामस्वधायोऽपीयम् ॥
तेजितः । त्रि । शाने । शाणादिना ती
क्ष्णीकृते ॥ शाणिते । निशिते ॥ ते-
जयतेः क्तः । तिज० चुरा० क्तः ॥
तेजीयान् । त्रि । तेजोयुक्ते ॥ तेजीय
सां न दोषाय वह्नेः सर्वभुजो यथा ॥
तेजोमन्थः । पुं । गणिकारिकायाम् ॥
तेजो मथ्नाति ॥ मन्थ० कर्मण्यण् ॥
तेजोमयः । पुं । तेजःप्रचुरे चैतन्य
प्रधाने ज्योतिर्मये । अन्तःकरणोप-
हितत्वात् भासनामये स्वप्ने ॥
तेजोमात्रा । स्त्री । इन्द्रिये ॥ तेजसो
मात्रा ॥
तेजोरूपम् । न । प्रकाशरूपे ब्रह्मणि
॥ त्रि । प्रभारूपे ॥
तेजोवती । स्त्री । गजपिप्पल्याम् ॥
चव्ये ॥ महाज्योतिष्मत्याम् ॥ वह्नि

पुरीम् ॥ यथा ॥ रक्तपीतमणिप्रायहे-
मप्राकारगोपुरा । चक्रे तेजोवतीं व-
ह्नितुल्यभूतनिषेविता ॥ तेजसला-
खमाक्षे ॥

तेजोह्वयः । पुं । क्षुद्राग्निमन्थे ॥

तेमः । पुं । आनाङ्गविशेषे ॥ यथा ।
तेमेतिमं क्लेदनः स्यान्मज्जानां मद्-
शीकः । तेमक्लेदेऽप्यते गौरी नमक्ले-
दोऽप्यते हरः । तेमनाङ्कविकरणार्थं
मक्लेन इति स्मृत इति स्मृतौ० ॥

तेमः । पुं । समुन्दने । आर्द्रीभावे ॥
तेमनम् । तिम आर्द्रीभावे । घञ् ॥

तेमनम् । न । आर्द्रीकरणे ॥ निष्ठाने ।
व्यञ्जने । तीमन इति तेमन इति
भाषा ॥ तिम० ल्युट् । तिम्यतेऽ-
नेन वा करणे वा ल्युट् ॥

तेमनी । स्त्री । चुल्लिप्रभेदे ॥

तेवनम् । न । केलिकानने ॥ क्रीडाया-
म् ॥ तेवनेन वनं गत्वा नदीस्तीर्त्वा
बहुरूपका इति रामायणम् ॥

तैक्ष्ण्यम् । न । तीक्ष्णतायाम् ॥

तैजसः । पुं । इन्द्रियाणां कारणे । राज-
साहङ्कारे ॥ तेजोमयान्तःकरणोपहि-
तत्वात् सूक्ष्मप्रपञ्चाभिमानि स्वप्नव्य-
ष्ट्युपहितचैतन्ये ॥ तेजसि परमा-
त्मनि स्थिते ॥ न । धातुद्रव्ये । सर्व-
धातु ॥ घृते ॥ तेजसो विकारः । त-
द्विकारद्रव्यम् ॥ यद्वा । तेजोऽ-
स्यास्य । ज्योत्स्नादण् ॥ तीर्थविशेषे
॥ यत्र ब्रह्मादिभिः सैनापत्ये कार्त्ति-
केयोऽभिषिक्तः ॥

तैजसावर्त्तिनी । स्त्री । मूषायाम् ॥ ते-
जसो विकारः सुवर्णादि तदावर्त्ततेऽ-
स्याम् । वृतु वर्त्तने । णिच् । अधि-
करणे ल्युट् । ङीप् ॥

तैतिलः । पुं । गण्डकपशौ ॥ न । चतु-
र्थकरणे ॥ कर्णासुरूपो ललनाभि-
लाषी सुमूर्त्तिसत्वर्जितमानदेशः ।
भक्ता गुणज्ञः कुरुते सुशीलस्तै-
तिलाख्यंकरणं प्रसूतौ ॥

तैत्तिडीकम् । न । तिन्तिडीकस्यावय-
वे ॥ तद्विकारे ॥ कोपधाच्चेत्यण् ॥
तिन्तिडीकेन संस्कृते ॥ कुलत्थकोप-
धादण् ॥

तैत्तिरः । पुं । तित्तिरिखगे ॥ न । ति-
त्तिरीणां गणे ॥ तित्तिरीणां समूहः
। अनुदात्तादेरञ् ॥

तैत्तिरिकः । पुं । शाकुनिकविशेषे ॥
तित्तिरान् हन्ति । ठक् ॥

तैत्तिरीयकः । पुं । यजुर्वेदीयशाखा-
विशेषस्यवेत्तरि ॥

तैत्तिरीया । स्त्री । यजुर्वेदशाखावि-
शेषे ॥

तैमिरिकः । त्रि । तिमिरग्रस्तचक्षुषि ॥

तिहृदयं कीर्त्तिलाभश्च सोमे भौमे स्त्वृर्भवति नियतं चन्द्रजे पुत्रलाभः । अर्थग्लानिर्भवति च गुरौ भार्गवे शोकयुक्त स्नैलाभ्यङ्गात् तनयमरणं सूर्य्येलैर्दीर्घमायुः ॥ सिद्धके ॥

तैलकन्दः । पुं । तिलाङ्कितदले । द्रावकन्दे ॥ लोहद्रावित्वं कटुत्वमुष्णत्वं वातापस्मारविषशोफनाशित्वं सस्यबन्धकारित्वं देहसिद्धिकारित्वं चेत्यस्य गुणाः इति राजनिर्घण्टः ॥

तैलकारः । पुं । तेली इति प्रसिद्धे वर्णसङ्करजातिप्रभेदे । धूसरे । चाक्रिके । तैलिनि ॥ कोटकस्त्रीगर्भे कुम्भकाराज्जातोयमिति ब्र०ब्र०खं ॥

तैलकिट्टम् । न । खोल इति भाषाप्रसिद्धे तैलमले । पिण्याके ॥

तैलङ्गः । पुं । अन्ध्रदेशे ॥ श्रीशैलमुसमारभ्य चोलेशान्मध्यभागतः । तैलङ्गदेशो देवेशि ध्यानाध्ययनतत्परः ॥

तैलचौरिका । स्त्री । तैलपायिकायाम् ॥

तैलद्रोणी । स्त्री । कण्ठपर्यन्तमज्जनार्थं तैलपूर्णकाष्ठादिनिर्मितपात्रविशेषे ॥ तथावस्थितिगुणाः । वातरोगव्याकुलरोगपङ्गुवाधिर्यमिन्मिनगद्गदधन्वकुब्जपृष्ठप्रचलितपवनगात्रकम्पकपाटीग्रीवाभङ्गापतन्त्रकयकृधिरभवमूत्रकृच्छ्रवस्तिरोगेषु शस्यते

मितिराजवल्लभः ॥

तैलधान्यम् । न । तिलादिषु ॥ तिलातसी च तोरी च विविधापि सर्षपः । विधाराजी खोखसश्च बीजं कौसुम्भसम्भवम् । एतानि तैलधान्यानि प्रोक्तानि पूर्वसूरिभिः ॥

तैलपर्णः । पुं । पर्वतविशेषे ॥ न । ग्रन्थिपर्णे ॥

तैलपर्णकम् । न । ग्रन्थिपर्णद्रव्ये ॥

तैलपर्णिकम् । न । हरिचन्दने ॥ तैलपर्णी वृक्षविशेषे जातम् । तत्र जातइत्यण् । ङीप् । स्वार्थे कन् । केण इतिह्रस्वः ॥ तैलपर्णी गिरिर्तत्राकर इतिस्वामी ॥ पुं । चन्दनविशेषे ॥

तैलपर्णी । स्त्री । मलयजे चन्दने ॥ श्रीवासे ॥ सिह्लके ॥ तिलपर्णीवृक्षे जाता । तत्र जातइत्यण् । ङीप् ॥

तैलपा । स्त्री । तैलपायिकायाम् ॥

तैलपायिका । स्त्री । सपक्षकीटविशेषे । परोष्णयाम् । तिलचटा इति भाषा ॥ तैलं पिबति । पापाने । ण्वुल् ॥

तैलपिपीलिका । स्त्री । पिपीलिकाप्रभेदे । कपिलाङ्गिकायाम् ॥

तैलफलः । पुं । इङ्गुदाम् ॥ विभीतके ॥

तैलभाविनी । स्त्री । जातीपुष्पवृक्षे ॥

तैलमाली । स्त्री । वर्त्तौम् ॥ दीपकू

प्याम् ॥

तैलम्पाता । स्त्री । स्वधायाम् ॥ पतनं पातः । तिलस्य पातः । तिलपातो ऽस्याम् । घञः सास्यां क्रियेति णः । घञन्तात् क्रियावाचिनः प्रथमान्ता दस्यामित्यर्थे णः स्यात् तदन्तात्स्त्रियाम् । श्येनतिलस्येतिमुम् ॥

तैलसाधनम् । न । गन्धद्रव्यविशेषे । काकोली । काकोलं । काकक्षा इति गौडेषु प्रसिद्धे कोषफले ॥

तैलस्फटिकः । पुं । तृणमणौ ॥ हे ॥

तैलाक्तः । त्रि । तैलेनसिक्ते ॥

तैलागुरु । न । दाहागुरुणि ॥

तैलाटी । स्त्री । वरटायाम् ॥

तैलाम्बुका । स्त्री । तैलपायिकायाम् ॥

तैलिकः । पुं । तैलकारे । तैलयंतिला दियोनामा पेडरि ॥

तैली । पुं । तैलकारे । चाक्रिके ॥ त्रि । तैलसम्बन्धिनि ॥

तैलिनी । स्त्री । दशवर्त्याम् । तैलकीटे । पक्षिन्यायाम् ॥

तैलिशाला । स्त्री । तैलिकगेहे । यन्त्रगृहे ॥

तैलीनम् । न । तिल्ये ॥ तिलक्षेत्रे ॥ तिलानां भवनं क्षेत्रम् । विभाषातिलेतिपदेखञ् ॥

तैषः । पुं । पौषमासे ॥ तिष्येणयुक्ता पौर्णमासी अस्मिन् । सास्मिन्-पौर्णमासीत्यर्थे सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । तिष्यपुष्ययोर्नक्षत्राणियलोपः । ङीप् । ततः सास्मिन् पौर्णमासीत्यण् ॥



तैषी । स्त्री । पौर्ण्याम् ॥ तिष्येण युक्ता पौर्णमास्यस्मिन् । नक्षत्रेभ्योऽण् । तिष्यपुष्ययोर्नक्षत्राणियलोपः । ङीप् ॥

तोकम् । न । अपत्ये । पुत्रदुहितरोः ॥ तौति । तुः सौत्रो हिंसावृत्तिपूर्त्तिषु । बाहुलकात्कः ॥

तोक्मः । पुं । हरिते ॥ हरियवेन । अपक्वयवे ॥ पक्वयवाङ्कुरे इति श्रीधरस्वामी ॥ हरिद्वर्णे ॥ न । कर्णमले ॥ तकति तच्यते वा । तकहसनेऽशनेच । बाहुलकात् मः । ओत्वञ्च ॥ मेघे ॥ इत्यजयपालः ॥

तोटकम् । न । द्वादशाक्षरपादे जगती छन्दोभेदे ॥ यथा । विनिधेहि चतुः सगणं रुचिरं रविसंख्यकवर्णकृतं सुचिरम् । फणिनायकपिङ्गलसंकथितं कुरु तोटकवृत्तमिदं रुचिरम् ॥ यथा । सकलं मनसा क्रियया जनितं मम वेद्म्यविनाश्रितया तु जगत् । परिशिष्यत कश्चिददो निखिलं इति नाशिकृतेन मः सम्यमितीति ॥

तोडः । पुं । भेदे ॥ तोडनम् । तुडतौ डने ॥ घञ् ॥

तोडनम् । न । दारणे ॥ हिंसने भेदे ॥

तोत्रम् । न । प्रतोदे । प्राजने । गवादिपशूनां ताडनदण्डे ॥ वैणुके । हस्तिनः ताडनदण्डे ॥ तुद्यते ऽनेन ॥ तुद्व्यथने । दाम्नीसितुष्ट्रन् ॥

तोदः । पुं । व्यथायाम् ॥ तोदनम् । तुद० । घञ् ॥

तोदनम् । न ॥ व्यथने ॥ तोत्रे । हर्षभादिप्रेरणदण्डे ॥ तुद० । ल्युट् ॥

तोदितः । त्रि । प्रेरिते ॥

तोमरः । पुं । न । शर्वलायाम् । गर्दासाहसि सवली इतिख्याते ऽस्त्रे ॥ हस्तक्षेप्यस्त्रयष्टिदण्डे । रायबांस इतिभाषा ॥ स्थूलाग्रगदायाम् ॥ जभ्यादि(।ऽ)विकल्पे ॥ छन्दश्छन्दोभेदे ॥ यथा । प्रथमं करं विनिधाय जगणद्वयमिधाय । कुरु तोमरं सुखकारि फणिराजवक्त्रविहारि ॥ यथा । सखि मादके मधुमासि प्रजवत्वरं किमिहासि । सहतेन किं विहगासि किमु पावकं प्रविशामीति ॥

तोमरधरः । पु । अग्नौ ॥ इतिशब्दा० ॥

तोमरिका । स्त्री । आढक्याम् । तुवर इतिभाषा ॥

तोयम् । न । अम्बुनि । जले ॥ एकत्र सेवितं तोय मभक्ष्यं सर्वसम्मतम् ॥ उद्धृतं वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तुल्यः स्यात् मनुराह प्रजापतिः ॥ अगम्यगमनकरस प्रीतिश्च दृषापहम् । अच्छं लघु च पथ्यञ्च तोयं गुणवदुच्यते ॥ तौति । तु. वौचत्याचरणार्थः । तौणादिकोयः ॥ पूर्वाषाढायाम् ॥

तोयकामः । पुं । अम्बुवेतसे । परिव्याधे ॥ त्रि । जलाभिलाषिणि ॥

तोयकृच्छ्रम् । न । जलमात्रपानरूपव्रतविशेषे ॥ इतिमिताक्षरा ॥

तोयडिम्भः । पुं । घनोपले ॥ इ०शा० ॥

तोयदः । पुं । मेघे ॥ मुस्तके ॥ न । आज्ये ॥ त्रि । जलदातरि ॥ जलदानमाहात्म्यम्महाभारते । दानधर्मे । अन्नेदत्तेनरेणेह प्राणादत्ताभवन्तु त । प्राणदानाद्धि परमं नदानमिह विद्यते ॥ अन्नं वापिप्रभवति पानीयात् कुरुसत्तम । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते ॥ अन्नौषध्योमहाराज वीरुधश्चजलोद्भवाः । यत प्राणभृतां प्राणाः सम्भवन्ति विशांपते ॥ तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित् । तद्ददद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः ॥ धन्यं यशस्य मायुष्य जलदान मिहोच्यते

तौक्षिकः । पुं । धनूराशौ ॥

तौतातिकम् । न । तुतातभट्टकृतेमीमांसाशास्त्रे ॥

तौतिकः । पुं । शुक्तौ ॥ न । मुक्तायाम् ॥

तौरङ्गिकः । पुं । अश्वारोहे । सादिनि ॥

तौरायणिकः । पुं । यजमाने ॥ तुरायणं यज्ञविशेषं निर्वर्त्तयति । पारायण-तुरायणेत्यादिना ठञ् ॥

तौर्य्यम् । न । तुर्य्यमुरजादौ भवेशब्दरूपे ॥

तौर्य्यत्रिकम् । न । नृत्यगीतवाद्येषु समुदितेषु ॥ तुरीत्वरायाम् । कषयोरभेद् । गुणं साधित्वा त्राहुलकाद्गुणिचेतिदीर्घः । तूर्य्यमुरजादि तत्र भवं तौर्य्यशब्दः । त्रयोंशा यस्य तत् त्रिकम् । सङ्ख्याया अतिशदन्तायाः कन् । तौर्य्यापलक्षितं त्रिकमिति विग्रह ॥

तौलः । पुं । तुलाराशौ । तौलिनि ॥ त्रि । तुलासम्बन्धिनि ॥

तौलिकः । पुं । चित्रकारे ॥

तौलिकिकः । पुं । चित्रकारे । रङ्गाजीवे ॥

तौल्यम् । त्रि । तुलया परिच्छिन्ने ॥ तुल्यमेव । स्वार्थे ऽण् ॥

तौषारम् । न । हिमोदकविशेषे । तुषारजले ॥ अपि नद्याः समुद्रान्ते वङ्किरापश्चतद्भवाः । धूमावयवनिर्मुक्ताश्चौषाराख्यास्तुताः स्मृताः ॥ अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ताहिताः ॥ तुषाराम्बु हिमं रूक्षं स्याद्वातमपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेदोगण्डादिरोगनुत् ॥ नदीनीरस्य समुद्रपर्य्यन्तं वह्निराशौ तद्भवा वह्निभूताः धूमावयव निर्मुक्ताः धूमार्ज्जरहिता आपः तुषाराख्याः स्मृताः ॥ तुषारस्येदम् । तस्येदमित्यण् ॥

त्यक्तः । त्रि । हीने । विधूते । समुज्झिते । कृतत्यागे । छोडा इति भाषा ॥ त्यज्यतेस्म । त्यजहानौ । क्तः ॥

त्यक्तव्यः । त्रि । त्यजनीये ॥

त्यक्तसर्वपरिग्रहः । त्रि । समस्तभोगोपकरणरहिते विरक्ते ॥ त्यक्ताः सर्वे परिग्रहा येन ॥

त्यजनम् । न । त्यागे । वर्ज्जने ॥

त्यदः । त्रि । तच्छब्दार्थे ॥ सर्वादिः । त्यजति । त्यज । त्यजितनियजिभ्योडिदित्यदिः ॥ स्त्रियां स्या । क्लीबे त्यत् ॥ वाच्याकाशयोः ॥

त्यागः । पुं । दाने । अर्थिषु मुक्तहस्ततायाम् ॥ धर्मेणोपार्जितार्थस्य सत्पात्रे विनियोगे ॥ वर्ज्जने ॥ सर्वकर्मफलाभिसन्धिवर्ज्जने । कर्माधिकारिक

 

पूर्वकफलाभिसन्धिपूर्वककर्म्मत्यागे ॥ स च सात्त्विकादिभेदात् त्रिविधो भवति ॥ यथा । नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥ १ ॥ दुःखमित्येव यत्कर्म्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ २ ॥ कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्ज्जुन । सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥ ३ ॥ अपि च । विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च त्रिविधो भवति । तथाहि । फलाभिसन्धिपूर्व्वककर्म्मत्यागः सत्यपि कर्म्मणि फलाभिसन्धित्यागादेकः १ । स च सात्त्विकत्वादुपादेयः ॥ सत्यपि फलाभिसन्धौ कर्म्मत्यागात् द्वितीयः २ । स च दुःखबुद्ध्याक्लेशाद्राजसः विपर्य्यासेन कृतस्तामसः इति भेदात् द्विविधो हेयो भवति ॥ फलाभिसन्धेः कर्म्मणश्च त्यागात् तृतीयः ३ । स च कर्म्मानधिकारिकर्त्तृकोनैर्गुण्यरूपः ॥ सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्व्वककर्म्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यवेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य कर्म्मणो वैतृष्ण्ये जातस्तथाऽवश्यकर्म्मणः परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते ॥ द्वितीयस्तु जन्मान्तरकृतसाधनाऽभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य, स्वतएव फलाभिसन्धेः कर्म्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास उच्यते ॥ * ॥ त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ * ॥ त्यागेन युक्ता दिवमुत्पतन्ति, त्यागेन हीना नरकं व्रजन्ति । न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्व्वस्य समानिरस्ति ॥ त्यजनम् । त्यज हानौ । घञ् ॥ विवेकिपुरुषे ॥ इति शब्दरत्नावली ॥ उपेक्षायाम् ॥

त्यागफलम् । क्ली । ध्याननिष्ठायाम् ॥

त्यागी । त्रि । दातरि ॥ शूरे ॥ वर्ज्जनशीले ॥ सात्त्विकत्यागेनयुक्ते ॥ न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ नहि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥

त्यजति लक्ष्मीशः। सम्पृचानुरुधे -तिघिनुण् ॥

त्यागिमः। त्रि। त्यागजे ॥ त्यागेन निर्वृत्तः। भावप्रत्ययान्तादिमप् ॥

त्याजितः। त्रि। विसर्जिते ॥ त्यजेरर्थे स्मात् द्विकर्मकात् कर्मणिक्तः। प्रधाने कर्त्तुश्च कर्मणाभिव्युक्तः ॥

त्याज्यः। त्रि। त्यागयोग्ये। वर्जनीये। वर्ज्ये ॥ सीरे-प्रतिग्रहस्त्याज्यो त्याज्योधर्मस्य विक्रयः ॥ अपित्र। -पिव त्रसिथयंमद्यं शोधितं, त्याज्यशोधितम्। त्याज्यो भवति कौन्तो दृष्टनो -यो ऽपिभूभृत इति ॥ त्यजेयच्चति गच्छति कवर्गादेशाभावः ॥

त्रङ्गः। पुं। प्रतिमार्गे ॥

त्रङ्गा। स्त्री। प्रतिमार्गे। उदङ्के ॥

त्रप। पुं। लज्जे ॥ त्रपते। त्रपूष लज्जायाम्। षित्वादङ् ॥

त्रपा। स्त्री। लज्जायाम् ॥ कुलटायाम् ॥ त्रपते ऽनया। त्रपूष०। पिद्भिदादिभ्योऽङ्। टाप् ॥ कुले ॥ कीर्त्तौ ॥ इति शब्दरत्नावली ॥

त्रपाकः। पुं। म्लेच्छविशेषे ॥

त्रपारण्डा। स्त्री। वेश्यायाम् ॥

त्रपिष्ठः। त्रि। तृप्रतमे ॥ अयमेषामतिशयेनतृप्रः। अतिशायने इष्ठन्। प्रियस्थिरेति तृप्रस्यत्रबादेशः ॥

त्रपीयान्। त्रि। तृप्रतरे ॥ अतिशयेन तृप्रः। द्विवचनविभज्येति ईयसुन् ॥ प्रियस्थिरेति तृप्रस्यत्रबादेशः ॥

त्रपु। न। सीसके ॥ रङ्गे ॥ अर्तिंहृष्टा त्रपते लज्जतइव। त्रपूष०। शस्तृ -स्निहित्रप्यसिवसिहनिक्लिदिबन्धिम -निभ्यश्चेत्युः ॥

त्रपुकर्कटी। स्त्री। त्रपुष्याम् ॥

त्रपुटी। स्त्री। सूक्ष्मैलायाम् ॥ इ० र० ॥

त्रपुलम्। न। रङ्गे। राँग इति भाषा ॥

त्रपुषम्। न। कर्कटीप्रभेदे। सुधावासे। सुशीतले। लघुखीरा बालम खीरा इत्यादिभाषा ॥ त्रपुषं लघु शीतञ्च नवं तृट्क्लमदाहजित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम् ॥ तत् पक्वमतमुष्णं स्यात् पित्तलं कफवातनुत्। तद्वन्मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥

त्रपुषी। स्त्री। कर्कट्याम्। खीरा इति भाषा ॥

त्रपुः। न। } रङ्गे ॥
त्रपुसम्। न। }

त्रपुसी। स्त्री। महेन्द्रवारुण्याम् ॥ कर्कट्याम् ॥ लताविशेषे। पीतपुष्पायाम्। खीरा इति भाषा ॥

त्रयम्। न। त्रितये ॥ त्रयो ऽवयवाः अस्य। सङ्ख्यायाअवयवेतयप्। द्वि

विभ्यांतयस्त्रायक्ष्यौ ॥

त्रयी । स्त्री । त्रिवेदाम् । ऋग्यजुःसामा ख्यश्रुतिचये ॥ यथा । अयंपुरुषो यद् र्वयमेतत् त्रयीमयम् ॥ सर्गादावृ च्ययोव्यक्ता स्थितौ विष्णुर्यजुर्मयः । रुद्रः साममयोऽन्ताय तस्मात् तस्या शुचिर्ध्वनिः ॥ पुरन्ध्याम् ॥ सुमतौ ॥ सोमराजीवृक्षे ॥ भवान्याम् । दुर्गायाम् ॥ यथा । ऋग्यजुःसामभागेन साङ्गवेदगतापि या । त्रयीति पठ्यते लोकेदृष्टादृष्टार्थसाधिनीति देवी पुराणम् ॥ त्रितये ॥ टिड्ढेति ङीप् ॥

त्रयीतनुः । पुं । सूर्य्ये ॥ त्रयी तनुर्य स्य सः ॥

त्रयीधर्म्मः । पुं । त्रय्या विधीयमाने ज्यो तिष्टोमादिकर्म्मणि ॥ त्रय्याःधर्म्मः त्र यीधर्म्मः ॥

त्रयीमुखः । पुं । ब्राह्मणे ॥ त्रयी मुखे यस्य ॥

त्रयोदशः । त्रि । त्रयोदशानाम्पूरणे ॥ तस्यपूरणेडट् ॥

त्रयोदश । त्रि । सङ्ख्याविशेषे १३ । ते रह इति भाषा ॥ सङ्ख्येये ॥ त्रय श्च दश च । त्र्यधिकादशेति वा । वे श्वय इतिचयस् । कर्त्त्वोत्त्वगुणाः ॥

त्रयोदशी । स्त्री । तिथिविशेषे ॥ सा चन्द्रस्य त्रयोदशकलाक्रियारूपा त्र योदशकलाक्रियावच्छिन्नकालरूपा वेति तिथ्यादितत्त्वम् ॥ रूपान्वितः सात्त्विकभावहीनः सुखी च वास्ते ज नीप्रियश्च । सदालसः शिल्पगुणै र्वेत्ता त्रयोदशी जन्मतिथिर्यदि स्यात् ॥

त्रय्यात्मा । पुं । सूर्य्ये ॥ त्रयी आत्मा स्व रूपं यस्य ॥

त्रसम् । न । वने ॥ त्रि । जङ्गमे ॥ त्रस ति । त्रसी उद्वेगे । पचाद्यच् ॥

त्रसनः । त्रि । सन्त्रासयुक्ते ॥

त्रसरः । पुं । तन्तुवायोपकरणविशेषे । सूत्रवेष्टने । तासनी इति गौडभा षा ॥ त्रसनम् । त्रसी० अरम् ॥

त्रसरेणुः । पुं । परमाणुषट्के । संयु क्तद्व्यणुकत्रये ॥ जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥ वैद्य कपरिभाषया त्रिंशत् परमाणुप रिमाणे । ध्वंस्याम् ॥ यथा । जाला न्तरगतेसूर्य्यकरे ध्वंसी विलोक्यते । त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणु भिरिति ॥ स्त्री । सूर्य्यपत्न्याम् ॥

त्रस्तः । त्रि । भीते ॥ चकिते ॥ न । शीघ्रे ॥

त्रस्नुः । त्रि । त्रासशीले । भीरौ ॥ त्रस्य ति । त्रसी० । त्रसिगृधिधृषिक्षिपेः

क्तुः । नेड्वशीति नेट् ॥

त्राणम् । क्ली । त्रायमाणायामोषधौ ॥ रक्षणे ॥ त्रि । रक्षिते ॥ त्रायते स्म । त्रैङ् पालने । क्तः । नुदविदेति पक्षे नत्वम् ॥ रक्षके ॥ त्रायते । कर्त्तरि ल्युट् ॥

त्राणा । स्त्री । त्रायमाणायाम् ॥

त्रातः । त्रि । रक्षिते ॥ त्रायते स्म । त्रैङ् । क्तः । नुदविदोन्देत्राघ्राह्रीभ्यो न्यतरस्यामिति पक्षे नत्वाभावः ॥

त्राता । त्रि । पालयितरि ॥ त्रायते । त्रैङ् । तृच् ॥

त्रान्सः । पुं । द्वार्थसाने शब्दे ॥ चौरस्य । यथा । थाथान् कश्चित् त्रान्सः शब्दोऽयं नपुंसकेतु बोद्धव्यः ॥ यथा । पत्रच्छत्रपद्मपविनककलत्रादयो नपुंसकाः पठ्यन्ते ॥

त्रापुषम् । त्रि । त्रपुणो विकारे ॥ त्रपुज तुनोः षुगित्यण् ॥

त्रायन्ती । स्त्री । वार्षिके । त्रायमाणायाम् । बलभद्रिकायाम् ॥ त्रायं त्राः । संपदादित्वात् क्विप् । त्राम् अयति । इगतौ । शतृप्रत्ययः । उगितश्चेति ङीप् ॥ त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मास्रभ्रमशूलविषप्रणुत् ॥

त्रायमाणः । त्रि । रक्षमाणे ॥

त्रायमाणा । स्त्री । लता इति वहुधा इतिच गौडभाषाप्रसिद्धायां देवतलायाम् । वार्षिकौषधौ । त्रायन्त्याम् ॥ अस्या गुणा यथा । शीतत्वं मधुरत्वं गुल्मज्वरकफास्रभ्रमतृष्णाक्षयग्लानिविषच्छर्दिविनाशित्वञ्च ॥ इति राजनिर्घण्टः ॥ त्रायते । त्रैङ् । शानच् चानश् वा ॥

त्रासः । पुं । भये ॥ त्रसी उद्वेगे । घञ् ॥ मणेर्दोषे ॥

त्रासजिह्मः । त्रि । भयक्लिष्टे ॥ त्रासेन जिह्मः ॥

त्रासदायी । त्रि । भयदातरि । शङ्करे ॥ इति हेमचन्द्रः ॥

त्रासनः । त्रि । भयावहे ॥

त्रयः । पुं । त्रिसङ्ख्यायाम् । तीन इति भाषा ॥ त्रि । सङ्ख्येये । त्रिसङ्ख्याविशिष्टे ॥ यथा त्रयोदेवाः त्रतुर्देवा नांचयः ॥ तरति । तॄ॰ । तरतेर्ड्रिः । त्रयः त्रीन् त्रिभ्य इत्यादिरूपाणि ॥ तिस्रोभार्याः स्त्रियास्तस्य त्रयो भृत्याश्च बान्धवाः । सर्ववेदविदश्चास्य मद्गोने मङ्गलप्रदाः इति ब्रह्मवैवर्त्तपुराणम् ॥

त्रिंशः । त्रि । त्रिंशत्तमे । तीसवाँ इति भाषा ॥ त्रिंशतः पूरणः । तस्य पूरणे डट् ॥

त्रिंशकः । त्रि । त्रिंशद्भिः क्रीते ॥ त्रिंश

त्रिंशद्भागयुक्तसंज्ञायामिच्छस-
ञ्ज्ञायामार्षीयेष्वर्थेषु ठवुन् । टि
लोपः ॥

त्रिंशत्, स्त्री, सङ्ख्याविशेषे । तीस
इति भाषा ॥ सङ्ख्येये ॥ त्रयोदश
तः परिमाणमस्य । पङ्क्ति विंशति
त्रिंशच्चत्वारिंशदिति निपातनात् प्र
कृतेस्त्रिन् भावः शच्च प्रत्ययः ॥

त्रिंशत्पत्रम्, न, कुमुदे । कैरवे ॥ त्रिंश
त्सङ्ख्यकानि पत्राणि यस्मिन् तत् ॥

त्रिंशांशः, पुं, राशेस्त्रिंशदंशे ॥ यथा ।
पञ्चपञ्चाष्टसप्ताख्या विषमे त्रिंशदंश
काः । माहेयशनिजीवज्ञशुक्राणां व्यु
त्क्रमात्समे ॥ विषमराशौ कुज-
शनिगुरुबुधशुक्राणां पञ्चपञ्चाष्टसप्त
पञ्चमितास्त्रिंशदंशकाः क्रमात् ज्ञेयाः
। समराशौ व्युत्क्रमात् तेषां विपर्यये
ण त्रिंशांशा ज्ञेयाः ॥ यथा मेषो विष
मराशिः तत्र प्रथमावधि पञ्चांशा भौ
मस्य । षष्ठांशमारभ्य दशमांशपर्य
न्तं पञ्चांशाः शनेः । एकादशांशमा
रभ्याष्टादशांशपर्यन्तमष्टावंशा गुरोः
। ऊनविंशांशमारभ्य पञ्चविंशांश-
पर्यन्तं सप्तांशा बुधस्य । ततः षड्विंशां
शमारभ्य त्रिंशांशपर्यन्तं पञ्चांशाः
शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः । मि
थुनसिंहतुलाधनुःकुम्भेष्वप्येवम् ॥



समराशौ व्युत्क्रमाद्यथा । वृषे प्रथ-
मांशमारभ्य पञ्चांशा भृगोः । ततो
द्वादशांशपर्यन्तं सप्तांशा बुधस्य । त
तो विंशांशपर्यन्तं अष्टावंशा गुरोः । त
तः पञ्चविंशांशपर्यन्तं पञ्चांशाः शनेः
। ततस्त्रिंशदंशपर्यन्तं पञ्चांशाः कुज
स्य त्रिंशांशाः ॥ एवं कर्ककन्यावृश्चि-
कमकरमीनेष्वपि बोध्याः ॥

त्रिकम्, न, पृष्ठाधरे । पृष्ठवंशाधोभागे
। कटिभागे ॥ त्रये ॥ त्रिपथसंस्थाने
॥ त्रिफलायाम् ॥ त्रिकटुनि ॥ त्रिम
दे ॥ यथा । गुडूचीसारसंयुक्तात् त्रि
कषयसमन्वयात् । वातरक्तं निह-
न्त्याशु सर्वरोगहरस्त्वयः ॥ त्रयाणां
सङ्घः । सङ्ख्यायाः संज्ञासङ्घसूत्रा
ध्ययनेष्विति कन् ॥ तृतीयके ॥ तृ
तीयेन रूपेण ग्रहणं ग्रन्थस्य । तावति
थं ग्रहणमिति लुग्वेति कन् पूरणप्र
त्ययस्य च वा लुक् ॥ पुं, गोक्षुरे ॥

त्रिककुत्, पुं, त्रिकूटाचले ॥ त्रीणि
ककुदानि शृङ्गाण्यस्य ॥

त्रिककुप्धामा, पुं, विष्णौ ॥ ऊर्द्ध्वाधो
मध्यभेदेन तिसृणां ककुभां धाम
आश्रयोऽयः ॥ तिसृणां ककुभां दिशां
समाहारे इति विग्रहे तद्धितार्थोत्त
रपदसमाहारे चेति समाहारे द्विगु
रेकवचनमित्येकवद्भावे सनपुंस-

ककुभमिति नपुंसकत्वेन त्रिककुप् तस्य धाम अधिष्ठानं प्रकाशो वेति। इदञ्च समासात्मकमेकं नाम। त्रिककुभमिति भाष्यं न विग्रहप्रदर्शकं किन्तु फलितार्थकथनम् ॥

त्रिकटः। पुं। गोक्षुरके॥

त्रिकटु। न। कटुत्रिके। त्र्यूषणे व्योषे॥ विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते॥ त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्। गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान्॥ त्रयाणां कटूनां मरिचशुण्ठिपिप्पलीनां समाहारः॥

त्रिकण्टः। पुं। गोक्षुरके॥ मद्गुरे। क्षुपीमत्स्यभेदे। तिक्तांटायूकर इति भाषा॥ टेङ्गरा इति गौडप्रसिद्धे मत्स्ये॥ न। कण्टकत्रये। मिलित वृक्षस्य त्रिदलमीदृशस्पर्शाश्रयरूपे॥ त्रीणि कण्टकानि यस्य यस्मिन्वा॥

त्रिकण्टकः। पुं। गोक्षुरकवृक्षे॥ लघुगर्गमत्स्ये॥

त्रिकर्मकृत्। पुं। इज्याध्ययनदानानां कर्त्तरि॥

त्रिकशूलम्। न। वातजन्यव्यथाविशेषे॥ स्फिगस्थ्नोः पृष्ठवंशास्थ्नो यः सन्धिस्तत्त्रिकं स्मृतम्। तत्र वातेन या पीडा त्रिकशूलं तदुच्यते॥

त्रिका। स्त्री। कूपस्य नेमौ। कूपस्यान्ते इष्टिकादिधारणयन्त्रे॥ तिस्रोऽस्रयोऽस्याः। सङ्ख्यायाः संघातसङ्घसूत्राध्ययनेष्विति कन्॥

त्रिकायः। पुं। सुगते॥ त्रयः कायाः अस्य॥

त्रिकार्षिकम्। न। मिलितनागराऽतिविषामुस्तात्रयरूपे॥

त्रिकालम्। न। कार्यकालतत्पूर्वापरकालेषु॥

त्रिकालज्ञः। त्रि। सर्वज्ञे॥ पुं। बुद्धे॥ त्रिकालं जानातीति। ज्ञा०। आत इति कः॥

त्रिकालदर्शी। पुं। मुनौ॥ त्रि। सर्वज्ञे। भूतभविष्यद्वर्त्तमानवेत्तरि॥ त्रिकालं पश्यति। दृशिर्०। ग्रहादित्वाणिनिः॥

त्रिकालवित्। पुं। बुद्धे॥ त्रि। त्रिकालज्ञे॥ त्रिकालं वेत्ति। विद०। क्विप्॥

त्रिकूटः। पुं। त्रिककुत्पर्वते। लङ्कापुराधारे। सुवेले॥ क्षीरोदार्णवतीरवर्त्तिनि शैलविशेषे। यत्र गजेन्द्रो गरुडगामिना श्रीनारायणेनोद्धृतः। अस्य वर्णनं वामनपुराणे द्रष्टव्यम्॥ न। सामुद्रलवणे॥

त्रिकूटपर्वतः। पुं। तीर्थविशेषे॥

त्रिकूटलवणम्। न। द्रोणीलवणे॥

त्रिकोणम् । न । लग्नात् नवमपञ्चमस्थानयोः ॥ योनौ ॥ कामरूपपीठे ॥ करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं त्रिकोणं सर्वसिद्धिदम् ॥ त्रि । व्यस्रे ॥

त्रिकोणफलम् । न । शृङ्गाटके ॥

त्रिक्षारम् । न । क्षारत्रये ॥

त्रिक्षुरः । पुं । कोकिलाक्षवृक्षे ॥

त्रिखम् । न । त्रपुषे ॥

त्रिखट्वम् । न । खट्वात्रये ॥ तिसृणां खट्वानां समाहारः ॥

त्रिखट्वी । स्त्री । त्रिखट्वे ॥ द्विगोरिति ङीप् ॥

त्रिगङ्गम् । न । तीर्थविशेषे ॥

त्रिगणः । पुं । त्रिवर्गे ॥ धर्मार्थकामानां गणः ॥

त्रिगर्त्तः । पुं । सुशर्माख्यनृपतेर्देशे । जालन्धरे ॥ तद्देशजे त्रिगर्त्ताः ॥ गणितान्तरे ॥

त्रिगर्त्तकः । पुं । त्रिगर्त्ते ॥ त्रिगर्त्तएव । स्वार्थे कः ॥

त्रिगर्त्ता । स्त्री । कामुकाङ्गनायाम् ॥ घुर्घुरिकायाम् ॥

त्रिगुणम् । न । प्रधाने । प्रकृतौ ॥ त्रयो गुणाः सुखदुःखमोहा अस्येति व्युत्पत्तेः । तदनेन सुखादीनामात्मगुणत्वं पराभिमतं पराकृतं भवति ॥



त्रये ॥ सत्त्वरजस्तमःसु ॥ त्रयाणां गुणानां समाहारः ॥ त्रि । गुणत्रययुक्ते ॥

त्रिगुणा । स्त्री । तुल्यगुणत्रयात्मिकायां प्रकृतौ ॥

त्रिगुणाकृतम् । न । त्रिहल्ये । त्रिःकृष्टक्षेत्रे ॥ त्रिगुणाकृतम् । सङ्ख्यायाश्चगुणान्ताया इति डाच् ॥

त्रिगुणात्मकम् । न । अज्ञाने ॥ गुणाः सितशुक्लकृष्णाः प्रधानकार्येषु तेजोऽबन्नेष्वपान्तरप्रकृतिषु श्रुतिप्रसिद्धाः । तथाच कार्यगतत्रिरूपेण कारणमप्यज्ञानमव्याकृतात्मकं त्रिरूपेण त्रिगुणात्मकम् । यद्वा रजस्सत्त्वतमोरूपास्त्रयोगुणाः सन्तु क्रमशोऽस्य गुणिनो रभेदविवक्षया त्रिगुणात्मकं भवति ॥ त्रयोगुणा आत्मानो यस्य ॥

त्रिगुणितः । त्रि । त्रिरावृत्तसंकृते ॥

त्रिजटा । स्त्री । राक्षसीविशेषे ॥ सीतापक्षपातिनीयं रावणालये ॥ बिल्ववृक्षे ॥

त्रिजातम् । न । समानतया मिलिते त्वगेलापत्रेषु ॥ यथा । एलादिभिरुद्दिष्टं त्रिजातं त्रिसुगन्धिकम् । चतुर्जातं सनागन्तु द्वयं वातकफापहमिति ॥

पित्तकफरूपे दोषत्रये ॥

त्रिदोषजः । पुं । त्रिदोषजनिते सन्निपातरोगे ॥ अस्य पूर्वरूपम् । सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे ॥ सर्वदोषप्रकोपजे पूर्वं सर्वलिङ्गसमावायः । अतिप्रवृत्तजृम्भानिद्राद्याद्या वक्ष्यमाणानामाद्यानां समवायो भवति ॥ * ॥ त्रिदोषजे वातकफोत्थेवा त्रिदोषजेनादष्टमूत्रमिश्रः किरातत्तिक्तादिगणः प्रयोज्यः सुसूर्यैनेवा पित्तविमिश्रः ॥

त्रिधा । अ । त्रिप्रकारे ॥ यथा । त्रिधाकरोति ॥

त्रिधातुः । पुं । गणेशे ॥ न । धातुत्रये ॥

त्रिधामा । पुं । विष्णौ ॥ शिवे ॥ अग्नौ ॥ मृत्यौ ॥ त्रीणि धामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य सः ॥ न । स्त्री । धामत्रये ॥

त्रिधारकः । पुं । गुण्डतृणे ॥

त्रिधारस्नुही । स्त्री । व्यंस्त्रे । स्नुहीविशेषे ॥

त्रिधाविशेषः । पुं । सूक्ष्मादिविशेषे ॥ यथा । सूक्ष्मामातापितृजाः सहप्रभूतैस्त्रिधाविशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजानिवर्त्तन्ते ॥ सूक्ष्मशरीरमेकः मातापितृजोद्वितीयः महाभूतानि तृतीयोविशेषः । तेषांमध्ये सूक्ष्मानियताः मातापितृजानिवर्त्तन्ते कीटान्ता वा भस्मान्ता वा विडन्तावेति ॥ त्रिप्रकारोविशेषः ॥

त्रिधासर्गः । पुं ॥ भूतादिसर्गे ॥ अष्टविकल्पोदैव स्तैर्यग्योनश्चपञ्चधाभवति । मानुष्यश्चैकविधः समासतोयं त्रिधासर्गः ॥ ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्वः याक्षः राक्षसः पैशाच इत्यष्टविकल्पोदैवः सर्गः । १ ॥ पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्यग्योनः सर्गः । २ ॥ मानुष्यस्यैकविधः । ३ ॥ ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात् ॥

त्रिनयनः । पुं । विषमनयने । शिवे ॥ त्रीणि नयनान्यस्य । क्षुभ्नादिषु चेति । निषेधात् पूर्वपदात् संज्ञायामग इति णत्वाभावः ॥ त्रि । नेत्रत्रयवति ॥

त्रिनयना । स्त्री । उमायाम् ॥ टाप् ॥

त्रिनेत्रः । पुं । शिवे । हरे ॥ त्रीणि नेत्राणि यस्य ॥ त्रि । नेत्रत्रयविशिष्टे ॥

त्रिनेत्रचूडामणिः । पुं । शशाङ्के । चन्द्रे ॥

त्रिनेत्रा । स्त्री । वाराहीकन्दे ॥ नेत्रत्रययुक्तायाम् ॥

त्रिपञ्च । त्रि । त्रिगुणितपञ्चसु । पञ्च

त्रिपर्णः । पुं । किंशुके ॥

त्रिपर्णा । स्त्री । वनकार्पास्याम् ॥

त्रिपर्णिका । स्त्री । कन्दविशेषे । अम्लवल्ल्याम् । कन्दाल्याम् ॥

त्रिपर्णी । स्त्री । शालपर्ण्याम् ॥ वनकार्पास्याम् ॥ पृश्निपर्णीभेदे ॥

त्रिपाद्-द् । पुं । विष्णौ ॥ ज्वरे ॥ त्रयः पादा अस्य । संख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

त्रिपादिका । स्त्री । हंसपदीलतायाम् ॥

त्रिपिबन् । पुं । शार्ङ्गपक्षे ॥ मेघोदोय: पिबतो यस्त्रीणि जलं स्पृशन्ति कर्णौ जिह्वा च । त्रिभिः पिबति । पा० । मद्ध ॥

त्रिपिष्टपम् । क्ली । स्वर्गे ॥ त्रिदशात्रापि ष्टपम् ॥ पृषोदरादित्वाद् दशशब्दलोपः ॥ तृतीयं पिष्टपम् त्रिपिष्टपम् । पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते त्रिभागवत् । मर्त्यपातालापेक्षया तृतीयं पिष्टपं भुवनम् ॥

त्रिपिष्टपसद् । पुं । देवतायाम् ॥ त्रिपिष्टपे दिवि सीदतीति वर्त्तते । षद्लृ० । क्विप् ॥

त्रिपुटः । पुं । सतीनके । खिसारीति प्रसिद्धे कलाये ॥ त्रिपुटो मधुरस्तिक्त स्तुवरो रूक्षणो भृशम् । कफपित्तरुरोचको ग्राहकः शीतलस्तथा ॥ किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥ तीरे ॥ तालके ॥ हस्तभेदे ॥ गोक्षुरे ॥

त्रिपुटा । स्त्री । मल्लिकायाम् ॥ सूक्ष्मैलायाम् ॥ त्रिवृदोषधौ ॥ त्रयः पुटा यस्याः ॥ कर्णस्फोटायाम् ॥ रक्तत्रिवृति ॥ स्थूलैलायाम् ॥ देवीविशेषे ॥

त्रिपुटी । पुं । एरण्डे ॥

त्रिपुटी । स्त्री । त्रिहतायाम् ॥ त्रयाणां पुटानां समाहारे ॥ त्रयाणां ज्ञातृज्ञानज्ञेयादिरूपाणां पुटानामाकाराणां समाहारः । द्विगोरिति ङीप् ॥

त्रिपुटीफलः । पुं । एरण्डे ॥ त्रिपुटी फले यस्य ॥

त्रिपुण्ड्रम् । क्ली । भालस्थतिर्यग्रेखात्रितये ॥ ऊर्द्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियश्च त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यस्य वर्त्तुलं शूद्रयोनिजः ॥ * ॥ विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥ तस्मान्मृदापि कर्त्तव्यं ललाटे तु त्रिपुण्ड्रकमिति स्मृतिः ॥ सतुषया भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम् । ललाटे तिलकं कुर्याद् गायत्र्या मूलमन्त्रत इति महानिर्वाणतन्त्रम् ॥ येषां च पुंमनुष्याणां त्रिपुण्ड्रे

मरणे ऽपि पुण्यैरिति ॥

त्रिपुष्टः । पुं । राजभेदे । राजामात्ये ॥

त्रिपृष्ठः । पुं । त्रयाणां लोकानामुपरिस्थिते सत्यलोके ॥

त्रिफला । स्त्री । हरीतक्यादिफलत्रिके ॥ पथ्याविभीतधात्रीणां फलैः स्यात् त्रिफला समैः । फलत्रिकञ्च त्रिफला सा वराच प्रकीर्तिता ॥ त्रिफला कफपित्तघ्नी मेहकुष्ठहरी सरा । चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥ त्रयाणां फलानां समाहारः । अजादित्वात् द्विगोरिति न ङीप् ॥

त्रिफली । स्त्री । त्रिफलायाम् । इति राजनिर्घण्टः ॥

त्रिबलीकम् । न । पायौ ॥

त्रिभङ्गी । स्त्री । मात्रावृत्तभेदे ॥ यथा । प्रथमं यदि दशमं वदति विरामं तदनु निकामं वसुवसुकम् वसुविमलतुरङ्गम मतिहृदयङ्गम कृपितभुजङ्गम नृपतिलकम् । पिङ्गलकृतसंविहितनिवासं सततविलासं हृदयमुदे मदमुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गी रत्तमदः ॥ यथा । त्रिविधायुधमण्डितसङ्गरपण्डितरावणखण्डितपाण्डुभटे चण्डासुरखण्डिनि हरपुरमण्डिनि त्रामधरण्डनिवद्धभटे । भवसागरतारि-



णि दुर्गतिवारिणि मङ्गलकारिणि मधिमुखितरमे गिरिराजनिवासिनि शैलविलासिनि मम मुनिवासिनि देहि वरमिति ॥

त्रिभण्डी । स्त्री । त्रिवृतायाम् । श्वेतत्रिवृतेति ख्याते पदे ॥ पीनुदेहानुभवते । भक्तिपरिभाषणे । कर्म-यत्नेऽपि । ङीप् ॥

त्रिभद्रम् । न । सुरते ॥ इति त्रिकाण्डशेषः ॥

त्रिभुवनम् । न । स्वर्गमर्त्यपातालात्मके लोकत्रये । त्रिलोक्याम् ॥ त्रयाणां भुवनानां समाहारः ॥ तद्धितार्थेत्यादिना समासः ॥

त्रिमदः । पुं । मुस्ताचित्रकविडङ्गेषु ॥

त्रिमदोत्पथः । त्रि । त्रिभिर्मदैरुद्वृत्ते ॥ विद्यामदो धनमदस्तथैवाभिजनो मदः । एते मदा मदान्धानां त एव हि सतां दमाः ॥

त्रिमधुः । पुं । ऋग्वेदैकदेशे ॥ मधुवातायृतायते इति ॥ यथा । त्रिणाचिकेत स्त्रिमधुस्त्रिसुपर्णः षडङ्गविदिति ॥ न । मधुत्रये । मिलित सिता माक्षिकसर्पिःषु ॥ यथा । दुग्धं सिता माक्षिकञ्च त्रितयं मधुरत्रयम् ॥

त्रिमार्गगा । स्त्री । गङ्गायाम् ॥ त्रिभि

मार्गैर्गच्छतीति विग्रहः ॥
त्रिमार्गी । स्त्री । त्रिपथे ॥ त्रयाणां मा
र्गाणां समाहारः ॥ ङीप् ॥
त्रिमुकुटः । पुं । त्रिकूटाचले ॥
त्रिमुखः । पुं । बुद्धविशेषे ॥
त्रिमुखा । स्त्री । बुद्धदेवीविशेषे । मा
यादेव्याम् ॥ वज्रधाराद्याम् ॥
त्रिमूर्त्तिः । पुं । बुद्धभेदे ॥ ब्रह्मविष्णु
शिवाख्यमूर्त्तित्रयवति ॥ यथा । त्रि
मूर्त्तिर्यः सर्गस्थितिविलयकर्माणि त
नुते । इति गङ्गेशोपाध्यायः ॥ तिस्रो
मूर्त्तयो यस्य ॥ स्त्री । देवीविशेषे ॥
तिस्रो मूर्त्तयो यस्याः ॥ त्रयो ब्रह्माद
यो वा मूर्त्तयो यस्याः ॥ एकमूर्त्तिरपि
भिन्नरूपिणी या जगज्जननपालन
क्षये । कार्य्यतेश्वरतया विवर्त्तते त्र
यशक्ति सह मानतोर्च्चिताम् ॥
त्रियष्टिः । स्त्री । चेत्रपर्पट्याम् ॥
त्रियामकम् । न । पापे ॥ इति शब्द
माला ॥
त्रियामा । स्त्री । रात्रौ ॥ त्रयो यामा
यस्याः । आद्यन्तयोरर्द्धयामयोश्चेष्टाकाल
त्वेन दिनप्रायत्वात् ॥ हरिद्रायाम् ॥
यमुनायाम् ॥ नील्याम् ॥ कृष्णत्रिवृ
तायाम् ॥
त्रियुगः । पुं । यज्ञपुरुषे ॥ कृतयुगेय
ष्वाभावात् । कलौर्द्धमत्वाद्वा ॥



त्रियूहः । पुं । कपिलाश्वे ॥
त्रिरात्रम् । न । रात्रित्रये । तिसृणां रा
त्रीणां समाहारे ॥
त्रिरुक्तम् । त्रि । विषादादिना त्रिवारो
च्चारिते ॥ विषादे विस्मये हर्षे खे
दे दैन्येऽवधारणे । प्रसादने सम्भ्र
मेपि द्वित्रिरुक्तं न दुष्यति ॥
त्रिरेखः । पुं । शङ्खे ॥ त्रि । रेखात्रयवि
शिष्टे ॥ तिस्रो रेखा यस्य सः ॥
त्रिलवः । पुं । तृतीयांशे ॥
त्रिलवणम् । न । लवणत्रये ॥ यथा ।
सैन्धवञ्च विडञ्चैव रुचकञ्च तृतीय
कम् । मिलितैस्तत् त्रिलवणं वैद्य
शास्त्रे निरूपितम् ॥
त्रिलोकात्मा । पुं । अन्तर्यामिणि ॥ त्र
याणां लोकानामात्मा ॥
त्रिलोकधृक् । पुं । विष्णौ ॥ त्रीन् लो
कान् धारयति इति । धृञ् । क्विप् ॥
त्रिलोकी । स्त्री । स्वर्गमर्त्त्यपातालेषु
॥ त्रयाणां लोकानां समाहारः । द्वि
गोरिति ङीप् ॥
त्रिलोकेशः । पुं । सूर्य्ये ॥ सदाशिवे ॥
त्रयाणां लोकानामीशोऽधिष्ठाता ॥
त्रयो लोका स्वदायत्ताः स्वेषु कर्मसु
वर्त्तन्त इति शेषः ॥
त्रिलोचनः । पुं । त्र्यम्बके । शिवे ॥ त्री
णि लोचनानि यस्य सः । त्रिषु कालेषु

लोकेषु गुणेषु वेदेषु वा लोचनं ज्ञानं यस्येति वा । त्रयो वेदाः यस्यां वा अकारोकारमकाराः लोचनानि यस्य वा ॥

त्रिलोचना । स्त्री । दुर्गायाम् ॥ बुद्धदेवी प्रभेदे ॥

त्रिलोचनाष्टमी । स्त्री । गौणचान्द्रज्येष्ठस्य कृष्णाष्टम्याम् ॥

त्रिलोहकम् । न । सुवर्णरजतताम्राभिधे धातुत्रये ॥

त्रिलोही । स्त्री । त्रिलोहघटितमुद्राविशेषे ॥

त्रिवर्गः । पुं । धर्मकामार्थेषु ॥ धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः ॥*॥ यथाऽऽनुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ त्रिफलायाम् ॥ कटुत्रिके ॥ वृद्धिस्थानक्षये ॥ क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ सत्त्वरजस्तमस्सु ॥ त्रयाणां वर्गः समूहः ॥ सुनीतौ ॥ इति शब्दरत्नावली ॥

त्रिवर्णकः । पुं । गोक्षुरके ॥ न । त्रिफलायाम् ॥ त्र्यूषणे । कटुत्रिके ॥ ब्राह्मणक्षत्रियविट्सु ॥

त्रिवर्षिका । स्त्री । त्रिवर्षायाङ्गवि । त्रिहायण्याम् ॥ त्रीणि वर्षाणि वयो यस्याः सा त्रिवर्षा । ततः स्वार्थे कः ॥

त्रिविक्रमः । पुं । विष्णौ ॥ बलिबन्धनार्थं भूम्यो मर्त्येषु त्रिषु लोकेषु गुणेषु वा त्रयो वा विक्रमाः पादन्यासा यस्य सः । त्रिविक्रमेव त्रयो लोकाः कीर्त्तितामुनिसत्तमैः । क्रमते तांस्तथा सर्वांस्त्रिविक्रमो जनार्दनः ॥ इति हरिवंशः ॥ त्रीन् लोकान् विशेषेण क्रामति व्याप्नोतीति वा । क्रमु । अच् ॥

त्रिविधः । त्रि । त्रिप्रकारे ॥ तिस्रो विधा यस्य सः ॥

त्रिविधसर्गः । पुं । त्रिधा सर्गे ॥

त्रिविष्टपम् । न । स्वर्गे । सुरलोके ॥ त्रिशन्त्यस्मिन् सुकृतिन इति त्रिष्टपम् । विटपपिष्टपविशिपोलपा इति विशेरौणादिकः कपन् प्रत्ययः तस्य तुट् । त्रयचेति षत्वम् । सर्वे पिष्टपेतिपाठ उज्ज्वलदत्तरीत्योक्तः । अन्येतु विटपेति दन्तोष्ठादिमेव पठन्ति । युक्तञ्चैतत् । अन्यस्यविष्टपमित्यादौ तथादर्शनात् । अमरकोषेपि विष्टपं भुवनं जगदिति प्रचुरपाठाच्च ॥ तृतीयं विष्टपम् ॥ त्रिभुवने ॥

त्रिविष्टपसद् । पुं । देवे । सुरे ॥

त्रिवीजः । पुं । श्यामाके ॥ इति राजनिर्घण्टः ॥

त्रिवृत् । स्त्री । त्रिवृतायाम् । सुवहायाम् । श्वेतत्रिधारा इति प्रसिद्धौषधौ

॥ श्वेतात्रिवृद्रेचनी स्यात् स्वादुरुष्णा समीरजित् । रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा ॥ श्वेतकृष्णप्रभेदेन द्विविधा त्रिवृदुच्यते । श्यामात्रिवृत्ततो हीनगुणा तीव्रा विरेचिका ॥ मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ त्रीन् अवयवान् वृणोति । वृञ् । क्विप् तुक् ॥

त्रिवृता । स्त्री । त्रिवृदोषधौ ॥ त्रिभिरवयवैर्वृता ॥

त्रिवृत्करणम् । न । तेजोवन्नानां मिश्रीकरणे ॥ तत्प्रकारो यथा । तेजोवन्नानामेकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधाविभागं कृत्वा स्वस्वद्वितीयस्थूलभागं परित्यज्यान्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनमिति ॥

त्रिवृत्पर्णी । स्त्री । हिलमोचिकायाम् ॥

त्रिवृद्वेदः । पुं । त्रय्याम् । ऋग्यजुःसामात्मके वेदे ॥ प्रणवे ॥ ऋचो यजूंषि चान्यानि सामानि विविधानि च । एष ज्ञेयस्त्रिवृद्वेदो योवेदैनं स वेदवित् ॥ आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ ऋग्यजुःसामात्मना त्रिरावर्त्तते इति त्रिवृत् स चासौ वेदश्चेति कर्मधारयः ॥



त्रिवेणी । स्त्री । स्थानविशेषे ॥ सा द्विधा । युक्तवेणीमुक्तवेणीतिभेदात् । तत्र प्रयागे युक्तवेणी गङ्गया यमुनासरस्वत्योः सङ्गमात् ॥ दक्षिणप्रयागे मुक्तवेणी गङ्गया यमुनासरस्वत्योर्वियोगात् ॥ दक्षिणप्रयागस्य सीमानिर्णयो यथा । प्रद्युम्नस्य ह्रदाद्याम्ये सरस्वत्यास्तथोत्तरे । तद्दक्षिणप्रयागस्तु गङ्गातो यमुना गतेति ॥ * ॥ सगरसन्ततिसन्तरणेच्छया प्रचलितासि नवेन हिमालयात् । इह तु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवीति नदियाधिपतिकृष्णचन्द्रराजस्यसभास्थो वाणेश्वरविद्यालङ्कारः ॥

त्रिवेणुः । पुं । रथमुखस्थेऽवयवविशेषे ॥

त्रिवेदः । पुं । वेदत्रयवेत्तरि ॥

त्रिवेदी । पुं । त्रिवेदज्ञे ॥

त्रिवेदी । स्त्री । वेदत्रये ॥ त्रयाणां वेदानां समाहारः । द्विगोरिति ङीप् ॥ ऐष्टिकपाशुकसौमिकवैदिकत्रये ॥

त्रिवेला । स्त्री । त्रिवृति ॥

त्रिशक्तिधृक् । पुं । भगवति ॥ त्रिशक्तिर्माया तां धरतीति विग्रहः ॥

त्रिशङ्कुः । पुं । सूर्यवंशीयनृपविशेषे ॥ शलभे ॥ मूषदंशके । मार्जारे ॥ चातके ॥ खद्योते ॥

त्रिशङ्कुजः । पुं । हरिश्चन्द्रनृपे ॥
त्रिशङ्कुयाजी । पुं । विश्वामित्रे ॥
त्रिशरणः । पुं । बुद्धे । जिने ॥
त्रिशर्करा । स्त्री । मिलितगुडोत्पन्ना सितोपलामधुरेति राजनिर्घण्टः ॥
त्रिशला । स्त्री । जूतार्हन्मातृविशेषे । वर्द्धमानमातरि ॥
त्रिशाखपत्रः । पुं । बिल्वे । मालूरे ॥
त्रिशिखः । पुं । राक्षसाकारे । रावणपुत्रे ॥ बिल्वे ॥ न । त्रिशूले ॥ मुकुटान्तरे ॥ किरीटे ॥ त्रि । त्रिशिखावति ॥
त्रिशिखिदला । स्त्री । मालाकन्दे ॥
त्रिशिराः । पुं । ज्वरे ॥ कुबेरे ॥ रावणसैन्यविशेषे ॥ खरसेनापतौ ॥ त्रीणि शिरांसि यस्य ॥
त्रिशीर्षकम् । न । त्रिशूले ॥
त्रिशूलम् । न । अस्त्रविशेषे । त्रिशिखे ॥ त्रयाणां शूलानां समाहारः ॥
त्रिशूली । पुं । शिवे ॥ त्रि । त्रिशूलधारिणि ॥
त्रिशृङ्गः । पुं । त्रिकोणे ॥ त्रिकूटाद्रौ ॥ त्रीणि शृङ्गाण्यस्य ॥
त्रिशृङ्गी । पुं । रोहितमत्स्ये ॥
त्रिष्टुप् । स्त्री । एकादशाक्षरायां वृत्तौ ॥
त्रिसन्ध्यः । त्रि । परदेवतायाम् । परमेश्वरे ॥ त्रिष्वपि कालेषु दृष्टः पूर्वं प्रलयानन्तरं स्थितिसमये च संस्थोऽव्यभिचारेण वर्त्तमानत्वात् ॥
त्रिसन्धिः । स्त्री । पुष्पविशेषे । सन्ध्याकुसुमे । फागुनियाँ इति भाषा ॥ पूर्वापरमध्यसन्धौ ॥
त्रिसन्ध्यम् । न । प्रातरपराह्णमध्याह्ने । त्रिकाले ॥ प्रातः सूर्योदयः कालो मध्याह्नस्तदनन्तरम् । सायं सूर्यास्तसमयस्त्रिकालानामयं क्रमः इति निर्णीतत्त्वम् ॥ तिसृणां सन्ध्यानां समाहारः ॥ आवन्तो वेति पाक्षिकीनीवता ॥ पुष्पविशेषे ॥
त्रिसन्ध्या । स्त्री । जपापुष्पे ॥ देवीविशेषे ॥ अस्याः स्थानं कुरुजकसीमम् ॥
त्रिसमम् । न । समचर्ये । समहरीतकीनागरगुडरूपे ॥
त्रिसरः । पुं । कृसरे ॥ इति हेमचन्द्रः ॥
त्रिसरकम् । न । त्रिवारमधुपाने ॥ त्रयाणां सरकाणां समाहारः । तद्धितार्थेत्यादिना समासो द्विगुः । पात्रादित्वान्नपुंसकत्वम् ॥
त्रिसवनम् । न । त्रिकाले । त्रिसन्ध्ये ॥
त्रिसामा । स्त्री । नदीविशेषे । महेन्द्राद्रेः सरन्त्यां स्रवन्त्याम् ॥
त्रिसिता । स्त्री । त्रिशर्करायाम् ॥
त्रिसौप्यम् । न । त्रिकूटदेशे । पिष्ट

यायोगसारः ॥ * ॥ अथाष्टावाभग वतीजीवानां निष्कृतिः यथा ॥ कृते व्यतीते त्रेतायां दृष्ट्वा धर्म्मव्यतिक्रमम्। वेदोक्तकर्म्मभिर्मर्त्त्या न शक्ताः स्वेष्टसाधने ॥ बहुक्लेशकरं कर्म्म वैदिकं भूरिसाधनम्। कर्त्तुं न योग्या मनुजाश्चिन्ताव्याकुलमानसाः ॥ त्यक्तुं कर्त्तुं न चार्हन्ति सदा कातरचेतसः। वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले ॥ सदा त्वं प्रकटीकृत्य तपःस्वाध्यायदुर्बलान्। लोकानतारयः पापात् दुःखशोकामयप्रदात् ॥ त्वां विनाको ऽस्ति जीवानां घोरसंसारसागरे। भर्त्ता पाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुः ॥ इति श्रीमहानिर्वाणतन्त्रे श्रीसदाशिवहारप्रहेतवे आन्मातुः सदाशिवं प्रतिवाक्यम् ॥ त्रीन् भेदानेति। पृ० ॥ त्रेतायै ॥ एको ऽस्त्रा दक्षिणाग्निगार्हपत्याहवनीयात्मके अग्नित्रये ॥ यथा मा: सदासन्ध्यागम् । आमिता ॥ यथा । आग्ने ऽग्न्याहुतयः । आमिरिता । त्रित्वमितेति वा । पृषोदरादिः ॥ त्रीणि इता या । पृषोदरादित्वात् ह्रस्वम् ॥

त्रेतायः । पुं । द्यूतक्रीडासाधनीभूताक्षद्विकस्य यस्मिन् भागे त्रयोङ्कास्भवन्ति तस्मिन् ॥ त्रेतासंज्ञकोऽयः ॥

त्रेधा । अ । त्रिधा । त्रिप्रकारे ॥ संख्याया विधार्थे धा । एधाच्चेति धाइत्यस्य एधादेशः ॥

त्रैककुदम् । न । सौवीराञ्जने ॥

त्रैकाल्यम् । न । कार्यकालसत्पूर्वाऽपरकाले ॥

त्रैगुणिकः । पुं । शार्ङ्गिके ॥ त्रिगुणार्थं देयं त्रिगुणम् । तत् प्रयच्छति त्रिगुणं तावीसुमेकगुणं ददातीत्यर्थः । प्रयच्छतिगर्ह्यमितिठक् ॥

त्रैगुण्यम् । त्रि । त्रिगुणात्मके । स्वार्थे ॥ न । त्रिषु गुणेषु ॥ त्रयो गुणा एव । ष्यञ् ॥ गुणत्रयकार्यपुण्यपापव्यामिश्रकर्म्मफलसम्भारबन्धे संसारे ॥

त्रैगुण्यविपर्य्ययः । पुं । त्रिगुणान्यथाभावे ॥

त्रैगुण्यविषयः । पुं । कर्म्मप्रतिपादके वेदे ॥ त्रयाणां गुणानां कर्म्म त्रैगुण्यम् काममूलः संसारः स एव प्रकाश्यत्वेन विषयो यस्य सः ॥

त्रैदशिकः । पुं । देवे ॥

त्रैधम् । अ । त्रैविध्ये । त्रिधा ॥ त्रिप्रकारम् । द्वित्र्योश्च धमुञ् ॥

त्रैधर्म्मम् । न । होत्राध्वर्य्वौद्गात्रधर्म्मवत्सु ज्योतिष्टोमादिकेकाम्यकर्म्मणि ॥

त्रैपुरः । पुं । त्रिपुरदेशे । त्रैपे । तत्र भवे ॥ इति हेमचन्द्रः ॥

त्रैलोक्यम् । न । स्वर्गमर्त्त्यपातालात्म

नुराधामघाभिः ॥ सौरेपूर्वायनिष्ठा
कारकमखजन्मर्चयुक्ता यदि स्याद्योगं
चाहुस्त्रिपूर्वं सततशुभकरं चाश्रुता
स्यं मुनीन्द्राः ॥

व्यम्बकः । पुं । महेश्वरे । शिवे ॥ त्री
णि अम्बकानि नयनान्यस्य ॥ यथा
र्णां लोकानाम् अम्बकः पितेति वा
॥ त्रीन् वेदान् अम्बते शब्दायते वा ।
अबि शब्दे । घोर्घ्योपधः । कर्मण्य
ण् । संज्ञायामितिकः ॥ त्रिषु लोके
षु कालेषु वा अम्बः शब्दो वेदश्च
ऽयस्येति वा ॥ अम्बकम् अम्बः शब्दः
॥ त्रयोऽकारोकारमकाराः अम्बाः
मात्राः प्रतिपादकाः वाचका वा अस्ये
ति वा ॥ त्रीणि पृथिव्यन्तरीक्षद्युलोका
ख्यानि अम्बकानि स्थानानि यस्येति
वा । लोकत्रयस्यापि महेश्वरः ॥

व्यम्बकसखः । पुं । कुबेरे ॥ व्यम्बकस्य
सखा । राजाहःसखिभ्यष्टच् ॥

व्यम्बका । स्त्री । त्रिलोकजनन्यां मायां
याम् ॥ सोमस्य धाम शिवस्य व्य
म्बकासत्सुतावृधे ॥

व्यहस्पर्शः । पुं । त्रिदिनस्पृशि । तिथि
त्रयस्पर्शयुक्तेऽहनि ॥

व्यहस्पृक् । पुं । वारत्रयेष्येकस्मिंस्तिथौ
॥ तिथिर्वारत्रये चैका व्यहस्पृक्समुदा
हृतम् ॥ अन्यच्च । एकादशी द्वादशी



च रात्रिशेषे त्रयोदशी । व्यहस्पृक्
तद्दिनं होरात्रमुपोष्या सा सदा तिथिः ॥
व्यहस्पृशम् इति । व्यहस्पर्शः ॥ यदा
एकस्मिन् सावनेत्वह्नि तिथीनां त्रित
यं यदा । तदा दिनक्षयः प्रोक्तः तत्र
साहस्त्रिकं फलम् ॥ अपि च । एकाहि
यत्र तिथित्रयस्पृशे समाहुर्मुन
यो ऽवमाख्यम् । सकातिथि क्षीणि
दिनानि यत्र स्पृशे सदाहु त्रिदिनस्पृश
न्तु ॥ व्यहस्पृशं नाम यदेतदुक्तं तत्र
प्रयत्नः कृतिभिर्विधेयः । विवाहयात्रा
शुभपुष्टिकर्म सर्वं न कार्यं त्रिदिन
स्पृशे तु ॥

व्यहैहिकः । पुं । दिनत्रयनिर्वाहोचि
तधने ब्राह्मणे ॥ त्र्यहाचेहा तस्यां
भवम् ऐहिकम् । व्यहपर्याप्तम् ऐ
हिकं धनं यस्य ॥

व्याहिकः । त्रि । तृतीयेऽह्नि भवे ज्व
रादौ ॥

व्युषणम् । न । त्रिकटुनि । शोपति
ऊषदाहे । ल्युट् । त्रयाणाम् ऊषणा
नां समाहारः । पात्रादित्वात् स्त्री
त्वं न ॥

व्यूषणम् । न । त्र्यूषणे । शोषे ॥ ऊष
ति । ऊषदाहे । ल्युट् । त्रयाणाम्
ऊषणानां समाहारः । पात्रादित्वात्
स्त्रीत्वं न ॥

चर्मणी इतिभाषा ॥ चर्मणि । स्पर्शग्रहणसाधिन्द्रे देहव्यापिनीन्द्रिये ॥ त्वचति । त्वचसंवरणे । क्विप् ॥ यद्वा । तनोति तन्यते वा । तनु० । तनोतेरनश्चवः चाच्चिक् प्रत्ययः ॥

त्वचम् । नं । त्वचि । चर्मणि ॥ वल्कले ॥ त्वक्पत्रे ॥ यथा । त्वचं कर्पूरकं कटुकं स्वादु तिक्तञ्च कफनकम् । पित्तघ्नं कफवातघ्नं कण्डूयामादिविनाशनम् ॥ हृद्वस्तिरोगवातार्शः कृमि पीनसशुक्रहृदिति ॥ प्रशस्तोत्वगस्यास्ति । अर्शआदित्वादच् ॥ त्वचति त्वचसं वरणे । पुंसीतिघः ॥

त्वचनम् । न । संवरणे ॥ त्वचो ग्रहणे ॥

त्वचा । स्त्री । त्वचि ॥

त्वचापत्रम् । न । त्वक्पत्रे ॥

त्वचिष्ठः त्रि । त्वचीयसि । अतिशयत्वग्विशिष्टे ॥

त्वचिसारः । पु । वंशे ॥ त्वगुदन्तादितिसप्तम्या अलुक् ॥

त्वचिसुगन्धा । स्त्री । क्षुद्रैलायाम् ॥

त्वत् । त्रि । भिन्ने । अन्यस्मिन् ॥ तनोति । तनु० तनोतेरनश्चव० । चात् क्विप्तुक् ॥

त्वदीयः । त्रि । भवदीये ॥ तवायम् । छः । प्रत्ययोत्तरपदयोश्चेतिमपर्यन्तस्यत्वदादेशः ॥

त्वद्विधः । त्रि । त्वत्सदृशे ॥ त्वमेव विधा प्रकारोयस्य ॥

त्वम्पदलक्ष्यार्थः । पुं । अज्ञानादिव्यष्टुपाध्युपहिताधारभूते अनुपहितप्रत्यगानन्दतुरीयचैतन्ये ॥

त्वम्पदवाच्यः । त्रि । त्वम्पदाभिधे ॥ देहादिभिः परिच्छिन्नो जीवस्तु त्वम्पदाभिधः ॥

त्वम्पदवाच्यार्थः । त्रि । अज्ञानादिव्यष्टिः । एतदुपहितोल्पज्ञत्वादिविशिष्टं चैतन्यम् । एतदनुपहितचैतन्यम् । एतत्त्रयं समायः पिण्डवदेकत्वेनावभासमानं त्वम्पदवाच्यार्थो भवति ॥

त्वम्पदाभिधः । पुं । त्वम्पदवाच्ये । जीवे ॥ आत्मत्वेनतया भाति योऽस्मत् प्रत्ययशब्दयोः । अन्तःकरणसम्भिन्नबोधः स त्वम्पदाभिधः ॥ त्वम्पदमभिधायस्य ॥

त्वरणम् । न । त्वरायाम् ॥

त्वरा । स्त्री । वेगे । सम्भ्रमे । आवेगे ॥ त्वरणम् । ञित्वरा० । घटादयः षितइतिषित्त्वातिदेशात् अङ् । टाप् ॥

त्वरिः । स्त्री । त्वरायाम् । संवेगे ॥

त्वरितम् । न । शीघ्रे ॥ त्वरतेस्म ञित्वरासम्भ्रमे । गत्यर्थाकर्मकेति क

ति । दंश० भवे । गौरा० ङीष् ॥

दंष्ट्रा । स्त्री । दन्तविशेषे । दाढायाम् । दाढ इति भाषा ॥ दन्तपङ्क्तिद्वयप्रान्ते वर्त्तमानस्थूलतरोदन्तविशेषा दंष्ट्राः । द्विगुणीकृतदन्तावलिरिति भावप्रकाशः ॥ दश्यतेऽनयेत्यर्थे दाम्नी शसयुयुजेत्यादिना करणेष्ट्रन् । टाप् । गौरादिषु मातामहीशब्दस्य पाठादनित्यःपित्ताङीष् ॥

दंष्ट्राकः । पुं । शूकरे ॥

दंष्ट्रिका । स्त्री । दाढिकायाम् ॥

दंष्ट्री । पुं । घृष्टौ । शूकरे ॥ सर्पे ॥ त्रि । दंष्ट्राविशिष्टे ॥ यथा दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः । ये स्वाम्यर्थे हता यान्ति राजन् स्वर्गं न संशयः । इत्यग्नि पुराणम् । प्रशस्ता दंष्ट्रास्ति यस्य । व्री० इनिः ॥

दकम् । न । वारिणि । जले ॥

दक्षः । पुं । ब्रह्मणो दक्षिणाङ्गुष्ठाज्जाते प्रजापतिविशेषे । तस्यैव मैथुनेन प्रजा जाताः ॥ ताम्रचूडे । कुक्कुटे ॥ मुनिविशेषे ॥ हरवृषे ॥ वृक्षविशेषे ॥ त्रि । चतुरे । ज्ञातव्येषु कर्त्तव्येषु चोपस्थितेषु सद्य एव तत्तुल्यकर्त्तुं च समर्थे । शिक्षिते । कुशले ॥ दक्षते । दक्षवृद्धौ शीघ्रार्थे च । पचाद्यच् ॥



दक्षकन्या । स्त्री । भवान्याम् । दुर्गायाम् ॥ दक्षस्य प्रजापतेः कन्या ॥ सा च षष्टिमतसंख्यकाः वह्निपुराणे गणभेदनामाध्याये प्रसिद्धाः ॥

दक्षजा । स्त्री । दुर्गायाम् ॥ दक्षाज्जाता । पञ्चम्यामिति डः ॥

दक्षजापतिः । पुं । शिवे ॥ चन्द्रे ॥

दक्षता । स्त्री । चित्रकारित्वे ॥

दक्षसावर्णिः । पुं । नवमे मनौ । भाविषु सप्तमनुषु द्वितीये ॥

दक्षसुतः । पुं । देवे ॥

दक्षा । स्त्री । भूमौ ॥

दक्षाध्वरध्वंसकः । पुं । शिवे ॥ वीरभद्रे ॥ दक्षाध्वरस्य ध्वंसकः ॥

दक्षाध्वरध्वंसकृत् । पुं । हरे ॥ वीरभद्रे ॥ दक्षाध्वरध्वंसं करोतीति । कृ० । क्विप् । तुक् ॥

दक्षाय्यः । पुं । गरुडे ॥ गृध्रे ॥ दक्षते । दक्ष० । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥

दक्षिणः । त्रि । दक्षिणोद्भूते ॥ सरले ॥ परच्छन्दानुवर्त्तिनि । पराभिप्रायवर्त्तिनि ॥ अपसव्ये । अवामे ॥ दक्षे ॥ औदार्यवति ॥ पुं । चतुर्थोपपत्यन्तर्गतपतिविशेषे ॥ सकलनायिकाविषयसमसहजानुरागो दक्षिण इति वचनात् ॥ दक्षते । दक्ष० ।

यथा ॥ दक्षिणापथजन्मानः सर्वे नरवरान्धकाः। गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ॥ उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि। यौनकाम्बोजगान्धाराः किराता बर्वरैः सह ॥ एते पापकृतस्तात चरन्ति पृथिवीमिमामिति महाभारते मोक्षधर्मः ॥

दक्षिणापथदेशः। पुं। देशविशेषे ॥ यथा। तथापरे जनपदा दक्षिणापथवासिनः। पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च ॥ सेतुकामूषिकाश्चैव कुपथा वारवासिकाः। नविराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ॥ आभीराश्च सहैषीका आटव्याः शवरास्तथा। पुलिन्दा विन्ध्यमूषीका वैदर्भा दण्डकैः सह ॥ कुलीयाश्च शिरालाश्च रूपसा तापसैः सह। तथा तैत्तिरिकाश्चैव सर्वे कारस्करास्तथा ॥ नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्मदाः। भानुकच्छाः समाहेयाः सहसारस्वतैस्तथा ॥ कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह। इत्येते अपरान्ताश्च शृणु ये विन्ध्यवासिनः ॥ इति मत्स्यपुराणम् ॥

दक्षिणामुखः। पुं। दक्षिणदिगभिमुखे ॥ यथा। अमावास्यां गयाश्राद्धं दक्षिणामुखभोजनम्। न जीवत्पितृकः कुर्यात् कृते च पितृहा भवेत् ॥

दक्षिणामूर्त्तिः। पुं। परशिवः ॥ मौन-च्छायमहावटद्रुमतटे योगासनस्थं प्रभुं प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोदीक्ष्यमाणाननम्। मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं चन्द्रोत्तंसकलं स्फुरत्त्रिनयनं श्रीदक्षिणामूर्त्तिकम् ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा। गुरोस्तु मौनं व्याख्यानं शिष्यास्तूच्छिन्नसंशयाः ॥

दक्षिणायनम्। न। देवानां रात्रिः। कर्कटेऽर्कसङ्क्रमे। श्रावणादिषट्सु मासेषु ॥ माघादिमासयुग्मैस्तु तव षट् क्रमाद्दिनः। उत्तरायणमासैस्तैस्त्रिभिः स्याद्दक्षिणायनम् ॥ याम्यायने यस्य भवेत् प्रसूतिः शठः कठोरः पिशुनस्वभावः। चतुष्पदाद्यः कृषिमानहंयुर्घोषाश्रयात्तो मनुजः प्रतापी ॥

दक्षिणारुः। पुं। व्याधकर्तृकदक्षिणाङ्गकृतव्रणे मृगे। दक्षिणेर्मणि ॥ दक्षिणे अरुरस्य ॥

दक्षिणार्हः। त्रि। दक्षिणीये ॥ दक्षिणामर्हति। अर्हपूजायाम्। अर्हेश्चेत्यच् ॥

दक्षिणावर्त्तः। त्रि। दक्षिणे आवर्त्तविशिष्टे ॥

दक्षिणावर्त्तकी। स्त्री। वृश्चिकाल्याम्॥

दक्षिणाशापतिः। पुं। यमे। वैवस्वते। धर्मराजे॥ दक्षिणाशायाः पतिः॥

दक्षिणाहि। अ। दक्षिणदिशि॥ दक्षिणदेशे॥ दक्षिणात्। अ। आरिचदूरे द क्षिणार्थे चाहिर्दूरे चेदक्षिणमीम्। वसति रमणीयश्च॥

दक्षिणीयः। त्रि। दक्षिणार्हे॥ दक्षिणामर्हतीति। कडङ्करदक्षिणाच्छ चेति छः। तस्य ईयादेशः॥

दक्षिणेन। अ। दक्षिणदिशि॥ दक्षिणदेशे॥ एनबन्यतरस्यामदूरेपञ्चम्याः। दक्षिणेन वसति रमणीयं वा॥

दक्षिणेर्म्मा। पुं। दक्षिणारौ। व्याधत्रणे॥ दक्षिणे ईर्म व्रणमस्य। दक्षिणेर्म्मा लुब्धयोगइति अनिजन्तः साधुः॥

दक्षिण्यः। त्रि। दक्षिणार्हे॥ दक्षिणामर्हतीति। कडङ्करदक्षिणाच्छ चेतियत्॥

दगार्गलम्। क्ली। निर्जलदेशे जलोपलब्धिज्ञाने॥ तं निरूपयति वराहमिहिरः। तत्रादौ प्रयोजनप्रदर्शनार्थमाह। धर्म्यं यशस्यञ्चवदाम्यतोऽहं दगार्गलं येन जलोपलब्धिः। पुंसां यथाङ्गेषु सिरास्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः॥ एकेन वर्णेन रसेन चाम्भश्च्युतं नभस्तो वसुधाविशेषात्। नानारसत्वं बहुवर्णताञ्च गतं परीक्ष्यं क्षितितुल्यमेवम्॥ २॥ सिरानामानि॥ पुरुहूतानलयमनिरृतिवरुणपवनेन्दुशङ्करा देवाः। विज्ञातव्याः क्रमशः प्राच्याद्यानां दिशांपतयः॥ दिक्पति संज्ञाश्च सिरा नवमीमध्ये महासिरानाम्नी। एताभ्योऽन्याः शतशो विनिःसृतानामभिः प्रथिताः॥ पातालादूर्द्धसिराशुभाश्चतुर्दिक्षु संस्थितायाश्च। कोणदिगुत्थानशुभाः सिराः निमित्तान्यथोवक्ष्ये॥ ५॥ *॥ यदि वेतसोऽम्बुरहितेदेशेहस्तैस्त्रिभिस्ततः पश्चात्। सार्द्धेपुरुषेतोयं वहति सिरा पश्चिमातत्र॥ चिह्नमप्यर्द्धपुरुषेमण्डूकः पाण्डुरोऽथमृत्पीता। पुटभेदकश्चतस्मिन् पाषाणो भवतितोयमतः॥ ७॥ जम्ब्वाश्चोदग्घस्तैस्त्रिभिः सिराऽधोनरद्वयेपूर्वा। मृल्लोहगन्धिकापाण्डुराचपुरुषेत्रोऽमण्डूकः॥ ८॥ जम्बूवृक्षस्य प्राग् वल्मीकोयदिभवेत्समीपस्थः। तस्माद्दक्षिणपार्श्वेसलिलंपुरुषद्वये स्वादु॥ अर्द्धपुरुषेच मत्स्यःपारावतसन्निभश्चपाषाणः। मृद्भवतिचात्रनीला दीर्घंकालंचबहुतोयम्॥ १०॥ पश्चादुदुम्बरस्त्रिभिरेवकरैर्नरद्वयेसार्द्धे। पुरु

दगार्गे

षाढ्रेनतुर्थरितो दर्दुरोऽथ सितोऽस्स-
शिभाभूस्य । पीतपाषाणो निकातःसौ-
म्याथ सिरा शुभास्वुवहा ॥ ३० ॥ सर्व-
पांहेचाया मधःस्थितो दर्दुरोऽथहाह-
स्याः । तस्मादृस्तेतोयं चतुर्भिरङ्गुलि-
कैःपुरुषैः ॥ पुरुषेतुभवति नकुलो
नीलोऽथस्तु पीतिकाततःश्वेता । दर्दु-
रसमानरूपः पाषाणोदृश्यते तस्य
॥ ३२ ॥ यद्यहिनिलयोदृश्यो दक्षि
णतः संस्थितः करञ्जस्य । हस्तद्वयेतु
याम्ये पुरुषत्रितये सिरासार्द्धे ॥ उद
गन्धाः स्वादुरसा हरितोऽथाधस्तस्त
स्तोयम् । पुरुषार्द्धे कच्छपकः प्रथमं
पूर्वा सिरोद्वहति तन ॥ उत्तरत
स्य मधूका हरितनिलयः पश्चिमे स्त
स्तोयम् । परिहृत्य पञ्चहस्तान् नव
चाष्टौ पौरुषान् प्रथमम् ॥ अहि
राजःपुरुषेऽधोधूम्राधात्री कुलत्थ
वर्णाश्मा । माहेन्द्रे भवति सिरा वह
सितफेनं सदातोयम् ॥ ३६ ॥ वल्मी
कःस्निग्धो दक्षिणे सकुशदूर्वस्तेत् ति
लकस्य । पुरुषैः पञ्चभिरम्भो दिशि
वारुण्यां सिरापूर्वा ॥ ३७ ॥ सर्पावा
सःपश्चाद्वल्मीका दक्षिणे कदम्बस्य ।
परतो हस्तत्रितयात् षड्भिः पुरुषैस्तु
रीयेनैः ॥ कौवेरीचात्र सिरा वह
तिजलं लोहगन्धिपाषाणाम्भम् । कन

दगार्गे

कनिभोमण्डूकोनरमाधेमृत्तिकापी
ता ॥ ३९ ॥ वल्मीकसंवृतो यदि
तालोवाभवति नारिकेलोवा । पश्चा
त् षड्भिर्हस्तैर्नरैश्चतुर्भिःसिराया
म्या ॥ ४० ॥ याम्येन कपित्थस्याहिस
ंवसथे दुदग्जलं वाच्यम् । सप्तपरि
त्यज्यकरान् खात्वापुरुषान् कबुरा
पटभिद् ॥ अश्मन्तकस्यवामे बदरीवा
दृश्यतेहिनिलयोवा । षड्भिरुदग
त्करैः सार्द्धे पुरुषत्रये तोयम् ॥
कूर्मःप्रथमे पुरुषे पाषाणोधूसरः
ससिकतास्तत् । आदौ च सिरा याम्या
पूर्वोत्तरतो द्वितीयाच ॥ ४३ ॥ वा
मेनहारिद्रतरो वल्मीकश्चेत्जलं
भवतिपूर्वे । हस्तत्रितयेसव्ये मु
म्भिःपञ्चभिर्भवति ॥ नीलोभुजगो
हस्योऽथस्तु पीताभरकतोपमश्चाश्मा
कृष्णाभूःप्रथमं वारुणीसिरादक्षि
णेनान्या ॥ ४४ ॥ जम्बूतरिरचितेदे
शेऽनूपवानिदृश्यन्ते तृणानि ।
वीरणदूर्वामृदवो यत्र तु तत्र जलं
पुरुषे ॥ भार्गी त्रिवृतादन्ती सूकर
पादी च लक्ष्मणा चैव । नवमालिका
च हस्तद्वयेऽम्बु याम्ये त्रिभिः पुरुषैः
॥ ४६ ॥ स्निग्धाः प्रलम्बशाखावाम
नविकटद्रुमाःसमीपजलाः । सुषि
राजर्जरपत्रारूक्षाश्चजलेनसन्त्यक्ताः

॥ ६५ ॥ रोहीतकस्य पश्चादहिवासस्त्रिभिः करैर्याम्ये । द्वादशपुरुषान् खात्वा सैवारा पश्चिमेन सिरा ॥ ६६ ॥ इन्द्रतरोर्वल्मीकः प्राग्दृश्यः पश्चिमे सिराहस्ते । खात्वा चतुर्दशनरान् कपिलागोधा नरे प्रथमे ॥ ६७ ॥ यदि वाऽसुवर्णनाम्नस्तरोर्भवेद्वामतो भुजङ्गगृहम् । हस्तद्वये तु याम्ये पञ्चदशनरावसाने ऽम्बु ॥ चारं च वोऽत्र मङ्क्षिवोर्मानवे ताम्रसन्निभाश्माः । रक्ता च भवति वसुधा च हति सिरा दक्षिणतः ॥ ६८ ॥ बदरीरोहितवृक्षौ सम्पृक्तौ चेद्विनापि वल्मीकम् । हस्तत्रये ऽम्बु पश्चात् षोडशभिर्मानवैर्भवति ॥ सुरसं जलमादौ दक्षिणा सिरा वहति चोत्तरेणान्या । पिष्टनिभः पाषाणो मृच्छ्वेता वृश्चिकोऽर्द्धनरे ॥ ६९ ॥ सकरीरा चेद् बदरी त्रिभिः करैः पश्चिमेन तत्राम्भः । अष्टादशभिः पुरुषैरैशानी बहुजला च सिरा ॥ ७० ॥ पीलुसमेता बदरी हस्तत्रयसम्मिते दिशि प्राच्याम् । विंशत्या पुरुषाणामशोष्यमम्भो ऽत्र सक्षारम् ॥ ७१ ॥ ककुभकरीरावेकत्र संयुतौ यत्र ककुभबिल्वौ वा । हस्तद्वयेऽम्बु पश्चान् नरैर्भवेत् पञ्चविंशत्या ॥ ७२ ॥ व



ल्मीकमूर्द्धनि यदा दूर्वाश्च कुशाश्च पाण्डुराः सन्ति । कूपो मध्ये देयो जलमत्र नरैकविंशत्या ॥ ७३ ॥ भूमिः कदम्बकयुता वल्मीके यत्र दृश्यते दूर्वा ॥ हस्तद्वयेन याम्ये नरैर्जलं पञ्चविंशत्या ॥ ७४ ॥ वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति । नाना वृक्षैः सहितस्त्रिभिर्जलं तत्र वक्तव्यम् ॥ हस्तचतुष्के मध्यात् षोडशभिश्चाङ्गुलैरुदग्वारि । चत्वारिंशत् पुरुषान् खात्वाऽश्मा ततः सिरा भवति ॥ ७६ ॥ ग्रन्थिप्रचुरा यस्मिन् शमी भवेदुत्तरेण वल्मीकः । पश्चात् पञ्चकरान्ते शतार्द्धसंख्यैर्नरैः सलिलम् ॥ ७७ ॥ एकस्थाः पञ्च यदा वल्मीका मध्यमो भवेच्छ्वेतः । तस्मिन् सिरा प्रदिष्टा नरषष्ट्या पञ्चवर्जितया ॥ ७८ ॥ सपलाशा यत्र शमी पश्चिमभागेऽम्बु मानवैः षष्ट्या । अर्द्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः ॥ ७९ ॥ वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद्यस्मिन् । पूर्वेण हस्तमात्रे सप्तत्या मानवैरम्बु ॥ ८० ॥ श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः । नरपञ्चकसंयुतया सप्तत्याहिर्नरार्द्धे च ॥ ८१ ॥ * ॥ अथ विशेषः ॥ मरुदेशे यच्चिह्नं न जाङ्ग

सुरसञ्चतोयं कृष्णाचरत्नाश्च तथैव स्युः ॥ ९९ ॥ * ॥ अथभूगुणाः ॥ सशर्करा ताम्रमही कषायं क्षारं धरित्री कपिला करोति । आपाण्डुरायां लवणं प्रदिष्टं मिष्टं पयो नीलवसुन्धरायाम् ॥ १०० ॥ शाकाश्वकर्णार्जुनबिल्वसर्जाः श्रीपर्णिरिष्टाधवशिंशपाश्च । छिद्रैश्च पर्णैर्द्रुमगुल्मवल्ल्यो रूक्षाः सुदूरेम्बु निवेदयन्ति ॥ १ ॥ सूर्याग्निभस्मोष्ट्रखरानुवर्णा या निर्जला सा वसुधा प्रदिष्टा । रक्ताङ्कुराः क्षीरयुताः करीरा रक्ताधरा चेज्जलमश्मनोधः ॥ २ ॥ वैदूर्यमुद्गाम्बुदमेचकाभा पाकोन्मुखोदुम्बरसन्निभा वा । भृङ्गाञ्जनाभा कपिलाथवा या ज्ञेया शिलाभूरिसमीपतोया ॥ ३ ॥ पारावतक्षौद्रघृतोपमा या क्षौमस्य वस्त्रस्य च तुल्यवर्णा । या सोमवल्ल्याश्च समानरूपा साप्याशु तोयं कुरुतेऽक्षयञ्च ॥ ४ ॥ ताम्रैः समेता पृषतैर्विचित्रैरापाण्डुभस्मोष्ट्रखरानुरूपा । भृङ्गोपमाङ्गुष्ठिकपुष्पिकाच सूर्याग्निवर्णा च शिला वितोया ॥ ५ ॥ चन्द्रातपस्फटिकमौक्तिकहेमरूपाः याश्चेन्द्रनीलमणिहिङ्गुलकाञ्जनाभाः । सूर्योदयांशुहरितालनिभाश्च याः स्युस्ताः शोभना मुनिवचोऽत्र च वृत्तमेत-

दगार्गल

त् ॥ ६ ॥ एता ह्यभेद्याश्च शिलाः शिवाश्च यक्षैश्च नागैश्च सदाभिजुष्टाः । येषां च राष्ट्रेषु भवन्ति राज्ञां तेषामवृष्टिर्न भवेत्कदाचित् ॥ ७ ॥ * ॥ शिलानां विदारणार्थमाह ॥ भेदं यदा नैति शिला तदानीं पलाशकाष्ठैः सह तिन्दुकानाम् । प्रज्वालयित्वानलमग्निवर्णा सुधाम्बुसिक्ता प्रविदारमेति ॥ ८ ॥ तोयं शृतं मोक्षकभस्मना वा यत्सप्तकृत्वः परिषेचनं तत् ॥ कार्यं शरक्षारयुतं शिलायाः प्रस्फोटनं वह्निवितापितायाः ॥ ९ ॥ तक्रकाञ्जिकसुराः सकुलत्था योजितानि बदराणि च तस्मिन् । सप्तरात्रमुषितान्यभितप्तां दारयन्ति हि शिलां परिषेकैः ॥ १० ॥ नैम्बं पत्रं त्वक्च नालं तिलानां सापामार्गं तिन्दुकं स्याद्गुडूची । गोमूत्रेण स्रावितः क्षार एषां षट्कृत्वोऽतस्तापितो भिद्यतेऽश्मा ॥ ११ ॥ * ॥ शस्त्रपानम् ॥ आर्कम्पयोहुडुविषाणमसीसमेतं पारावताखुशकृता च युतः प्रलेपः । टङ्कस्य तैलमथितस्य ततोऽस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥ १२ ॥ क्षारं कदल्या मथितेन युक्तं दिनोषितं पायितमायसं यत् । सम्यक्शितं चाश्मनि नैति

दशमी चेत्त्रिषष्टिका । द्वितीया सप्तमी चैव दग्धाः सूर्य्यादिवारतः ॥ मतान्तरमपि । एकादशी चेन्दुवारे द्वादशी चार्कवासरे । षष्ठी बृहस्पतेर्वारे तृतीया बुधवासरे । अष्टमी शुक्रवारे च नवमी शनिवासरे ॥ पञ्चमी भौमवारे च दग्धयोगाः प्रकीर्त्तिताः ॥ मासदग्धा यथा । द्वितीया मीनधनुषोः चतुर्थी वृषकुम्भयोः मेषकर्कटयोः षष्ठी कन्यामिथुनयोरष्टमी ॥ दशमी वृश्चिकेसिंहे द्वादशी मकरे तुले ॥ एभिर्जातोऽप्यजीवेत्स यदि शक्रसमो भवेदिति सिद्धान्तदीपिका ॥ कुटुच इति गौडप्रसिद्धे क्षुपे । शिलेरुकायाम् । कर्कशदलायाम् । दग्धरुहायाम् ॥ दग्ध + स्वार्थे कन् + टाप् ॥

दग्धिका । स्त्री । दग्धभक्ते । भिक्षटायाम् । जला भात इति भाषा ॥ कुत्सिता दग्धा दग्धिका । कुत्सिते इति कन् ॥ दग्धाक्षरे ॥

दग्धेष्टका । स्त्री । झामके । झामा इति भाषा ॥

दण्डः । पुं । न । लगुडे । लड्ड लठिया इति भाषा ॥ पुं । व्यूहभेदे ॥ प्रकाण्डे ॥ अश्वे ॥ कोणे ॥ मन्थाने ॥ सैन्ये ॥ दाम्यते उद्दतोऽनेन । दमः जमन्तात् डः ॥ काले । घड़ी इति भाषा ॥ यथा । दशगुर्वक्षरोच्चारकालः प्राणः षड्ङात्मकैः ॥ तैः पलं स्यात्तत् षष्ट्या दण्डश्चाभिधीयते ॥ मानभेदे । काठा इति गौडभाषा ॥ चतुर्हस्तपरिमिते मानकाष्ठादौ ॥ चण्डांशोः पारिपार्श्विके । अर्कानुचरे ॥ दमे ॥ यमे ॥ अभिमाने ॥ ग्रहभेदे ॥ चतुर्थोपायादिरूपेणोपायचतुर्थोपाये ॥ यथा । दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा । प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः । दण्डस्य हि भयात् सर्वं जगद्भोगाय कल्पते ॥ * ॥ अमेयदोषजन्यग्राहाधने ॥ उत्पथप्रवृत्तौ निग्रहहेतुर्दण्डो भगवद्विभूतिः ॥ आयामे ॥ धनुर्द्वयपरिमिते मानकाष्ठादौ ॥ इक्ष्वाकुराजपुत्रे ॥ दण्डोऽस्त्रिया अर्द्धार्चादौ च ॥ दण्डयति दण्ड्यतेऽनेनवा । दण्डदण्डनिपातने । पचाद्यच् । पुंसीतिघो वा ॥ दमनम् वा । दमु उपशमे । अमन्तात् डः ॥ राजादिकस्य मनुष्यपदातिषु ॥

दण्डकः । पुं । न । चण्डवृष्टिप्रतापादिच्छन्दःप्रभेदे ॥ लघुलगुडे । सोंटा

मोठी छडी इत्यादि भाषा॥ ह्रस्वो दण्डः। ह्रस्वे इतिकन्॥

दण्डकन्दकः। पुं। धरणीकन्दे॥

दण्डका। स्त्री। दण्डकारण्ये। जनस्थाने॥

दण्डकाकः। पुं। द्रोणकाके॥

दण्डकारण्यम्। न। रामगास्यपञ्चवनिवेशस्थाने। जनस्थाने॥ दण्डकनाम्ना राज्ञा परिपालितो देशः। सप्तयुक्त मायादरण्यमभूत्॥ तीर्थविशेषे॥

दण्डढक्का। स्त्री। वाद्यविशेषे। याम घोषे। याममाख्याम्। इमामा नगारा नौबत इत्यादि भाषा॥

दण्डताम्री। स्त्री। ताम्रीवाद्ये॥

दण्डधरः। पुं। काले। यमे। अन्तके॥ दण्डस्यधरः॥ नृपे॥ कुम्भकारे॥ त्रि। दण्डहस्ते॥ दुष्टनिग्रहकर्त्तरि॥

दण्डधारः। पुं। पृथ्वीपतौ। राज्ञि॥ यमे। समवर्त्तिनि॥ त्रि। दण्डहस्ते॥ दण्डं धरति। धृञ्०। कर्मण्यण्॥

दण्डनायकः। पुं। सेनान्याम्। चतुरङ्गबलाध्यक्षे॥

दण्डनीतिः। स्त्री। अर्थशास्त्रे॥ शुक्रनीत्यादिनीतिशास्त्रे॥ दम्यतेऽनेन। दम०। अमन्ताड्डः। दण्डोनीयते बोध्यतेऽनया इति दण्डनीतिः। क्तिन्॥ दण्डेन नीयतेचेदं दण्डंनयतिवापुनः। दण्डनीतिरितिख्याताचीँल्लोकानतिवर्त्तते॥ विशेषोऽमराभारतेराजधर्मेद्रष्टव्यः॥ दुर्गायाम्॥ यथा। नयानयगता लोके विमलज्ञिणयाऽमला। दण्डमादृगमनाद् यावि दण्डनीतिरितिस्मृतेति देवीपुराणम्॥

दण्डनीयः। त्रि। दण्ड्ये॥

दण्डपतिः। पुं। दण्डधरे॥ दण्डनायके॥

दण्डपांशुलः। पुं। गर्भाटे। द्वारपाले॥

दण्डपाणिः। पुं। भैरवविशेषे। काशीस्थे शिवगणविशेषे॥ यमे॥ दण्डः पाणौयस्यसः॥

दण्डपारुष्यम्। न। ताडनादौ। अष्टादशविवादान्तर्गतविवादविशेषे॥ राजसप्तव्यसनान्तर्गतव्यसनविशेषे॥

दण्डपालः। पुं। अर्द्धशफरमत्स्ये। दांडिका इति गौडभाषा॥

दण्डपालकः। पुं। प्रकुलमत्स्ये॥

दण्डभृत्। पुं। यमे॥ कुम्भकारे॥ त्रि। दण्डधारके॥ दण्डंबिभर्त्ति। डुभृञ्०। क्विप्॥

दण्डमत्स्यः। पुं। दण्डारी इति प्रसिद्धे मत्स्ये॥ दण्डमत्स्योरसेतिक्तः पित्तरक्तं कफं हरेत्। वातसाधारणः प्रोक्तः शुक्रलोबलवर्द्धनः॥

दण्डमार्गः । पुं । दण्डाकारेपथि ॥

दण्डयात्रा । स्त्री । दिग्विजये ॥ युद्धाय गमने ॥ सयाने ॥ वरयात्रायाम् ॥ इति मेदिनी हेमचन्द्रौ ॥ दण्डाययात्रा ॥

दण्डयामः । पुं । कीनाशे ॥ दिवसे ॥ कुम्भसम्भवे ॥ अगस्त्यमुनौ ॥ इति मेदिनी ॥

दण्डरी ॥ स्त्री । कर्कटीफले इति राजनिर्घण्टः ॥

दण्डवान् । त्रि । दण्डिनि ॥ मतुप् ॥

दण्डवासी । पुं । द्वरटे । द्वारपाले ॥ त्रि । दण्डधारि ॥

दण्डवालधिः । पुं । हस्तिनि । इभे ॥ दण्डवद्वालधिर्यस्य ॥

दण्डवासी । पुं । द्वारपाले ॥ इति त्रिकाण्डशेषः ॥ एकग्रामाधिकृतो यत्र चौधरी इति भाषा ॥ इति जटाधरः ॥

दण्डविष्कम्भः । पुं । कुठरे । मन्थवन्धनकाष्ठे । गर्गरीमुखस्थमन्थदण्डधारककाष्ठे ॥ दण्डं विष्कम्भाति । स्कम्भुरोधने सौत्रः । कर्मण्यण् । वेःस्कम्नातेर्नित्यमिति षत्वम् ॥

दण्डहर्षकः । पुं । सुह्मम् ॥

दण्डव्यूहः । पुं । दण्डाकृतिव्यूहरचनाविशेषे ॥ यत्राग्रेबलाध्यक्षो मध्ये राजा पश्चात् सेनापतिः पार्श्वयोर्हस्तिनस्ततसमीपेघोटकास्ततःपदातयः इत्थंकृतरचनो दीर्घः सर्वतः समविन्यासो दण्डव्यूह उच्यते । तेन यातव्यं मार्गे सर्वतोभये सति यायात् ॥

दण्डस्थानम् । न । दण्डस्य स्थानविशेषेषु ॥ यथा । दशस्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् । त्रिषु वर्णेषु यानिस्युरक्षतो ब्राह्मणो व्रजेत् ॥ उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥ अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः । सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेदिति मनुः ॥

दण्डहस्तम् । न । तगरपुष्पे ॥

दण्डाजिनम् । न । दम्भे ॥ शाठ्ये ॥

दण्डाजिनिकः । त्रि । मायाविनि ॥

दण्डादण्डि । अ । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तमित्यर्थे ॥ अन्ये० दीर्घः । इच्कर्मव्यतिहारे ॥

दण्डारः । पुं । वाहने ॥ मत्तवारणे ॥ शरयन्त्रे ॥ कुम्भकारस्य चक्रे ॥

दण्डाहतम् । न । घोले । गोरसे ॥ दण्डेन मथा आहतम् । घोलो हि तक्रं चर्करणोकृतात्तस्मिन् इति समासः ॥ त्रि । दण्डेन ताडिते ॥

दण्डिकः । पुं । दण्डिनि ॥ दण्डोऽस्यास्ति । अतइनिठनाविति ठन् ॥ दण्डधारके

दधानः । त्रि । बिभ्राणे । धारयति ॥ दधातेः कर्त्तरि शानच् ॥

दधि । न । क्षीरोत्तरावस्थापन्ने दधि इति प्रसिद्धे गोरसे । क्षीरजे । मङ्गल्ये । विरले । पयस्ये ॥ अस्य गुणाः । दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु । पाके अम्लं ग्राहि पित्तास्रशोथमेदःकफप्रदम् ॥ मूत्रकृच्छ्रे प्रतिश्याये शीतके विषमज्वरे । अतीसारे रुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥ तद्भेदाः पञ्च सम्प्रोक्ता मन्दं स्वादु ततः परम् । स्वाद्वम्लञ्च ततःपरम् ॥ अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा । मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत् ॥ मन्दन्तु सृष्टविण्मूत्रं दोषत्रयविदाहकृत् । यत्तु सम्यग्घनतां यातं व्यक्तं स्वादुरसं भवेत् ॥ अव्यक्ताम्लरसं तत्तु स्वादुविखे तदाहृतम् । स्वादुस्याद्दध्यभिष्यन्दि वृष्यं मेदःकफावहम् ॥ वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् । स्वाद्वम्लं सान्द्रं मधुरं कषायानुरसं भवेत् ॥ स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः ॥ यत्तिरोहितमाधुर्यं व्यक्ताम्लं तदम्लकम् । अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनम् ॥ तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत् ॥ अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥ * ॥ गव्यं दधि विशेषेण स्वादु बल्यं रुचिप्रदम् । पवित्रं दीपनं स्निग्धं पुष्टिकृत् पवनापहम् ॥ उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ॥ * ॥ माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् ॥ स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम् ॥ * ॥ आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ * ॥ पक्वदुग्धभवं हृद्यं दधि स्निग्धं गुणोत्तरम् । पित्तानिलघ्नं सर्वधात्वग्निबलवर्द्धनम् ॥ * ॥ अथ निःसारदुग्धस्य दध्नो ज्ञेया गुणाः स्मृताः । असारं दधि संग्राहि शीतलं वातलं लघु । विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥ * ॥ गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु । बलपुष्टिकरं रुच्यं मधुरं नातिपित्तकृत् ॥ * ॥ सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् । सगुडं वातनुद्वृष्यं तर्पणं तर्पणं गुरु ॥ * ॥ न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ * ॥ प्रयाते दधि नो रात्रौ शस्तञ्चाम्बुघृतान्वितम् ।

रक्तपित्तकफोत्थेषु विकारेषु तु तन्न ॥ * ॥ हेमन्ते शिशिरे चापि वर्षासु दधिशस्यते । शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम् ॥ * ॥ ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डामयभ्रमान् । प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रियः ॥ श्रीवासे ॥ सर्जे ॥ वासे ॥ त्रि । धारके ॥ इति मुग्धबोधम् ॥

दधिकूर्चिका । स्त्री । दध्यासक्तपक्वदुग्धे ॥ दध्यासक्तं पयःपक्वं यत् तत्स्याद् दधिकूर्चिके त्युक्तेः ॥ पक्वे । दकोष्ण दुग्धे दध्यम्लसंयोगात् जातेतिके चित् ॥ उष्णदुग्धे दध्यम्लसंयोगात् जाते खण्डे । छाना छेना इति राजाराधाकान्तः ॥

दधिचारः । पुं । मन्थानदण्डे । वैशाखे । तक्राटे । करधर्षके । रयी इति भाषा ॥

दधिजम् । न । नवनीते ॥

दधित्थः । पुं । कपित्थे ॥ दधिवर्णोऽत्र तिष्ठत्यस्मिन् । स्था० । सुपिस्थ इति कः । पृषोदरादिः ॥

दधित्थाख्यः । पुं । सरलद्रवे । लोबान् इति भाषा ॥ इति रत्नमाला ॥

दधिधेनुः । स्त्री । दानार्थं दध्यादिनिर्मितायां धेनौ ॥



दधिपुष्पिका । स्त्री । अपराजितायाम् ॥

दधिपुष्पी । स्त्री । कोलशिंब्याम् ॥

दधिपूपः । पुं । अपूपभेदे ॥ शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत् । वेष्टयेत् पक्वखण्डेन सुपक्वं दधिपूपकम् ॥ दधिपूपो गुरुर्वृष्यो बृंहणोऽनिलपित्तहा । हृद्योऽग्निशमनश्चैव विशेषाद्वातविकारकः ॥

दधिफलः । पुं । कपित्थवृक्षे ॥ दधिफलेऽस्य ॥

दधिमण्डः । पुं । मस्तुनि ॥

दधिमण्डोदः । पुं । दधिसमुद्रे ॥

दधिमुखः । पुं । रामायणप्रसिद्धे वानरविशेषे । सुग्रीवस्य श्वशुरे ॥

दधिशोणः । पुं । वानरे ॥

दधिसक्तवः । पुं । करम्भे ॥ दधिसक्तुशब्दो नित्यं बहुवचनान्तः ॥ दध्नोपसिक्ताः सक्तवः । अन्नेनव्यञ्जनमिति समासः ॥

दधिसारम् । न । नवनीते ॥

दधिस्नेहः । पुं । दधिसरे । दध्युत्तरगे ॥

दधिस्वेदः । पुं । घोले ॥

दधीचः । पुं । दधीचिमुनौ ॥ इति शब्दभेदप्रकाशः ॥

दधीचतीर्थम् । न । तीर्थविशेषे ॥

दधीचास्थि । न । वज्रे ॥ हीरके ॥

दन्तमूलम् । न । दन्तार्बुदाभिधेरोगे ॥

दन्तमूलिका । स्त्री । दन्तीवृत्ते ॥

दन्तरोगः । पुं । रदनामये ॥

दन्तरोगी । त्रि । रदनामयविशिष्टे ॥ फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् । तथा तिकठिनं भक्ष्यं दन्तरोगी विवर्जयेत् ॥

दन्तवक्त्रः । पुं । भारतादिप्रसिद्धे नृपविशेषे ॥

दन्तवस्त्रम् । न । ओष्ठे ॥

दन्तवासः । न । ओष्ठे । अधरौष्ठयोः ॥

दन्तवीजकः । पुं । दाडिमे ॥

दन्तवेष्टः । पुं । दन्तरोगविशेषे ॥ यथा । स्रवन्ति पूयरुधिरं चलादन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥

दन्तशठः । पुं । जम्बीरे ॥ कपित्थे ॥ कर्म्मरङ्गके ॥ नागरङ्गे ॥ शठति । शठ कैतवेच । चातुर्हिंसासङ्क्लेशनयोः । पचाद्यच् ॥ अम्लरसे ॥ दन्तानांशठ इवापकारित्वात् ॥

दन्तशठा । स्त्री । चाङ्गेर्याम् ॥ चुक्राम्लिकायाम् ॥ दन्तानां शठेवापकारित्वात् ॥

दन्तशर्करा । स्त्री । कफवायुशोषितदन्तगतमले ॥ यथा । मलो दन्तगतो यस्तु कफमारुतशोषितः । शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥

दन्तशाणम् । न । निशुक्ले । मिस्सी इति भाषाप्रसिद्धे दन्तघर्षणचूर्णे ॥ इति त्रिकाण्डशेषः ॥

दन्तशिरा । स्त्री । मार्थ्याम् ॥

दन्तशूलः । पुं । रदनवेदनायाम् ॥ तस्यौषधं यथा । पिप्पलीनिम्बयष्ट्याह्वं कटुकारग्वधैः शृतम् । पाययेन्मधुनामिश्रं दन्तशूलोपशान्तये ॥

दन्तशोफः । पुं । दन्तार्बुदे ॥

दन्तहर्षः । पुं । दन्तरोगविशेषे ॥ यथा । शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः समीरितः ॥

दन्तहर्षकः । पुं । जम्बीरे ॥ इतिजटाधरः ॥

दन्तहर्षणः । पुं । जम्बीरे ॥ इ०वि० ॥

दन्ताघातः । पुं । निम्बूके ॥ रतिकाले स्त्रियां दशनाघाते ॥ तस्य स्थानानि यथा । स्तनयोः गण्डयोश्चैव ओष्ठे चैव तथाधरे । दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः ॥ इति कामशास्त्रम् ॥

दन्तायुधः । पुं । शूकरे ॥ दन्ता आयुधो यस्य ॥

दन्तार्बुदः । पुं । न । दन्तरोगप्रभेदे । दन्तशोफे । द्विजरक्षे ॥

दन्तालिका । स्त्री । वल्गायाम् । लगाम

दन्तुरः | दमः

हतिभाषा ॥

दन्तावलः । पुं । हस्तिनि । गजे ॥ अति शयितौ दन्तावस्य । दन्तशिखात् सं ज्ञायामितिवलच् । वले इतिदीर्घः ॥

दन्तिका । स्त्री । दन्त्योषधौ । मुकूल के ॥ दाम्यति दाम्यते वा । दमुउप शमे । चसिमदिशिभ्यो ऽमिदमीभ्यो दिना तन् । स्वार्थे कन् ॥

दन्तिजा । स्त्री । दन्तिकायाम् ॥

दन्ती । पुं । दन्तावले ॥ अतिशयितौ द न्तावस्य । इनिः ॥

दन्तिनी । स्त्री । दन्तीवृक्षे ॥

दन्तिमदः । पुं । हस्तिमदे ॥

दन्तिमूषिका । स्त्री । दन्त्योषधौ ॥

दन्ती । स्त्री । उदुम्बरपर्ण्यामोषधौ । प्रत्यक्पर्णीम् ॥ दाम्यति दाम्यते वा । दमु० तन्० गौ० ङीष् ॥ ल घुदीर्घ प्रभेदेन मोक्ता दन्तीद्वयं सु धैः । दन्तीद्वयं सरं पाके रसेच क टु दीपनम् ॥ गुदाङ्कुराश्मशूला स्रक्कण्डुकुष्ठविदाहनुत् । तीक्ष्णो ष्णंहन्ति पित्तास्रकफशोथोदरक्रि मीन् ॥

दन्तीबीजम् । न । जयपाले ॥

दन्तुरः । त्रि । उन्नतरदे ॥ उन्नताद न्ताः सन्त्यस्य । दन्तउन्नत उरच् ॥ ड न्नतनते । विषमे ॥ कदाचिद्दन्तुरो मूर्खः कदाचित्सोमशः सुखी । क दाचित् तुन्दिलो दुःखी कदाचिद्व ञ्चनासतीति सामुद्रकम् ॥ स्त्री । दन्तुरा ॥

दन्तुरच्छदः । पुं । बीजपूरे ॥

दन्तोलूखलिकः । पुं । तापसे । वान प्रस्थे । (दन्तोलूखली । पुं ।) प्रस्थविशेषे ॥ ये योगी ह्यादीन् दन्तैः खण्डयित्वा भ क्षयति सः ॥

दन्त्यः । त्रि । दन्तोद्भवेवर्णविशेषे ॥ द न्तेषुभवः । शरीरावयवाच्चेति यत् ॥ दन्तहिते ॥ दन्तेभ्योहितम् । शरीरा वयवाद्यत् ॥

दन्दशूकः । पुं । राक्षसे ॥ सरीसृपे । फणिनि ॥ गर्हितं दशति । लुपसदे ति यङ् । यजजपेत्यूकः । जपजभ दहेत्यभ्यासस्यनुक् ॥ नरकविशेषे ॥

दन्द्रम्यमाणः । त्रि । अत्यर्थं कुटिला- मनेककृत्वोगतिमिच्छति ॥

दभ्रम् । न । अल्पे ॥ दभ्यते ॥ दम्भुद- म्भने । स्फायितञ्चीति रक् ॥ पुं । समुद्रे ॥

दम् । अ । कलत्रे । पत्न्याम् ॥

दमः । पुं । दमथे ॥ बाह्येन्द्रियनैश्चल्ये । बाह्येन्द्रियाणां श्रवणादिव्यतिरिक्त विषयेभ्यो निवर्त्तने । बहिरिन्द्रियाणा मुच्छृङ्खलव्यापारनिरोधे । बाह्येन्द्रि

यसंयमे ॥ निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥ ऋतुकालं विना रतिरिक्तकाले मैथुनाद्यभावे ॥ उपशमे । विकारहेतुविषयसन्निधानेपि मनसोऽविक्रियत्वे ॥ कुत्सितात् कर्मणो विप्र यच्च चित्तनिवारणम् । स कीर्त्तितो दमः प्राज्ञैः समस्ततत्त्वदर्शिभिः ॥ दण्डे ॥ दण्डकार्ये ॥ कर्दमे ॥ दमने ॥ दमनम् । दमु उपशमे । भावे घञ् । नोदात्तोपदेशेति वृद्ध्यभावः ॥

दमकः । त्रि । शासके । दमनकर्त्तरि ॥ दाम्यति । दमु० । ण्वुल् । नोदात्तोपदेशस्येति न वृद्धिः ॥

दमघोषः । पुं । चन्द्रवंशीये चेदिविषये । शिशुपालपितरि ॥

दमघोषसुतः । पुं । शिशुपाले ॥

दमथः । पुं । दण्डे ॥ दमे । तपः क्लेशसहे ॥ दमनम् । दमु० । शमादिभ्योऽथुच् ॥ दाम्यति सा । बाहुलकादथुप्रत्ययः ॥

दमथुः । पुं । दण्डे ॥ दमे ॥

दमनम् । न । दण्डे ॥ यथा । अच्युतस्य दमनमुचितञ्च श्रुतौ युतम् ॥ पुं । दोना इति प्रसिद्धे पुष्पे । पुष्पचामरे ॥ दमनस्तु तरस्तिक्तो हृद्यो हृद्यः सुगन्धिकः । ग्रहणीविष-



कुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥ वीरे ॥ कुन्दवृक्षे ॥ दाम्यति । दमु० । णिच् । ल्युः ॥

दमनकः । पुं । दमने । गन्धोत्कटे । दोना इति प्रसिद्धे पुष्पवृक्षे ॥ दमन एव । स्वार्थे कः ॥ न । वर्णवृत्तान्तरे ॥ यथा । द्विगुणभगणमिह वितनुहि । दमनकमिति गदति सुधियः ॥ यथा । सरभसमिह दृशमुपनय । सुमुखि मदनवशमयनयेति ॥ त्रिष्टुप्छन्दोभेदेपि ॥ यथा । द्विजवरगणयुगममर्त्त्यं तदनु च कामनिकरतरम् । फणिपतिवरपरिगदितं दमनकमिदमतिललितम् ॥ यथा । प्रणमत मधुरिपुचरणं भवजलनिधिपरितरणम् । अभिनवकिसलयरुचिरं सुरपतिसकलभयहरम् ॥

दमनी । स्त्री । अग्निदमनीवृक्षे ॥

दमयन्ती । स्त्री । नलनृपतेर्भार्यायाम् । विदर्भदेशीयभीमराजकन्यायाम् । भैम्याम् ॥ दमयन्तीनलाभ्याञ्च नमस्कारं करोम्यहम् । अविवादो भवत्वेव कलिदोषप्रणाशिनि ॥ भद्रमल्लिकायाम् ॥

दमितः । त्रि । दान्ते ॥ कृतदमने दण्डादौ । मारादिसहे ॥ दम्यते स्म । दमु० । क्तः । वादान्ते त्यादिना

साधुः ॥

दमी । त्रि । दमविशिष्टे ॥

दमुनाः । पुं । चित्रभानौ । अग्नौ ॥ दाम्यति । दमु० । अन्नमभ्यौवितपश्च योद्दमेरुनसिः । दमुनसौ दमुनसः इत्यादि ॥ शुक्राचार्य्ये ॥

दमूनाः । पुं । त्रिभावत्रौ । वह्नौ । पावके ॥ दाम्यति । दमु० दमेरुनसिः ॥ अन्येषामपिदृश्यत इति पचेदीर्घः । दुष्टोदमूनाः । दमूनसंगृहपतिं वरेण्यम् । दमपाशात्तु कूर्चणवदी र्घः पच्यते । तस्मते ह्रस्वोवाहुलका द्वोध्यः ॥

दम्पती । पुं । सहोक्त्या जायापत्योः । जम्पत्योः ॥ जायाचपतिश्च । राजदन्तादिगणेपठितत्वात् जायाशब्दस्य दम्भावो-वा निपात्यते ॥ यत्रानुकूल्यं दम्पत्यो स्त्रिवर्गं तत्र वर्द्धते ॥

दम्भः । पुं । कैतवे ॥ धर्मध्वजित्वे । धार्मिकतयात्मनः ख्यापने । अधार्मिकत्वेपि धार्मिकत्वख्यापने । कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छायाम् ॥ लोकवञ्चनाय विहितकर्मानुष्ठाने ॥ दभ्यतेऽनेन । दम्भु दम्भने । घञ् ॥

दम्भनम् । न । दम्भे ॥

दम्भित्वम् । न । लाभपूजाख्यात्यर्थं स्वधर्मप्रकटीकरणे ॥

दम्भोलिः । पुं । वज्रे ॥ दम्भु रोधने । असुन् । दम्भसि रोधने श्वलिः समर्थः ॥ केवलभूषणपर्य्यासिवारणेषु । दम्नोति खेदयति । दम्भु० । औणादिकश्चोलिर्वा ॥

दम्यः । पुं । प्राप्तदमावस्थे वत्से । वत्सतरे ॥ अनडुहि ॥ त्रि । दमनीये ॥ शास्ये ॥ दममर्हः । दमु शमने । अर्हे कृत्यतृचश्चेत्यर्थे पोरदुपधादिति यत् ॥

दयः । पुं । करुणायाम् । दयायाम् ॥ इति शब्दरत्नावली ॥

दयमानः । त्रि । दयाकर्त्तरि ॥ दयते । दय० लटः शानच् मुक् ॥

दया । स्त्री । कृपायाम् । दुःखितेषु भूतेष्वनुकम्पायाम् । परदुःखासहने ॥ लक्षणं यथा । यत्नादपि परक्लेशं हर्त्तुं या हृदिजायते । इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्त्तितेति ॥ आत्मवत् सर्वभूतेषु यो हिताय शुभाय च । वर्त्तते सततं हृष्टः क्रियाह्येषा दयास्मृता ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः ॥ धर्मस्य पत्नी । यथा । मोऽपत्नी दया साध्वी पूजिताच जगत्प्रिया । सर्वेषा

त्वात्मेव यज्ञदर्भाः परिकीर्त्तिताः ॥ दृभ्यते । दर्भग्रन्थे । घञ् ॥ यद्वा दृणाति । दृ० । हृदरिभ्यांभः ॥

दर्भटः । पुं । न । निभृतगृहे ॥ इति त्रिकाण्डशेषः ॥

दर्भपत्रः । पुं । काशे ॥ इति राजनि० ॥

दर्भमूली । स्त्री । ओषधीभेदे ॥ पाक कर्कोटिलवीद् ॥

दर्भाह्वयः । पुं । मुञ्जे ॥ इति राज० ॥

दर्व्वः । पुं । राक्षसे ॥ दृणाति सर्व्वान् । दृ० । हगृभृदृभ्योवः ॥

दर्व्वटः । पुं । दण्डपाशिनि ॥

दर्व्विः । स्त्री । खजाकायाम् । दर्व्वीम् ॥ दृणाति । दृ० । दृदृभ्यांविन् ॥ उष्मुकदर्व्विहोमिन इति विश्री ॥

दर्व्विकः । पुं । दर्व्वीम् । व्यञ्जनादिहारके । कौंचा इति भाषा ॥

दर्व्विका । स्त्री । दर्व्वीम् । खजाकायाम् ॥ गोजिह्वायाम् । दार्व्विकायाम् ॥

दर्व्विहोमः । पुं । अप्रकृतिविकृतिहोमे ॥ येनकश्चित् प्रकृतित्वेन विकृतित्वेन वा वर्त्तते स दर्व्विहोम इतिव्याख्यातारः ॥

दर्व्वी । स्त्री । कंव्याम् । खजाकायाम् । कर्छी इति भाषा ॥ दृणाति । दृ० । दृदृभ्यांविन् । कृदिकारादक्तिनइति ङीष् ॥



दर्व्वीकरः । पुं । उरगे । दीर्घपृष्ठे । सर्पे ॥ रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः । ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ दर्व्वीकारः फणएवकरो यस्य । प्रहारसाधनत्वात् । दर्व्वीं फणां करोति । कुमारादेरितिटः ॥

दर्व्वीसङ्क्रमणम् । न । तीर्थविशेषे ॥

दर्शः । पुं । अमावस्यायाम् । सूर्येन्दुसङ्गमे ॥ अवलोकने । दर्शने ॥ अमावास्यायागे ॥ दर्शे अमावास्यायां क्रियमाणत्वात् उपचाराद्दर्शशब्देनोच्यते । सयागत्रयात्मकः । यथा । आग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोयागात्रयो ऽमावास्यायां सचयागस्त्रीन् कर्त्तव्यः कौण्डपायिकर्त्तव्ये मासमाध्यस्वेति ॥ दृश्यते शास्त्रेण । पुंसिसंज्ञायांघः ॥

दर्शकः । त्रि । द्वारपाले । प्रतीहारे ॥ दर्शयितरि ॥ प्रवीणे । निपुणे ॥ पश्यति । दृशिर् । ण्वुल् ॥

दर्शतः । पुं । सोमे ॥ सूर्ये ॥ पश्यति । दृशिर्० । भृमृदृशियजीत्यादिनाऽतच् ॥

दर्शनम् । न । नयने ॥ स्वप्ने ॥ बुद्धौ ॥ ॥ धर्मे ॥ उपलब्धौ ॥ शास्त्रे ॥ दर्पणे ईक्षणे ॥ षट्दर्शनेषु । वैशेषिकन्या

यमीमांसासाङ्ख्यपातञ्जलवेदान्तरूपेषु ॥ एतानि तत्त्वज्ञानार्थं वेदान्तविचार्यैः कणादगौतमजैमिनिकपिलपतञ्जलिवेदव्यासाख्यैर्मुनिषट्कैः कृतानि ॥ अथाहङ्कुलार्णवेऽपी स्वाशिवो । षड्दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः ॥ तेषु भेदन्तु यः कुर्यान्मदङ्गच्छेदको हि सः ॥ एतान्येव कुलस्यापि षडङ्गानि भवन्ति हि । तस्मान्मदात्मकं कौलं मदङ्कौलात्मकं प्रिये इति ॥ देव्याः पूजायामुक्तानि षड्दर्शनानि यथा । शैवशाक्तसौरगाणेशवैष्णवास्तिकमतप्रतिपादकानि षड्दर्शनानीति ॥ दृष्ट्यायाम् ॥ बर्णे ॥ अनुसन्धाने ॥ धानैकस्वरूपे ॥ रूपे ॥ दृश्यतेऽनेन अस्मिन् वा । दृशिर्०। करणे अधिकरणे वा ल्युट् ॥

दर्शनीयः । त्रि । मनोज्ञे ॥ दर्शनयोग्ये ॥

दर्शयामिनी । स्त्री । तमिस्रायाम् ॥

दर्शयिता । पुं । द्वारपाले । प्रतीहारे ॥ त्रि । दर्शके ॥

दर्शविपत्-द् । पुं । चन्द्रे ॥ इति हारावली ॥

दर्शितः । त्रि । आविष्कृते । प्रकाशिते ॥ दर्शनत्कारिते ॥

दलम् । न । उत्सेधे ॥ खण्डे ॥ अर्द्धच्छेदे ॥ अपद्रव्ये ॥ पत्रे । पर्णे ॥ तमालपत्रे ॥ पत्रे ॥ शस्त्रे ॥ पुं । खण्डने ॥ उत्सेधवद्वस्तुनि ॥ दलति । दल विदारणे । पचाद्यच् ॥



दलकोषः । पुं । माघ्ये । कुन्दपुष्पवृक्षे ॥

दलत् । त्रि । विकसिते ॥

दलनिर्मोकः । पुं । भूर्जपत्रवृक्षे ॥

दलनी । स्त्री । लोष्टे । ढीम इति हेला इति च भाषाप्रसिद्धे ॥ त्रि । भेदकर्तरि ॥

दलपः । पुं । स्वर्णे ॥ शस्त्रे ॥ प्रहरणे ॥ दलति दल्यते ऽनेनवा । दल० । उपिकुटिदलिकपिखृजिभ्यः कपन् ॥

दलपतिः । पुं । दलाध्यक्षे ॥

दलपुष्पा । स्त्री । केतक्याम् ॥

दलसारिणी । स्त्री । केमुके ॥

दलस्नुचिः । पुं । कण्टके ॥

दलस्नसा । स्त्री । पत्रशिरायाम् । माध्याम् ॥

दलाढकः । पुं । वनतिले । स्थलजातिले ॥ फेनायाम् ॥ गैरिके ॥ फेने ॥ खातके ॥ नागकेशरे ॥ मरुत्तरे ॥ कुन्दे ॥ करिकर्णे ॥ शिरीषे ॥ माध्यायाम् ॥

दलाढ्यः । पुं । पङ्ककर्पटे । रूपमाइति दल् दल् इतिच भाषा ॥ इति त्रिकाण्डशेषः ॥

दलामलम् । न । मरुवकवृक्षे ॥ दम

मंवृक्षे ॥ मदनवृक्षे ॥

दवात्मन् । न । चक्रे ॥

दविः । पुं । स्त्री ॥ लोष्टे । ढीमइति दे
श इतिच भाषा ॥ स्त्री । दर्वितम
सीधान्ये ॥ दाविडइति दारिद्इतिच
भाषा ॥

दविकम् । न । काष्ठे । दवी इति पर्व
तीयभाषा ॥ इतिहेमचन्द्रः ॥

दवितः । त्रि । प्रफुल्ले ॥ कथ्यते ॥ य
था । दवितकुचभराक्रमङ्गपार्श्वि र
चय सन्मनाक्रमुमेष्य पीवरो व इति ॥

दविगन्धः । पुं । सप्तपर्णवृक्षे ॥

दवुः । पुं । ऋषिविशेषे ॥ चक्रे ॥ प्र
तारणायाम् ॥ पामे ॥ दवाति । दव०
। हर्दादिभ्यःभिः ॥

दविमः । पुं । इन्द्रे ॥ वज्रे ॥ दवाति ।
दव० । बाहुलकान्मिः ॥

दविमान् । पुं । इन्द्रे ॥ दविमरस्त्यस्य
। मतुप् । यवादित्वान्नवत्वम् ॥

दवः । पुं । वनानले ॥ वने ॥ उपतापे
॥ दवति । दुगतौ । पचाद्यच् ॥

दवथुः । पुं । परितापे ॥ नेत्रादिदाहे
॥ दवनं दूयतेऽनेनवा । टुदु उपता
पे । द्वितोऽथुच् ॥

दवाग्निः । पुं । दावानले ॥

दविष्ठः । त्रि । अतिदूरे । सुदूरे ॥ इद
मेषां अतिशयेन दूरम् । इष्ठन् । स्थू
लदूरेतिसाधुः ॥

दवीयान् । त्रि । दविष्ठे ॥ इदमनयोर
तिशयेनदूरम् । ईयसुन् । स्थूलदूर
युवह्रस्वेत्यादिना साधुः ॥

दशाः । पुंभूम्नि । वस्त्रान्ते । वसमाचले
॥ दशानाभौ प्रयोजये दितिश्रुतिः
॥ अधोंशुकस्याग्रे ॥ दश्यते ।
दंश० भि० घञ् ॥

दशकः । पुं । दशति ॥ दशपरिमाण
मस्य । सङ्ख्यायां इतिकन् ॥

दशकण्ठः । पुं । रावणे ॥ दश कण्ठाः य
स्य सः ॥

दशकण्ठजित् । पुं । श्रीरामचन्द्रे ॥ द
शकण्ठं जयति । जि० । क्विप् तुक् ॥

दशकन्धरः । पुं । रावणे ॥ दश कन्धराः
ग्रीवाः अस्य ॥

दशग्रीवः । पुं । रावणे ॥ दश ग्रीवा य
स्य सः ॥ गरुडपुराणे सप्तमीस्वधा
योक्ते एकादशमन्वन्तरीयदशनाम
केन्द्रभुविशेषे ॥

दशत् । पुं । दशके । वर्गे ॥ दशपरिमा
णमस्य । पञ्चद्दशतौ वर्गे वेति नि
पातनादति प्रत्ययः ॥

दशातिः । स्त्री । अन्ते ॥ इतिमहाभारते
दानधर्मः ॥

दशधा । अ । दशप्रकारे ॥ सङ्ख्याया
विधार्थेधा ॥

दश । चि । सङ्ख्याविशेषे । द्विगुणित पञ्चसु ॥ ततसङ्ख्या विशिष्टे ॥ दशन्ति दश्यन्ते वा । दंश दशने । बाहुलकात् कनिन् ॥

दशनः । पुं । शिखरे ॥ दन्ते ॥ न । कवचे ॥ दंष्ट्राव्यापारे ॥ दश्यते ऽनेन । दंश० । करणे ल्युट् । दशदशे ॥ तिनिर्देशात् क्वचिदकिञ्चयपिनलो पः ॥ यद्वा । कर्म्मणि ल्युट् ॥

दशनवासः । न । ओष्ठे । उत्तराधरो ष्ठमात्रे ॥ दशनानां वाससीव आवरकत्वात् ॥

दशनाङ्कः । पुं । दन्तक्षते ॥

दशनाढ्या । स्त्री । चुक्रिकायाम् । चाङ्गेर्य्याम् ॥

दशनोच्छिष्टः । पुं । निःश्वासे ॥ अधरे ॥ चुम्बने ॥ चि । दन्तक्षते ॥

दशपारमिताध्वरः । पुं । बुद्धे ॥

दशपुरम् । न । कुटन्नटे । कैवर्त्तीमुस्तके ॥ मालवदेशैकखण्डे ॥ पुरविशेषे ॥ दशविधवर्णिं । पूपालनपूरयोः । मू०कः । उणम् ॥ दशपुरेऽस्य वा । वक्पूरिस्थः समासान्तः ॥

दशपूरम् । न । वानेये । कैवर्त्तीमुस्तके ॥ दशपूरयति । पूरपूर्त्तौ । कर्म्मण्यण् ॥

दशबलः । पुं । बुद्धमुनौ ॥ दशबलान्य स्य । यदाहुः । दानशीलक्षमावीर्य्यध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञान दश बुद्धबलानि वै ॥

दशभुजा । स्त्री । दुर्गायाम् ॥ यथा । इतिहत्तं पुराकल्पे मनोः स्वायम्भुवेन्तरे । प्रादुर्भूता दशभुजादेवी देवहितायवै ॥ इतिकालिकापुराणम् ॥

दशभूमिगः । पु । बुद्धे ॥

दशभूमीशः । पुं । बुद्धे ॥

दशमः । चि । दशानाम् पूरणे । दसवाँ इतिभाषा ॥ तस्यपूरणेडट् । नान्तादसङ्ख्यादेर्मट् ॥

दशमी । चि । वर्षीयसि । अतिवृद्धे ॥ नवतेरूर्द्धं दशमी ऽवस्थाविशेषो ऽस्यास्ति । वयसि पूरणादितीनिः ॥

दशमी । स्त्री । नवत्यधिकावस्थायाम् ॥ शताब्दानां दशधाविभागे कृते दशम्यवस्था नवत्यधिका भवति ॥ तिथिविशेषे ॥ साचन्द्रस्य दशमकलाक्रियारूपा तदुपलक्षितकालपराख्या ॥ तत्रजातस्य फलम् । यथा । विद्याविनोदी धनपुत्रयुक्तः प्रलम्बकायो मदनाधिकार्थी । उदारचित्तः सुमना दयालुः प्रसूतिकाले दशमी यदि स्यादिति ॥ ङीप् ॥

दशमीस्थः । चि । नष्टवीर्य्ये । क्षीणरागे ॥ स्तनाधने ॥ नवत्यधिकवयसि

स्थविरे ॥ स्मृतिहीने ॥ कामवशान्मरणावस्थां प्राप्ते कामिनि ॥ नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राछेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥ दशम्यां कामावस्थायां तिष्ठति । स्था० । सुपिस्थ इति क०

दशमुखः । पुं । रावणे ॥ दशमुखान्यस्य ॥ जीवात्मनि ॥ दश इन्द्रियाणि मुखानि भोगद्वाराणि यस्य सः ॥

दशमुखान्तकः । पुं । रामे ॥ दशमुखस्यान्तकः ॥

दशमूत्रकम् । न । हस्तिमहिषोष्ट्रगवाऽजमेषाश्वगर्दभमानुषमानुषीणां मूत्रे ॥ इति राजनिर्घण्टः ॥ दशानां मूत्राणां समाहारः ॥

दशमूलम् । न । पाचनविशेषे । पञ्चमूलद्वये ॥ यथा । बिल्वश्योनाकगम्भारीपाटलागणिकारिकाः । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ॥ उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम् ॥ दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः । तन्द्राशोथज्वरानाहपार्श्वपीडारुचीर्हरेत् ॥ वातपित्तहरं पथ्यं कनीयःपञ्चमूलकम् ॥ उभयं दशमूलन्तु सन्निपातज्वरापहम् ।



कासे श्वासे च तन्द्रायां पार्श्वशूले च पूज्यते ॥ पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनमिति ॥

दशयोगभङ्गः । पुं ॥ संस्कारकर्मणि मन्त्रवेधविशेषे । खर्जूरवेधे ॥

दशरथः । पुं । रामताते ॥

दशरथप्रभवः । पुं । रामे ॥ रामादिषु ॥ दशरथ प्रभवोऽयस्य येषां वा ॥

दशरूपभृत् । पुं । विष्णौ ॥

दशवदनः । पुं । रावणे ॥ दशवदनानि यस्य सः ॥

दशवाजी । पुं । चन्द्रे ॥ दश वाजिनो रथे यस्य सः ॥

दशशतलोचनः । पुं । इन्द्रे ॥ दशशतानि सङ्ख्यायेषु तानि लोचनानि यस्य ॥

दशहरा । स्त्री । गङ्गाजन्मदिने ॥ यथा । ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् । पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्याः पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्येति शब्दः ॥ अपि च । अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यञ्चापि सर्वशः । असम्बद्धप्रलापश्च वा

स्तु तावन्मिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसीच तावती ॥ त्रिभागःसज्जकासारः स्तावदेवशिरालकम् । उशीरन्तु-द्विभागंस्यात् दृढभृष्टं नखं समम् ॥ कर्पूरो मृगनाभिश्च एकभागौप्रकीर्त्तितौ । एकोदशाङ्गधूपस्तु कृष्णस्यापि मनोहरोद्दिति ॥ पुष्पदानोत्तरं देवायदीयमाने धूपविशेषे ॥ यथा । मधुमुस्तं घृतं गन्धोगुग्गुलुगुरुशैलजम् । सरलं सिद्धसिद्धार्थे दशाङ्गोधूपउच्यतदति ॥ अन्यच्च । कर्पूरं कुङ्कमगुरु गुग्गुलुमैलयोद्भवम् । केशरं वालकं पर्णन्तु कालीकोषमुत्तमम् ॥ सर्वमेतद् घृतयुतं दशाङ्गोधूपईरित इति ॥

दशाङ्गुलम् । न । खर्बूजे ॥ त्रि । दशाङ्गुलमिते ॥

दशाननः । पुं । रावणे ॥

दशान्तिकः । पुं । दन्तीवृक्षे ॥

दशानीकिनी । स्त्री । सेनाविशेषे ॥

दशापवित्रम् । न । वासःखण्डे ॥

दशारुहा । स्त्री । कैवर्त्तिकायाम् ॥

दशार्णः । पुं । देशविशेषे ॥ सविन्ध्यस्यपूर्वदक्षिणस्यां दिशि वर्त्तते ॥ इति राधाकान्तः ॥

दशार्णा । स्त्री । नदीविशेषे ॥

दशार्हः । पुं । सुगते । बुद्धे ॥ यदुदेशे ॥

दशार्हाः । पुंभूम्नि । दशार्हदेशस्थे ॥

दशावतारः । पुं । विष्णौ ॥ दशअवताराः यस्यसः । तेयथा । शेते सं विस्तृथने मम मीनकूर्मकोलोऽभनृहरिर्वामनजामदग्न्यः । योऽभूदभूमरसाग्रजकृष्णबुद्धः कल्की सताञ्चभविता प्रहरिष्यतेऽरीनितिवोपदेवः ॥

दशाश्वः । पुं । चन्द्रे ॥ दशअश्वारथे यस्यसः । रथस्थिचक्रःसोमस्य कुन्दाभास्तस्यवाजिनः । वामदक्षिणतोयुक्ता दश तेन चरन्त्यसौ ॥

दशाश्वमेधिकः । पुं । तीर्थविशेषे ॥

दशास्थितिः । स्त्री । अवस्थायाम् ॥

दशास्यः । पुं । दशानने ॥ दश आस्यानि यस्य सः ॥

दशास्यजित् । पुं । श्रीरामचन्द्रे ॥ दशास्यं जयति । जि । क्विप् तुक् ॥

दशाहः । पुं । दशदिनसमुदाये ॥ दशानामह्नां समाहारः । तद्धितार्थेति समासः । समाहारस्यैकत्वादेकवचनम् । राजाहःसखिभ्यष्टच् । रात्राह्नाहाः पुंसि ॥

दशेन्धनः । पुं । प्रदीपे ॥ दशाइन्धनं यस्य ॥

दशेरः । पुं । हिंस्रे ॥ दशति । दंश । पतिकठिकुठिगडिगुडिदंशिभ्यएरक् । अनिदितामिति नलोपः ॥

दशेरकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति हेमचन्द्रः ॥

दशेरुकः । पुं । मरुदेशे ॥ पुं भूम्नि । तद्देशस्थे ॥ इति भूरिप्रयोगः ॥

दशैकादशिकः । पुं । वार्द्धुषिके ॥ एकादशार्थत्वादेकादश वस्तुतोऽस्य ये दश सद्दत्ता एकादश भविष्यन्ति ते दशैकादशाः । निपातनात् समासान्तोऽकारः । दशैकादशान् प्रयच्छति । कुसीददशैकादशात् ष्ठन्ष्ठचौ, इति ष्ठच् ॥ स्त्री । ङीपि दशैकादशिकी ॥

दष्टः । त्रि । दंशिते । दंशयुक्ते ॥ दंशेः क्तः ॥

दस्मः । पुं । यजमाने ॥ चौरे ॥ हुताशने ॥ खले ॥ दस्यति । दसु उपक्षये । इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ दर्शनीये ॥

दस्युः । पुं । मलिम्लुचे । चौरे ॥ रिपौ ॥ महासाहसिके ॥ दस्यति । दसु० । यजिमनिशुन्धिदसिजनिभ्यो युच् । बा० अनादेशाभावः । अनुनासिकयोरित्युक्तत्वाद्वा नानादेशः ॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥ मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥ ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना याः पौण्ड्रकाश्चौड्रद्रविडाद्युक्तादिनोक्ता जातयो बाह्या जाताः म्लेच्छभाषायुक्ताः आर्यभाषोपेता वा ते दस्यवः सर्वे स्मृता इत्यर्थः ॥

दस्रः । पुं । खरे ॥ अश्विनीसुते ॥

दस्रौ । पुं । द्विवचनान्तः । नासत्ययोः ॥ अश्विनीसुतयोः ॥ स्वर्वैद्ययोः ॥ दस्यतः चिकित्सया रोगान् । दसु० । स्फायितञ्चीति रक् ॥

दस्रदेवता । स्त्री । अश्विनीनक्षत्रे ॥ दस्रौ देवते यस्याः ॥

दस्रसूः । स्त्री । सूर्ययोषिति । संज्ञायाम् ॥

दहनः । पुं । चित्रके ॥ भल्लातके ॥ अग्नौ ॥ कपोते ॥ चतुष्कलप्रभेदे (ऽ।) ॥ न । दाहे । भस्मीकरणे ॥ त्रि । दुष्टचेष्टिते ॥ दहति दह्यते वा । दह भस्मीकरणे । ल्युः ल्युट् वा ॥

दहनकेतनः । पुं । धूमे ॥ दहनः केतनं यस्य ॥

दहनप्रिया । स्त्री । स्वाहायाम् ॥ दहनस्याग्नेः प्रिया ॥

दहनागुरु । न । दाहागुरुणि ॥

दहनारातिः । पुं । जले ॥

दहनीयः । त्रि । दहनार्हे । दाह्ये ॥

दहनोपमः । पुं । }
दहनोपलः । पुं । } सूर्यकान्तमणौ ॥
दहनोल्का । स्त्री । अग्निकुक्कुटे ॥
दहरः । पुं । मूषिकायाम् ॥ स्वल्पे । अल्पे ॥ भ्रातरि ॥ बालके ॥ दहराकाशे ॥ ब्रह्मणि ॥
दहराकाशः । पुं । चिदाकाशे ॥ ईश्वरे ॥ दहरश्चासावाकाशश्च ॥
दह्रः । पुं । दावानले ॥ वह्नौ ॥ दहति । दह० । स्फायितञ्चीति रक् ॥ दहराकाशे ॥ जठरे ॥
दा । स्त्री । शोधने ॥ दाने ॥ छेदे ॥ उपतापे ॥ रक्षायाम् ॥ दानम् । डुदाञ् । सम्पदादित्वात् क्विप् ॥
दाकः । पुं । यजमाने ॥ दातरि ॥ ददाति । डुदाञ् । कृदाधारेतिकः ॥
दाक्षः । त्रि । दक्षसम्बन्धिनि ॥ दक्षस्यायम् । अण् ॥
दाक्षायणयज्ञः । पुं । आवृत्त्यायुक्ते दर्शपूर्णमासात्मके यज्ञे ॥ दक्षस्येमे दाक्षाः । तेषां अयनं आवृत्तिरिति तन्निर्वचनम् ॥
दाक्षायणी । स्त्री । अपर्णायाम् ॥ उमायाम् । सत्याम् ॥ अश्विन्यादिसप्तविंशतिभेषु ॥ रोहिण्याम् ॥ दन्तीवृक्षे ॥ मानवे दक्षकन्यापीठाधिष्ठात्रिदेव्याम् ॥ दक्षस्यापत्यम् । वामधेयस्येति वृद्धसंज्ञायाम् उदीचां वृद्धादगोत्रादिति फिञ् । गौरादित्वात् ङीष् ॥
दाक्षायणीपतिः । पुं । एकलिङ्गे । चन्द्रे ॥ शिवे ॥ दाक्षायण्याः पतिः ॥
दाक्षायणीरमणः । पुं । चन्द्रे ॥
दाक्षाय्यः । पुं । गृध्रे ॥ दक्षते । दक्ष वृद्धौ शीघ्रार्थे च । श्रुदक्षिस्पृहिगृहिभ्य आय्यः । दक्षाय्यस्यायम् । तस्येदमित्यण् ॥
दाक्षिः । पुं । दक्षस्यापत्ये ॥ अतइञ् ॥
दाक्षिणम् । न । दक्षिणानां समूहे ॥ भिक्षादिभ्योऽण् ॥
दाक्षिणात्यः । पुं । नारिकेले ॥ त्रि । दक्षिणदिग्भवे ॥ दक्षिणाभवः । दक्षिणापश्चात्पुरसस्त्यक् ॥
दाक्षिणिकः । पुं । यन्त्रविशेषे ॥ सत्ये ष्टापूर्त्तेन भवति । पुरुषस्तस्यानभिचोदितः इष्टापूर्त्तकारी कामोपहतमना बध्यते ॥
दाक्षिण्यम् । न । आनुकूल्ये ॥ त्रि । दक्षिणार्हे ॥
दाक्षी । स्त्री । पाणिनिमुनेर्मातरि ॥ दक्षस्य गोत्रापत्यं स्त्री । अतइञ् । इतोमनुष्यजातेरिति ङीष् ॥
दाक्षीपुत्रः । पुं । पाणिनिमुनौ ॥ दाक्ष्याः पुत्रः ॥

दाक्षेयः । पुं । पाणिनिमुनौ ॥ दाक्ष्या अपत्यम् । स्त्रीभ्यो ढक् ॥

दाक्ष्यम् । न । कौशले । दक्षतायाम् ॥ सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तौ ॥ दक्षस्य कर्म भावो वा । ष्यञ् ॥

दाघः । पुं । दाहे ॥ दह्यतेऽनेन । दह भस्मीकरणे । करणे घञ् । न्यङ्क्वादित्वात् कुत्वम् ॥

दाडकः । पुं । दन्ते ॥ इति शब्दार्थकल्पतरुः ॥

दाडिमः । त्रि । एलायाम् ॥ पुं । करके । स्वल्पफले । शुकवल्लभे ॥ [illegible]कर कदाडिमावित्यमरः ॥ तत्फलं त्रिविधं स्वादु स्वाद्वम्लं केवलाम्लकम् । तत्तु स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम् ॥ हृत्कण्ठमुखरोगघ्नं तर्पणं शुक्रलं लघु । कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् ॥ स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु । अम्लन्तु पित्तजनकमुष्णं वातकफापहमिति भावप्रकाशः ॥ * ॥ तापहारि मधुरं लघु पथ्यमिति राजनिर्घण्टः ॥ दलनं दालः । दल विशरणे । घञ् । दालेन निर्वृत्तः । भावप्रत्ययान्तादिमप् । डलयोरेकत्वम् ॥

दाडिमपुष्पः । पुं । रोहितकद्रुमे ॥ दाडिमस्य पुष्पमिव पुष्पमस्य ॥ न । करकपुष्पे ॥

दाडिमपुष्पकः । पुं । रोहितकवृक्षे ॥ दाडिमस्येव पुष्पाणि यस्य ॥

दाडिमप्रियः । पुं । शुकखगे ॥

दाडिमभक्षणः । पुं । कीरे ॥

दाडिमादिचूर्णम् । न । चूर्णविशेषे ॥ द्विपलं दाडिमाद्दद्यात् खण्डस्यापि पलत्रयम् । त्रिसुगन्धिपलं चैकं चूर्णमेकत्र कारयेत् ॥ तच्चूर्णमाशयाभुक्तमरोचकहरं परम् । दीपनं पाचनं ग्राहि पीनसज्वरकासजित् ॥

दाडिमी । स्त्री । दाडिमे ॥

दाडिमीरसः । पुं । व्यञ्जनोपस्कारान्तरे ॥ दाडिमं घृतसम्भृष्टं तक्रपाके विनिःक्षिपेत् । ततः पक्वः पटेपूत इति स्याद्दाडिमीरसः ॥

दाडिमीसारः । पुं । दाडिमे ॥ इति राजनिर्घण्टः ॥

दाडिम्बः । पुं । दाडिमे ॥ इति त्रिकाण्डशेषः ॥

दाढा । स्त्री । दंष्ट्रायाम् ॥ अभिलाषायाम् ॥ समूहे ॥ इति शब्दार्थकल्पतरुः ॥

दाढिका । स्त्री । दंष्ट्रिकायाम् ॥

दाण्डपाता । स्त्री । तिथिविशेषे ॥ दण्डपातोऽस्यां वर्त्तते । घञः सास्यां क्रि-

…येतिञः॥

दाण्डमाथिकः। त्रि। दण्डमाथं धावति। आथोत्तरपदेति ठक्॥

दाण्डा। स्त्री। क्रीडाविशेषे। घटा इति भाषा॥ दण्डः प्रहरणमस्यां क्रीडायाम्। तदस्यां प्रहरणमिति णः॥

दाण्डाजिनिकः। पुं। मायाजीविनि। सदम्भे॥ दण्डाजिनेन दम्भेनार्थान्न्विच्छति। अयःशूलदण्डाजिनाभ्यामिति ठक्॥

दाण्डिनायनः। पुं। दण्डिनो गोत्रापत्ये॥ नडा॰ फक्। दाण्डिनायनहास्तिनायनेत्यादिना टिलोपाभावः॥

दातः। त्रि। लूने। छिन्ने॥ दायते स्म। दाप् लवने। क्तः॥ शुद्धे॥ दायति। दैप् शोधने। कर्त्तरि क्तः॥

दाता। त्रि। दानशीले। सुचिरे॥ दानकर्त्तरि॥ ददाति। डुदाञ्॰। तृच्॥

दात्यूहः। पुं। कालकण्ठके। खगे॥ चातके॥ जलकाके॥ मेघे॥ दातिः। दाप्॰। क्तिन्। दातिं मारणं ऊहते। ऊह॰। अण्॥ यद्वा। दित्यौहा यम्। अण्। देविकाशिंशपेत्यात्त्वे वाहऊठ शकन्ध्वादिः॥

दात्यौहः। पुं। दात्यूहे॥ दित्यौहा ऽयम्। अण्। देविकाशिंशपेत्यादि



॥ आत्वे समसारणम्। वृद्धिः॥

दात्रम्। न। छेदनमस्त्रे। खर्वे॥ दायत्यनेन। दाप्॰। दाम्नीत्यादिना ष्ट्रन्॥ दादिभ्यश्छन्दसीति ह्रस्वाः॥

दात्री। स्त्री। दातव्यायाम्॥ ह्रस्वान्तात् ङीप्॥

दात्वः। पुं। दातरि॥ ददाति। डुदाञ्॰। अनिदेश्यादिना दधातेस्त्वन्॥

दादः। पुं। दाने॥ दद्यते। दद दाने। कर्मणि घञ्॥

दाधिकम्। त्रि। दधिसंस्कृतद्रव्ये॥ दधिसंस्कृतम्। दध्नष्ठक्॥ दध्ना संस्कृतं वा। प्राग्वहतेष्ठक्॥ दध्ना चरति। चरतीति ठक्। दध्ना संसृष्टं वा। संसृष्टे ठक्। दध्नोपसिक्तं वा। व्यञ्जनैरुपसिक्त इति ठक्॥

दानम्। न। गजमदे॥ पालने। रक्षणे॥ छेदे॥ शुद्धौ॥ विश्राणने। त्यागे॥ परस्वत्वापत्तिपर्यन्तस्वत्यागे। देशकालश्रद्धया यथाशक्त्या याजितार्थानां सत्पात्रे समर्पणे। स्वस्वत्वस्य दानामन्त्रादीनां यथाशक्ति शास्त्रोक्तसंविभागे। असङ्कोचेन विप्रेषु स्वस्वत्वपरित्यागेन परस्वत्वापादने। स्वप्रदानस्वत्वापादकद्रव्यत्यागे॥ *॥
अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्। दानमित्यभिनिर्दिष्टं व्याख्या

मन्तव्यमुच्यते ॥ दाता प्रतिग्रहीता च
श्रद्धा देयञ्च धर्मयुक् । देशकालौ च
दानानामङ्गान्येतानि षड्विदुः ॥ म
नसा पात्रमुद्दिश्य भूमौ तोयं विनिः
क्षिपेत् । विद्यते सागरस्यान्तो दान
स्यान्तो न विद्यते ॥ परोक्षे कल्पितं
दानं पात्राभावे कथं भवेत् ॥ गोत्र
जेभ्यस्तथा दद्यात् तदभावेऽस्य ब
न्धुषु ॥ यदा तु न सकुल्याः स्युः बान्धव-
सम्बन्धिबान्धवाः ॥ दद्यात् । स्वजाति
श्रेष्ठेभ्य स्तदभावेऽप्सु निःक्षिपेत् ॥
स्नात्वा शुचौ समे देशे गोमयेनोपले
पिते । वसित्वा वसनं शुद्धं दानं दद्या
त् यदर्थिनाम् ॥ दानं चतुर्विधं प्रोक्त
मृषिभिर्धर्मकोविदैः ॥ नित्यं नैमि
त्तिकं काम्यं विमलं दानमीरितम् ॥
अहन्यहनि यत्किञ्चिद्दीयतेऽ
नुपकारिणे । अनुद्दिश्य फलं तस्मा
त् ब्राह्मणाय तु नित्यकम् ॥ यत्तु पा
पोपशान्त्यै च दीयते विदुषां करे ।
नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठि
तम् ॥ अपत्यविजयैश्वर्यस्वर्गार्थं य
त् प्रदीयते । दानं तत् काम्यमाख्या
तमृषिभिर्धर्मचिन्तकैः ॥ ईश्वरप्रीण
नार्थाय ब्रह्मवित्सु प्रदीयते । चेत-
सा सत्त्वयुक्तेन दानं तद्विमलं स्मृत
म् ॥ * ॥ गत्वा यद्दीयते दानं त



क्षापात्रे विधानतः । तदनन्तफलं वि
द्धि भवेत्ता चिन्तयेन्नृप ॥ * ॥ तच्च सा
त्त्विकादि भेदात् त्रिविधम् । यथा ।
दातव्यमिति यद्दानं दीयतेऽनुप
कारिणे । देशे काले च पात्रे च तद्दा
नं सात्त्विकं स्मृतम् ॥ यत्तु प्रत्युप
कारार्थं फलमुद्दिश्य वा पुनः । दीयते
च परिक्लिष्टं तद्दानं राजसं स्मृतम्
॥ अदेशकाले यद्दानमपात्रेभ्यश्च दी
यते । असत्कृतमवज्ञातं तत् ता
मसमुदाहृतम् ॥ * ॥ यदेवंविध
मेदमिति विशेषं जानानः परस्वत्वाप
त्तये स्वामी त्यजति परश्च विशेषेणे
दं ममेति स्वत्वं प्रत्येतीति व्यवहारे
॥ * ॥ अस्य विधिर्यथा । स्नानसन्ध्याच
मनादि कृत्वा नारायणनवग्रहगुरून्
सम्पूज्य देयद्रव्यं वामहस्तेन धृत्वा
दक्षिणहस्तेन विरभ्यर्च्य तद्द्रव्याधि
पतिदेवतां सम्प्रदानञ्चार्चयित्वा स
ङ्कल्प्य कुशतिलजलत्यागपूर्वकं दद्या
दिति ॥ विवेकस्नानशुद्धौ ॥ दैपगो
धनद्रव्यस्यादाते दानपदं व्युत्पद्यते
। यद्दायपतञ्जलिः । विवेकख्यातिरवि
प्लवा दुःखनत्यहानोपाय इति । अवि
प्लवा शुद्धिः सा च सवासन संशयविपर्य
यासापरिहारेण विवेकसाक्षात्कारस्य
स्वरूपप्रतिष्ठाऽवस्थानम् । सा च न वि

नादरनैरनर्थंदीर्घंकालयेविताभ्या सपरिपाकाङ्क्षतीति । दानेनविवेकस्याप्युपकार्थेकाङ्गेन योगिसङ्गृहीतः ॥ सेयं पञ्चमीसिद्धिः सदामुदितमित्युच्यते ॥ दानञ्च सिद्धिहेतुः । धनादिदानेनाराधितोज्ञानी ज्ञानं प्रयच्छति ॥ इति वनेन ॥ दोनमवखण्डने । ल्युट् ॥ डुदाञो भावे दीयते इति कर्मणि वा ल्युट् ॥ स्वधनस्यपरेभ्यः प्रतिपादने । राजानुपायविशेषे । उपप्रदाने ॥

दानकम् । न । कुत्सितदाने ॥ दानकं त्वितिदत्तियाद्विपुपाठात्कर्म ॥

दानकर्म । न । दानक्रियायाम् ॥

दानतोयम् । न । सदोदके ॥

दानधर्मः । पुं । दानस्यफले ॥

दानपतिः । पुं । सदाप्रदे । सततदातरि ॥ अक्रूरे ॥

दानपात्रम् । न । विद्यादियुक्ते ॥ विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः । वृत्तिग्लानो गोहितो गोशरण्यो दाता यस्मा ब्राह्मणः पात्रमाहुः ॥ दानस्यपात्रम् ॥

दानवः । पुं । असुरे । दनुजे । दक्षकन्याया दनोर्गर्भे कश्यपाज्जाते ॥ दनोरपत्यम् । तस्यापत्यमित्यण् ॥

दानवज्यः । पुं । वैश्ये ॥ इति पुराणम् ॥

दानवारिः । पुं । सुरे । देवतायाम् ॥ दानवानां अरिः । दानवोऽरिर्यस्य वा ॥

दानवीरः । त्रि । वदान्ये । दातरि ॥

दानशौण्डः । त्रि । वदान्ये । बहुप्रदे ॥ दाने शौण्डः । सप्तमीशौण्डैरिति समासः ॥

दानायोग्यः । त्रि । अपात्रे ॥ अव्रताना ममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहो देयो न शिलाता रयेच्छिलाम् ॥

दानीयः । त्रि । सम्प्रदाने । दानपात्रे ॥ दीयतेऽस्मै । डुदाञ् । कृत्यल्युटोबहुलमिति सम्प्रदानेऽनीयर् ॥

दानुः । त्रि । दातरि ॥ विक्रान्ते ॥ ददाति । डुदाञ् । दाभाभ्यांनुः ॥

दान्तः । त्रि । तपःक्लेशसहे । जितेन्द्रिये । वहिरिन्द्रियनिग्रहकर्त्तरि ॥ दाम्यतिस्म । दमेर्गत्यर्थेतिक्तः । यस्यविभाषेतिनेट् । अनुनासिकस्येतिदीर्घः ॥ दमिते । त्रि । वृषे ॥ दान्तोयं बलीवर्दः युगशकटवहनयोग्य कृतइतिगम्यते इतिभामती ॥ दम्यतेस्म । दमुउपशमे । णि जन्तः । क्तः । वादान्तशान्तेतिसाधुः ॥ पुं । दमनकवृक्षे ॥

दान्तिः । स्त्री । तपःक्लेशसहिष्णुतायाम्

लोदकत्वाद्दा । दशार्हे एवचा । स्या
र्थिकः प्रत्ययः ॥ त्रि । दशार्हदेशजे ॥
दाशी । स्त्री । धीवरी ॥
दाशेयी । स्त्री । व्यासमातरि ॥ दाश्याः
अपत्यं स्त्री । शुभ्राभ्यो वेत्ति ढक्भावे
ऽपि च इति ढक् । ङीप् ॥
दाशेरकः । पुं । मालवदेशे ॥ इति हेम० ॥
दाश्वः । त्रि । दातरि ॥
दाश्वान् । त्रि । दत्तवति ॥ दाश्वान् सा
ह्वान्मीढ्वांश्चेति निपातितः ॥
दासः । पुं । ज्ञातात्मनि ॥ शूद्रे ॥ धीव
रे ॥ दानपात्रे ॥ शूद्रमात्रोपपदे ॥
सेवके । भृत्ये ॥ सच पञ्चदशवि
धो नारदेनोक्तो यथा । गृहजात
स्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामि
ना च यः ॥ मोक्षितो महतश्चर्णाद्यु
द्धे प्राप्तः पणे जितः । तवाहमित्युप
गतः प्रव्रज्यावसितः कृतः ॥ भक्तदा
सश्च विज्ञेय स्तथैव वडवाकृतः । विक्रे
ता चात्मनः शास्त्रे दासाः पञ्चदश स्मृ
ताः ॥ अस्यार्थः । गृहजातः दास्यामुत्प
न्न । दायादुपागतः क्रमागत । अना
कालभृतः दुर्भिक्षपोषित । स्वामि
ना आहितः बन्धकीकृतः । मोक्षितः
ऋणदानेनाङ्गीकृतदास्यः । तवाह
मित्युपगतः केनाप्यदासः सन् स्वयं-



दासत्वेन दत्तस्वरूपः । प्रव्रज्यावसि
तः सन्न्यासभ्रष्टः । कृतः केनचि
न्निमित्तेन एतावत्कालपर्यन्तं तवाहं
दास इति कृतसमयः । भक्तदासः सु
भिक्षेऽपि भक्तार्थमङ्गीकृतदास्यः । व
डवाकृतः वडवा दासी तल्लोभादङ्गी
कृतदास्यः इति ॥ स्वजातेर्भक्त-
दासोग्रजः क्रीतदपि मौ । पैत्रि
कोद्दिष्टदासवर्ष्णसते । दासशेमयः
॥ विप्रस्य किङ्करो भूपो वैश्यो भू
पस्य भूमिप । सर्वेषां किङ्कराः शूद्रा
ब्राह्मणस्य विशेषतः ॥ दसति । दंस
दशने । दंसयति दंसतेर्वा इत्यदी
सौ । दंसेष्टटनौ नम् आ च ॥
दासकः । पुं । सामान्यदासे ॥ दास्ये ॥
दासएव । स्वार्थे कः ॥
दासकर्म्म । न । दासस्य कृत्ये ॥ कर्मा
पि द्विविधं ज्ञेय मशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं कर्मकृतां
स्मृतम् ॥ गृहद्वाराशुचिस्थानरथ्याव-
स्करशोधनम् । गुह्याङ्गस्पर्शनोच्छि
ष्टविण्मूत्रग्रहणोज्झनम् ॥ अशुभं
कर्म विज्ञेयं शुभमन्यदतः परम् ॥
दासनन्दिनी । स्त्री । व्यासमातरि ।
सत्यवत्याम् ॥
दासपुरम् । न । कैवर्त्तीमुस्तके ॥
दासान् शूद्रान् पिपर्त्ति । पृ० । मू०

दितः । त्रि । छिन्ने ॥ दीयते स्म । दो अवखण्डने । क्तः । द्यतिस्यतीति त्वम् ॥

दितिः । स्त्री । दैत्यजनन्याम् ॥ खण्डने ॥ दो अवखण्डने । क्तिच् क्तौ च संज्ञायामिति क्तिच् । द्यतिस्यतीति त्वम् ॥

दितिजः । पुं । दैत्ये ॥ दितेर्जातः । जनी० । डः ॥

दितिसुतः । पुं । दैतेये ॥ दितेः सुतः ॥

दिती । स्त्री । दैतेयमातरि ॥ कृदिकारादक्तिन इति ङीष् ॥

दित्सा । स्त्री । दातुमिच्छायाम् ॥ डुदाञ्० । सनि मीमा इत्यादिना इस् आदेशः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । अप्रत्ययादित्यकारप्रत्ययः ॥

दिदृक्षमाणः । त्रि । द्रष्टुमिच्छति ॥ दृशेः सन्नन्तात् लटः शानच् ॥

दिदृक्षा । स्त्री । द्रष्टुमिच्छायाम् ॥ दृशेः सन्नन्तादप्रत्यये टाप् ॥

दिदृक्षुः । त्रि । द्रष्टुमिच्छति ॥ सनाशंसभिक्ष उः ॥

दिद्युत् । त्रि । द्योतनशीले ॥ द्योतते इत्येवंशीलः । द्युत दीप्तौ । द्युतिगमिजुहोतीनां द्वे चेति क्विप् ॥

दिधिषाय्यः । पुं । मन्त्रे ॥ दधाति आज्यादिकम् धीयते वा । डुधाञ्० । दिधिषाय्य इति षाय्यः । धातोर्द्वित्वमित्वं षुक् चाय्यप्रत्ययः ॥ आग्नेयपितृमन्त्रौ । मित्रावरुणयोः दिधिषाय्यः ॥

दिधिषुः । पुं । द्विरूढास्वामिनि । पुनर्भूपतौ ॥ दिधिषूमात्मन इच्छति । सुप आत्मनः क्यच् क्विप् । बाहुलकादुप्रत्ययः ॥ स्त्री । द्विरूढायाम् ॥

दिधिषूः । स्त्री । द्विरूढायाम् । पुनर्भूः ॥ दधाति पापम् धीयते वा । डुधाञ्० । धिषयन्ते वा । अन्दूदृन्भू इति साधुः ॥ यद्वा । दिधिं धैर्यं स्यति । षो० । मनुः । ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषुः स्मृतेत्याह ॥ पुं । पुनर्भूपतौ ॥

दिधिषूपतिः । पुं । द्विरूढायाः पत्यौ ॥ भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः । धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

दिनम् । न । सूर्यकिरणावच्छिन्ने काले । अहनि । घस्रे । वासरे ॥ तत्तु मनुष्यमाने षष्टिदण्डात्मकम् । पितृमाने गौणचान्द्रमासात्मकम् । देवासुरमाने वत्सरात्मकम् । ब्रह्ममाने दिव्यद्विसहस्रयुगात्मकम् ॥ * ॥ मनुष्यमाने ब्रह्मणो दिनस्य सङ्ख्या । ८६४००००००० । इति

पुराणम् ॥ * ॥ तदेव मनुष्याणां सौरसावनचान्द्रनाक्षत्रभेदेन चतुर्विधम् । यथा । सावनम् इष्टकोचिरक्षैः स्वस्वलग्नगुणाः साप्यास्तदेवं भवेत् । १ । उदयादोदयाद्भानोर्भिः सावनवासराः । २ । तिथिनैकेन दिवसश्चान्द्रमाने प्रकीर्त्तितः । ३ । आयुर्दाये स्मृतं प्रोक्तैनाक्षत्रं षष्टिनाडिकमिति । ४ । जीमूतवाहनमतेतु सूर्यकिरणावच्छिन्नचतुर्थाममात्रकम्- ॥ * ॥ लग्नविशेषे ॥ यथा । अक्लोप तिथ्युग्मस्वकविधिव्यस्तगास्तथा । जिमासंज्ञाःस्मृतास्त्वेते मेषाद्यान्योदिनात्मका रतिक्षोभितस्त्वम् ॥ क्षीयते क्षीणं भवति । क्षीक्षये । दिवादि. । क्षियिजिदीति नक् । बाहुलकाद्ध्रस्वः ॥ चि । खण्डिते ॥ द्यति । दो० । द्यतेरितीनक् । यत्पक्षि दिनमिति तैत्तिरीये खण्डितमित्यर्थात् ॥

दिनकरः । पुं । सूर्य्ये ॥ करोति । कृञ्० । अच् । दिनस्यकरः ॥

दिनकरात्मजा । स्त्री । यमुनायाम् ॥

दिनकेशव. । पुं । अन्धकारे ॥ इतिशब्दरत्नावली ॥

दिनक्षय. । पु । दिनपाते ॥ एकस्मिन् सावनेत्वह्नि तिथीनां त्रितयं यदा । तदादिनक्षयःप्रोक्तः स्तत्साहस्रिकं फलम् ॥

दिनज्योतिः । न । आतपे ॥ ई० रात्रि० ॥

दिनपतिः । पुं । सूर्य्ये ॥ दिनस्यपतिः ॥ षण्मात्रसप्ततीयप्रभेदे ( । ऽ । ऽ ) ॥

दिनपातः । पुं । दिनक्षये ॥

दिनपिण्डः । पुं । अहर्गणे ॥

दिनप्रणीः । पुं । सूर्य्ये ॥

दिनवर्गः । पु । पञ्चमषष्ठसप्तमाष्टमे कादशद्वादशराशिषु ॥

दिनमणिः । पुं । सूर्य्ये ॥ दिनस्यमणिरिव ॥

दिनमुखम् । न । प्रभाते ॥

दिनमूर्द्धा । पुं । उदयाचले ॥

दिनयौवनम् । न । मध्याह्ने ॥

दिनांशः । पुं । प्राह्णमध्याह्नापराह्णसायाह्नादौ ॥

दिनादिः । पु । प्रभाते ॥

दिनान्तः । पुं । सायं । दिनावसाने ॥

दिनान्तकः । पु । अन्धकारे ॥ दिनस्यान्तकः ॥

दिनावसानम् । न । सायङ्काले ॥ दिनस्यावसानोऽस्मिन् ॥

दिनिका । स्त्री । दिनभृतौ । एकदिवसकृतकर्ममूल्ये ॥ इतिशब्दमाला ॥

दिनौघः । पुं । अहर्गणे ॥

दिलीपः । पुं । नृपविशेषे । रघो.

पितरि ॥

दिवीपराट् । पुं । दिवीपे ॥ इ० चि ॥

दिवीरम् । न । गोमयच्छत्रिकायाम् । शिलीन्ध्रके ॥

द्यौः । स्त्री । स्वर्गे ॥ आकाशे ॥ दीव्यन्त्यस्याम् । दिवु० । बा० डिविः । द्यौः दिवौ दिवः । द्युभ्याम् ॥

दिवम् । न । स्वर्गे ॥ आकाशे ॥ वने ॥ दीव्यन्त्यस्मिन् । दिवु० । इगुपधे किः ॥

दिवसः । पुं । न । दिने ॥ सावनादिप्रभेदेन दिवसोपि चतुर्विधः । नाडीषष्टिसमस्तत्र सावनो दिवसः स्मृतः ॥ त्रिंशांशभागार्कराशेर्दिवसः सौर उच्यते । चान्द्रस्तिथ्यवच्छिन्नो भावधिस्तभ्युः स्मृतः ॥ दीव्यन्त्यत्र । दिवु० । दिवःकिदिति असच् ॥

दिवसकरः । पुं । सूर्ये ॥

दिवसमुखम् । न । प्रभाते ॥

दिवस्पतिः । पुं । वासवे । इन्द्रे ॥ दिवः पतिः । तत्पुरुषे कृतीत्यत्र बहुलग्रहणात् षष्ठ्याः अलुक् इति मुकुटः । तन्न । पातेर्डतिरित्युणादिसूत्रस्य सत्त्वात् । अस्तु तर्हि षष्ठ्याः पतिपुत्रेति सत्त्वविधानसामर्थ्याल्लोकवेदसाधारण्येन लुगभावितः । कस्कादित्वात्सः । यत्तु षष्ठ्याः पतिपुत्रेति सत्वमिति मुकुटेनोक्तं तन्न । तत्र छन्दोधिकारात् ॥

दिवस्पृथिव्यौ । स्त्री । द्यावापृथिव्योः ॥ द्यौश्च पृथिवी च । दिवसश्च पृथिव्यामिति दिवो दिवसादेशः ॥ दिवस-नान्तः ॥

दिवा । अ । दिवसे ॥ दीव्यन्त्यत्र । दिवु० । कामप्रत्ययः ॥

दिवाकरः । पुं । भास्करे । सूर्ये ॥ अर्कपुष्पे ॥ दिवा दिनं करोति । दिवाविभेतिटः ॥ काके ॥ पुष्पविशेषे ॥ इति शब्दचन्द्रिका ॥

दिवाकीर्त्तिः । पुं । नापिते ॥ रात्रौ क्षुरकर्मनिषेधात् । दिवाकीर्त्तिरस्य ॥ अन्त्यावसायिनि । चण्डाले ॥ दिवाचरेयुः कार्यार्थं चिह्निता राजशासनैः इति मनूक्तेषु नियमात् ॥ उलूके ॥ इति हेमचन्द्रः ॥

दिवाटनः । पुं । काके ॥

दिवातनः । त्रि । दिनभवे ॥

दिवान्धः । पुं । पेचकादौ ॥ यथा । दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे । केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः इति देवीमाहात्म्यम् ॥

दिवान्धकी । स्त्री । छुच्छुन्दर्याम् ॥

दिवान्धा । स्त्री । वल्गुलापक्षिणि ॥

दिवाभीतः । पुं । कुम्भिले । चोरे ॥

उलूके ॥ कुमुदाकरे ॥

दिवाभीतिः । पुं । पेचके ॥ दिवा दिवसे भीतिर्भयं यस्य ॥

दिवामणिः । पुं । सूर्ये ॥ दिवा दिवसस्य मणिरिव ॥

दिवामध्यम् । न । दिनार्द्धे । मध्याह्ने ॥

दिवाशयः । त्रि । दिनेशयनकर्त्तरि ॥ दिवाशेते स्वपितीति ॥ शीङोऽधिकरणे शेतेरित्यच् ॥

दिवास्वापः । पुं । दिननिद्रायाम् ॥ दिवास्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः । ग्रीष्मवर्ज्जेषु कालेषु दिवास्वापो निषिध्यते ॥ उचितोऽपि दिवास्वापो नित्यं येषां शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥*॥ येषामुचितस्तानाह । व्यायामाध्ययनवाहनरताक्रान्तातीसारिणः शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् । क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो रात्रौ जागरितान् नरान् निरशनान् कामं दिवास्वापयेदिति ॥

दिवास्वापा । स्त्री । दिवान्धायाम् ॥

दिवि । पुं । चाषखगे ॥

दिविजः । त्रि । स्वर्गीये ॥

दिविषत् । पुं । देवे ॥ दिवि स्वर्गे सी-



दति वसते । षद्लृ विशरणगत्यवसादनेषु । सत्सूद्विषेति क्विप् । घुप्रावृषेति अलुक् । सुषामादित्वात्षत्वम् ॥

दिविष्ठः । त्रि । स्वर्गस्थे ॥

दिवी । स्त्री । उपजिह्विकाकीटे ॥

दिवेदिवे । अ । अन्वहनि ॥

दिवौकाः । पुं । दिवौकसि ॥ द्यौरोको यस्येति विग्रहः ॥

दिवोदासः । पुं । चन्द्रवंशीयभीमरथस्य पुत्रे । काशिराजे ॥ दिवस्थानेन तात्स्थ्याद्देवाः । तेषाम् दिवः स्वर्गस्य वा दासः । दिवश्च दासे इति षष्ठ्या अलुक् ॥

दिवोद्भवा । स्त्री । एलायाम् ॥ त्रि । दिविजाते ॥

दिवौकः पुष्करिणी । स्त्री । तीर्थविशेषे ॥

दिवौकाः । पुं । देवे ॥ द्यौः दिवि वा ओको यस्य । पु० ॥ यद्वा । दिवमोको यस्येत्यदन्तेन विग्रहः ॥ चातके ॥

दिव्यम् । न । लवङ्गे ॥ हरिचन्दने ॥ शपथे ॥ तद्भेदाः यथा । घटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमम् । षष्ठञ्च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकम् ॥ अष्टमं फालमित्युक्तं नवमं धर्म्मजं स्मृतम् । दिव्यान्येतानि सर्वाणि

निर्दिष्टानि स्वयम्भुवा ॥ गङ्गाजलस्य शपथपूर्वककथने तन्मिथ्याकथने दोषो यथा । गङ्गातोयमुपस्पृश्य मिथ्या यदि वदेज्जनः । सयाति कालसूत्रञ्च यावद्देवब्रह्मणोवय इतिब्रह्मवैवर्त्तपुराणम् ॥ पानीयप्रभेदे ॥ यथा । दिव्यंचतुर्विधंप्रोक्तंधाराजं करकाभवम् । तौषारञ्चतथाहैमं तेषुधारं गुणाधिकमिति ॥ पुं । गुग्गुलौ ॥ यवे ॥ आगमोक्ते भावविशेषे यथा । दिव्यस्तु देवताप्रायः शुद्धान्तःकरणः सदा । द्वन्द्वातीतो वीतरागः सर्वभूतसमः क्षमीति ॥ नायकविशेषे ॥ त्रि । चोतमानके मनुष्यैरलभ्ये सर्वमपश्यातीते अत्यद्भुते अप्राकृते ॥ दिविद्योतनात्मन्यः दिव्यंभवः । दिविपरलोके निस्य स्वरूपेणाभवः । शुभागमागुदक्प्रतीचीयत् ॥ मनोज्ञे ॥ दिविभवे ॥

दिव्यकुण्डम् । न । कामरूपे चोभकाद्रिपूर्वभागस्थे पुष्करिणी विशेषे ॥

दिव्यगन्धः । पुं । गन्धके ॥ न । लवङ्गे ॥

दिव्यगन्धा । स्त्री । स्थूलैलायाम् ॥ महाचञ्चुशाके ॥

दिव्यगायनः । पुं । गन्धर्वे । स्वर्गगायके ॥

दिव्यचक्षुः । पुं । सुगन्धद्रव्यप्रभेदे ॥ मर्कटे ॥ त्रि । अन्धे ॥ सुलोचने ॥



न । ध्यानात्मके नेत्रे ॥

दिव्यतेजाः । स्त्री । ब्राह्मीम् ॥

दिव्यदृष्टिः । स्त्री । निमेषशून्यायां दृष्टौ ॥ दिव्याचासौ दृष्टिश्च ॥

दिव्यदोहदम् । न । मनोराज्यस्य सिद्धये देवेभ्योदीयमाने द्रव्ये । उपयाचिते ॥ यद्दीयतेतु देवेभ्योमनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदंतद्विदुर्बुधा इतिहारावली ॥

दिव्यपञ्चामृतम् । न । मिलितगव्याज्यगव्यदधिगव्यक्षीरमाक्षिकशर्करारूपे ॥ इतिराजनिर्घण्टः ॥

दिव्यपुष्पः । पुं । करवीरे ॥

दिव्यपुष्पा । स्त्री । महाद्रोणायाम् ॥

दिव्यपुष्पिका । स्त्री । लोहितवर्णार्कवृक्षे ॥

दिव्ययमुना । स्त्री । कामरूपे दमनिकायानद्याः पूर्वभागस्थे नदीविशेषे ॥

दिव्यरत्नम् । न । चिन्तामणौ ॥

दिव्यरथः । पुं । देवविमाने । व्योमयाने ॥

दिव्यरसः । पुं । पारदे ॥

दिव्यलता । स्त्री । मूर्वालतायाम् ॥

दिव्यवस्त्रः । पुं । सूर्यशोभायाम् ॥ न । शुभांशुके ॥ दिविभववस्त्रे ॥ त्रि । सुन्दरवस्त्रवति ॥

दिव्यसारः । पुं । शालवृक्षे ॥

दिव्यस्त्री । स्त्री । अप्सरः प्रभृतौ ॥

दिव्या । स्त्री । आमलक्याम् । भव्यायाम् ॥ वन्ध्याकर्कोटक्याम् ॥ शतावर्याम् ॥ महामेदायाम् ॥ ब्राह्म्याम् ॥ स्थूलजीरके ॥ श्वेतदूर्वायाम् ॥ हरीतक्याम् ॥ मुरायाम् । गन्धमयाम् ॥

दिव्यादिव्या । स्त्री । उपदेवी विशेषे ॥

दिव्योदकम् । न । आकाशजले । सवारिणि ॥

दिव्योपपादुकः । त्रि । अमरे । निर्जरे ॥ मातृपित्रादिदृष्टकारणमिरपेक्षा अदृष्टसत्कृतेभ्योजाता ये देवास्ते दिव्योपपादुकाउच्यन्ते ॥ दिविभवः। बुप्रागपागितियत् । उपपद्यते । पदगतौ । लषपतपदेत्युकञ् । दिव्यश्चासावुपपादुकश्च ॥

दिव्यौघः । पुं । गुरुविशेषे ॥

दिव्यौषधिः । स्त्री । मनःशिलायाम् ॥

दिक्-गु । स्त्री । ककुभि । आशायाम् । काष्ठायाम् । प्राच्यादिव्यवहारहेतौ। कृत्वैकमवधिं तस्मादिदं पूर्वेण पश्चिमम् । इति देशोनिदिश्येत यया सादिगितिस्मृतेतिव्युत्पत्तेः कार्यमात्रनिमित्तकारणे ॥ सा चैकानित्या विभ्वी चेतिन्यायमतम् ॥ सा दशधा । यथा । पूर्वा आग्नेयी दक्षिणा च नैर्ऋती पश्चिमा तथा । वायवी चो त्तरैशानी ऊर्ध्वा चाधोदिशो दश ॥ तिर्यग्दहयुग्मम् ॥ दिशत्यवकाशम् । दिश अतिसर्जने । ऋत्विगित्यादिना निपातनात् क्विन् ॥ दिश्यते इसौवा । दिशेः कर्मणिक्विन् ॥ दृश्यतनविशेषे ॥ दिग्दृष्टे वर्तुलाकारे इति वैजयन्ती ॥

दिशा । स्त्री । दिशि ॥ भागुरिमतेन टाप् ॥ अथाङ्कारिकादि संज्ञा चोक्ता । यथा । अङ्गारिणी दिग्रवि विप्रयुक्ता यत्रारविस्तिष्ठतिसा प्रदीप्ता । प्रधूमिता यास्यतियांदिनेशः शेषाःप्रशस्ताःशुभदास्वस्ताःस्युः॥

दिश्यम् । त्रि । दिग्भवेवस्तुनि ॥ दिग्भिभवम् । दिगादिभ्योयत् ॥ दिगन्तरादागते ॥

दिष्टः । पुं । काले ॥ दारुहरिद्रायाम् ॥ न । भाग्ये । दैवे । भागधेये ॥ त्रि । आदिष्टे । उपदिष्टे ॥ दिशति । दिश अतिसर्जने । क्तिचक्तौचसंज्ञायामितिक्तः ॥ दत्ते ॥

दिष्टान्तः । पुं । मरणे ॥ दिष्टस्य दैवस्यान्तः ॥

दिष्टिः । स्त्री । मुदि । हर्षे ॥ माने ॥ परिमाणे ॥ दिशति । दिश क्तिच् क्तौचेतिक्तिच् ॥

दिष्ट्या । अ । हर्षे ॥ मङ्गले ॥ भाग्येनेत्यर्थे ॥ देशनम् । दिश् । सं० क्विप् । दिशं स्त्यायति वा । स्त्यै ष्ट्यै शब्दसङ्घातयोः । क्विप् । ष्टुत्वम् । संज्ञापूर्वकत्वात्सम्प्रसारणं न ॥ यद्वा । दिशति । अघ्न्यादित्यश्चेति यक् ॥

दिधुः । त्रि । दातरि ॥

दीक्षणीया । स्त्री । इष्टिभेदे । यै मिक्याम् ॥

दीक्षा । स्त्री । नियमे ॥ य० । एताश्चान्याश्च सेवेत दीक्षा विप्रो वनेवसन्निति ॥ गुरुमुखात् स्वेष्टदेवस्य मन्त्रग्रहे ॥ क्रियावर्णकलास्पर्शवाग्दृग्ध्यानस संज्ञकाः । दीक्षा मोक्षप्रदा देवि सप्तधा परिकीर्त्तिताः ॥ दीक्षा च द्विविधा प्रोक्ता बाह्याभ्यन्तरभेदतः । क्रियादीक्षा भवेद्बाह्या वेधाख्याभ्यन्तरी भवेत् ॥ दिव्यभावप्रदानाच्च क्षालनात् किल्विषस्य च । दीक्षेति कथिता सद्भिर्भवबन्धविमोचनी ॥ दीयते सकलं देयि गुरवे प्राणसंयुतम् । धनं तच्च सुवर्णादिपट्टवस्त्रसमुच्चयम् ॥ क्षयं प्राप्नोति सद्भावान्नानापापसमुच्चय । तस्माद्दीक्षेति नामास्याः सर्वशास्त्रेषु सुव्रते ॥ दीयते विमलं ज्ञानं क्षीयते कर्मवासना । तेन दीक्षेति सा प्रोक्ता मुनिभिर्धर्मकोविदैः ॥ क्रियाविशेषे ॥ दीक्षा च तृतीयं जन्म ब्राह्मणादेः । यथाह मनुः । मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनादिति ॥

दीक्षागुरुः । पुं । मन्त्राद्युपदेशकर्त्तरि । दैशिके ॥

दीक्षान्तः । पुं । अवभृथे ॥ प्रधानयागे दीक्षा तस्या अन्तः समापको योऽपरो यज्ञो न्यूनत्वादिदोषशान्त्यर्थं प्रधानयागस्य पूरणार्थं प्रतिज्ञार्थं क्रियते सोऽवभृथो दीक्षान्तोऽप्युच्यते ॥

दीक्षितः । त्रि । संजातदीक्षे । स्वीकृतदीक्षे ॥ य० । अदीक्षिता ये म्रियन्ते रौरवं नरकं व्रजेत् । तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याद्व्रतान्विकादिति ॥ अपि च । अदीक्षितस्य मरणं रौरवाय प्रकल्पते । न पूजाधिकारोऽस्ति विना दीक्षां वरानने इति ॥ दीक्षणीयेष्टिकृति ॥ सोमपानाच्च राज्ञिते । सोमपानकृतियागे आदिष्टरि ॥ दीक्षतेऽस्य । दीक्षमौण्ड्येज्योपनयननियमव्रतादेशेषु । गत्यर्थेति क्तः ॥ यद्वा । दीक्षासंजाताऽस्य । ता० इतच् ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्वकं त्वेन अभि भाषेत धर्मविद्-

दीपकः। पुं। दीपे। सेचाने। दीपाइति दीवा इति च भाषा॥ खगयाहिखगे। वाजइति सिकरा इति च भाषा॥ यमान्याम्॥ लोचमस्तके॥ मात्रावृत्तविशेषे। य०। तुरगैकमुपधाय सुनरेन्द्रमथधाय। इह दीपकमवेहि लघुमस्समयवेहि॥ यथा। चयमाइमति यच्चुवगदेसइतिफलु। धनखोभमयशाय नमपद्मनयनाय॥ रागविशेषे॥ न। कुङ्कुमे॥ इति शब्दरत्नावली॥ वागलङ्कारे॥ सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैवक्रियासुबह्वीषु कारकस्येति दीपकम्॥ प्राकरणिकाना मर्यास उपमानोपमेयानां धर्मः क्रियादिरेकवारमेवयदुपादीयते तदेकस्यैव समस्तवाक्यदीपनाद्दीपकम्॥ यथा। किवणाणं धणं णाआणं फणमणी केसराइं सीहाणम्। कुलबालिआ य थणा कुत्तो छिप्पन्ति अमुआणम्॥ कृपणानां धनं नागानां फणामणिः केसराः सिंहानाम्। कुलबालिकानां स्तनाः कुतः स्पृश्यन्ते अमृतानामिति संस्कृतम्॥ म्नाश्तानामिति सकलपथ्यन्तविशेषणम्। अत्रवर्ण्यत्वेन प्रकृतानां कुलवधूस्तनानां तदुपमानत्वेन प्रकृतानामन्येषां च कृत. स्पृश्यन्ते इति सकृद्धर्मोपादानाद्दीपकालङ्कारः॥ ६५॥ कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम्। यथा। स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्। अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने॥ स्विद्यति स्वेदमश्नुते। कूणति सङ्कोचमाप्नुते। वेल्लति परिवृत्त्य शेते। विचलति विशेषसञ्चला भवति। निमिषति निद्राव्याजेन नेत्रे मुद्रयति। अन्तर्नन्दति हृष्यति नवोढात्वेन बाह्यतो हर्षाप्रकाशनात्। अतएव चुम्बितुमिच्छति न तु चुम्बति इत्यनेकासु क्रियासु वधूरूपकर्तृकारकस्य सकृद्वृत्तिरित्यर्थः॥ अपि च। वहन्तिवर्षावर्षीणां धर्म्मक्यदीपकवुधाः। मदेनभातिकलभः प्रतापेन महीपतिः॥ दीपयति। दीपीदीसी। वसन्त। राडुम्॥ पि। दीपेकुशले॥ त्रि० कन्॥ दीप्तिकारके। भासके॥

दीपकूपी। स्त्री। दीपवर्त्याम्। तैलभास्थाम्। पलीता इति वत्ती इति च भाषा॥

दीपखोरी। स्त्री। दीपकूप्याम्॥ इति शब्दमाला॥

दीपध्वज। पु। कज्जले॥ इति जटा

दीपिका | दीप्ताक्षः
---|---

विशेषे ॥ यथा । डाभ्यां तस्य चतुर्थ्यां भ्यां योज्यि दीपान्विरुच्यते । तस्यका स्येत्यर्थः ॥

दीपान्विता । स्त्री । दीपाल्याम् ॥ सा च मुख्यचान्द्रेणाश्विनस्य । गौणचा न्द्रेण कार्त्तिकस्यामावास्या । यथा । चेयं दीपान्विता राजन् ख्याता पर्वदि णीभुवि । तस्यांदद्या न्वे दत्तं वि ष्टयावैस्वबालये ॥ तत्रकर्माणि यथा । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपदक्षा स्तयाकार्या शक्त्यादेवगृहेष्वपि ॥ चतुष्पथे श्म शानेषु नदीपर्वतसानुषु । वृक्षमले षु गोष्ठेषु चत्वरेषु गृहेषु च ॥ वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदेशे तदन न्तरम् ॥ ब्राह्मणान् भोजयित्वादौ विभाज्य च बुभुक्षितान् । अलङ्कृते न भोक्तव्यं नववस्त्रोपशोभिना ॥ स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्भृत कैःसहेति ॥ पद्मपुराणोत्तरखण्डम् ॥

दीपाली । स्त्री । दीपान्वितायाममा याम् । यच्चरात्रौ । दिवाली इति भाषा ॥ दीपमालायाम् ॥

दीपिका । स्त्री । प्रकाशिकायाम् ॥ रा न्यविशेषे ॥ हिल्लोलरागस्य रागिण्या म् ॥ प्रदोषकाले गदसम्मिविष्टा प्र

दीप्ताक्षः । दीपकस्या ऽङ्गगात्रयष्टा । सीमन्त सिन्दूरविराजमाना सुरक्तमाल्या- न्वितदीपिकेयमितिध्यानम् ॥ गान कालःसायाह्नः ॥

दीपितः । त्रि । प्रकाशिते ॥ उज्ज्वलि ते । निखारा इतिभाषा ॥ मथिते ॥

दीपिता । त्रि । दीप्तिकर्त्तरि ॥

दीपोत्सवः । पुं । दीपान्वितायाम मायाम् ॥

दीप्तः । पुं । निम्बूके ॥ सिंहे ॥ न । स्व र्णे ॥ हिङ्गुनि ॥ त्रि । ज्वलिते ॥ द ग्धे ॥ निर्भासिते ॥ दीप्तिमति ॥ दी प्यतेस्म । दीपीदीप्तौ । क्त । श्वी दितोनिष्ठायामितिनेट् ॥

दीप्तकम् । न । स्वर्णे ॥

दीप्तजिह्वा । स्त्री । उल्कामुख्याम् ॥ दीप्ता ज्वलन्ती जिह्वा यस्याः । शि वानां वाशितेन जिह्वाज्वलतीति प्रसिद्धिः ॥

दीप्तपिङ्गलः । पुं । सिंहे ॥

दीप्तरसः । पुं । किञ्चुलुके ॥

दीप्तलोचनः । पुं । विडाले ॥

दीप्तलोहम् । न । कांस्ये ॥

दीप्ता । स्त्री । लाङ्गलिकायाम् । अग्नि शिखौषधौ ॥ ज्योतिष्मत्याम् ॥ सा तलायाम् ॥

दीप्ताक्षः । पुं । मार्जारे ॥

दीप्ताग्निः । पुं । अगस्त्यमुनै ॥ चि । तीक्ष्णजठरानलयुक्ते ॥

दीप्ताङ्गः । पुं । मयूरे ॥

दीप्तिः । स्त्री । प्रभायाम् । रुचि । त्विषि ॥ प्रभाप्रसरे ॥ दीप्यतेऽनया । दीपी॰ क्तिचावादिभ्यः ॥ लाक्षायां । गन्धयुतोप्रतायाम् ॥ स्त्रियाः अयत्नज-गुणे ॥ कान्तिरेव वयोभोगदेशकालगुणादिभिः । उद्दीपितातिविस्तारं प्राप्ताचेद्दीप्तिरुच्यते ॥ लाक्षायाम ॥ कांस्ये ॥

दीप्तिकः । पुं । दुग्धपाषाणवृक्षे ॥

दीप्तोपलः । पुं । सूर्यकान्तमणौ ॥

दीप्यः । पुं । यमान्याम् ॥ लोचमस्तके ॥ जीरके ॥ न । शुक्लजीरे ॥ दीपनम् । दीपी॰ भावे घञ् ॥ दीप्तसाधुर्वा । तत्रसाधुरितियत् ॥ चि । दीप्ये ॥ दीपयितव्यम् । अपूपादिभ्यात् पत्येयत् ॥

दीप्यकः । पुं । अलङ्कारे ॥ यमान्याम् ॥ लोचमस्तके ॥ न । अजमोदायाम् ॥ यवान्याम् ॥ वर्हिचूडायाम् । रुद्रजटेति गौडभाषा ॥

दीप्यमानः । त्रि । प्रकाशमाने ॥

दीप्या । स्त्री । यवान्याम् ॥

दीप्रः । त्रि । दीप्तिमति ॥

दीयमानः । त्रि । वर्त्तमानदानसम्बन्धिवस्तुनि ॥

दीर्घः । पुं । शलाशालवृक्षे ॥ द्रुतदले ॥ रामशरे ॥ उष्ट्रे ॥ द्विमात्रवर्णे । गुरुवर्णे ॥ चि । आयते ॥ दृणाति । दृविदारणे । घोरुल्लगाद्वृघम् ॥

दीर्घकणा । स्त्री । गौरजीरके ॥

दीर्घकण्टकः । पुं । बर्बुरे ॥

दीर्घकणः । पुं । बके ॥

दीर्घकन्दकम् । न । मूलके ॥

दीर्घकन्दिका । स्त्री । मुषल्याम् ॥

दीर्घकन्धरः । पुं । बकपक्षिणि ॥

दीर्घकाण्डः । पुं । गुण्डतृणे । विकोशके ॥

दीर्घकाण्डा । स्त्री । तिक्ताङ्गायाम् ॥

दीर्घकीलः । पुं । अङ्कोठवृक्षे । निदीर्घकीचकः । पुं । कीचके ॥

दीर्घकूरकम् । न । आन्ध्रदेशोद्भवेशालिविशेषे । राजान्ने । धान्यभेदे ॥

दीर्घकेशः । पुं । भल्लूके ॥ त्रि । आयतकेशे ॥

दीर्घकोशा । स्त्री । दुर्नामायाम् ॥ दीर्घ-कोशोयस्याः ॥

दीर्घकोशिका । स्त्री । दुर्नामायाम् । झिनुक इति गौडभाषा प्रसिद्धे जलजन्तुविशेषे । सीपीइतिदेशभाषा ॥ दीर्घ-कोशोयस्याः । जातेरितिङीष् । संज्ञायां कन् । केयः इति ह्रस्वः ॥

दीर्घकोषा । स्त्री । } दीर्घकोशि
दीर्घकोषिका । स्त्री । } कायाम् ॥
प्रक्रियापूर्ववत् ॥
दीर्घगतिः । पुं । उष्ट्रे ॥ श०रत्नाव० ॥
दीर्घग्रन्थिः । पुं । गजपिप्पल्याम् ॥
दीर्घग्रीवः । पुं । उष्ट्रे ॥ दीर्घा ग्रीवा य स्य सः ॥ नीलक्रौञ्चे ॥ क्रमेलके ॥
दीर्घघाटिकः । पुं । उष्ट्रे ॥ इतिशब्द माला ॥
दीर्घच्छदः । पुं । इक्षौ ॥ दीर्घा च्छ दा यस्य सः ॥
दीर्घजङ्घः । पुं । भ्रङ्गानमत्स्ये ॥
दीर्घजङ्घः । पुं । बके ॥ उष्ट्रे ॥ त्रि । दीर्घप्रसृतावति ॥
दीर्घजिह्वः । पुं । सर्पे ॥
दीर्घतरुः । पुं । ताले ॥
दीर्घतिमिषा । स्त्री । कर्कट्याम् ॥
दीर्घतुण्डा । स्त्री । छुछुन्दर्याम् ॥
दीर्घतृणः । पुं । पल्लिवाहे ॥
दीर्घदण्डः । पुं । एरण्डवृक्षे ॥ गुवाके वृक्षे ॥
दीर्घदण्डी । स्त्री । गोरक्ष्याम् ॥
दीर्घदर्शी । पुं । पण्डिते । विदुषि ॥ गृध्रे ॥ भल्लूके ॥ त्रि । दूरदर्शके ॥ आगामिकार्यज्ञे ॥ दीर्घं दीर्घादा पश्यति । दृशिर्० । ग्रहादित्वात् णिनिः । सुपीति वा ॥
दीर्घदृष्टिः । पुं । दीर्घदर्शिनि ॥ दूरा वलोकनाय यन्त्रविशेषे । दूरवीच क्षे ॥ दीर्घा दृष्टिर्यस्य येन वा ॥
दीर्घद्रुः । पुं । तालवृक्षे ॥
दीर्घद्रुमः । पुं । शाल्मलिवृक्षे ॥
दीर्घनादः । पुं । शङ्खे ॥
दीर्घनालः । पुं । यावनाले ॥ रक्तगुण्डे ॥ न । दीर्घरोहिषके ॥
दीर्घनिद्रा । स्त्री । मरणे ॥ कतया नि द्रया राजन् दीर्घनिद्रामयिष्यति ॥
दीर्घपत्रः । पुं । कलिङ्गे । धूम्राटकणे ॥
दीर्घपटोलिका । स्त्री । धुंदुल इति गौडभाषाप्रसिद्धे लताफलविशेषे ॥
दीर्घपत्रः । पुं । जलजमधूके ॥ र- सोनभेदे । राजपलाण्डौ ॥ विष्णुक न्दे ॥ हरिदर्भे ॥ कुन्दरे ॥ ताले ॥ कुपीलौ ॥
दीर्घपत्रकः । पुं । एरण्डे ॥ रक्तलशुने ॥ विज्जले ॥ वेतसे ॥ करवीरवृक्षे ॥ जलजमधूके ॥ लशुने ॥ दीर्घा णि पत्राणि यस्य सः । स्वार्थेकः ॥
दीर्घपत्रा । स्त्री । अल्पजम्बूवृक्षे ॥ शालपर्ण्याम् ॥ दम्च्याम् । चेंचुप के ॥ चित्रपर्णिकायाम् ॥ वेतस्याम् ॥ गन्धपत्रायाम् ॥ डोडीचुपे ॥ दी र्घाणि पत्राणि यस्याः ॥
दीर्घपत्रिका । स्त्री । घृतकुमार्याम् ॥

शालपर्ण्याम् ॥ श्वेतवचायाम् ॥
दीर्घपत्नी । स्त्री । पलाशीलतायाम् ॥ महाचञ्चुशाके ॥
दीर्घपर्णी । स्त्री । पृश्निपर्ण्याम् ॥
दीर्घपल्लवः । पुं । शणवृक्षे ॥ न । आयतच्छदे ॥ त्रि । दीर्घच्छदवति ॥
दीर्घपात् । पुं । कङ्कपक्षिणि ॥
दीर्घपादः । पुं । कङ्कपक्षिणि ॥ दीर्घौ पादौ यस्य ॥
दीर्घपादपः । पुं । ताले ॥ पूगे ॥
दीर्घपृष्ठः । पुं । सर्पे ॥ दीर्घं पृष्ठमस्य ॥
दीर्घफलः । पुं । आरग्वधे ॥ दीर्घाणि फलान्यस्य ॥
दीर्घफलकः । पुं । अगस्त्यवृक्षे ॥
दीर्घफला । स्त्री । कपिलद्राक्षायाम् ॥ जतुकायाम् ॥
दीर्घमारुतः । पुं । हस्तिनि ॥ दीर्घो मारुतो वायुर्यस्य ॥
दीर्घमूलः । पुं । मोरटलतायाम् ॥ बिल्वान्तरवृक्षे ॥ न । लामज्जके ॥
दीर्घमूलकम् । न । मूलके ॥
दीर्घमूला । स्त्री । शालपर्ण्याम् ॥ श्यामलतायाम् ॥ दीर्घं मूलं यस्याः ॥
दीर्घमूली । स्त्री । दुरालभायाम् ॥
दीर्घरदः । पुं । शूकरे ॥ दीर्घौ रदौ यस्य ॥ त्रि । आयतदन्ते ॥
दीर्घरसनः । पुं । सर्पे ॥ दीर्घा रसना



जिह्वा यस्य सः ॥
दीर्घरागा । स्त्री । हरिद्रायाम् ॥
दीर्घरात्रम् । न । चिरकाले ॥
दीर्घरोमा । पुं । भल्लूके ॥
दीर्घरोहिषकम् । न । कत्तृणविशेषे । दृढकाण्डे ॥
दीर्घवंशः । पुं । नले ॥ आयते कुले । वंशध्वजे च ॥
दीर्घवक्त्रः । पुं । हस्तिनि ॥
दीर्घवल्ली । स्त्री । पलाश्याम् ॥ पातालगरुडीलतायाम् ॥ महेन्द्रवारुण्याम् ॥ आयतायां लतायाम् ॥
दीर्घशाखा । स्त्री । चमर्याम् ॥
दीर्घवृन्तः । पुं । श्योनाकद्रुमे ॥ दीर्घं वृन्तं यस्य ॥
दीर्घवृन्तकः । पुं । श्योनाकभेदे ॥
दीर्घवृन्ता । स्त्री । इन्द्रचिर्भिट्याम् ॥
दीर्घवृन्तिका । स्त्री । रक्तापर्ण्याम् ॥
दीर्घशरः । पुं । यावनाले ॥
दीर्घशालः । पुं । शणवृक्षे ॥ शालवृक्षे ॥
दीर्घशाखिका । स्त्री । नीलाम्लीक्षुपे ॥
दीर्घशिम्बिकः । पुं । चणे ॥ इति राजनिर्घण्टः ॥
दीर्घशूकः । पुं । शालेर्जात्यन्तरे ॥
दीर्घशूककम् । न । राजान्ने ॥
दीर्घसत्रम् । न । यज्ञविशेषे ॥ तीर्थविशेषे ॥

दीर्घसुरतः । पुं । कुक्कुरे । शुनि ॥ दीर्घसुरतंमैथुनमस्य ॥

दीर्घसूत्रः । त्रि । चिरक्रिये । दीर्घकालेन क्रियानुष्ठातरि ॥ दीर्घसूत्रंच्य सस्वायस्य ॥ अदीर्घसूत्रश्च भवेत् सर्वकर्मसु पार्थिवः । दीर्घसूत्रस्य न्रपतेः कर्महानि र्ध्रुवं भवेत् ॥ रागे द्वेषेच कामेच द्रोहे पापेच कर्म्मणि । अप्रियेचैवकर्त्तव्ये दीर्घसूत्रप्रशस्यते इतिमत्स्यपुराणम् ॥ न । विस्तृतसूत्रे ॥

दीर्घसूत्री । त्रि । दीर्घसूत्रे । निरन्तरघृणासत्वस्वकवलितान्तःकरणत्वेनातिमन्थरप्रवृत्ते । यद्यकर्त्तव्यं तन्मासेनापि करोति ननैव्ययेमीले ॥

दीर्घसोमः । पुं । सोमयागविशेषे ॥

दीर्घस्कन्धः । पुं । तालवृक्षे ॥

दीर्घा । स्त्री । पृश्निपर्ण्याम् ॥ दीर्घप्रमाणायाङ्गयि ॥

दीर्घाध्वगः । पुं । लेखहारे । धावडिया० इति गौडभाषा ॥ उष्ट्रे ॥

दीर्घायुधः । पुं । कुन्तास्त्रे ॥ दीर्घंश्वासायुधमस्य ॥ शूकरे ॥ दीर्घआयुधोऽस्य ॥

दीर्घायुष्यः । पुं । श्वेतमन्दारके ॥

दीर्घायुः । पुं । शाल्मलिद्रुमे ॥ वायसे ॥ जीवकवृक्षे ॥ मार्कण्डेयमुनौ ॥ त्रि । आयुष्मति । चिरजीविनि ॥ दीर्घमायुर्यस्य ॥

दीर्घार्कः । पुं । श्वेतमन्दारे ॥

दीर्घिका । स्त्री । वाप्याम् । अधिकायतायांचतुरस्रायां वाप्याम् ॥ विश्वतघनुः परिमिते जलाशये इतिगौडाः ॥ दीर्घैव । संज्ञायांकन् ॥

दीर्घिमा । पुं । दीर्घत्वे ॥ दीर्घस्यभावः । इमनिच् ॥

दीर्घोराव । पुं । जम्बुके ॥ इ०रामि० ॥

दीर्णः । त्रि । विदारिते ॥ भीते ॥

दीविः । पुं । किकीदिवे ॥

दुःकूलः । पुं । चोरनामगन्धद्रव्ये ॥

दुःखम् । न । संसारे ॥ मनोधर्मविशेषे ॥ न्यायमते आत्मगुणभेदे ॥ स तु अधर्मजन्यं सर्वेसां प्रतिकूलत्तसिति भा० प० ॥ पीडायाम् । बाधायाम् । कष्टे । सर्वेषां प्रतिकूलवेदनीये ॥ बाधनालक्षणं दुःखम् । २१ ॥ बाधनापीडा तदेव लक्षणंम्वरूपं यस्य । तथाचानुभवसिद्दुःखत्वजातिरेवलक्षणं शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् । सुखेचदुःखानुषङ्गात् दुःखव्यवहारो गौणइति । वस्तुनोऽसत्सुखमेवचित्तस्यराजसे परिणामे बाधनालक्षणे ॥ तदुदुःखंत्रिविध

म् । आध्यात्मिकं शारीरं मानसञ्च व्याधिवशात् कामादिवशाच्च भवति । आधिभौतिकं व्याघ्रादिजनितम् ॥ आधिदैविकं ग्रहपीडादिजनितम् ॥ * ॥ अधर्म्मसाधारणकारणके प्रतिकूलवेदनीये ॥ निरुपाधिद्वेषविषयीभूतचित्तवृत्तिरधर्म्मासाधारणकारणिका दुःखम् ॥ इष्टवियोगानिष्टसंयोगजे अध्यात्मादिनिमित्ते ॥ तात्कालिक्यां पीडायाम् ॥ रजसि ॥ न दुःखं पञ्चभिःसह ॥ दुष्टानि खान्यस्मिन् ॥ यथा । दुर्निन्दितं खनति । ख्नम्० । अन्ये० डः ॥ यद्वा । दुःखयति । सुखदुःखतत् क्रियायाम् । चु० । पचाद्यच् ॥ दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः यद्बाधात् प्राणिनस्तदुपघाताय प्रवर्त्तन्ते ॥

दुःखग्रामः । पुं । संसारे ॥

दुःखत्रयम् । न । आध्यात्मिकाधिभौतिकाधिदैविकस्वरूपे ॥ तथाध्यात्मिकं द्विविधम् । शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषदर्शननिमित्तम् । सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं दुःखंद्वेधा । आधिभौतिकम् आधिदैविकञ्च । तत्राधिभौतिकम् मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तम् । आधिदैविकम् यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम् ॥ प्रत्यात्मवेदनीयो रजःपरिणामभेदो दुःखम् । दुःखानीयम् ॥

दुःखप्रयाभिघातः । पुं । दुःखत्रयसम्बन्धे ॥ दुःखत्रयं प्रत्यात्मवेदनीयं रजःपरिणामभेदो नशक्यते प्रत्याख्यातुम् । तदनेनदुःखत्रयेण अन्तः कारणवर्त्तिना प्रतिकूलतयाचेतनाशक्तेरभिसम्बन्धोऽभिघातः ॥

दुःखदिरः । पुं । दुष्खदिरे । मेदसारे ॥

दुःखदोह्या । स्त्री । दुर्दोह्यगव्याम् । करटायाम् ॥ दुःखेनदुह्यते । दुह० । ऋहलोर्ण्यत् ॥

दुःखावसानम् । न । दुरन्ते ॥

दुःखितः । त्रि । दुःखिनि ॥ संसारिणि ॥ दुःखमूलं हि संसारः स यस्यास्ति सदुःखितः । तस्यत्यागःकृतोयेन सस्सुखीनापरःप्रिये इति कुलार्णवतन्त्रम् ॥ ईर्ष्यादियुक्ते । यथोक्तं महाभारते । ईर्ष्यीघृणीत्वसन्तुष्टःक्रोधनोनित्यशङ्कितः । परभाग्योपजीवीचषडेतेनित्यदुःखिताइति ॥ * ॥

त्यक्त्वात्म सुखभोगेच्छां सर्वसत्त्वसुखैषिणः । भवन्तिपरदुःखेन साधवो नित्यदुःखिताः इतिवह्निपुराणम् ॥ दुःखं सञ्जातमस्य । ता० इतच् ॥

दुःखी । त्रि । दुःखान्विते । यथात्मादिदुःखवति ॥ दुःखमस्त्यस्य । सुखादिभ्यश्चेतीनिः ॥ उपाधिजनितोयोयं चिदाभासोवभासते । दुःखाद्यनुभवं स्तत्रोति तत्पविनिश्चितः ॥ दुःखीयदि भवेदात्मा कः साक्षी दुःखिनोभवेत् । दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ॥ नसैवादिक्रियो दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ शरीरेन्द्रियसङ्घात आत्मत्वेनाभिमानिनोम् । चिदाभासयुतां बुद्धिं विशिषन्ति सुखादयः ॥

दुःषकुमम् । न । अशुभसूचके निमित्ते ॥ यथा । मन्याचर्मतुषास्थिसर्पकबलाङ्गारेन्धनक्लीबविट्तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधितानग्नाभ्यक्तविमुक्तकेशपतितव्यङ्गक्षुधार्त्ता असृक् स्त्रीपुष्पं शरटस्वगेहदहनं मार्जारयुद्धं क्षुतम् ॥ काषायी गुडतक्रपङ्कविधवाः कुब्जाः कुटुम्बेकलि वस्त्रादेःस्खलनं लुलापसमरं कृष्णानिधान्यानिच । कार्पासं वमनञ्च गर्दभरवो दक्षेऽतिरुट् गर्भिणी मुण्डार्द्राम्बरदुर्वचोन्धबधिरो दक्यानदृष्टाःशुभाः ॥ कृष्णाम्बराङ्गच्छविखेदनाढ्या कृष्णस्रजं मूर्द्धनि धारयन्ती । दृष्टाप्रकोपायदिकृष्णवर्णा नारी नरैः स्याद्विपदोभवन्तीति ॥



दुःशासनः । पुं । दुर्योधनानुजे भारतप्रसिद्धे क्षत्रिये ॥ दुःखेनशास्यते । शासु० भाषायां शासियुधीतियुच् ॥

दुःशीलः । त्रि । दुष्टस्वभावे ॥ दुष्टंशीलं यस्यसः ॥

दुःषमम् । अ । गर्ह्ये । निःषममित्यर्थे ॥ दुष्टं समम्त्र । तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावत्त्वम् । सुविनिर्दुर्भ्य इति षत्वम् ॥

दुःसमम् । अ । असमञ्जसे ॥

दुःसहः । त्रि । असह्ये ॥

दुःसहा । स्त्री । नागदमन्याम् ॥

दुःसाक्षी । त्रि । कूटसाक्षिणि ॥

दुःसाधी । पुं । दौःसाधिके । द्वारपाले ॥

दुःसाध्यः । त्रि । दुःखनिष्पाद्ये ॥ दुःखेनसाध्यतेनिष्पाद्यते । साध० । यत् ।

दुःस्थः । त्रि । दुर्गते ॥ मूर्खे ॥ दुःखेन तिष्ठति । सुपिस्थ इतिकः ॥ लुब्धे ॥

दुःस्थितः । त्रि । अनवस्थिते ॥ छा० । क्तः । चलितस्थतीतीत्वम् ॥

दुःस्पर्शः । पुं । धवासः । दूतिजवासा इति चप्रसिद्धे धन्वयासे । दुरालभायाम् ॥ रत्नाकरः ॥ त्रि । खरस्पर्शे ॥ दुःखेन स्पृश्यते । स्पृशस्पर्शने । ईषद्दुरि खल् ॥

दुःस्पर्शा । स्त्री । कण्टकार्याम् ॥ आकाशवल्ल्याम् ॥ कपिकच्छाम् ॥ दुरालभायाम् ॥ टाप् ॥

दुःस्फोटः । पुं । शस्त्रभेदे ॥ इति हे० ॥

दुकूलम् । न । सूक्ष्मवाससि । स्वच्छवस्त्रे ॥ क्षौमाम्बरे ॥ दुष्ट कूलति । कूल आवरणे । इगुपधेतिकः । पृ० ॥ यद्वा । दुवति । दुगतौ । पिश्चा० ऊलच् । धातोः कुक् ॥

दुगूलम् । न । दुकूले ॥ इति हेमचन्द्रः ॥

दुग्धम् । त्रि । प्रपूरिते ॥ कृतदोहे ॥ न । क्षीरे । पीयूषे । ऊधस्ये । स्तन्ये । पयसि । अमृते । बालजीवने ॥ विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः । तद्विदाहप्रशान्त्यर्थं भोजनान्ते पयः पिबेत् ॥ दुह्यते स्म । दुहप्रपूरणे । क्तः ॥ दुग्धं सुमधुरं स्निग्धं वातपित्तहरं सरम् । सद्यःशुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम् ॥ जीवनं बृंहणं बल्यं मेध्यं वाजीकरं परम् । वयःस्थापकमायुष्यं सन्धिकारि रसायनम् ॥ विरेकवान्तिव



स्तीनां तुल्यमोजोविवर्द्धनम् । जीर्णज्वरे मनोरोगे शोषमूर्च्छाभ्रमेषु च ॥ ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये । शूलोदावर्त्तगुल्मेषु बस्तिरोगे गुदाङ्कुरे ॥ रक्तपित्तेऽतिसारे च योनिरोगे श्रमे क्लमे । गर्भस्रावे च सततं हितं मुनिवरैः स्मृतम् ॥ बालवृद्धक्षतक्षीणाः क्षुद्व्यवायकृशाश्च ये । तेभ्यः सदातिशयितं हितमेतदुदाहृतम् ॥ * ॥ धारोष्णं गोःपयो बल्यं लघु शीतं सुधासमम् । दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् ॥ धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम् । शृतोष्णमाविकं पथ्यं शृतशीतमजापयः ॥ आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्द्धनम् । ज्ञेयं सर्वमपथ्यं तद्गव्यमाहिषवर्जितम् ॥ नारीक्षीरन्त्वाममेव हितं न तु शृतं हितम् । शृतोष्णं कफवातघ्नं शृतशीतन्तु पित्तनुत् ॥ * ॥ अर्द्धोदकं क्षीरशेषं आमात् लघुतरं पयः ॥ * ॥ जलेन रहितं दुग्धमतिपक्वं यथा यथा । तथा तथा गुरु स्निग्धं वृष्यं बलविवर्द्धनम् ॥ * ॥ पेयूषञ्च किलाटश्च क्षीरशाकं तथैव च । तक्रपिण्डः इमे दुग्धा बृंहणा बलवर्द्धना. ॥ गुरवः श्लेष्मलाः हृद्या वातपित्तविना

शनाः। दीप्ताग्नीनां विनिद्राणां च
वायेचातिपूजिताः ॥ * ॥ सुखबोध
तृषादाहरक्तपित्तज्वरप्रणुत्। लघुर्व
लकरोऽच्योमोरटःस्यात् सितायुतः॥
खण्डेन सहितं दुग्धं कफकृत् पव
नापहम् । सितासितोपलायुक्तं सु
कषं कृमिलापहम् ॥ सगुडं मूचक
च्छ्रघ्नं पित्तश्लेष्मकरं स्मृतम् ॥ * ॥
रात्रौ चन्द्रगुणाधिक्या व्यायामाकर
णात्तथा । प्राभातिकं पयः प्रायः-
प्रादोषात् गुरु शीतलम् ॥ दिवाकर
करातापा व्यायामकरणात् पयः ।
प्राभातिका त्तुप्रादोषं लघु वातक
फापहम् ॥ * ॥ वृष्यं वृंहण मग्नि
दीप्तिजनकं पूर्वाह्णकाले पयो मध्या
ह्नेतुवलावहं कफहरं पित्तापहं दी
पनम् । बालेवृद्धिकरं च्चये चयहरं
वृद्धेषु रेतोवहं रात्रौ चीर मनेक-
दोषशमनं पथ्यं सदा चक्षुषोः ॥ *
॥ यद्दग्नि पथ्यं निशि केवलं पयो भो
ज्यं न तेनेश सहौदनादिकम् । भवे
द्वलीयं श्च सपीतशर्वरी चीरस्य पी
तस्य न शेष मुत्सृजेत् ॥ * ॥ विदा
हीन्यन्नपानानि दिवाभुक्तोपि य
न्नरः । तद्विदाहप्रशान्त्यर्थं रात्रौ ची
रं सदा पिबेत् ॥ * ॥ दीप्तानले कृ
शे पुंसि बाले वृद्धे पयःप्रिये । मतं



हिततमं दुग्धं सद्यःशुक्रकरं यतः ॥
* ॥ मथितदुग्धस्य तु । चीरं गव्यम
थाजं वा कोष्णं दण्डाहतं भवेत् । ल
घु वृष्यं ज्वरहरं वातपित्तकफापह
म् ॥ * ॥ दुग्धफेनगुणाः । गोदुग्ध
प्रभवं किंवा छागीदुग्धसमुद्भवम्। भ
वेत्फेनं त्रिदोषघ्नं रोचनं बलवर्द्ध
नम् ॥ वह्निवृद्धिकरं पथ्यं सद्यस्तृप्ति
करं लघु । अतिसारेऽग्निमान्द्ये च
ज्वरे जीर्णे प्रशस्यते ॥ * ॥ विवर्णं वि
रसं चाम्लं दुर्गन्धं ग्रथितं पयः । वर्ज
येदम्ललवणयुक्तं कुष्ठादिकृद्यतः ॥ मा
षाम्लफलपिण्याककुलत्थलवणादि-
भिः । करीरदधिमाषैश्च प्रायः चीर-
विरुध्यते ॥ * ॥ केप्याविष्कं पथ्यत
मं भृतोष्णं चीरं त्वजानां भृतशीत
माहुः । दोषान्तशीतं भविपीपय
स्यं गव्यन्तु धारोष्णमिदं प्रशस्तम् ॥
* ॥ वृष्यं वृंहणं मग्निवर्द्धनकरं पू-
र्वाह्णपीतं पयो मध्याह्ने बलदाय
कं रतिकरं कृच्छ्राश्मविच्छेदनम् ।
बालेवह्निकरं ततोवलकरं वार्यप्रदं
वार्द्धके रात्रौ चीरमनेकदोषशम
नं सेव्यं ततः सर्वदा ॥ * ॥ चीरं मु
हूर्त्तंषितयोषितं यदृतसमेतद्विकृ-
तिं प्रयाति । पयान्तु दोषं कुरुते-
तदूर्द्धं विषोपमं स्याद्द्विषितं दशाना ।

म् ॥ * ॥ जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् । तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥ * ॥ चतुर्थभागं सलिलं निधाय यत्नाद्वदा वर्त्तितं सुसमं तत् । सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम् ॥ * ॥ गव्यं पूर्वाह्णकाले -स्यादपराह्णे तु माहिषम् । क्षीरं समर्कं पथ्यं यथासात्म्यञ्च सर्वदा ॥ * ॥ क्षीरं न भुञ्जीत कदाप्यसत्त्वं तथाम्ल-नैव लवणेन सार्द्धम् । पिष्टान्नमत्स्यान्नकषायमुद्गकोषातकीकन्दफलादिकैश्च ॥ * ॥ मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवरसादिसेवितं मारयत्यबुधमाशु सर्पवत् ॥ * ॥ स्निग्धं शीतं गुरु क्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ * ॥ नित्यं तीक्ष्णाग्निना सेव्यं सुपक्वं माहिषं पयः । पुष्यन्ति धातवः सर्वे बलपुष्टिविवर्द्धनम् ॥ क्षीरं गवाजकादेः मधुरं क्षारं नवप्रसूतानाम् । रूक्षञ्च पित्तदाहं करोति रक्तामयं कुरुते ॥ * ॥ मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् । लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ गुडहीनं निःसारं, क्षीरं प्रथमप्रसूतानाम् । मध्यवयसां रसायनमुक्तमिदं दुर्लभम् वृद्धानाम् ॥ तासां मासत्रयादूर्द्धं गुर्विणीनाञ्च यत्पयः । तद्वाष्कयं क्षीरं मधुरं पित्तशोषकृत् ॥ * ॥ दुग्धांशं शीतलं स्वादु वृष्यं बलकरं गुरु । वातपित्तापहं रुच्यं हृद्यं बलवर्द्धनम् ॥ यतं भिषग्वराः प्राहुस्तथ्यं न संशयः ॥

दुग्धकन्दगणः । पुं । अश्वगन्धादिषु ॥ अश्वगन्धा च मुसली विदारी च शतावरी । क्षीरवाराहिका चेति दुग्धकन्दगणस्त्वयम् ॥

दुग्धकूपिका । स्त्री । पक्वान्नविशेषे ॥ यथा । तण्डुलचूर्णविमिश्रितनष्टक्षीरेण सान्द्रपिष्टेन । दृढकूपिकां विदध्यात् ताञ्च पचेत् सर्पिषा सम्यक् ॥ मथितां कोरितमध्यां घनपयसा पूर्णगर्भाञ्च । शर्करमुद्रितवदनां तत्र घृतेन पक्ववदनाञ्च ॥ अतिपाण्डुखण्डपाके मज्जयेत् कर्पूरवासिते कुशलः ॥ अथ दुग्धकूपिका सा बल्या पित्तानिलापहा हृद्या । शीता वृष्या गुर्वी शुक्रकरी तर्पणी रुच्या । विदधाति कायपुष्टिं दृष्टिं दूरप्रसारिणीं सुचिरम् ॥

दुग्धतालीयम् । न । दुग्धाग्रे ॥ क्षीर

फेने ॥ दुग्धाब्धे ॥

दुग्धपाचनम् । न । यन्त्रके । दुग्धपाकपात्रे ॥ इतिहारावली ॥

दुग्धपाषाणः । पुं । दुग्धपाषाणके ॥

दुग्धपाषाणकः । पुं । खिरगोला इति गौडभाषा प्रसिद्धे द्रव्यविशेषे । चीरीयम् । गोमेदसन्निभे । वज्राभे ॥

दुग्धपुच्छी । स्त्री । दुग्धपेया इतिगौडभाषाप्रसिद्धे वृ० विशेषे । सेवकाली । मत्स्याक्ष्याम् ॥ इतिशब्दचन्द्रिका ॥

दुग्धफेनः । पुं । सशर्करदुग्धफेने । क्षीरडिण्डीरे । शार्करे ॥ इतिराजनि० ॥

दुग्धफेनकः । पुं । दुग्धफेने ॥

दुग्धफेनी । स्त्री । क्षुद्रक्षुपविशेषे । पयःफेन्याम् । गोजापर्ण्याम् ॥

दुग्धाब्धितनया । स्त्री । लक्ष्म्याम् ॥

दुग्धाश्मा । पुं । दुग्धपाषाणे ॥

दुग्धिका । स्त्री । क्षीराख्याम् । स्वादुपर्ण्याम् । दुद्धी इति ख्यातायाम् ॥ दुग्धमस्य अस्याः । अतइनिठनाविति ठन् ॥ दुग्धिकोष्णा गुरू रूक्षा वातला पुमद्दायिनी । स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रमला पटुः ॥ स्वादी विष्टम्भिनी रुष्या कफकुष्ठकृमिप्रणुत् ॥ गन्धिका इति गौडभाषाप्रसिद्धायामुत्तमफलिन्याम् । युग्मफलायाम् ॥

दुग्धिनिका । स्त्री । रक्तापामार्गे ॥

दुग्धी । स्त्री । दुग्धिकायाम् । क्षीराख्याम् । दुद्धी इति भाषा ॥ दुग्धपाषाणे ॥

दुच्छकः । पुं । गन्धकुट्याम् । मुरानामगन्धद्रव्ये ॥ विषारादावकायके ॥

दुडिः । स्त्री । कच्छप्याम् ॥ इतिमुकुटः ॥

दुण्डुकः । त्रि । दुष्टचित्ते ॥

दुण्डुभः । पुं । डुण्डुभसर्पे ॥

दुतः । त्रि । पीडिते ॥ टुदु उपतापे । स्वादिः । कर्म्मणि क्तः ॥

दुद्रुमः । पुं । हरितपलाशे पलाण्डौ । खसाक्कै ॥ दुष्टोद्रुमः ॥

दुधुक्षन् । त्रि । दोग्धुमिच्छति ॥ दुहेः सन्नन्तात्शतःप्रत्यादेशः । घत्वधत्वे ॥

दुन्दमः । पुं । दुन्दुभौ ॥ इतिशब्दरत्नावली ॥

दुन्दुः । पुं । वसुदेवे ॥ दुन्दुभिवाद्ये ॥

दुन्दुभिः । पुं । वरुणे ॥ दैत्यभेदे ॥ ढक्कायाम् । भेर्य्याम् । आनके ॥ यत्तु लक्ष्मवदैकानको दुन्दुभिरुच्यते । इतिकेचित् ॥ दुन्दुइतिशब्देन भाति । उभपूरणे । इगुपधात्किदिति इन् । शकन्ध्वादिः ॥ यद्वा । दुन्दइति हलन्तस्यैवानुकरणम् ॥ यद्वा । दाम्भतिशब्देन । उभ० । सर्वधातुभ्य इन् । पृ० ॥ रथोभेदे ॥ विषे ॥ पद्

पञ्चाशत्तमे वत्सरे ॥ सुभिक्षं जायते लोकः सर्वोपद्रववर्जितः । प्राणिनां जायते हर्षो दुन्दुभौ वत्सरे ध्वनि ॥ स्त्री । अक्षे । पाशके ॥ अर्द्धविन्दुविशेषे ॥ अर्द्धविन्दुनिकटवृन्दे ॥ विन्दुत्रितयचतुष्टयस्वर्णगृहादिमयद्यूतोपकरणे पाशटी इति गौडभाषा प्रसिद्धे इति केचित् ॥

दुन्दुमारः । पुं । धुन्धुमारे ॥

दुम्बकः । पुं । मेदःपुच्छे एडके । दुम्बा इति ख्याते मेषविशेषे ॥

दुर् । अ । निषेधे ॥ दुष्टे ॥ निन्दायाम् । अवक्षेपणे ॥ दुःखे ॥

दुरक्षः । पुं । कपटपाशके ॥

दुरतिक्रमः । त्रि । दुरत्यये ॥ दुःखेन अतिक्रमो यस्य ॥

दुरत्ययः । त्रि । दुरतिक्रमे । दुर्गमनीये ॥ दुस्तरे ॥ दुःखेन अत्ययो यस्य ॥

दुरदृष्टम् । न । दुर्भाग्ये ॥

दुरधिगमः । त्रि । दुर्ग्राह्ये । दुःखेनाधिगन्तुमशक्ये ॥ दुष्प्रापे ॥ दुर्ज्ञेये ॥ दुःखेनाधिगमोऽस्य ॥

दुरध्ययः । त्रि । दुष्प्रापे ॥ दुःखगताधिध्यस्मात् कृच्छ्रार्थे खल् ॥ अध्येतुमशक्ये ॥ इङ् अध्ययने । अस्मात् खलि दुरध्यय इत्येवरूपम् ॥

दुरध्वः । पुं । कुपथे । निन्द्यवर्त्मनि ॥



दुष्टोऽध्वा । प्रादयो गताद्यर्थे इति समासः । उपसर्गादध्वन इत्यच् ॥

दुरन्तः । त्रि । मृगयादिव्यसनेषु । दुःखावसानेषु ॥ तेषु चादौ सुखयन्ति अन्ते दुःखानि कुर्वन्ति । दुर्लभोऽन्तो यस्य वा । नहि व्यसनी तेभ्यो निवर्त्तयितुं शक्यते ॥

दुरन्तभावः । त्रि । गभीराभिप्राये ॥

दुरभिग्रहः । पुं । अपामार्गे ॥ त्रि । दुःखग्राह्ये ॥

दुरभिग्रहा । स्त्री । कपिकच्छाम् ॥ दुरालभायाम् ॥

दुराकः । पुं । म्लेच्छभेदे ॥

दुराग्रहः । पुं । युक्तिरहितेऽभिनिवेशे ॥ त्रि । तद्वति ॥

दुराचारः । पुं । विरुद्धाचरणे ॥ त्रि । निन्दिताचारवति ॥ दुर्दुष्टः शास्त्राविहितः आचारो यस्य ॥ दुराचाराद्दुर्विचेष्टाद्दुष्प्रज्ञात् प्रियसाहसात् । असन्तस्त्विति विख्याताः सन्तश्चाचारलक्षणाः इति महाभारतम् ॥

दुरात्मा । त्रि । दुष्टचित्ते ॥

दुराधर्षः । पुं । गौरसर्षपे ॥ त्रि । अधर्षणीये ॥ दुष्प्रापे ॥ दैत्यादिभिर्धर्षयितुमशक्यायां परदेवतायाम् ॥ दुःखेन आ ईषदपि धर्षयितुमशक्यः । धृष प्रसहने । आङ्पूर्वादस्मादीष-

दुःसुखसुखाकृच्छ्रार्थेषु खलितिकर्मणि खल् ॥

दुराधर्षा । स्त्री । कुटुम्बिनीवृक्षे ॥

दुरानमः । त्रि । आनमयितुमशक्ये ॥ नमेर्ण्यन्तात् खल् ॥

दुरापः । त्रि । दुर्लभे ॥

दुरालभः । पुं । बिल्वे ॥ नारिकेले ॥

दुरालभा । स्त्री । खर्जूर्याम् ॥

दुरारोहः । पुं । खर्जूरे ॥ त्रि । दुःखेन रोहणीये ॥

दुरारोहा । स्त्री । शाल्मलिद्रुमे ॥ श्रीवल्ल्याम् ॥ खर्जूर्याम् ॥ दुष्टो दुःखेन वा आरोहो यस्याः ॥

दुरालभा । स्त्री । यवासप्रभेदे । दुरालभायाम् ॥ यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा ॥ त्रि । दुःखेन लभ्ये। दुःखेन आलभ्यते । दुर् आ लभ । ईषद्दुःसुष्विति खल् । आगमशासनस्यानित्यत्वान्नुम् ॥

दुरालम्भा । स्त्री । दुरालभायाम् ॥ दुःखेन आलम्भ्यते । दुर् आ लभ । ईषद्दुःसुष्विति खल् । नुम् ॥

दुरालापः । त्रि । मालिप्रदे ॥ पुं । दुष्टभाषणे ॥

दुराशयः । त्रि । दुष्टाभिप्राये ॥

दुरासदः । त्रि । आसितुमशक्ये ॥ आसेरकर्मकात् ईषद्दुरित्यादिना खल् तयोरेवकृत्यक्तखलर्था इति नियमात् ॥

दुरासदः । त्रि । दुष्प्रापे । दुःखेनासादनीये । दुष्टगमने ॥ दुर्धर्षे ॥

दुरितम् । न । पापे ॥ यथा । नित्यनैमित्तिकैरेवकुर्वाणो दुरितक्षयमिति ॥ दुःखेनाभावितः । दुष्टमितगमनमनेन ॥

दुरितदमनी । स्त्री । पापनाशिन्याम् । शम्याम् ॥ दुर्गायाम् ॥

दुरिष्टकृत् । पुं । अभिचारकर्त्तरि ॥ यथा । देवर्षिपितृद्वेष्टा रजादूषयिता च यः । सयाति कृमिभक्षे वै कृमीशे च दुरिष्टकृदिति विष्णुपुराणम् ॥

दुरीशः । त्रि । दुष्टप्रभौ ॥

दुरीषणा । स्त्री । शापे ॥ इतिशब्दार्थकल्पतरुः ॥

दुरुक्तम् । न । शापे ॥

दुरुच्छेदः । त्रि । दुर्वारे ॥

दुरुत्तरः । त्रि । दुस्तरे ॥

दुरुदाहरः । त्रि । दुर्वचे ॥ हरतेः खल् ॥

दुरुधरा । स्त्री । हित्वार्कं सुनफाऽनफादुरुधरास्वान्यो भवस्थैर्ग्रहैः शीतांशोरिति युक्तयोगविशेषे ॥ एतदेवस्पष्टीकृतं कल्याणवर्म्मणा । रविवर्ज्जं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा । उभयस्थितैर्दुरुधराके

मद्गुमसंचितोतोन्य इति ॥

दुरुपसदः । त्रि । दुःसहे ॥

दुरूहः । त्रि । दुर्विज्ञेये ॥

दुरोणः । पुं । कलशे ॥ यज्ञगृहे ॥

दुरोदरः । पुं । द्यूतकारे ॥ पणे ॥ अक्षे ॥ न । द्यूतभेदे । पाशकक्रीडायाम् ॥ दुष्ट मासमन्तात् उदरमस्य ॥ दुष्टमुदरमस्य वा । शृ० ॥

दुर्गः । पुं । असुरभेदे ॥ यंहत्वाचण्डिकायास्तु दुर्गानामबभूवह ॥ गुग्गुलौ ॥ न । गिर्यादिभि र्दुर्गमे पुरे । कोट्टे । गड इति कोट इतिच भाषाप्रसिद्धे राज्ञां वासस्थाने ॥ तत्षड्विधं यथा । धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेवच । नृदुर्गं गिरिदुर्गञ्च समाश्रित्य वसेत् पुरम् । इत्युक्तेः ॥ एषां षिधानुगुण्येन गिरिदुर्गं विशिष्यते ॥ तत्र । त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ताश्रयाप्चराः । त्रीण्युत्तराणिक्रमशः प्लवङ्गमनरामराः ॥ यथा दुर्गाश्रयानेतान् नोपहिंसन्ति शत्रवः । तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ॥ एकः शतं योधयति प्राकारस्थो धनुर्द्धरः । शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ तत् स्यादायुधसम्पन्नं धनधान्येन वाहनैः । ब्राह्मणैः शिल्पिभि र्यन्त्रै र्यवसेनोदकेन च ॥ तस्यमध्ये सुपर्याप्तं कारयेद्गृहमात्मनः । गुप्तं सर्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितमितिमनुः ॥ अपिच । दुर्गञ्च परिखोपेतं वप्राट्टालकसंयुतम् । शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥ गोपुरं सकपाटञ्च तत्र स्यात् सुमनोहरम् । सपताकं गजारूढो येन राजाविशेत् पुरमितिमात्स्ये ॥ १९१ अध्यायः ॥ अस्याधिष्ठातृत्वं शुभाशुभञ्चोक्तं कालिकापुराणे ८५ अध्याये राजनीतिविशेषे ॥ त्रि । दुर्गमे । दुर्गमप्रदेशे । उच्छ्रिते । दुःसम्पाद्ये । कोटादौ । प्राकारे ॥ दुस्तरे ॥ कामक्रोधादिसंसार दुःखसाधने ॥ दुःखेनगच्छत्यत्रेतिविग्रहे सुदुरोरधिकरणइति दुरुपपदाद्गमेर्डः प्रत्ययः ॥ दुःखाद्गम्यते वा ॥ दुःखेनगम्यतेप्राप्यते । अन्यत्रापिदृश्यत इति डः ॥

दुर्गकारकः । त्रि । दुर्गकर्त्तरि ॥ न । वृक्षविशेषे ॥

दुर्गतः । त्रि । दरिद्रे ॥ दुर्गच्छतिस्म । गम्लृ० । गत्यर्थेतिक्तः ॥

दुर्गतिः । स्त्री । नरके ॥ नैःस्वे । दारिद्र्ये ॥ दुष्टागतिः ॥

दुर्गतिनाशिनी । स्त्री । दुर्गादेव्याम् ॥

दुर्गन्धः । पुं । पूतिगन्धे । दुष्टगन्धे ॥ प

खाण्डौ ॥ न। सौवर्च्चललवणे ॥ दुष्टो गन्धः ॥

दुर्गन्धी। त्रि। दुर्गन्धयुक्ते ॥

दुर्गपुष्पी। स्त्री। गौडभाषायां केशपुष्टा इति ख्याते वृक्षविशेषे। मानस्याम्। केशधारिण्याम् ॥

दुर्गमः। त्रि। दुर्गे ॥ दुःखेनगम्यते प्राप्यते। गम्॰। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ दुर्गमनीयस्थानादौ ॥ यथा। दुर्गमः पन्थाः ॥ पुं। हिरण्याक्षान्वयेजाते हरेः पुत्रे महादैत्ये ॥

दुर्गलङ्घनः। पुं। उष्ट्रे ॥ दुर्गं दुःसम्पाद्यं लङ्घनं यस्य ॥ त्रि। दुःखेनलङ्घनीये ॥

दुर्गसञ्चरः। पुं। सङ्क्रमे। दुर्गदेशप्रवेशक्रियायाम् ॥ सञ्चरणम्। चर॰। पुंसीतिघः। दुर्गस्यसञ्चरः ॥

दुर्गा। स्त्री। ओषधिविशेषे। नीलिकायाम् ॥ अपराजितायाम् ॥ दुष्मापायाम् ॥ श्यामायाम्। पीतकीलके ॥ अमरेशमहापीठदेवतायाम् ॥ उमायाम्। कात्यायन्याम्। गौर्याम्। काल्याम्। हैमवत्याम्। शिवायाम् ॥ दुःखेन गम्यते ज्ञायते ऽस्याम्। सुदुरोरधिकरणे इति डे टाप् ॥ दुःखेनगीयतेस्तूयते। गैशब्दे। आतश्चोपसर्गे इत्यङ्। टाप् वा ॥ यद्वा। दुर्गं गिरिं वनं वा वासत्वेनास्त्यस्याः अर्शआद्यच्। टाप् ॥ दुर्गनामासुरवधाद्वा। यथा। तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्। दुर्गादेवीतिविख्यातं तन्मनामभविष्यतीति ॥ अपिचास्यानाम्नोव्युत्पत्तिः। दुर्गो दैत्ये महाविघ्ने भवबन्धे कुकर्मणि। शोके दुःखेच नरके यमदण्डे च जन्मनि ॥ महाभये ऽतिरोगेचाप्याशब्दो हन्तृवाचकः। एतान्हन्त्येव या देवी सा दुर्गा परिकीर्त्तिता ॥ * ॥ अपिच। दैत्यनाशार्थवचनो दकारः परिकीर्त्तितः। उकारो विघ्ननाशस्यवाचको वेदसम्मतः ॥ रेफो रोगघ्नवचनो गश्चपापघ्नवाचकः। भयशत्रुघ्नवचनश्चाकारः परिकीर्त्तितः ॥ स्मृत्युक्तिश्रवणाद्यस्या एते नश्यन्तिनिश्चितम्। ततो दुर्गा हरेः शक्तिर्हरिणा परिकीर्त्तिता ॥ दुर्गेति दैत्यवचनो ऽप्याकारो नाशवाचकः। दुर्गंनाशयति या नित्यं सा दुर्गा परिकीर्त्तिता ॥ विपत्तिवाचको दुर्गश्चाकारो नाशवाचकः। तं ननाश पुरा तेन बुधैर्दुर्गा प्रकीर्त्तिता ॥ * ॥ अस्याः स्थानं कृष्णावेणीतुङ्गभद्रयोर्मध्यभागे सह्याद्रेरीषत्प्राच्यां प्रसिद्ध

म् । अयमवतारोऽस्मिन्कल्पेऽस्वा
पिनजातः । श्वेतवाराहकल्पात्प्रा-
क्तनकल्पेषु मन्वन्तरयुगभेदेनजातए
व । ततश्चतत्सत्कुलदेवतात्वेनार्चन
मधुनातनानामपिसङ्गच्छतेइतिगुप्त
वत्यांभास्करराय: ॥ * ॥ सर्वेस्वरूपि
णीशक्तिःसादुर्गेतिव्यपदिश्यते । यथाम
ण्डमालायाम् । भूतानिदुर्गा भुवना
निदुर्गा नराः स्त्रियश्चापि सुरासुरादि
कम् । यद्यद्दृश्यं खलु सैवदुर्गा दु
र्गास्वरूपादपरंनकिञ्चिदिति ॥

दुर्गाध्यक्षः । पुं । दुर्गस्यरक्षके ॥ तल्ल
क्षणं यथा । अनाहार्यश्च शूरश्च
तथा प्राज्ञः कुलोद्गतः । दुर्गाध्यक्षः
स्मृतोराज्ञस्त्रयुक्तः सर्वकर्मसु ॥ इ
तिमत्स्यपुराणम् ॥

दुर्गानवमी । स्त्री । आश्विनशुक्लनव
म्याम् । महानवम्याम् ॥ कार्त्तिकशु
क्लनवम्याम् ॥ साचेतायुगाद्या । तत्र
जगद्धात्रीपूजाकर्त्तव्येति वाह्याः ॥
कार्त्तिकेऽमलपक्षेतु नवम्यान्तुविशे
षतः । प्रगल्भाश्चजगद्धात्रीं पूजयेद्
दीपमालयेतियोगिनीतन्त्रम् ॥

दुर्गास्मरणम् । न । दुर्गाजगदिदं स
र्वं दुर्गासर्वस्यकारणम् । अत्यन्त दुर्गे
त्येवं यत् तद्दुर्गास्मरणंविदुः ॥

दुर्गाह्वः । पुं । भूमिजगुग्गुलौ ॥



दुर्ग्रहः । त्रि । दुरासदे ॥ दुर्द्धर्षे ॥ दुः
खेनग्रहोऽस्य ॥

दुर्ग्रहा । स्त्री । अपामार्गे ॥

दुर्घटः । त्रि । दुःसम्पाद्ये ॥

दुर्घोषः । पुं । भल्लूके ॥ निन्दितरवे ॥
त्रि । तद्वति ॥

दुर्जनः । त्रि । खले ॥ दुष्टोजनः । कु
गतीतिसमासः ॥ दुर्जनःपरिहर्त्त
व्यो विद्ययाभूषितोपिसः । मणिना
भूषितः सर्पः किमसौ न भयङ्करः ॥

दुर्जयः । पुं । असुरविशेषे ॥ कार्त्तवी
र्यान्वयवंशोद्भवानन्तपुत्रे ॥ त्रि । दुर्जेये
॥ दुःखेनजीयते । जीजये । खल् ॥

दुर्जरः । त्रि । दुःखेनजीर्यति ॥ जॄष्०
। अच् ॥

दुर्जरा । स्त्री । ज्योतिष्मतीलतायाम् ॥

दुर्ज्जातम् । न । व्यसने ॥ यथा । दुर्जा
तवन्धुः आपद्विबन्धुरितितदर्थः ॥ त्रि
। असम्यग्जाते ॥ असमञ्जसे ॥

दुर्दर्शः । पुं । काद्रवेयविशेषे ॥ दुःखे
न दर्शनमस्य । दुःखेदृश्यते इतिघा
॥ त्रि । दुर्विज्ञेये ॥ द्रष्टुमशक्ये ॥ दुः
खेनद्रष्टुंयोग्ये ॥

दुर्दान्तः । पुं । कलहे ॥ वत्सतरे ॥ त्रि
। अशान्ते ॥ दुःखेनदान्तः ॥

दुर्द्दिनम् । न । मेघच्छन्नेह्नि ॥ दिवा
निशिचवर्षणे ॥ मेघान्धकारे ॥ मे

घान्धकारिते ऽह्नीतिरात्रैरप्युपलक्षणम् । तेनरात्रावपितया दुर्द्दिनं कथिनेरितम् ॥ * ॥ घनान्धकारे दृष्टोचदुर्दिनं कवयोविदुरिति सान्द्रः ॥ दुर्दिनं जलदध्वान्ते इतिरत्नकोषः ॥ द्यतितमः इतिदिनम् । दोअवखण्डने । द्यतेरिति इनच् । दुष्टंदिनं दुर्द्दिनम् । दुष्टत्वञ्चतमोनाशकस्वरूपहीनत्वात् । लक्षणयातु कालातिरिक्तोपिदुर्द्दिनपदप्रयोगः ॥ यद्युक्तं कथाश्रवपरसपीयूषवर्जितम् । तद्दिनं दुर्द्दिनं मन्ये मेघाच्छन्नं नदुर्दिनम् ॥

दुर्दुरूटः । पुं । नास्तिके । दुरूढत्वेपे । दुःपूर्वः । औणादिकः कूटमप्रत्ययः । बहुलमन्यत्रापीतिणिलुक् । रलयोरैक्यस्मरणात् हः ॥ पलाण्डौ ॥

दुर्द्दिता । स्त्री । लताविशेषे ॥

दुर्द्दुरः । पुं । नरकान्तरे ॥ कृपणैाषधैा ॥ पारदे ॥ भल्लातके ॥ महिषासुरस्यसेनापतिविशेषे ॥ श्रीहरैा ॥ पृथिव्यादीनि धारकाणि अन्यैर्द्धारयितुमशक्यानि धारयन्स्वयमन्यैर्न चिद्धारयितुं शक्यते इति दुःखेनमुमुक्षुभिर्हृदयेधार्यते वेतिनिरुक्तेः ॥ त्रि । दुर्द्धर्षे ॥ दुःखधार्ये ॥ दुःखेनधियते दुरुपपदाद्धरतेः खल् ॥

दुर्द्धर्षः । त्रि । अप्रधृष्ये । तिरस्कर्त्तुमशक्ये ॥ अप्रधोभ्ये ॥

दुर्द्धर्षा । स्त्री । कन्थारीवृक्षे ॥ नागदमन्याम् ॥ त्रि । दुःखधर्षणीये ॥

दुर्द्दुमः । पुं । हरित् पलाण्डौ । लतार्कै । हरिद्वर्णपलाशे पलाण्डौ ॥ दुष्टा द्रुमः ॥

दुर्धावः । त्रि । दुःशोधे ॥

दुर्नामकम् । न । अर्शसि । गुदरोगे ॥ दुष्टंनामास्य पापरोगत्वात् । शुभादित्वात्कप्रत्ययः ॥

दुर्नाम । न । अर्शोरोगे ॥ दुष्टंनामास्य पापरोगत्वात् ॥ शु० नयात्त्वम् ॥

दुर्नामा । स्त्री । दीर्घकोषिकायाम् ॥ दुर्निन्दितं नामास्याः । डाबुभाभ्यामिति डाप् ॥

दुर्नामारिः । पुं । सूरणे ॥

दुर्नाम्नी । स्त्री । दुर्नामायाम् ॥ अनउपधेति पाक्षिकोङीप् ॥ शु० मयः ॥

दुर्निमितः । त्रि । सम्भ्रमादुत्क्षिप्ते ॥

दुर्निष्प्रयतरम् । त्रि । दुःखतरनिस्तरणे ॥

दुर्बलः । पुं । अनाहतमेद्रमणौ ॥ त्रि । बलशून्ये । कृशांगे ॥ दुष्टंबलमस्य ॥

दुर्बला । स्त्री । अम्बुशिरीषिकायाम् ॥

दुर्बोधः । त्रि । दुर्ग्रहे ॥ बोद्धुमशक्ये ॥

दुःखेनबुध्यते । बुध० । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषुखल् ॥

दुर्भगः । त्रि । अनिष्टे ॥

दुर्भगा । स्त्री । विरक्तायाम् ॥ पतिस्नेहरहितायाम् ॥ दुष्टोभगो भाग्यं यस्याः ॥

दुर्भाग्यम् । न । दुरदृष्टे ॥

दुर्भिक्षम् । न । भिक्षायाअप्राप्तिकाले । अकाल इति काल इतिच भाषा प्रसिद्धे समयविशेषे ॥ यद्देशे यत्काले तद्देशतत्कालयोग्यसस्यादिकं न जायते तदातद्देशे याच्यमानद्रव्याभावात् दुर्भिक्षं जातमितिव्यवह्रियते ॥ अथ चाणक्येन मुनिना नवधूर्त्तयउक्ताः । तथाहि । शकटः शाकिनी गावो जाल मस्पन्दनं वनम् । अनूपं पर्वतोराजा दुर्भिक्षेनवस्तय इति ॥ अस्यार्थः शाकिनीशब्देद्रष्टव्यः ॥ भिक्षाया अभाव इत्यर्थे ऽव्ययीभावः ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । दाताजस्तु दुर्भिक्षे सुभिक्षे बलहेमदः ॥ दुर्भिक्षमत्वंप्रसरणं चिराय ॥

दुर्म्मतिः । त्रि । विवेकप्रतिबन्धकपापेन मलिनमतौ ॥ दुष्टामतिर्यस्य ॥ वत्सरविशेषे । यथा । दुर्भिक्षं मध्यमं प्रोक्तं व्यवहारो न वर्त्तते । मन्वे



द्वे मध्यमावृष्टिर्दुर्मतौ समुपस्थिते ॥ ५५ ॥

दुर्म्मदः । त्रि । अतिमत्ते ॥

दुर्म्मनाः । त्रि । अन्तर्मनसि । विमनसि । चिन्तादिव्याकुलचित्ते ॥ क्रियास्वस्थिरे ॥ दुःस्थितं मनोऽस्य ॥ स्त्री । शताबर्याम् ॥

दुर्म्मरः । पुं । दुर्म्मृतौ ॥ मरणंमरः । दुष्टोमरः ॥

दुर्म्मरा । स्त्री । श्वेतदूर्वायाम् ॥ कृष्णदूर्वायाम् ॥

दुर्म्मर्षणः । त्रि । मर्षितुमशक्ये ॥ दुःखेनमृष्यते । मृष० । भाषायांशासियुधीतियुच् ॥

दुर्म्मिलका । स्त्री । मात्राछन्दप्रभेदे ॥ यथा । द्वात्रिंशन्मात्रं फणिपतिकल्पितसकलविभूषणसत्तमरम् दशवसुभुवनैर्यति रचप्रभवतिकविकुलहृदयानन्दकरम् । यदिष्टचतुष्कणगणमिलितपदमिति दुर्म्मिलकानामवरम्-नरपतिवरतोषणवन्दिविभूषणभुवनविदितसन्तापहरम् ॥ यथा । यमुनाजलकेलिविलोलविलोचनगोपीजनहृतवसनवरम् तटजातविशालतमालतरुणतरुदुर्गमशाखारोहपरम् । निजभुजमदमत्तभोजपतिमानसमद्भुतदम्भविनाशकरम् कारक-

नत्तमयूखनृपितकमलं नैस खीला मानुषवेषपरम् ॥

दुर्भिला । स्त्री । दुर्भिक्षकाले ॥

दुर्मुखः । पुं । कपिविशेषे ॥ नागभेदे ॥ वाजिनि ॥ गणेशमूर्त्यन्तरे ॥ महिषासुरस्य सेनापतिविशेषे ॥ उत्तरद्वारे नवमगृहे ॥ वत्सरविशेषे ॥ तुषधान्यवर्षोद्विसर्गसद्ममदायंता । व्यवहारायनघ्नन्ति दुर्मुखे दुर्मुखाः प्रजाः ॥ त्रि । मुखरे । अवदुमुखे । अप्रियवादिनि ॥ दुर्निन्दितं मुखमस्य ॥

दुर्मेधाः । त्रि । मन्दमतौ । विवेकासमर्थे ॥ दुष्टा मेधा यस्य सः । मिथ्यमःसि च प्रज्ञामेधयोः ॥

दुर्मोघः । पुं । काकतुण्डाम् ॥

दुर्म्मोषा । स्त्री । कौवाडोडी इति भाषा प्रसिद्धे वृक्षे । काकादन्याम् ॥

दुर्योधनः । पुं । धृतराष्ट्रतनये । कौरव्यभूपतौ । सुयोधने ॥ दुःखेन युध्यते । युध० । भाषायां शासियुधीति युच् ॥

दुर्ललितका । स्त्री । छन्दोभेदे ॥ यथा । वसुभिश्च रसैरथदिग्भिर्यदीरितसयतिका विहिताहि यदा सगणाष्टकभूषितसच्चरणा जितदुर्नयदुर्ललितेतिसदा । फणभृत्कुलमण्डनना सकलागवरार्पिता सुकृतां सुखदा



यशान्तभरा धिवगीडकुलोज्ज्वलता भवदेहि हरे वरदा ॥

दुर्लभः । पुं । कच्छूरे ॥ द्राविडके । कर्चूरे ॥ त्रि । दुष्प्रापे ॥ यथा । दुर्लभं त्रयमेवैतत् देवानुग्रहहेतुकम् । मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥ इति विवेकचूडामणिः ॥ अतिप्रशस्ते ॥ प्रिये ॥ दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः । दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ दुःखेन लभ्यते । लभ० । ईषद्दुस्सुष्विति खल् ॥

दुर्लभा । स्त्री । भक्तौ ॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ इति व्यासवचनम् ॥ दुरालभायाम् ॥ श्वेतकण्टकार्याम् ॥

दुर्वच. । त्रि । वक्तुमशक्ये । दुःखकथ्ये ॥

दुर्वचस् । न । मन्दवाक्ये ॥ असह्यं दुर्वचो मातैर्मर्मान्तरितरोहणम् ॥

दुर्वर्णम् । न । रजते । रूप्ये ॥ सुवर्णापेक्षया दुष्टो वर्णोऽस्य ॥ एलवालुके । एलेये ॥ त्रि । असद्वर्णे ॥

दुर्वर्णकम् । न । रजते ॥ इति हेमचन्द्रः ॥

दुर्वाक् । स्त्री । दुष्टायां वाचि ॥ त्रि । कटुदे ॥ दुष्टा वाग्यस्य ॥

दुर्वाच्यम् । त्रि । अवाच्ये ॥

दुर्वादः । पुं । दुरुक्तौ । निन्दितवाक्ये ॥ दुष्टोवादः ॥ स्तुतिपूर्वकदुर्वाक्ये ॥

दुर्वासाः । पुं । अत्रितनये शङ्करांशाज्जाते मुनिविशेषे । कुमारगौ ॥ त्रि । कुत्सितवस्त्रयुक्ते ॥

दुर्विधेयः । त्रि । दुर्दैवे ॥ दुःखेनविधेये ॥

दुर्विधः । त्रि । दरिद्रे ॥ दुष्टा विधा प्रकारः समृद्धिर्वाऽस्य ॥ खले ॥ मूर्खे । बालिशे ॥

दुर्विनीतः । पुं । शूकले । अविधिसाश्वे ॥ त्रि । अविनीते ॥

दुर्विभाव्यः । त्रि । अविलक्ष्ये ॥

दुर्वृत्तः । त्रि । दुर्जने । दुष्टे । ऐन्द्रजालिकक्रितवादौ ॥ दुष्टवृत्तमस्य ॥

दुर्वृत्तिः । त्रि । दुष्टकर्मणिवर्त्तमाने ॥ दुष्टेकर्मणिवृत्तिः दुराचारस्तिर्यस्य ॥

दुर्हृत्-द् । त्रि । वैरिणि । शत्रौ ॥ दुष्टं हृदयमस्य । सुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातनात् हृदयस्यहृद्भाव ॥

दुर्हृदयः । त्रि । दुष्टान्तःकरणे ॥

दुलिः । पुं । मुनिविशेषे ॥ स्त्री । कच्छप्याम् ॥ दोलति । दुलउत्क्षेपे । इगुपधात्कित्-इतिइन् ॥

दुली । स्त्री । कच्छप्याम् ॥ कृदिकारा दितिङीष् ॥

दुश्चरः । पुं । भल्लूके ॥ शम्बूके ॥ त्रि । दुस्तरे ॥

दुश्चरितम् । न । श्रुतिस्मृत्यविहिते पापकर्मणि ॥ दुष्टंचरितम् ॥

दुश्चर्मा । पुं । अच्छचर्मेद्रमणौ । दिनमके ॥ कोठरोगे ॥ दुष्टंचर्मास्य ॥

दुश्चिक्यम् । न । लग्नात् तृतीयभवने । सहजे ॥

दुश्च्यवनः । पुं । इन्द्रे ॥ दुःखेन दुष्टं दैत्येषु वा च्यवनं पतनमस्य ॥ च्यवनमुनिनैवसाजितत्वात् दुःखेन च्यवनो यस्येति वा ॥

दुष्करम् । न । दुःखेनकरणे ॥ आकाशे ॥ त्रि । दुःखेनक्रियमाणे ॥ कर्त्तुमशक्ये ॥ अपिचत् सुकरंकर्म तदप्येकेन दुष्करम् ॥ दुःक्रियते । ईषद्दुःसुषुखल् ॥

दुष्कर्म । न । पापे ॥

दुष्कुलम् । न । दुष्टकुले ॥ त्रि । दुष्टकुलजे ॥

दुष्कुलीनः । पुं । चोरायसगन्धद्रव्ये ॥ त्रि । दौष्कुलेये ॥ दुष्कुलस्याऽपत्यम् । दुष्कुलाड्ढगितिपक्षे खः ॥

दुष्कृतम् । न । पापे ॥ सत् तत्कर्तुं मरणानन्तरं दैनसकलगच्छतीत्युक्तं वह्निपुराणे । गरुडादयो निवर्त्तन्ते

श्मशानादपि वान्धवाः। सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छति ॥ तस्माद् वित्तं समासाद्य दैवाद् वा यौरुषाद् यथा। दद्यात् सम्यग् द्विजातिभ्यः कीर्त्तिमानिव कारयेदिति॥ दुष्कृतं करणमनेन। दुष्कुपधस्य चाप्रत्ययस्येतिषः॥ चि। सदसि॥

दुष्कृतात्मा। चि। पापहृदये। पापबुद्धौ॥

दुष्कृती। चि। पापकारिणि। पापेन सञ्चितकर्मणि॥ वेदमार्गविरोधिनि॥ दुष्कृतमस्यास्तीत्यत्रार्थे इनिः॥

दुष्क्रीतः। त्रि। महार्घे॥ यथा। क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतमिति नारदः॥

दुष्खम्। न। दुःखे॥

दुष्खदिरः। पुं। खदिरभेदे। मत्सारे। गोरटे। क्षुद्रखदिरे॥

दुष्टम्। न। कुष्ठौषधौ॥ त्रि। अधमे॥ दुर्बुद्धे॥ वञ्चके॥ दोषयुक्ते॥ यथा। दुष्टः शब्दः स्वरतो वर्णतो वेति भाष्यम्॥

दुष्टकालः। पुं। केत्वाद्युत्पातदर्शने॥ गुरुशुक्रास्तादौ॥

दुष्टचारिणी। स्त्री। स्वैरिण्याम्॥

दुष्टयोगः। पुं। व्यतीपातादौ॥

दुष्टवृषः। पुं। गवि॥ शक्तोऽप्यधुर्वहो योऽहिर्वृषो गलिरुदाहृतः॥

दुष्टा। स्त्री। दुःशीलायाम्। पुंश्चल्याम्॥ दुष्टा भार्या शठं मित्रं भृत्याश्चोत्तरदायकाः। ससर्पे च गृहे वासो मृत्युरेव न संशयः॥ दुर्वचनायाम्॥

दुष्टाश्वः। पुं। अदान्ताश्वे॥

दुष्ठु। न। निकृष्टे। निन्दायाम्॥ दुःस्थानम्। स्था०। अपदुःसुषु स्थ इति कः। षत्वम्॥

दुष्ठुः। चि। अविनीते॥

दुष्पचः। पुं। शैराभिधगन्धद्रव्ये॥ चपलाकुमे॥ कुष्ठानिपचायस्य॥

दुष्पूरः। चि। पूरयितुमशक्ये॥

दुष्प्रधर्षिणी। स्त्री। वार्त्ताकाम्। वनभण्टा इति भाषा॥ दुःखेन प्रधृष्यते। ञिधृषा प्रागल्भ्ये। कर्मणि ल्युट्॥

दुष्प्रधर्षा। स्त्री। दुरालभायाम्॥ खर्जूर्याम्॥

दुष्प्रधर्षिणी। स्त्री। वार्त्ताकौ॥ कण्टकार्याम्॥ ढण्ढ्याम्॥ पुनः पनदुःखेन प्रधृष्यते। ञिधृषा०। आभीक्ष्ण्ये णिनिः॥

दुष्प्रवृत्तिः। स्त्री। दुर्वार्त्तायाम्॥

दुष्प्रवेशा। स्त्री। कन्थारीवृक्षे॥

दुष्यन्तः। पुं। चन्द्रवंशीयनृपतिविशेषे। शकुन्तलापतौ। भरतपितरि॥

दुड । षा । दुःखे ॥ कोपे ॥ दुःखभावने ॥ दोषे ॥

दुस्तरः । त्रि । दुःखेनैतत्तुं शक्ये । तरितुमशक्ये ॥ ईषद्दुःसुप्वितिखल् ॥

दुस्तर्कः । पुं । शुष्कतर्के ॥ दुस्तर्कात् सुविरम्यताम् ॥

दुस्थः । त्रि । दुर्गते ॥ मूर्खे ॥ दुःखेन तिष्ठति ॥ डा० । सुपिस्थइतिकः ॥

दुस्पर्शः । त्रि । दुःस्पर्शे ॥

दुस्पर्शा । स्त्री । दुःस्पर्शायाम् ॥

दुहितुः पतिः । पुं । जामातरि ॥ विभाषा स्वसृपत्योरितिवा ऽलुक् ॥

दुहिता । स्त्री । सुतायाम् । कन्यायाम् ॥ दोग्धि । दुहप्रपूरणे । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ इति सूत्रेण तृच् गुणाभावश्च निपातितः ॥ दुहतिवा । दुहभक्षी करणे । तया साधुः । स्वस्रादित्वान्न ङीप् ॥

दूतः । पुं । सन्देशहरे । वार्त्ताहरे ॥ दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टज्ञं शुचि दक्षं कुलोद्गतम् ॥ अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान् वीतभी वाग्मी दूतो राज्ञः प्रशस्यते ॥ अमात्ये दण्डआयत्तो दण्डे वैनयिकी क्रिया । नृपतौ कोशराष्ट्रे च दूते सन्धिविपर्ययौ ॥ दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् । दूतस्तत् कुरुते कर्म भिद्यन्ते येन वा नवा ॥ सविद्यादस्यकृत्येषु निगूढेङ्गितचेष्टितैः । आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥ बुद्धा च सर्वं तत्त्वेन परराजचिकीर्षितम् । तथा प्रयत्नमातिष्ठेद् यथात्मानं न पीडयेदिति मनुः ॥ अस्य लक्षणं यथा । यथोक्तवादी दूतः स्याद्देशभाषाविशारदः । शक्तः क्लेशसहो वाग्मी देशकालविभागवित् । विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः ॥ वक्ता नयस्य यः काले स दूतो नृपतेर्भवेदितिकल्पतरुः पु० ॥ मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतोऽभिधीयते इति याज्ञवल्क्यम् ॥ अवध्यत्वं यथा । वैरूप्यमङ्गेषु कशानिपातो मौण्ड्यं तथा लक्षणसन्निवेशः । एतानुपायानहैतिकृत्यवादी शास्त्रेषु दूतस्य वधो न दृष्ट इति ॥ दवति । दुगतौ । दुतनिभ्यां दीर्घश्चेतिक्तः ॥ यद्वा । दूयते ऽस्मात् । दूङ् परितापे । गत्यर्थे तिक्तः ॥ दुनोतिवा । टुदुउपतापे । पूर्ववत् ॥

दूतघ्नी । स्त्री । कदम्बपुष्प्याम् ॥

दूतागारम् । न । पत्रगृहे । डाक इति योष्ठ इतिचेतरभाषा ॥

दूतिः । स्त्री । दूतिकायाम् ॥ दूयते । दूङ्० क्तिच् ॥

दूतिका । स्त्री । सञ्चारिकायाम् ॥

दूती । स्त्री । स्त्रीपुंसोःसन्देशप्रापिकायाम् । सञ्चारिकायाम् ॥ गौ० ङीष् ॥

दूतीका । स्त्री । सञ्चारिकायाम् ॥

दूत्यम् । न । दूतस्वभावे ॥ दूतभावे ॥ दूतकर्मणि ॥ दूतस्यभावःकर्मवा । दूतवणिग्भ्याञ्चेतियः ॥

दूनः । त्रि । अध्वादिनाश्रान्ते ॥ दूयते स्म । दुगतौ क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥ अकर्मकत्वात् कर्त्तरि-क्तः ॥ सन्तप्ते ॥ पिबेमदूने रसने सितापि तिक्तायते हंसकुलावतंसेतिनैषधम् ॥

दूरः । त्रि । विप्रकृष्टे ॥ महताम्तरेणावसमाने ॥ क्लेशाधरे ॥ दुःखेनेयते प्राप्यते । दूरीषोलोपश्चेतिसाधुः ॥

दूरदर्शनः । पुं । गृध्रे ॥

दूरदर्शी । पुं । पण्डिते दूरं दूराद्वा पश्यति । दृशिर् ० ग्र ० णिनिः ॥सुपीतिवा ॥ गृध्रे ॥ त्रि । दीर्घदर्शके ॥

दूरदृक् । पुं । पण्डिते ॥ गृध्रे ॥ त्रि । दीर्घदर्शके ॥ दूरावलोकनार्थयन्त्रविशेषे । दूरवीक्षणे । दूरबीनइतिभाषा ॥ दूरे दृक्दर्शनंयेन ॥

दूरमूलः । पुं । मुञ्जतृणे ॥

दूरवर्त्ती । त्रि । महताऽन्तरेण वर्त्तनशीले ॥ यथा । किन्त्वया दूरवर्त्तिन्या प्रिया राक्षसपुङ्गव । अरण्येवा नयव्यस्मिन्मनुभिर्या न मुज्यत इतिरामायणे विभीषणंप्रतिरामवाक्यम् ॥

दूरवीक्षणम् । न । दूरबीन इतिप्रसिद्धे दूरदृग्यन्त्रे ॥

दूरवेधी । पुं । दूरापातिनि । दूरनिक्षेप्याख्ये ॥

दूरभिन्नः । त्रि । अत्यन्तविदारिते ॥

दूरस्थः । त्रि । विप्रकृष्टस्थिते ॥ योजनशताद्यन्तरिते ॥ दूरेतिष्ठति । ष्ठा० सुपिस्थ इति कः ॥

दूरापाती । पुं । दूरवेधिनि ॥

दूरेत्यः । त्रि । दूरेआतादौ ॥ पथिके ॥ दूरादेत्यः ॥

दूरेरितेक्षणः । त्रि । केकरे ॥

दूर्व्यम् । न । शष्याम् ॥ विष्ठायाम् ॥

दूर्वा । स्त्री । शतपर्विकायाम् । नीलदूर्वायाम् । तिक्तपर्वायाम् ॥ श्वेतदूर्वायाम् । गोलोम्याम् ॥ नीलश्वेतविभेदेनदूर्वेद्वेसमुदाहृते ॥ रक्तपित्तकफद्वन्द्वदोषनाशिनीयमिति राजवल्लभः ॥ दूर्वति दूर्व्यतेवा । दुर्वी हिंसायाम् । अच् घञ्वा । उपधाया

 

ष्वेतिदीर्घः ॥

दूर्वाकाण्डम् । न । दूर्वासमूहे ॥ दूर्वादिभ्यः काण्डः ॥

दूर्वाष्टमी । स्त्री । भाद्रशुक्लाष्टम्याम् ॥

दूलिका । स्त्री । } दूली । स्त्री । } नील्याम् ॥

दूषकः । त्रि । धर्षने । दोषोत्पादके ॥ पुं । चालेर्वार्श्यन्तरे ॥ दूषयति । दुष० । यन्तः । ण्वुल् । दोषोद्भावित्वम् ॥

दूषणः । पुं । राक्षसविशेषे । रावणभ्रा- । दुखरसेनापतौ ॥ न । दोषे ॥ दूषयति । दुषनैकृत्ये । नं० ल्युः ॥

दूषणारिः । पुं । श्रीरामे ॥

दूषिः । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । यन्तः । दोषोत्पादित्वम् । अचइः ॥

दूषिका । स्त्री । तूलिकायाम् ॥ लोच नमलमले । पिष्टोडके । गीढ इति भाषा ॥ दूषयति । दुष० । यन्तः । ऊत्वम् । ण्वुल् ॥ यद्वा । दूषयते र चेरिति इप्रत्ययः । ऊत्वम् । स्वार्थे कन् ॥

दूषितः । त्रि । अभिशस्ते । धारिते । वाच्ये । प्राप्तदोषे ॥

दूषिता । स्त्री । दोषप्राप्तायां कन्यायाम् । सम्वेदायाम् ॥

दूषी । स्त्री । नेत्रमले ॥ कृदिकारादक्तिनइतिङीषु ॥

दूषीका । स्त्री । दूषिकायाम् ॥ दूषयति । दुष० । यन्तः । ऊत्वम् । कपिद् विभ्याशीकम् ॥ स्वार्थे कन्वो ॥

दूषीविषम् । न । औषधादिभिरवीर्यीकृते विषे । आदिना दावाग्निवायुदीप्तशोषिते विषे ॥ औषधैर्विषमौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा । स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतां मुपैतीतिसाधवः ॥

दूष्यम् । न । वस्त्रे ॥ वस्त्रगृहे ॥ दूष्ये ॥ त्रि । दूषणीये ॥ यथा । दूष्यं यथा कम पुनर्निपुणं विभाव्यभावावबोधे विहितोमदुनोति दोषइति ॥ दूष्यते । दुष० । यन्तादचोयत् । दोषोत्पादित्वम् ॥ दूषयितुमर्हो वा । अर्हे कृत्यतृचश्च ॥

दूष्या । स्त्री । कक्षायाम् । वरत्रायाम् । गजमध्यबन्धनरज्ज्वाम् ॥ दूष्यतेऽनया । दुष । यत् । टाप् ॥

दृकम् । न । छिद्रे ॥ दृणातिदारयतीति सताद्यो धातुकस्त्यादिभ्यःश्वितिः ॥

दृकाणः । पुं । द्रेष्काणे ॥

दृकर्णः । पुं । सर्पे ॥ दृगेवकर्णो यस्य ॥

दृक्काणः । पुं । द्रेष्काणे । लग्नविभागे ॥

दृक्प्रसादा । स्त्री । कुलत्थायाम् ॥ कुलत्थाञ्जने ॥

दृक्प्रिया । स्त्री । शोभायाम् ॥

दृक्श्रुतिः । पुं । सर्पे ॥

दृक्स्थितिः । स्त्री । दृष्टेःस्थैर्ये ॥ दृक्स्थितिः ॥ दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् । सा दृष्टिः परमोदारा न नासाग्रविलोकिनी ॥ दृष्टिदर्शनदृश्यानां विरामो यत्र वा भवेत् । दृष्टिस्तत्रैव कर्त्तव्या न नासाग्रविलोकिनी इत्याचार्य्याः ॥

दृगध्यक्षः । पुं । सूर्य्ये ॥

दृग्गोलः । पुं । खगोलान्तर्गतगोलविशेषे ॥

दृग्भूः । स्त्री । सर्पे ॥ वज्रे ॥ भास्करे ॥

दृग्विषः । पुं । नागे ॥

दृढम् । न । लौहे ॥ अतिशये । नितान्ते ॥ क्रियाविशेषणत्वेऽस्य क्लीबत्वं द्रव्यविशेषणत्वे तु वाच्यलिङ्गता ॥ पुं । रूपकभेदे ॥ यथा । दृढाख्यः स्यात् ध्रुवन्दं तालेन हंसलीलके । चतुर्भिरक्षरैर्युक्तः शृङ्गारे परिकीर्त्तितः इति सङ्गीतदामोदरः ॥ त्रि । स्थूले ॥ प्रगाढे । अप्रशिथिले ॥ बलवति । शक्ते ॥ कठिने ॥ दृंहति दृंहतिस्म वा । दृहदृहिवृद्धौ । क्तप्रत्यये । दृढः स्थूलबलयोरिति क्तस्य इमावः स्थूलत्वम् हलोपः इडितो नलोपश्च निपात्यते ॥

दृढकण्टकः । पुं । क्षुद्रफलकवृक्षे । घोला आँकड़ा इति गौड़भाषा ॥

दृढकाण्डः । पुं । वंशवृक्षे ॥ न । दीर्घरोहिषके ॥

दृढकाण्डा । स्त्री । पातालगरुडीलतायाम् ॥

दृढकारी । त्रि । प्रारब्धकर्मसम्पादयितरि ॥

दृढक्षुरा । स्त्री । बल्वजायाम् ॥

दृढग्रन्थिका । स्त्री । मस्तष्ठ्याम् ॥

दृढग्रन्थिः । पुं । वंशे ॥

दृढच्छदम् । न । दीर्घरोहिषके ॥

दृढतरुः । पुं । धववृक्षे ॥

दृढत्वचः । पुं । मुञ्जतृणे ॥

दृढत्वचा । स्त्री । बल्वजायाम् ॥

दृढत्वक् । पुं । यावनालशरे ॥

दृढदंशकः । [illegible] । चांगर इति प्रसिद्धे ग्राहसि ॥

दृढनिश्चयः । त्रि । स्थिरमते ॥ दृढः कुतार्किकैरभिभवितुमशक्यतया स्थिरो निश्चयो ऽहमस्य कर्त्ता भोक्ता सच्चिदानन्दादितीयं ब्रह्मेत्यध्यवसाय शीलो संसारादुपरतो मुनौ ॥

दृढनीरः । पुं । नारिकेलवृक्षे ॥

दृढपत्रः । पुं । वंशे ॥

दृढपर्वी । स्त्री । वत्सनाभ्याम् ॥

दृढपादा । स्त्री । यवतिक्तायाम् ॥

दृढपादी । स्त्री । भूम्यामलक्याम् ॥

दृढप्ररोहः । पुं । प्लक्षवृक्षे ॥

दृढफलः । पुं । नारिकेले ॥ दृढानि फलानि यस्यासः ॥

दृढबन्धिनी । स्त्री । श्यामालतायाम् ॥

दृढभूमिः । त्रि । विषयसुखवासनया चालयितु मशक्ये ॥

दृढमुष्टिः । पुं । खड्गादौ ॥ त्रि । कृपणे ॥ दृढामुष्टिर्यस्य ॥

दृढमूलः । पुं । मुञ्जतृणे ॥ मन्थानक तृणे ॥ नारिकेले ॥

दृढरङ्गा । स्त्री । स्फटिकायाम् ॥

दृढलता । स्त्री । पातालगरुड्याम् ॥

दृढलोमा । पुं । शूकरे ॥ त्रि । कठिन लोमयुक्ते ॥ दृढानि लोमानि यस्य ॥

दृढवल्कलः । पुं । पूगे ॥ लकुचे ॥

दृढवल्का । स्त्री । अम्बष्ठायाम् ॥

दृढबीजः । पुं । चक्रमर्दे ॥ बदरे ॥ बर्बुरे ॥

दृढव्रतः । त्रि । कृतावसक्तमुक्ते । फलपर्यन्तं प्रारब्धव्रतापरित्यागशीले ॥ सर्वथाभगवानेव भजनीयः सर्वैरंहस एवेतिप्रमाणावसिता प्रामाण्यश ङ्काशून्यचित्ताः ॥ दृढानि प्रतिपत्ते श्चालयितुमशक्यानि अहिंसासत्या



स्तेयब्रह्मचर्यापरिग्रहादीनि व्रतानि नियमा यस्यसतथा । धर्मद्रमादिसा धनसम्पन्नइतियावत् ॥

दृढसन्धिः । त्रि । संहते । निश्छिद्रे ॥ दृढःसन्धिःसन्धानमस्य ॥

दृढसूत्रिका । स्त्री । मूर्वायाम् ॥

दृढस्कन्धः । पुं । क्षीरिकावृक्षे ॥

दृढाङ्गम् । न । हीरके ॥

दृढा । स्त्री । हीरके ॥

दृतिः । पुं । चर्मपुटे । चर्मनिर्मितेतैलादिपात्रे ॥ मत्स्ये ॥ दृणाति । दृवि दारणे । दृणातेर्ह्रस्वश्चेति तिः ॥ शरीरावयवविशेषे ॥ उदकनोदकभस्मयन्त्रे ॥

दृतिधारकः । पुं । आकन्दिताता दृति गौडभाषाप्रसिद्धे वृक्षे ॥

दृतिहरिः । पुं । पशौ ॥ दृतिंहरतीति विग्रहे हरतेर्दृतिनाथयोःपशौकर्तरि इन्प्रत्ययः ॥

दृन् । अ । दृढार्थे ॥ हिंसायाम् ॥

दृन्भूः । स्त्री । सर्पे ॥ चक्रसर्पे ॥ पुं । वज्रे ॥ अग्नभूपतौ ॥ तक्षसर्पजातौ ॥ कवौ ॥ सन्दर्भकर्त्तरि ॥ कथके ॥ सूर्ये ॥ दृणाति । दृभीग्रन्थे । अन्दूदृन्भूजम्बितिकूप्रत्यये निपातनान्नुम् अनुस्वाराभावोपि । हूहूवदूर्माणि ॥ दृढशब्दउपपदेभुवःकूप्रत्यय उप

परेस्याद्दृग्भावादेशोनिपातनादितिमाधवः ॥ यद्वा । दृगितिनान्तमव्ययं दृढार्थकमुपपदम् । वर्षाभूवद्रूपमस्येत्याहुः ॥

दृप्तः । त्रि । उद्धते । गर्विते ॥ दृप्यते । दृपहर्षविमोहनयोः । अस्मात्प्रत्ययार्था कर्मकेभ्य।दिना कर्त्तरि क्तः ॥

दृप्रः । त्रि । बलवति ॥ दृप्यति । दृप० । स्फायितञ्चीति रः ॥

दृब्धः । त्रि । ग्रथिते ॥ दृभ्यते स्म । दृभी ग्रन्थे । क्तः ॥

दृभिः । स्त्री । गुम्फे ॥

दृक् । स्त्री । दर्शने ॥ नेत्रे ॥ नेत्रेऽपि रूपं व्याप्यते दृश्यमिवादृम् ॥ बुद्धौ ॥ ज्ञाने ॥ रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् । दृश्याधीवृत्तयः साक्षीदृगेव नतु दृश्यते ॥ त्रि । वीक्षके ॥ अभ्यर्चे ॥ ज्ञातरि ॥ पश्यति दृशिर्प्रेक्षणे । क्विप् ॥ यद्वा । दृश्यते दर्शनमनयावा । सं० क्विप् । क्विन् प्रत्ययस्येति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । त्यदादिषु दृशः क्विनोविधानात् ॥ शाङ्के ॥

दृशत् । स्त्री । दृषदि ॥

दृशद्वती । स्त्री । दृषद्वत्याम् ॥

दृशा । स्त्री । चक्षुषि ॥

दृशाकाङ्क्ष्यम् । न । पद्मे ॥

दृशानः । पुं । विरोचने । सूर्ये ॥ आचार्ये ॥ लोकपाले ॥ न । ज्योतिषि ॥ पश्यति । दृशिर्० । युधिबुधिदृशः किच्चेत्यानच् ॥

दृशिः । स्त्री । चक्षुषि ॥ दर्शने ॥ गोपीदृगुत्सवदृशिःप्रविवेशगोष्ठम् ॥

दृशिस्वरूपः । त्रि । चैतन्यघने ॥

दृशी । स्त्री । नेत्रे ॥

दृशोपमम् । न । सिताम्भोजे ॥

दृश्यम् । न । अनात्मस्वरूपे । ममेदं श्रोत्रं ममेदंमनइत्यादिममतास्पदत्वेनात्मनउपसर्जनभूते स्थूलदेहादौ ॥ दृष्टिदर्शितव्यायांदृश्यमितिप्रसिद्धम् ॥ त्रि । द्रष्टव्ये । दर्शनीये ॥ द्रष्टुंयोग्यम् । दृशेर्ऋहलोर्ण्यत् ॥ ऋदुपधाच्चाकृपिचृतेरिति क्यप् वा ॥

दृश्वतारम् । न । मुखजायसे ॥

दृषद् । स्त्री । निष्पेषणशिलापट्टे । शिल् इति भाषा ॥ पाषाणे । प्रस्तरे ॥ दृणाति । दॄविदारणे । दृणातेः पुग्ह्रस्वश्चेत्यदिः ॥

दृषद्वती । स्त्री । नदीविशेषे ॥ दृषदः सन्त्यस्याम् । मतुप् । अयद्रतिमस्य वः ॥ कात्यायन्याम् ॥

दृष्टम् । न । सर्वीभुजां स्वपरचक्रोत्थभये ॥ स्वराष्ट्राच्चौराटविकादेर्भयम् । परराष्ट्राद्दायविलोपादेर्भयम् ॥ प्रति

विषयाध्यवसाये ॥ त्रि । साक्षात्कृते । प्रत्यक्षे । अक्षिगोचरे । ईक्षिते ॥ क्वचित् कविता सर्वो राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः ॥ दृश्यते स्म । दृशिर् + क्तः ॥ ज्ञाते ॥ दर्शने ॥

दृष्टपृष्ठः । त्रि । पलायमाने ॥

दृष्टप्रत्ययः । त्रि । दृढविश्वासे ॥

दृष्टरजाः । स्त्री । मध्यमायाम् । प्रथमं प्राप्तरजस्कायां नार्याम् ॥ दृष्टं रजो यस्याः ॥ प्रौढायाम् ॥

दृष्टान्तः । पुं । मरणे ॥ शास्त्रे ॥ उदाहरणे ॥ प्रतिपाद्यप्रतिपादकयोर्यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ तथाच गौतमसूत्रम् । लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति ॥ लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः प्रतिपाद्यइति फलितोर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः प्रतिपादकइति फलितोर्थः ॥ तथाच प्रतिपाद्यप्रतिपादकयोरितिपर्यवसन्नम् । बहुवचनं कथावहुत्वमभिप्रेत्य बुद्धेः साध्यसाधनोभयविषयिण्याः स्वरूपाव विषयिण्या साम्य मविरोधो यस्मिन्नर्थे सोर्थो दृष्टान्तः । वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभा-



वप्रकारकान्यतरनिश्चयविषयो दृष्टान्त इतिपर्यवसितोर्थः ॥ * ॥ अलङ्कारविशेषे । दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ एतेषां साधारणधर्मादीनां दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः । त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् । आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ एषसाधर्म्येण । वैधर्म्येण तु । तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥ * ॥ उपमाने ॥ दृष्टः अन्तो निश्चयो न । दृष्टमतः सादृश्यबलेन प्रकृतार्थनिर्णयो येन तथा ॥

दृष्टिः । स्त्री । बुद्धौ ॥ लोचने ॥ दर्शने ॥ ज्ञाने ॥ अस्याः कारकपूर्वी ॥ चक्षुर्जन्यमनोवृत्तिः विषयिप्रकाशिका । दृष्टिरित्युच्यते दृष्टा दृष्टेः कर्त्तेति लौकिकैः ॥ दर्शनम् । दृशिर् + क्तिन् । दृश्यतेऽनया वा करणे क्तिन् ॥ * ॥ अथप्रकारा दृष्टि कथनं यथा । तृतीये दशमे चैव पाददृष्टिरुदाहृता । अर्द्धदृष्टिश्च नवमे पञ्चमेच प्रकीर्त्तिता ॥ चतुर्थे चाष्टमे चैव पादोना परिकीर्त्तिता । सप्तमे

परिपूर्णाञ्च फलमेवं प्रकल्प्यते ॥ तृतीयदशमावार्किः पश्यन् पूर्णफलप्रदः । त्रिकोणयोर्गुरुश्चैव चतुर्थाष्टमजान् कुजः ॥ सुतमदननवान्त्ये पूर्णदृष्टिः सुरारेः युगलदशमराशौ दृष्टिपादत्रयार्हः । सहजरिपुचतुर्थे प्वऽष्टमे चार्द्धदृष्टिः क्षितिभवनमुपान्त्यं नैवदृश्यं शिराहोः ॥ स्वस्थानञ्च द्वितीयञ्च षष्ठमेकादशं तथा । द्वादशाख्यं नपश्यन्ति शेषं पश्यन्ति ते ग्रहाः ॥

दृष्टिकृत् । न । } स्थलपद्मे ॥
दृष्टिकृतम् । न । }

दृष्टिगुणः । पुं । बाणादेर्लक्ष्ये ॥

दृष्टिबन्धुः । पुं । खद्योते ॥ काञ्चने ॥

दृष्टिरोगिः । पुं । ईर्ष्यके ॥

दृष्टिविक्षेपः । पुं । कटाक्षे ॥

दृष्टिविषः । पुं । सर्पविशेषे ॥

दृष्ट्वा । अ । विलोक्येत्यर्थे ॥

दृचित. । त्रि । वृद्धिम्प्राप्ते ॥

देदीप्यमानः । त्रि । कान्त्यस्यमाने । अतिशयदीप्तिविशिष्टे । यःपुनःपुनरतिशयेनवा दीप्यते तत्र ॥

देयम् । त्रि । दातव्ये ॥ दातुंयोग्यम् । डुदाञ्० । अचोयत् । ईद्यतिगुणः ॥ न । धनविशेषे ॥ यथा । अपराबाधमक्लेशं प्रयत्नेनार्जितं धनम् । स्वल्पं वा बहु वा तदपि देयमित्यभिधीयते ॥ अपराबाधम् परपीडारहितम् । अक्लेशं परक्लेशाजनकम् ॥



देवः । पुं । वसुरुद्रादौ । ब्रह्मविष्णुशिवसूर्याग्निगणपतिदुर्गादौ । सुरे । अमरे ॥ एतेषामर्थो यथा । आदित्याः क्षत्रियास्तेषां विशश्चमरुतस्तथा । अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ॥ स्मृतास्त्वाङ्गिरसा देवा ब्राह्मणा इति निश्चयः इति ॥ आत्मा । अतिशयशालिनि द्योतनात्मके आत्मनि ॥ दीव्यति क्रीडति स्वर्गादिभिः विजिगीषते असुरादीन् व्यवहरति सर्वभूतेष्वात्मतया द्योतते स्तूयते स्तुत्यैः सर्वं गच्छति वा तस्माद्देवः ॥ दीव्यतेः पचाद्यच् ॥ दीव्यते स्तूयते इति दिवेः कर्म्मणि घञ् ॥ दीव्यते क्रीडते यस्माद्रोचते द्योतते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ मेघे ॥ राज्ञि ॥ नाट्योक्त्या भूपाले ॥ पारदे ॥ बर्वटीके ॥ देवदारुणि ॥ न । इन्द्रिये ॥ त्रि । पूज्ये ॥ दीप्तिमति ॥

देवकः । पुं । यदुवंशीये नृपविशेषे । श्रीकृष्णस्य मातामहे ॥ दीव्यति । ण्वुल् ॥

देवकर्द्दमः । पुं । सुगन्धिद्रव्यविशेषे ॥

सतुश्रीखण्डो गुरुकर्पूरकुङ्कुमभि-श्रितैर्भवति ॥ इति राजनिघण्टुः ॥

देवकल्पः । त्रि । देवतुल्ये ॥ ईषदूनो देवः । ईषदसमाप्तावितिकल्पप् ॥

देवकात्मजा । स्त्री । देवक्याम् ॥

देवकार्य्यम् । न । देवानुद्दिश्यक्रियमाणे ॥

देवकाष्ठम् । न । देवदारुणि ॥

देवकिरी । स्त्री । मेघरागस्य भार्यायाम् ॥ यथा । ललिता मालती गौरी नाटी देवकिरीतथा । मेघरागस्य रागिण्यो भवन्तीमाःसुमध्यमाः ॥ अस्याः स्वरूपं यथा । भ्रमन्ती नन्दने स्यात् पुष्पप्रचयतत्परा । ख्याता देवकिरीश्चोपाकरार्पित सखीकरा ॥

देवकी । स्त्री । वसुदेवभार्यायाम् । श्रीकृष्णमातरि ॥ मथुरायां यादवेन्द्रयोम् ॥ देवकामाचष्टे इति णिच न्ताद्पचः । ततोङीष् ॥ यद्वा । देवकस्यापत्यम् । कन्तरुष् । संज्ञापूर्वकत्वात् वृद्ध्यभावः । इतोमनुष्यजाते रितिङीष् ॥ यद्वा । देवकशब्दस्तत दपत्ये लक्षणया वृत्तौ पुंयोगादिति ङीष् । नहितत्र दाम्पत्यसम्बन्ध एव पुंयोगः किन्तुजन्यजनकत्वादपीतिहरदत्तादयः । अतएव प्राक् कैकयी तो भरतस्ततो ऽमुदितिभट्टिः । एवं रैवतीरमणोपि ॥

देवकीनन्दनः । पुं । श्रीकृष्णे ॥ देवक्यानन्दनः पुत्रः ॥

देवकीसूनुः । पुं । श्रीकृष्णे ॥ देवक्याः सूनुः ॥

देवकुम्भा । स्त्री । महाद्रोणायाम् ॥

देवकुलम् । न । प्रासादे । देवस्य इति भाषा प्रसिद्धे आयतने ॥

देवकुल्या । स्त्री । सरिति ॥

देवकुसुमम् । न । लवङ्गे ॥ देवानां कुसुमम् ॥ कुसुमेषु देवश्रवा । राज० ॥ देवयोग्यं कुसुमं वा । मा० ॥

देवकूटम् । न । तीर्थविशेषे ॥

देवखातः । पुं । न । अकृत्रिमजलाशये ॥ देवेनखातः ॥ देवदारस्यजलाशये । देवसन्निधिस्थे नर्मस्तिद्वे सरसि ॥ स्त्री । न । गुहायाम् ॥

देवखातकम् । न । अखाते देवखाते ॥ देवे न खातम् । स्वा० कः ॥

देवखातबिलम् । न । गुहायाम् ॥

देवगन्धा । स्त्री । महामेदायाम् ॥

देवगर्भा । स्त्री । कङ्कालपीठाधिष्ठात्र्यां देवतायाम् ॥

देवगान्धारी । स्त्री । श्रीरागस्य भार्यायाम् ॥ यथा । गान्धारी देवगान्धारी मालवश्रीस्वसारवी । रामकीर्यपि रागिण्यःश्रीरागस्यप्रियाइमे ॥ अस्या गानसमयःशिशिरर्त्तौ तृतीयप्रहरः

वधिरात्र्यर्द्धपर्य्यन्तमिति गानविदः ॥

देवगायनः । पुं । गन्धर्व्वे ॥

देवगिरिः । पुं । भारतवर्षस्य शैलवि-
शेषे ॥

देवगिरी । स्त्री । रागिणीविशेषे ॥ सा
च सोमेश्वरमते वसन्तरागस्य भार्य्या
वसन्तर्त्तौ सर्व्वदा गेया । भरतमते
हिन्दोलरागपुत्त्रस्य नागध्वने र्भार्य्या
॥ सङ्गीतदर्पणमतेतु नटकल्याणस्य भा
र्य्या ॥ अस्याः स्वरूपं यथा । अंसाभि
रामतनुः उत्तुङ्गपीनस्तनी चारुरु
क्मभूषणा स्त्रीपङ्क्तिमध्यस्था मत्त
चकोरनयना शुभकम्बुग्रीवा । अस्या
गानसमयो हेमन्ते दिवाचतुर्थप्रह
रावधिरात्र्यर्द्धपर्य्यन्तम् ॥

देवगुरुः । पुं । सुराचार्य्ये ॥ देवानांगुरुः ॥

देवगुह्यम् । न । मरणे ॥ तद्धि प्राणि
नां वैराग्योदयाय देवैर्गोप्यते ॥

देवगृहम् । न । देवालये ॥ सूर्य्यचन्द्रा
दीनां ज्योतिर्मण्डलेषु ॥

देवचिकित्सकौ । पुं । अश्विनीकुमा
रौ ॥ इति हलायुधः ॥

देवच्छन्दः । पुं । शतयष्टिहारे ॥ देवै
श्छन्द्यते । छदि० । घञ् ॥

देवजग्धम् । न । देवजग्धके ॥

देवजग्धकम् । न । कत्तृणे ॥ देवैरद्यते
स्म । अद० । क्तः । अदो जग्धिर्ल्यप्ति



किति ॥

देवजनविद्या । स्त्री । गन्धयुक्तिनृत्यगी
तवाद्यशिल्पादिविधानेषु ॥

देवटः । त्रि । शिल्पिनि ॥ दीव्यति । दि
वु० । शकादिभ्योऽटन् ॥

देवटी । स्त्री । गङ्गाविष्ण्याम् ॥

देवतरुः । पुं । मन्दारादिवृक्षेषु ॥ प-
ञ्चैते देवतरवो मन्दारः पारिजात
कः । सन्तानः कल्पवृक्षश्च पुंसि वा ह
रिचन्दनम् ॥ देवानां तरुः ॥ चैत्य
वृक्षे ॥

देवता । स्त्री । अमरे । सुरे ॥ देवएव
। स्वार्थे तल् ॥ विष्ण्वादिप्रतिमाया
म् ॥ त्यज्यमानद्रव्ये उद्देश्यविशेषे ॥
॥ मन्त्रस्तुत्यायाम् ॥ तस्याः सङ्ख्या
यथा । सदाराविबुधाः सर्व्वेस्वासां स्वा
नांगणैःसह । त्रैलोक्ये तत्र्यस्त्रिंश
त्कोटिसंख्या यथाभवेति पाद्मोत्तर
खण्डम् ॥

देवताडः । पुं । वह्निकेये । राहौ ॥
जीमूते । खराषाम् । देताडा इति
गौडभाषा प्रसिद्धे वृक्षे ॥ अग्नौ ॥
देव मिन्द्रियं ताडयति । तडआघा-
ते । कर्म्मण्यण् ॥

देवताडकः । पुं । देवताडे ॥ स्वार्थेकः ॥

देवताधिपः । पुं । इन्द्रे ॥

देवत्वम् । न । देवभूये । देवसायुज्ये ॥

देवस्वभावः कर्मधा । तत्स्वभावत्व-
तत्तौ ॥

देवदण्डा । स्त्री । नागबलायाम् ॥

देवदत्तः । पुं । अर्जुनशङ्खे ॥ बुद्धानुजे ॥ जृम्भणकरे वायुविशेषे ॥ विष्णुमध्ये देवदत्तः शुद्धस्फटिकसन्निभः ॥ देवाएनं देयासुः ॥ क्तिच्क्तौ च संज्ञायामिति क्तिच्प्रत्ययः । देवदत्तोऽस्तीति प्रयोगे च ॥ विना त्वधातुके ॥ देवायदत्तः । ग्रामविशेषे ॥

देवदत्ताग्रजः । पुं । बुद्धे । शाक्यमुनौ ॥

देवदानी । स्त्री । कलिकोशातक्याम् ॥

देवदारु । न । स्वनामप्रसिद्धे वृक्षविशेषे । भद्रदारुणि । पूतिकाष्ठे ॥ देवद्रुदारु ॥ देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च । विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित् ॥ प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत् ॥ पुं । यथा । अमुं पुरः पश्यसि देवदारुमिति रघुः ॥

देवदालिका । स्त्री । महाकाली ॥

देवदाली । स्त्री । लताविशेषे । जीमूतके । कर्कटफलायाम् । घघरबेल इति सोनैया इति च भाषा ॥ देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः । नाशयेद्वामनी तिक्ता चयक्षयकृमिज्वरान् ॥ देवदालीफलं तिक्तं कृमिश्लेष्मविनाशनम् । स्रंसनं गुल्मशूलघ्नं मर्शोघ्नं वातजित्परम् ॥ * ॥ देवदालीदलं सक्षेऽस्विन्नं खण्डितं भृशम् । येसवाग्युतं साज्यं भर्जितं विघ्नुना दृढम् ॥ पीनापरासरस्यार्श विषमगिरनाशिनी ॥ इत्य पराऽदेवदाली ॥

देवदासी । स्त्री । वनवीजपूरे ॥ वेश्यायाम् ॥

देवदीपः । पुं । लोचने ॥

देवदुन्दुभिः । पुं । गन्धपर्णासे । रक्तसुलस्याम् ॥ देवानां दुन्दुभिर्वाद्ये ॥

देवदूती । स्त्री । अप्सरायाम् । वनवीजपूरके ॥

देवदेवः । पुं । शिवे । महेश्वरे ॥ ब्रह्मणि ॥ देवानां देवेषु वा देवः ॥

देवदेवाधिपः । पुं । नेमिजिने ॥

देवद्रोणी । स्त्री । देवयात्रायाम् ॥

देवद्रुह् । त्रि । देवपूजके ॥ देवान् भजति । सर्पेषु । सत्सूद्विषादिना किन् । भिष्विग्देवयोरित्याद्यादेशः ॥

देवधनम् । न । देवस्वे ॥

देवधान्यम् । न । जूर्णाह्वये । येनले । बीजपुष्पिकायाम् । जुन्हरी इति जुनार इति च भाषा ॥

देवधूपः । पुं । गुग्गुलौ ॥ राले ॥

देवनः । पुं । पाशके ॥ दीव्यतेऽनेन-

। दिवु० । भावकरणादौ ल्युट् ॥ न ॥ व्यवहारे ॥ विजिगीषायाम् ॥ क्रीडायाम् ॥ क्रीडोद्याने ॥ पणे ॥ द्यूते ॥
देवनदी । स्त्री । गङ्गायाम् ॥ यमुनायाम् ॥
देवनन्दी । पुं । इन्द्रद्वारपाले ॥
देवनलः । पुं । नलोत्तमे । महानले ॥
देवना । स्त्री । क्रीडायाम् ॥ सेवायाम् ॥
देवनालः । पुं । स्थूलदण्डे । देवनले ॥
देवनिर्मिता । स्त्री । गुडूच्याम् ॥
देवपतिः । पुं । इन्द्रे ॥
देवपत्नी । स्त्री । मध्वालुके ॥ देवभार्यायाम् ॥
देवपथः । पुं । सुरवर्त्मनि । छायापथे ॥ सोमधारायाम् ॥ देवैरर्षिरादिभि र्गम्यत इत्वेनाधिकृते । पन्थाश्चितः पन्या देवपथ इत्युच्यते ॥ देवानां पन्थाः । ऋक्पूर्व्विति ॥ न । तीर्थविशेषे ॥
देवपरः । त्रि । मूर्खे ॥ यज्ञविघ्ने ॥ देवाः परा उत्कृष्टा अस्य ॥
देवपर्णम् । न । सुरपर्णे ॥
देवपुत्रिका । स्त्री । एलायाम् ॥
देवपुत्री । स्त्री । देवकन्यायाम् ॥ एलायाम् ॥
देवपूः । स्त्री । अमरावत्याम् ॥
देवपुरी । स्त्री । अमरावत्याम् ॥ देवानां पुरी ॥

देवपुरोधाः । पुं । बृहस्पतौ ॥
देवप्रश्नः । पुं । उपश्रुतौ । ग्रहनक्षत्रादिघटितजिज्ञासायाम् ॥
देवप्रियः । पुं । पीतभृङ्गराजे ॥ बकपुष्पे ॥
देवभाषा । स्त्री । गीर्वाणभाषायाम् ॥ स[illegible]स्याम् ॥
देववल्लभः । पुं । पुन्नागवृक्षे ॥
देवब्रह्मा । पुं । नारदमुनौ ॥
देवब्राह्मणः । पुं । देवपूजकेब्राह्मणे ॥ शा० मध्यमपदलोपः ॥
देवभवनम् । न । बोधिद्रुमे । अश्वत्थे ॥ नाके । स्वर्गे ॥ देवानां भवनम् ॥
देवभूः । पुं । देवे ॥ स्वर्गे ॥
देवभूतिः । स्त्री । मन्दाकिन्याम् ॥ सुरैश्वर्ये ॥
देवभूयम् । न । देवत्वे । देवसायुज्ये ॥ देवस्य भावः । भुवोभावइतिक्यप् ॥
देवमणिः । पुं । भर्गे । हरे । शिवे ॥ अश्वकण्ठावर्त्ते । अश्वरोमावर्त्ते ॥ आवर्त्तोरोमजोदेवमणिस्येपनिगद्यते ॥ विष्णुवक्षोमणौ । कौस्तुभे ॥ महामेदायाम् ॥
देवमाता । स्त्री । अदित्याम् ॥ देवानां माता ॥
देवमातृकः । पुं । वृष्ट्यम्बुसम्पन्नव्रीहिपालिते देशे ॥ देवो माताऽस्य

। नश्वृमघ्वेतिकप् ॥

देवमानकः । पुं । कौस्तुभमणौ ॥

देवमासः । पुं । गर्भाष्टमे । गर्भस्याष्टमे मासि ॥ मनुष्यमानेनत्रिंशद्वर्षात्मके देवानांमासे ॥

देवयजनम् । न । यज्ञभूमौ ॥ ल्युटचे ॥ देवा इज्यन्ते यस्मिन् ॥

देवयजिः । पुं । देवपूजके । मुनौ ॥

देवयज्ञः । पुं । होमे । देवोद्देश्यक यागे ॥

देवयाजी । त्रि । कामनापुरस्सरं देवान् यजमाने । यःफलकाम नयादेवान्‌यजते सः ॥ देवयाजिभ्य आत्मयाजीश्रेयान् ॥

देवयाचा । स्त्री । देवशीघ्रगाम् । देवगमने ॥ देवोल्लपादौ ॥

देवयानः । पुं । न । विद्याप्राप्तोमार्गविशेषे । तत्त्वरत्यंविदुरितिश्रुतिः तथा प्रतिपत्तव्योपाय ॥ न । देवरथे । देवविमाने ॥

देवयानी । स्त्री । शुक्राचार्यस्यपुत्र्याम् । ययातेर्ज्येष्ठपत्न्याम् ॥

देवयुः । त्रि । धार्मिके ॥ लोकयात्रिके ॥ पुं । देवे ॥ देवान् याति । यापापणे । म०कुः ॥

देवयोनिः । पुं । विद्याधरादिषु ॥ तेषदश । यथा । विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः । पिशाचो गुह्यकः सिद्धो भूतोऽमीदेवयोनयः ॥ देवोयोनिः उत्पत्तिस्थानंयस्यसः इत्यर्थः ॥

देवरः । पुं । देवरि । पतिभ्रातरि ॥ देवते । देवृदेवने । अर्त्तिकमिभ्रमीत्यरविस् ॥ पश्चुःकनिष्ठभ्रातरि ॥ पतिस्वामी । ज्येष्ठस्तुनभ्रुरस्येतिस्मृत्यादयः ॥ पतिर्ज्येष्ठभ्राताज्येष्ठे पतिदेवरतातुजे । इतरेषुसपिण्डास्यौपितृव्यपितरं मतम् ॥

देवरथः । पुं । पुष्पकादौदेवानांविमाने ॥

देवराजः । पुं । इन्द्रे ॥ मरुत्पतिः ॥ देवानांराजा । राजाहःसखिभ्यष्टच् ॥

देवरातः । पुं । परीक्षिति । अभिमन्युसुते नृपतिविशेषे ॥

देवर्षिः । पुं । नारदादिषु ॥ देवाएवसन्तो ये मन्त्रदर्शित्वेन ऋषित्वंप्राप्ता स्तेदेवर्षयउच्यन्ते ॥ ससर्गोवाहरतोर्थेदेवे ॥

देवलः । पुं । मुन्यन्तरे । व्यासशिष्ये धौम्यर्षेर्ज्येष्ठभ्रातरि ॥ देवरे ॥ देवाजीवे ॥ धार्मिके ॥ सुरर्षौ ॥ दीव्यति । दिवु० । वृषा०कलः ॥ देवान् जीविकार्थंलाति आदत्ते । लाआदाने । आतोनुपेतिकः ॥

देवलकः। पुं। यस्तीर्थत्वेन प्रतिमापरिचारकः। पुजारी इति भाषा॥ चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा। विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः॥ देवकोशोपजीवी च नाम्ना देवलको भवेत्॥ स्मा०॥

देवलता। स्त्री। नवमल्लिकायाम्॥

देवलाङ्गुलिका। स्त्री। वृश्चिकाल्याम्॥

देवलोकः। पुं। स्वर्गे॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः। तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्तिता इति मत्स्यपुराणम्॥

देववक्त्रम्। क्ली। वह्नौ॥ देवानां वक्त्रम्॥

देववर्द्धकिः। पुं। विश्वकर्मणि॥

देववल्लभः। पुं। पुन्नागे। गुणैर्देवे सन्देपरा इति प्रसिद्धे॥ देवानां वल्लभः॥

देववित्। त्रि। देवताकाङ्क्षीये॥ ययैत्वं कल्पयति। अग्नीन्द्रादयो देवास्तत्फलदातारो नेश्वर इत्येति। यत्तत्कल्पनामात्रम्। अश्वमेधादिप्रयाजसमेध्य फलदातृत्वे तेषां भृत्येभ्यो विशेषाभावप्रसङ्गात्। स्वातन्त्र्येणोपकारकत्वे तदाराधनवैयर्थ्यात्। तद्भक्तानामपि विप्रतिपत्तिदर्शनात् तत्प्रसादस्याकिञ्चित्करत्वात्॥

देवविद्या। स्त्री। निरुक्ते॥

देववृक्षः। पुं। सप्तपर्णे॥ मन्दारादिदेवतरौ॥ गुग्गुलौ॥ देवानां वृक्षः॥

देवव्रतः। पुं। भीष्मपितामहे॥ भीष्मो हि पितरि शन्तनौ मृते स्वस्य राज्याधिकारसत्त्वेऽपि पितरं शन्तनुं प्रति नाहं राज्यं विवाहं वा करिष्यामि त्वं सत्यवतीं वृणु इति सत्यवतीविवाहसमये प्रतिज्ञातवान् विवाहं सत्यवतीज्येष्ठपुत्रमेव राज्येऽस्थापयामास। तादृशसत्यरूपस्य देवानां व्रतस्य परिपालनाद्देवव्रतनामा भवत् इति पुराणप्रसिद्धिः॥ देवानां व्रते॥

देवशेखरः। पुं। दमनके॥

देवश्रुतः। पुं। ईश्वरे॥ शास्त्रे॥ नारदे॥

देवश्रेणी। स्त्री। मूर्वायाम्॥

देवसखः। पुं। पर्वतान्तरे॥

देवसभा। स्त्री। सुधर्मायाम्॥ सभा न्यस्याम्। सभाराजेति निपातनाद्। देवानां सभा आस्थानगृहम्॥

देवसभ्यः। त्रि। क्रीडासंसक्ते। सभिके॥

देवसर्षपः। पुं। वृक्षविशेषे। अस्याचे। रक्तमूलके। सूक्ष्मदले॥ इ०रानि०॥

देवसहा। स्त्री। दण्डोत्पलौषधौ॥ भिक्षारूपे॥

देवसात्। अ। देवाधीने॥ देवदेये॥

देवसायुज्यम् । न । देवभूये । देवत्वे ॥ युनक्ति । युजिर्० । इगुपधेतिकः । युजेनसह । तेनसहेति बहुव्रीहिः । वोपसर्जनस्येति सहस्य सः ॥ यद्वा । योजनं युक् । सं० क्विप् ॥ सहयुजा सयुक् । सयुजस्य सयुजोवा भावः । ष्य० ष्यञ् । देवस्य सायुज्यम् ॥

देवसृष्टा । स्त्री । मद्ये ॥ इतिहेमचन्द्रः ॥ देवेन सृष्टा ॥

देवसेना । स्त्री । मातृकाविशेषे । इन्द्रस्य सुतायाम् । षष्ठ्याम् । स्कन्दस्य पत्न्याम् ॥ षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्त्तिता ॥ देवतानां सेनायाम् ॥

देवसेनापतिः । पुं । स्कन्दे ॥

देवस्वम् । न । यज्ञशीलानां धने ॥ यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥ प्रतिमादिदेवतार्थमुत्सृष्टधने ॥ देवानां स्वम् । ब्रह्मस्वञ्च गुरोर्द्रव्यं देवस्वञ्चहरेत्सुधः । कन्यां ददातियुक्तेन समेतो जायते सत इतिमहाभारते पञ्चमेतोपाख्यानम् ॥

देवहूः । पुं । वामकर्णे ॥ पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः ॥

देवहूतिः । स्त्री । स्वायम्भुवमनोः कन्यायाम् ॥ यथा । आकूतिः प्रथमा कन्या द्वितीया देवहूतिका । तृतीया च प्रसू

त्रिदिवख्याता लोकपाविनी ॥

देवह्रदः । पुं । तीर्थविशेषे ॥

देवा । स्त्री । चारट्यामोषधौ । मदन पर्ण्याम् ॥

देवागारिकः । त्रि । देवागारे नियुक्ते ॥ अगारान्ताट्ठन् ॥

देवाजीवः । त्रि । देवले । प्रतिमापरिचारके । पुजारीब्राह्मण इति भाषा ॥ देवमाजीवोऽस्य ॥

देवाजीवी । त्रि । देवले ॥ देवैराजीवितुंशीलमस्य । सुप्यजातौणिनिः ॥

देवाटः । पुं । हरिहरक्षेत्रे ॥ देवानामटनाच्चैवदेवाट इतिसंज्ञितम् ॥

देवात्मा । पुं । अश्वत्थवृक्षे ॥

देवानांप्रियः । पुं । छागे ॥ त्रि । मूर्खे ॥ मूर्खाहि देवानां प्रीतिं जनयन्ति देवपशुत्वात् ॥ षष्ठ्या अलुक् ॥

देवापिः । पुं । असुरविशेषे ॥ देवानाप्नोति । आप्लृ० । फलेग्रहिरात्मम्भरिश्चेतिचकारादिन् ॥ प्रतीपराजस्य पुत्रे ॥ ससुमेरुसमीपे कलापग्रामे योगीभूत्वा आस्ते । सकालो सुसंच क्षत्रवंशं पुनः सत्ययुगे भावयिष्यति ॥

देवाभीष्टा । स्त्री । ताम्बूल्याम् ॥

देवायतनम् । न । देवालये ॥ न देवायतनं गच्छेत् कदाचिदाऽप्रदक्षिण

म् । नपीडयेद्वा वस्त्राणि नदेवायतने ष्वपीतिकूर्मपुराणम् ॥

देवायुधम् । न । शक्रधनुषि ॥ देवानां मस्त्रे ॥

देवारातिः । पुं । दैत्ये ॥

देवार्यः । पुं । वर्द्धमानाख्ये ऽर्हद्भेदे ॥

देवार्हम् । न । सुपर्णे ॥ त्रि । देवयोग्ये ॥

देवार्हा । स्त्री । सप्तदेवीलतायाम् ॥

देवालयः । पुं । देवगृहे ॥ देवस्यालयः ॥ स्वर्गे ॥ देवानामालयः ॥

देवाला । स्त्री । रागिणीविशेषे ॥

देवावासः । पुं । अश्वत्थवृक्षे ॥

देवाश्वः । पुं । इन्द्राश्वे । उच्चैःश्रवसि ॥

देविका । स्त्री । सरिद्भेदे ॥ दीव्यति । दिवु० । ण्वुल् ॥ अर्द्धयोजनविस्तारां पञ्चयोजनमायताम् । एतावद्देविकामाहुर्देवर्षिपरिषेविताम् इति- पाद्मे भूमिखण्डम् ॥ धुस्तूरे ॥

देविलः । त्रि । धार्मिके ॥ अनुकम्पितो देवदत्तः । अनिलचैव ईलच्च ॥

देवी । स्त्री । कृताभिषेकायाम् । महिष्याम् ॥ नटोक्त्याभिषिक्तराजपत्न्याम् ॥ पृक्कायाम् ॥ मूर्वायाम् ॥ आदित्यभक्तायाम् ॥ लिङ्गिन्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ आखिपर्ण्याम् ॥ महाद्रोण्याम् ॥ पाठायाम् ॥ नागरमुस्तायाम् ॥ स्पृक्कायाम् ॥ हरीतक्याम् ॥ अतसाम् ॥ श्यामानामपक्षिजातौ ॥ दुर्गायाम् । पार्वत्याम् ॥ देव्याः पादोदकमाहात्म्यमुक्तं देवीभागवते । सकृत्कृत्वा महापूजां देवीपादजलंपिबन् । नमातुर्जननीगर्भे गच्छेदिति विनिश्चयः ॥ इति । दीव्यति यद्वा । देवयति सर्वान् ॥ प्रकृतिमिह व्युपदेशेनयथाधिकारं व्यवहारयति । दिवु० । पचादौ देवट् इति निपातनान्ङीप् ॥ सामान्यतो देवपत्न्याम् ॥ आह्वयवीमःमोपपदे ॥ देव्यन्ताश्विवियोमताः ॥ देव्यन्ताश्च स्त्रियः सर्वा दासान्ताः शूद्रयोनयः ॥

देवीकोटः । पुं । बाणपुरे ॥

देवीभक्तः । त्रि । शाक्ते ॥ यथा । अपराधं परंकृत्वा देवीभक्तस्य कोजनः । सुखं लभेत यद्यपि भवेत् पाताभिवःस्वयमितिभागवतम् ॥

देवृ । पुं । देवरे ॥ दीव्यति । दिवु० । दिवेर्ऋः । देवरो देवृः इत्यादि प्रयुक्तम् ॥

देवेज्यः । पुं । बृहस्पतौ ॥ देवानामीज्यः ॥

देवेशः । पुं । श्रीसदाशिवे ॥ देवानामिन्द्रादीनामीशोनियन्ता ॥ विष्णौ ॥

देवेशी । स्त्री । दुर्गायाम् ॥

देवेष्टः । पुं । गुग्गुलौ ॥ महामेदायाम्

। त्रि । देशवाञ्छिते ॥
देशेष्टा । स्त्री । वनवीजपूरके ॥
देवोद्यानम् । न । सुपर्वणां क्रीडाकाननेषु ॥ तानि च नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति चत्वारि देवोद्यानानि भवन्ति ॥ देवोद्यानानि वैभ्राजं मिश्रकं त्रिभकावणम् । चैत्ररथञ्चेति त्रिकाण्डशेषः ॥
देशः । पुं । भूगोलभागविशेषे । कुरुपञ्चालादिविषये । जनपदे । नीवृति ॥ स्थानमात्रे । सन्निधिः स्थानेऽनूपः साधारणश्चेति । एतन्मध्येपि देशेषु देशभेदाद्यनेकशः । कोटिशः सन्ति देशेषु एते मुख्याः प्रकीर्त्तिताः ॥ एतन्मध्ये षट्पञ्चाशन् मध्ये । एतेषां मध्यमाद्यादिदेशास्त्वर्थः ॥ दिशति । दिश० । घञ् ॥
देशकः । त्रि । शास्तरि ॥ इति हेमचन्द्रः ॥
देशकारी । स्त्री । रागिणीविशेषे ॥
देशपरिच्छिन्नः । त्रि । मूर्त्तत्वेन सर्वदेशावर्त्तिनि ॥
देशरूपम् । [illegible] । उचिते । समञ्जसे ॥ दिशप्रतिसर्जने । घञ् । देशोरूपमस्य । दिश्यमानस्योचितस्वरूपम् ॥ यद्वा देशनम् । घञ् । प्रशस्तं देशनं वा । प्रशंसायां रूपप् ॥
देशाखी । स्त्री । रागिणीविशेषे ॥



देशान्तरम् । न । सुमेरुलङ्कयोर्मध्यरेखास्वरूपदेशस्वदेशयोरन्तरयोजने ॥ देशान्तरपरिभाषायां वृद्धमनुः । प्राचीअपरविभक्ते गिरिर्व्यवधायकः । महानद्यन्तरं यत्र तद्देशान्तरमुच्यते ॥ देशनामनदीभेदान्निकटोऽपि भवेद्यदि । तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥ दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवेति वृहस्पतिः ॥ देशान्तरं वदन्त्येके षष्टियोजनमायतम् ॥ चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव चेति ॥
देशिकः । पुं । मूलमन्त्रप्रदे श्रीगुरौ ॥ यथा । अरक्षं भज मम जननी न पिता न सुता न सोदरा नान्ये । परमं शरणमिदमेव चरणं मम मूर्द्ध्नि देशिकान्यस्य मिथ्याचार्याः ॥ त्रि । पथिके ॥ देश्ये ॥
देशितः । त्रि । उपदिष्टे ॥
देशी । पुं । गानप्रकारे । कचिद्देशविशेषे गीयमाने ॥
देशिनी । स्त्री । तर्जन्याम् ॥
देशी । स्त्री । रागिणीविशेषे ॥
देश्यम् । न । पूर्वपक्षे ॥ त्रि । देशार्हे ॥
देष्णुः । त्रि । दातरि ॥ दुर्दमे ॥ ददाति । दुदाञ् ० । गादाभ्यामिष्णुच् ॥
देहः । पुं । न । काये । शरीरे ॥

खेन जाते ॥ दैवप्रमाणके । दैवप रे ॥ दिष्टंभागधेय मितिमस्ति यस्य । अस्तिनास्तिदिष्टंमतिरिति ठक् । मालक्ष्मे दैष्टिकतां न निषीदति पौरुषे ॥

दैहिकः । त्रि । देहसम्बन्धिनि ॥

दोःशिखरम् । न । स्कन्धे ॥

दोःसहस्रभृत् । पुं । कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

दोग्धा । पुं । अर्थोपजीविकवौ ॥ गोपाले ॥ वत्से ॥ त्रि । दोहनकर्त्तरि ॥

दोग्ध्री । स्त्री । गवि ॥

दोधः । पुं । गोवत्से ॥

दोधकः । पुं । दोधकवृत्ते ॥

दोधकवृत्तम् । न । त्रिष्टुप्छन्दःप्रभेदे ॥ यथा । भवितव्यं यदि कर्णसमेन पन्नगराजसुभापितलेनत् । पण्डितमण्डिकाङ्गचित्तं भामिनिभावय दोधकवृत्तम् ॥ यथा । फुल्लकदम्बसदनमालो निर्मलचन्द्रमयीकृचिजालः । एष उपैतघनाघनकालः पान्थवधूजनदर्शितकालः ॥

दोधूयमान. । त्रि । पुनःपुनरतिशयेन वाकम्पविशिष्टे ॥ यथेपिदोधूयमानाःपरमाधन स्तिष्ठन्तीशिशिरो मयि ॥

दोर । पुं । डोर इति भाषाप्रसिद्धे सूत्रे ॥

दोरकः । पुं । वीणातन्तुबन्धनरज्जौ ॥

दोर्गडुः । पुं । कुत्सितबाहौ । बाहुकुण्ठे ॥

दोर्ग्रहः । त्रि । प्रबले । बलवति ॥ भुजग्रहणे ॥ भुजस्य व्यथायाम् ।

दोर्दण्डः । पुं । बाहुरूपदण्डे ॥

दोर्मध्यम् । न । बाहुमध्यभागे । बाजू० इतिभाषा ॥

दोर्मूलम् । न । कक्षे । भुजकोटरे । काख० इति भाषा ॥

दोलः । पुं । दोलने ॥ श्रीकृष्णस्योत्सवविशेषे । झूला इतिभाषा ॥ दुल उत्क्षेपे । भावे घञ् ॥

दोलनम् । न । आन्दोलने । कम्पने ॥

दोला । स्त्री । शीत्याम् ॥ प्रेङ्खायाम् । डोली इतिभाषा ॥ स्थानादिषु श्रीडार्थं काष्ठादिरचिते हिन्दोले । हिंडोला इतिभाषा ॥ यन्त्रविशेषे । स्वेदने ॥ दोलति दोलयति, दोल्यतेवा । दुल० ॥ अच् घञ्वा ॥

दोलायमानः । त्रि । दोलनविशिष्टे ॥ यथा । दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्म न विद्यते इत्युत्कलखण्डः ॥

दोलायुद्धम् । न । अन्यतरजयपराजये ॥

रप्रमार्थारयाय प्रामाण्यमस्त्वेसतीति-
त्रिशेषयन्ति ॥ दुष्यति अनेनवा । दु
षवैकृत्य । अष् अकर्त्तरिचकारक
इत्येनकरणेघा घञ् ॥

दोषग्राही । त्रि । पुरोभागिनि । ख-
ले ॥ विहाय स्वर्पवदोषान् गुणान्
गृह्णाति साधवः । दोषग्राही गुण-
त्यागी चालनीवहि दुर्जनः ॥ दो-
षंगृह्णाति । ग्रह०'। णिनिः ॥

दोषज्ञः । त्रि । विपश्चिति । पण्डिते ॥
चिकित्सके ॥ दोषविषयकज्ञानयु
क्ते ॥ दोषंजानाति । ज्ञा० । आत
इतिकः ॥

दोषत्रयम् । न । वातपित्तकफेषु ॥

दोषवान् । त्रि । दुष्टे ॥

दोषा । अ । रात्रौ ॥ रात्रिमुखे ॥ दुष्य
त्यत्र । दुष० । बाहुलकात् आप्र
त्ययः ॥

दोषा । स्त्री । रात्रौ ॥ भुजे ॥ दाम्य-
त्यनेन । दम० । दमेर्डोसिः । आ
गुरित्येतेनटाप् ॥

दोषाकरः । पुं । चन्द्रे ॥ त्रि । दोषाणा-
माकरे ॥

दोषाक्लेशी । स्त्री । वनबर्बुरिकायाम्
॥ इतिराजनिर्घण्टः ॥

दोषातनः । त्रि । रात्रिभवे ॥ सायंचि
रमितिष्ठ्युः ॥

दोषातिलकः । पुं । प्रदीपे ॥

दोषास्यः । पुं । प्रदीपे ॥

दोषिकः । पुं । रोगे ॥

दोषी । त्रि । अपराधिनि । दोषयुक्ते ॥

दोषैकदृक् । त्रि । पुरोभागिनि । ख
ले ॥ दोष एवैकस्मिन् नतुगुणे दृ
क् ज्ञान मस्य ॥

दोस्थः । पुं । क्रीडायाम् ॥ क्रीडके ॥
सेवायाम् ॥ सेवके ॥ त्रि । दोःस्थिते ॥

दोहः । पुं । दोहनपात्रे ॥ दुग्धे ॥ दु
ग्धते ॥ दुहप्रपूरणे । कर्मणिघञ् ॥

दोहनम् । न । दुग्धे ॥

दोहडिका । स्त्री । भाषावृत्ते पञ्चटि
कापभेदे ॥ भाषाद्वयोदयमर्थयदि पू
र्वं लघुकपरिचिरामि । पठपुनरे-
कादश दोहडिकाद्विगुणेन ॥ प्राकृ
तेप्रचारः । यथा । राईदोहडिपठन
सुनि हाँसिओकाऩ्ह गोपाल । वृन्दा
वनघनकुञ्ज चलिओकमलरसाल
॥ अस्यार्थः । हेमातः दोहडिकापा
ठंश्रुत्वाकृष्णोगोपालो हसित्वा काम
पिरसालं चलितः कुत्र वृन्दावनघन
कुञ्जे. वृन्दावनस्य निबिडनिकुञ्जे ।
मात्रइतिक्वचित्पाठ स्तन्मतेन राधि
कायादोहडिकापाठं श्रुत्वा ॥ गुरुल
घुव्यत्ययेनबहुविधाभवति ॥

दोहदः । पुं । न । गर्भे ॥ गर्भिण्याम

भिलाषे । लालसायाम् ॥ गर्भिण्या स्तत्तदिच्छायां विशेषेण प्रयुज्यते । दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥ देयमप्यहितं तस्यै हिताय हितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव च ॥ चिह्ने । गर्भलक्षणे ॥ न । स्पृहायाम् ॥ दोहमाकर्षं ददाति । दा + क । इत्यमरभरतौ ॥ इति । ... ॥

दोहदलक्षणम् । न । वयःसन्धौ ॥ गर्भे ॥

दोहदवती । स्त्री । अन्नादिद्रव्यविशेषाभिलाषवती गर्भवत्याम् । अथ तस्या नियमा उच्यन्ते । तत्र गर्भिण्याः कर्त्तव्याकर्त्तव्यमुक्तं मत्स्यपुराणे । दित्यां गर्भमाधत्त कश्यपः प्राह तां पुनः । त्वया यत्नो विधातव्यो ह्यस्मिन् गर्भे वरानने ॥ संवत्सरशतं त्वेक मस्मिन्नेव तपोवने । सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्व्वदा । नोपस्करेषु निविशेन्मुषलोलूखलादिषु ॥ जलञ्च नावगाहेत शून्यागारञ्च वर्जयेत् । वल्मीकेषु न तिष्ठेत न चोद्विग्नमना भवेत् ॥ विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना । न शयालुः सदा तिष्ठेद् व्यायामञ्च विवर्जयेत् ॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् । वर्जयेत् कलहं लोकैर्गात्रभङ्गञ्च वर्जयेत् ॥ न मुक्तकेशा तिष्ठेत नाशुचिः स्यात् कदाचन । न शयीतोत्तरशिरा न चापरशिराः क्वचित् ॥ न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती । नामङ्गल्यां वदेद्वाचं न च हास्याधिका भवेत् ॥ कुर्य्याच्च गुरुशुश्रूषां नित्यं मङ्गलतत्परा । सर्व्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा । तिष्ठेत् प्रसन्नवदना भर्त्तुः प्रियहिते रता ॥ दानशीला तृतीयायां पार्व्वत्या नक्तमाचरेत् । इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ॥ यस्तु तस्या भवेत् पुत्रः शीलायुर्वृद्धिसंयुतः । अन्यथा गर्भपतनमवाप्नोति न संशयः ॥ तस्मात् त्वमनयावृत्त्या गर्भेऽस्मिन् यत्नमाचरेति ॥ दोहदो गर्भिण्यभिलाषोऽस्त्यस्याः । मतुप् । ङीप् ॥

दोहदान्विता । स्त्री । दोहदवत्याम् ॥

दोहदिनी । स्त्री । दोहदवत्याम् ॥ तास्वेव हृदयां नारी माहुर्दौहृदिनीं बुधाः ॥ दोहदोऽस्त्यस्याः । अत इनिः । ङीप् ॥

दोहनम् । न । स्तनाद्दुग्धनिःसारणे ॥

दोहनी । स्त्री । दोहनपात्रे । पार्य्याम् ॥

याम् । दोहदे ॥ दुर्जनत्वे ॥ दुर्हृदः
कर्मभावो वा । युञ् ॥
दौलेयः । पुं । कच्छपे ॥ दुल्या अपत्य
म् । इतश्चानिञ इति ढक् ॥
दौवारिकः । पुं । द्वाःस्थे । चोपधरे ॥
द्वारे नियुक्तः । सर्वनियुक्त इति ठक् ॥
दौवारिकी । स्त्री । प्रतीहार्याम् ॥
ङीप् ॥
दौष्कुलेयः । त्रि । दुष्कुलीने ॥ दुष्कुल
स्यापत्यम् । दुष्कुलाड्ढक् ॥
दौष्ठवम् । न । दुष्टुभावे ॥ [illegible] ॥
दौष्मन्तिः । पुं । भरतनृपे ॥ दुष्मन्तस्या
पत्यम् । अतइञ् ॥
दौहित्रः । पुं । कुतुपे ॥ दुहितुः सुते ॥
दुहितुरपत्यम् । अनन्तरापत्ये वि
दादिभ्योऽञ् ॥ न । श्राद्धे पवि
त्राणि दौहित्रं कुतप स्तिलाः । दौ
हित्रं खड्गमित्याहु स्तपस्यं दुहितु
स्तिलाः ॥ कपिलायाघृतञ्चैव दौहि
त्रमिति चोच्यते ॥ इति मार्कण्डेयपु० ॥
पौत्रदौहित्रयो र्लोके विशेषो ना
स्ति कश्चन । तयोर्हि मातापितरौ
सम्भूतौ तस्य देहतः इति दायभागः ॥
दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति
पौत्रवदिति मनुः ॥
द्य । भ्वा । हिंसायाम् । [illegible] ॥
[illegible]दपूर्वी ॥



द्यावाक्षमे । स्त्री । द्वि० । भूदिवोः । स्वर्ग
पृथिव्योः ॥ द्यौश्च क्षमा च । दिवो
द्यावा ॥
द्यावापृथिवीयम् । न । द्यावापृथिव्यो
र्हविरादौ ॥ द्यावापृथिव्यौ देवते
अस्य । द्यावापृथिवी त्याछिनाछः ॥
द्यावापृथिव्यम् । न । द्यावापृथिव्योर्ह
विरादौ ॥ द्यावापृथिव्यौ देवते अ
स्य । द्यावापृथिवी त्यत आद्युतः ॥
द्यावापृथिव्यौ । स्त्री । द्वि० । स्वर्गपृथिव्योः
॥ द्यौश्च पृथिवी च । दिवसश्च पृथिव्या
मिति चाद्दिवो द्यावा ॥
द्यावाभूमी । स्त्री । द्वि० । द्यावापृथिव्योः ॥
द्यौश्च भूमिश्च । दिवोद्यावेति, देवता
द्वन्द्वे द्यावादेशः ॥
द्युः । पुं । अग्नौ ॥ न । अह्नि ॥ गगने ॥
स्वर्गे ॥ अव्युत्पन्नप्रातिपदिकोयम् ॥
द्युगः । पुं । पक्षिणि ॥ इति राजनिर्घण्टः ॥
द्युगणः । पुं । अहर्गणे ॥
द्युत् । पुं । किरणे ॥ द्युत० । क्विप् ॥
द्युतिः । स्त्री । रश्मौ ॥ शोभायाम् ॥
प्रकाशे ॥ प्रभायाम् ॥ द्युतिरङ्गता
कान्तिरित्याद्यर्थः ॥ द्योतते । तदा
द्युतदीप्तौ । इगुपधादितीन् ॥
द्युतिकरः । पुं । ध्रुवे ॥ त्रि । शोभाकरे ॥
द्युतितम् । त्रि । दीप्तिविशिष्टे । द्यो
तिते ॥

द्युसत्

द्युतिमान् । त्रि । प्रशस्तकान्तिमति ॥

द्युती । स्त्री । शोभायाम् ॥ कृदिकारादितिङीष् ॥

द्युनम् । न । लग्नात्सप्तमराशौ ॥

द्युनिशम् । न । अहोरात्रे ॥ भवति किं द्युनिशं द्युनिशासिमाम् ॥

द्युनिवासी । पुं । देवे ॥

द्युपतिः । पुं । भानौ । हंसे ॥

द्युभ्वायतनम् । न । दिवोभुवश्चाश्रयें ब्रह्मणि ॥

द्युमणिः । पुं । हंसे । सूर्ये ॥ दिवो मणिरिव ॥ अर्कवृक्षे ॥ मणिरिति नाम ॥

द्युमयी । स्त्री । सूर्यभार्यायाम् । विश्वकर्मणःपुत्र्याम् ॥

द्युम्नम् । न । वित्ते । धने ॥ बले ॥ दिवमनति । म्नाभ्यासे । आतोनुपे तिकः ॥

द्युवा । पुं । मित्रे । सूर्ये ॥ द्यौति । द्यु अभिगमने । कनिन् युवृषितक्षिरा जीत्यादिना कनिन् ॥

द्युन्दः । पुं । अपवर्गे ॥

द्युषत् । पुं । देवे ॥ दिविसीदति वर्त्तते । षद्लृ० । सत्सूद्विषेति क्विप् । तत्पुरुषे कृतिबहुलमितिङेर्लुक् । सुषामादित्वात्षत्वम् ॥

द्युसत् । पुं । देवे ॥ दिविसीदति । स

द्यूतम्

त्सूद्विषेति क्विप् । पूर्ववदादिति पत्वन्तु न भवति । छन्दसी त्यनुवृत्तेः । तथाचमाघः । अनन्नुयेनद्युसदां न्यधीयतेति ॥

द्यूतः । पुं । न । अक्षादिक्रीडायाम् । कैतवे । अप्राणिकरणकखेलायाम् ॥ अप्राणिभिर्यत् क्रियते तल्लोकेद्यूत मुच्यते । जूआ इति भाषा ॥ द्यूते मे तत् पुराकल्पे दृष्टं वैरकरं महत् । तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ ✱॥ परवञ्चनस्य कर्त्तृ यां सम्बन्धि द्यूतमप्दिवनादिवञ्च सर्वस्वापहरणकरं भगवतो विभूतिः ॥ देवनम् । दिवु० । भावे क्तः ॥

द्यूतकरः ॥ त्रि । जुआरीइतिभाषाप्रसिद्धे । द्यूतकर्त्तरि । दुरोदरे धूर्त्ते । कितवे ॥

द्यूतकारः । त्रि । द्यूतकारयितरि । सभिके ॥ द्यूतंकारयति । डुकृञ्० । कर्मण्यण् ॥

द्यूतकारकः । त्रि । द्यूतकारे ॥ स्वार्थेकः ॥ कारयति । कृञ्० । ण्वुल् । द्यूतस्यकारको वा ॥

द्यूतकृत् । त्रि । अक्षधूर्त्ते । द्यूतकरे ॥ ॥ द्यूतंकरोति । डुकृञ्० । क्विप् । तुक् ॥

द्यूतपूर्णिमा । स्त्री । कोजागरपूर्णिमा-

याम् ॥

द्यूतपौर्णमी । स्त्री । कोजागरतिथौ ॥ इति भूरिप्रयोगः ॥

द्यूतप्रतिपत् । स्त्री । कार्त्तिकशुक्लप्रतिपदि । कौमुद्याम् ॥ तद्यथा कार्त्तिके तस्य शुक्ला या प्रतिपत्तिथिः । विष्णोर्दैत्या मही यत्र कौमुदी सा स्मृता बुधैः ॥ कुशब्देन मही ज्ञेया मुदा हर्षे ततः स्मृता । धातुज्ञैः सर्वथा शब्दैः सा च वै कौमुदी स्मृता ॥ इति प० पु० ॥ अत्र बलेर्दैत्यस्य पूजादिकं कार्य्यम् । इत्युक्तं वामनपुराणे ॥ शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम् । कार्त्तिके शुक्लपक्षे तु प्रथमेऽह्नि भूपते ॥ जितश्च शङ्कर स्तत्र जयं लेभे च पार्वती । अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता ॥ तस्माद् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः । तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ॥ पराजयो विरुद्धश्च लब्धनाशकरो भवेत् । इति ॥

द्यूतबीजम् । न । वराटके । कपर्द्दके ॥ द्यूतस्य कारणे ॥

द्यूतवृत्तिः । त्रि । सभिके ॥

द्यूनम् । न । जन्मात्सप्तमराशौ ॥ यथा । धीस्थानं पञ्चमं चेयं यामित्रं सप्तमं स्मृतम् । द्यूनं द्यूनं तथास्तास्थं पद



कोणांदिपुमन्दिरम् ॥ त्रि । क्षीणे ॥ अदेवीत् । दिवु० । क्तः । दिवोविजिगीषायामिति तस्य नः । यस्य विभाषेति नेट् । च्छोरित्यूठ् ॥

द्यौः । स्त्री । त्रिदशालये । स्वर्गे ॥ विष्णुपदवर्त्मनि । आकाशे ॥ द्योतन्ते देवा अस्याम् । द्युतदीप्तौ । बाहुलकाड्डोः ॥ द्युर्गीयत ॥

द्योतः । पुं । प्रकाशे । आतपे ॥ द्योतनम् । द्युतेर्घञ् ॥

द्योतनम् । न । दर्शने ॥ पुं । दीपे ॥ द्युतेर्ल्युट् ॥

द्योतितः । त्रि । दीप्ते ॥

द्योभूमिः । पुं । खगे । पक्षिणि ॥ द्योर्भूमिरस्य ॥

द्योषद् । पुं । देवे ॥

द्योषम् । न । ज्योतिषि ॥ दीव्यन्त्यस्मिन् । दिवु । दिवेर्गुर्ग्वेतिष्ठन् द्युरादेशो वृद्धिश्च ॥

द्रगडः । पुं । प्रतिवत्तूर्य्ये । दगड इति गौडभाषा प्रसिद्धे वाद्ये ॥ इ० चि० ॥

द्रङ्क्षणम् । न । तोलके । कोले । वटके । कर्षार्द्धे ॥ इति वैद्यकपरिभाषा ॥

द्रङ्गः । पुं । पुर्य्यामिति हेमचन्द्रः ॥

द्रढिमा । पुं । दृढतायाम् ॥ दृढस्य भावः । पृथ्वादिभ्य इमनिज्वा । रऋतो

भूम्यादेर्वेधो । टेर्वेध ॥

द्रढिष्ठः । त्रि । द्रढीयसि ॥ अयमनयो रेषां वा अतिशयेन दृढः । दृढन् ॥

द्रढीयः । त्रि । दृढतरे ॥

द्रप्सम् । न । घनेतरदधिनि । द्रप्सो ॥ दृप्यन्त्यनेन । दृपदर्पादौ । अनुदात्त स्येत्यम् । बाहुलकात्सः ॥

द्रप्स्यम् । न । द्रप्से ॥ दृप्यन्त्यनेन । दृप प्रमाणे । अघन्यादयश्चेति निपातितः ॥

द्रम्मः । पुं । पणानां षोडशके ॥ वराटकानां दशकद्वयं यत् सा काकिणी तास्च पण चतस्रः । ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः ॥

द्रवः । पुं । प्रद्रावे । पलायने ॥ नर्मणि ॥ रसे ॥ गतौ ॥ आसवे ॥ वेगे ॥ द्रवणम् द्रुगतौ । ऋदोरप् ॥ त्रि । द्रवयति ॥ आपोद्रवाः । सर्वाणि द्रवाणि जुहुयात् स्रुवेण जुहोतीत्यादि प्रयोगात् ॥

द्रवजः । पुं । गुडे ॥ त्रि । द्रवजातवस्तु मात्रे ॥

द्रवणम् । न । अनुताये ॥ क्षरणे ॥ गमने ॥ द्रु० । ल्युट् ॥

द्रवत्वम् । न । द्रवतायाम् । आद्यस्यन्दनासमवायिकारणे । तच्च पृथिवी जलतेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकनैमित्तिकभेदात् । तत्र सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् तेजसि सुवर्णादौ च ॥ तदुक्तम् । सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमुदाहृतम् । सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥ परमाणौ जले नित्यमन्यतोऽनित्यमुच्यते । नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु ॥ द्रवत्वं स्यन्दने हेतु र्निमित्तं संग्रहे तु तत् । इति भाषापरिच्छेदः ॥

द्रवन्ती । स्त्री । शम्बरीहक्षे ॥

द्रवरसम् । न । दुग्धदध्याज्यतक्रासवजलचौद्रतैलमूत्रादिद्रवीयेषु ॥

द्रवन्ती । स्त्री । निशाम् ॥ मूषिकपर्ण्याम् । शतमूलिकायाम् ॥ द्रवति । द्रु० । शतृ । उगितश्चेति ङीप् ॥ शिखरिणी प्रभेदे ॥ यथा । शुभ्रखण्डा युक्तं निर्नीरं द्विगुणं दधि । आम्रमध्वदेयं सैतन्मानं तुरीयं च्यूतम् ॥ एलामरिच पार्श्वे खण्डदुग्धे न गालितम् । कर्पूरमरिचैर्मिश्रं द्रवन्ती परिकीर्त्तिता ॥ द्रवन्ती मधुरा वृष्या बल्या पुष्टिकरी हिमा । वातपित्तहरा स्वादु किञ्चित्कफकरा हिता ॥

द्रवमूर्त्तिः । त्रि । द्रवद्रव्यकाठिन्ये ॥

श्येति यथा ॥

द्रव्यकः । त्रि । द्रव्यं हरति वहति आय-
त्तति वा । यस्तद्रव्यार्थ्योठन् कनावि-
म्याहरीयः कन् ॥

द्रव्यकल्कः । पुं । वैद्यशास्त्रप्रसिद्धेषु क-
ल्कादिपञ्चसु ॥ द्रव्यकल्कः पृथग्धा-
त्यात् कल्कचूर्णं रस स्तथा । तैल
मर्कः क्रमाज्ज्ञेयं यथोत्तरगुणं प्रिये॥

द्रव्यनिश्चयः । पुं । द्रव्याणां मेषाद्यधि
पतित्वानेन शुभाशुभनिर्णये ॥ त-
स्याद्विभागप्रदर्शनार्थमाह । ये
येषां द्रव्याणां अधिपतयो राशयः
समुद्दिष्टाः । मुनिभिः शुभाशुभार्थं
नामागमंस्तं प्रवक्ष्यामि ॥ १ ॥ वस्त्रा
विकक्षुपानां मसूरगोधूमरालक
यवानाम् । स्थलसम्भवौषधीनां क
नकस्य च कीर्तितो मेषः ॥ २ ॥ ग
विवस्त्रकुसुमगोधूमशालियवमहिष-
सुरभितनयाः स्युः । मिथुने पिधान्य
शारदवल्लीशालूककार्पासाः ॥ ३ ॥
कर्किणि कोद्रवकदलीदूर्वाफलक-
न्दपत्रचोचानि । सिंहे तुषधान्यर-
साः सिंहादीनां त्वचः सगुडाः ॥ ४ ॥
षष्ठे ऽतसीकलायाः कुलत्थगोधूम
मुद्गनिष्पावाः सप्तमराशौ माषा
यवगोधूमाः ससर्षपाश्चैव ॥ ५ ॥ अ
ष्टमराशाविक्षुःसैक्यं लोहान्यजावि



कञ्चापि । नवमे तु तुरगलवणाम्ब-
राश्वतिलधान्यमूलानि ॥ ६ ॥ मक
रे तरुगुल्माद्यं सैक्षवसुवर्णकृष्णा-
लोहानि । कुम्भे सलिलजफलकुसु
मरत्नचित्राणि रूपाणि ॥ ७ ॥ मीने
कपालसम्भवरत्नान्यम्बुद्रवाणि वज्रा
णि । स्नेहाश्च नैकरूपा व्याख्याता मत्स्य
जातश्च ॥ ८ ॥ एतेषां द्रव्याणां शुभा
शुभज्ञानार्थमाह । राशौ स्ततुदैशार्थ्या
यसप्तनवपञ्चमस्थितो ॥ १० । २ ।
११ । ७ । ९ । ५ । जीवः । श्वेकाद
शदश पञ्चाष्टमेषु २ । ११ । १० ।
५ । ८ । शशिजश्च वृद्धिकरः ॥ ९ ॥
षट्सप्तमगो ६ । ७ । हानिं वृद्धिं
शुक्रः करोति शेषेषु । उपचयसंस्थाः
३ । ६ । ११ । १० । क्रूराः शुभदाः शे
षेषु १ । २ । ४ । ५ । ७ । ८ । ९ ।
१२ । हानिकराः ॥ १० ॥ * ॥ अथै
तद्विशेषमाह । राशेर्यस्य क्रूराः पी-
डास्थानेषु संस्थिता बलिनः । तस्यो
क्तद्रव्याणां महार्घता दुर्लभत्वञ्च ॥
॥ ११ ॥ इष्टस्थाने सौम्या बलिनो
येषां भवन्ति राशीनाम् । तद्द्रव्या
णां वृद्धिः सामर्घ्यं सुलभत्वञ्च ॥ १२ ॥
गोचरपीडायामपि राशिर्बलिभिः
शुभग्रहैर्दृष्टः । पीडां न करोति
तथा क्रूरैरेवं विपर्ययः ॥ इति वारा

ख्याम् ३९ ऽध्यायः॥

द्रव्यमययज्ञः। पुं। ज्ञानविहीनेयज्ञे॥ द्रव्यमयः द्रव्योपलक्षितो ज्ञानशून्यो योयज्ञः ससंसारफलः॥

द्रव्ययज्ञः। त्रि। पूर्त्तेष्टसाध्यस्वार्त्तेक-ग्रैमपरे॥ द्रव्यत्यागएव यथाशास्त्रं यज्ञोयस्य॥

द्रष्टव्यः। त्रि। दृश्ये। दर्शनार्हे॥

द्रष्टा। त्रि। विचारकुशले॥ साक्षिचेतने॥ येतनोपिद्रष्टा भवति नाचेतनः॥ दृशेःकर्त्तरि। दृष्टिमति। आत्मनि॥ चक्षुर्जन्यमनोवृत्ति श्चिद्गुणरूपभासिका। दृष्टिरित्युच्यते-द्रष्टादृष्टेः कर्त्तेतिलौकिकैः॥ पश्यति। दृशिर्०। तृन्॥

द्रष्टृता। स्त्री। शब्दादिविषयप्रकाशतायाम्॥ भावे तल्॥

द्राक्। अ। द्रुते। शीघ्रे। झटित्यर्थे॥ ॥ द्राति। द्राकुत्सायांगतौ। वा०कः॥

द्राक्षा। स्त्री। मृद्वीकायाम्। गोस्तन्याम्। मनक्कादाख इतिभाषा॥ द्राक्षा माघे॥ द्राक्षा पक्वा सरा शीता च क्षुष्या वृंहिणी गुरुः। स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट्॥ कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा। हन्ति तृष्णाज्वरश्वासवातवातास्रकामलान्॥ कृच्छ्रास्रपित्तसमोहदाहशोषमदात्ययान्। आमा साऽल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत्॥ वृष्या स्याद्गोस्तनीद्राक्षा गुर्वी च कफपित्तनुत्। अबीजान्यास्वल्पतरा गोस्तनीसदृशी गुणैः॥ द्राक्षा पर्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत्। द्राक्षापर्वतजा यादृक् तादृशी करमर्द्दिकेतिभावप्रकाशः॥ द्राक्षायाः फलम्। हरीतक्यादिभ्यश्चेतिविकारावयवप्रत्ययस्यलुप्॥ यद्वा। द्राङ्क्ष्यते। द्राक्षिकाङ्क्षायाम्। घर्मेखि घञ्। आगमशास्त्रमनित्यम्॥ यद्वा। गुरोश्चहलइत्यप्रत्ययः। यवादिगणपाठान्नलोपः। अतएव द्राक्षामान् इत्यमतोर्वत्वं न भवति। अयवादिभ्यइत्युक्तेः॥

द्राक्षासवः। पुं। माध्व्याम्॥ यथा। पीत्वा द्राक्षासवं मिष्टं सूक्ष्म मादायसस्वरमिति॥

द्राघिमा। पुं। दीर्घत्वे। दैर्घ्ये॥ दीर्घस्यभावः। पृथ्० इमनिच्। प्रियस्थिरेत्यादिनादीर्घस्यद्राघादेशः॥

द्राघिष्ठः। त्रि। दीर्घतमे। अतिदीर्घे॥ अतिशयेन दीर्घः। इष्ठन्। प्रियस्थिरेतिसाधुः॥

द्राघीयान्। त्रि। दीर्घतरे॥ अयमनयो रतिशयेन दीर्घः। ईयसुन्। प्रि

यस्मिरेति साधुः ॥

द्राणः । त्रि । सुप्ते ॥ पलायिते ॥ द्रातेः कर्म्मणि क्तः ॥

द्रापः । पुं । पङ्के ॥ आकाशे ॥ कपर्द्दिनि॥ मूर्खे ॥ इतिशब्दार्थकल्पतरुः ॥

द्रामिलः । पुं । चाणक्यमुनौ ॥ इति हेमचन्द्रः ॥

द्रावः । पुं । गमने ॥ क्षरणे ॥ अनुतापे ॥ द्रवणम् । द्रुगतौ । घञ् ॥

द्रावकः । पुं । ग्रावप्रभेदे । चन्द्रकान्तमणौ ॥ विदग्धे ॥ चोरके ॥ विटे । पिङ्गे ॥ रसभेदे ॥ न । सिक्थके ॥ [illegible] हरोगस्यौषधे ॥ त्रि । हृदयग्राहिणि ॥ द्रवकारके ॥

द्रावककन्दः । पुं । तैलकन्दे ॥

द्रावकरम् । न । श्वेतटङ्कणे ॥

द्रावणम् । न । कतकफले । निर्म्मली इतिभाषा ॥ विद्रावणे ॥ पुं । कामवाणविशेषे ॥

द्राविका । स्त्री । लालायाम् । लाल इतिभाषा ॥

द्राविडः । पुं । द्रविडदेशजे ॥ संख्यान्तरे ॥ वेधमुख्ये । कर्पूरे ॥ स्वनामप्रसिद्धे देशे ॥ द्राविडाः पञ्च । तैलङ्गा । कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः । आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः इतिस्कन्दपुराणम् ॥ त्रि । तद्देशजाते ॥ द्रविडेभ्यः । अण् ॥



द्राविडकः । पुं । द्राविडार्थे ॥ वेधमुख्यके । शिआंचषठी इतिगौड़भाषा । कचूर इतिभाषा ॥ न । विडुलवणे ॥ स्वार्थेकन् ॥

द्राविडभूतिकः । पुं । वेधमुख्ये । काल्पके । कचूर इतिप्रसिद्धे ॥

द्राविडी । स्त्री । सूक्ष्मैलायाम् ॥ द्रविडेजाता । अण् । ङीप् ॥

द्रावितः । त्रि । द्रवीकृते ॥

द्राव्यः । त्रि । अवश्यद्रुगमनीये क्षरणीये अनुतपनीये ॥

द्रिमीतीर्थम् । न । भौमेतीर्थप्रभेदे ॥

द्रुः । पुं । पादपे । वृक्षे ॥ द्रवत्यूर्द्ध्वम् । द्रुगतौ । मित० द्रुः ॥ वा० कुर्वी ॥ स्त्री । गतौ ॥ शाखायाम् ॥

द्रुकिलिमम् । न । देवदारुवृक्षे ॥ किलति । किलश्वैत्यक्रीडनयोः । वाहुलकात् किमच् । द्रुष्वासौकिलिमश्च ॥

द्रुघणः । पुं । मुद्गरे ॥ लौहमुद्गरे । कुचघारादीनां मुद्गराकारे लौहमयास्त्रभेदे ॥ द्रुहिणे । ब्रह्मणि ॥ परशुवधे ॥ भूमिचम्पके ॥ द्रुः संसारवृक्षोवा हन्यतेऽनेन । करणेऽषोविद्रुप्वितिहन्तेः करणेऽप् घनादेश-

स्त्री ॥ वृक्षाग्रे ॥

द्रुमश्रेष्ठः । पुं । तालवृक्षे ॥

द्रुमामयः । पुं । लाक्षायाम् ॥

द्रुमारिः । पुं । गजे । हस्तिनि ॥

द्रुमाश्रयः । पुं । सरटे ॥ त्रि । वृक्षाश्रितमात्र ॥

द्रुमिणी । स्त्री । द्रुमाणां समूहे ॥ खलादिभ्य इनिर्वक्तव्यः ॥

द्रुमेश्वरः । पुं । चन्द्रमसि ॥ इतिहरिवंशः ॥ तालतरौ ॥ इतिशब्दार्थकल्पतरुः ॥

द्रुमोत्पलः । पुं । कर्णिकारे । काठचम्पा इतिभाषा ॥ द्रुमे उत्पलं तदाकारं पुष्पमस्य ॥

द्रुवयम् । न । पात्रे । पौतवे । मानार्थं परिमाणे ॥ द्रोर्विकारभूतं प्रस्थादिपरिमाणम् । मानेवयः ॥

द्रुसल्लकः । पुं । पियाले ॥

द्रुषः । पुं । पुषे ॥ इति शब्दार्थकल्पतरुः ॥

द्रुह्यः । पुं । ब्रह्मणि । सुरज्येष्ठे ॥ इति द्विरूपकोषः ॥

द्रुहिणः । पुं । स्रष्टरि । प्रजापतौ । ब्रह्मणि ॥ कामक्रोधादिभ्योदुष्टेभ्यो वा द्रुह्यति । द्रुहजिघांसायाम् । वहुलमन्यत्रापीति इनन् । धातुस्वकाद् गुणाभावः ॥

द्रुही । स्त्री । दुहितरि ॥ इतिशब्दार्थकल्पतरुः ॥

द्रूः । पुं । हिरण्ये । स्वर्णे ॥ द्रवति । द्रुगतौ । क्विब्वचीति क्विब्दीर्घौ ॥

द्रूघणः । पुं । द्रुघणे ॥ इतिद्विरूपकोषः ॥

द्रूणः । पुं । द्रुणे ॥ इतिशब्दार्थकल्पतरुः ॥

द्रेकः । पुं । द्रेक्काणे ॥

द्रेक्काणः । पुं । लग्नविभागे ॥

द्रेक्काणाधिपः । पुं । लग्नविभागाधीशे ॥ स्वपञ्चनवमानां ये राशीनामधिपा ग्रहाः । ते द्रेक्काणाधिपा राशौ द्रेक्काणा स्त्रय एवहि ॥

द्रोणः । पुं । द्रोणाचार्ये । पार्थगुरौ । पुराणप्रसिद्धे धनुर्विद्यासम्प्रदायप्रवर्त्तकाचार्यविशेषे ॥ द्रोणकाके ॥ वृश्चिके ॥ पर्वतविशेषे ॥ चतुः शतधनुष्परिमिते जलाशये ॥ मेघनायकविशेषे ॥ यथा । विघुते आकर्षेतु चतुर्भिःशोषितःक्रमात् । आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥ आवर्त्तो निर्जलोमेघः संवर्त्तश्चबहूदकः । पुष्करोदुष्करजलो द्रोणःसस्यप्रपूरकः ॥ श्वेतवर्णक्षुद्रपुष्पवृक्षविशेषे । घलघसियाइति कलकसियाइतिचगौडभाषा ॥ पुं । न । आढकपरिमाणे ॥ आढकाय चतुष्ट

ये । आढकचतुष्टये ॥ ३२ सेर इति लौकिकमाने । घटे । कलसे । उन्माने । इति वै० प० ॥ खार्य्याःषोडशांशे ॥ द्रोणस्तु खार्य्याः खलु षोडशांशः । इति ली० ॥ अष्टाढको भवेद्द्रोणो वा इति केचित् ॥ द्विशतंद्रोण इति कल्लूकभट्टः ॥ द्रुणति । द्रुण० । पचाद्यच् ॥ द्रवति । द्रु० । हृत्सृसिद्रुपन्यनिस्वपिभ्यो नित् इति नः ॥

द्रोणकाकः । पुं । वनकाके । कृष्णकाके ॥ द्रोणाख्यःकाकः ॥

द्रोणक्षीरा । स्त्री । द्रोणदुघायांगवि ॥ द्रोणपरिमितं क्षीरं यस्याः ॥

द्रोणगन्धिका । स्त्री । रास्नायाम् ॥

द्रोणघा । स्त्री । द्रोणक्षीरायाम् ॥

द्रोणदुग्धा । स्त्री । } द्रोणक्षीरायाम् ॥
द्रोणदुग्धिका । स्त्री । }

द्रोणदुघा । स्त्री । द्रोणमितदुग्धायां गवि । द्रोणक्षीरायाम् ॥ द्रोणं दोग्धि । दुह० । दुहःकप्घश्चेति कप् घश्चान्तादेशः ॥

द्रोणपर्णी । स्त्री । भूमिकन्दल्याम् ॥

द्रोणपुष्पी । स्त्री । गुम्मा इति ख्याते क्षुपे । कुम्भयोनौ । स्वर्णपत्रायाम् ॥ द्रोणपुष्पी गुरुः स्वादू रूक्षोष्णा वातपित्तकृत् । सक्षारलवणा स्वादुपाका कट्वी च भेदिनी ॥ कफामका-



मलाशोथतमकश्वासजन्तुजित् ॥ घलघसिया इति गौडेषु प्रसिद्धेगोशीर्षकक्षुपे ॥ कफार्शः कामलाकृमिशोथनाशित्वमिष्यस्याः गुणाः ॥

द्रोणपुष्पीदलम् । न । गुम्माख्यशाके ॥ द्रोणपुष्पीदलं स्वादु रूक्षं गुरुच पित्तकृत् । भेदनं कामलाशोथमेहज्वरहरं कटु ॥

द्रोणमाना । स्त्री । द्रोणदुघायाम् ॥

द्रोणमुखम् । न । चतु. शतग्राममध्ये-मनोहरग्रामे ॥ इति शारावली ॥

द्रोणा । स्त्री । द्रोणपुष्पिकायाम् ॥

द्रोणाचार्य्यः । पुं । भारद्वाजे । कीर्त्तिभाजि । अश्वत्थामःपितरि । कृपीपतौ । पाण्डवानामस्त्रविद्यागुरौ ॥ द्रोणश्चासावाचार्य्यश्च ॥

द्रोणिः । स्त्री । द्रोण्याम् ॥ द्रवति । द्रुग तौ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो-नित् इति निः ॥

द्रोणिका । स्त्री । नीलीवृक्षे ॥

द्रोणी । स्त्री । देशविशेषे ॥ शैलानामन्तरे द्रोण्यः सिद्धचारणसेविताः ॥ काष्ठाम्बुवाहिन्याम् । काष्ठादिकृतजलवाहनौकाकृत्यम्बुसेचन्याम् ॥ गवादन्याम् ॥ नौकाप्रभेदे ॥ शैलविशेषे ॥ नीलीवृक्षे ॥ नदीविशेषे ॥ शैलयोः सन्धौ ॥ इन्द्रचिर्भिट्याम्-

॥ द्रोणीप्रवहे ॥ द्विशूर्पपरिमाणे । द्रोणद्वयम् । १२८ सेर इति भाषा । इति. वै प० ॥ काष्ठरचितस्नानपात्रे ॥ यथा । ह्रीवेरपद्मकोशीरचन्दना-म्बुप्रपूरिता । सम्पूर्णामवगाह्येतद्द्रोणीं दाहार्दितो नरः इति ॥ निम्नत्व यान्ताद्द्रवतेः कृदिकारादक्तिन इति ङीष् । गौरादित्वाद्वा ॥

द्रोणीदलः । पुं । केतकीपुष्पे ॥

द्रोणीमुखम् । क्ली । द्रोणमुखे ॥ इति भूरिप्रयोगः ॥

द्रोणीलवणम् । क्ली । उपकर्णाटदेशप्रसिद्धे लवणविशेषे । चिकूटलवणे । साम्भिभवे ॥

द्रोमिलः । पुं । चाणक्यमुनौ । अंगुले ॥

द्रोहः । पुं । जिघांसायाम् । अनिष्टचिन्तने । अपक्रियायाम् ॥ देवद्रोहाद्गुरोर्द्रोहः कोटिकोटिगुणाधिकः इति कूर्मपुराणम् ॥ परजिघांसया शस्त्रग्रहणादौ ॥ छद्मवधे ॥ हिंसा तु द्रोहजन्या परे तु हिंसामेव द्रोहं मन्यन्ते ॥

द्रोहचिन्तनम् । क्ली । परानिष्टविभावने । व्यापादे ॥ द्रोहस्य चिन्तनम् । ल्युट् चेति भावे ल्युट् ॥

द्रोहाटः । पुं । गाथाप्रभेदे ॥ मृगलुब्धके ॥ वैडालव्रतिके ॥ इति मेदिनी ॥

द्रोही । त्रि । द्रोहके । परानिष्टचिन्तके ॥

द्रौणायनः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । फक् । द्रोणपर्वतेति सूत्रे अनादिरिति द्रोणस्य फकि भारतप्रसिद्धे ऽनन्तरापत्ये ऽश्वत्थाम्नि द्रौणायन इति प्रयोगस्तु पचाराद्बोध्यः ॥

द्रौणिः । पुं । अश्वत्थाम्नि ॥ द्रोणस्यापत्यम् । अत इञ् ॥ एकोनविंशसमासे द्रौणि व्यासो भविष्यति ॥

द्रौणिकः । पुं । कटाहे ॥ द्रोणं स्वस्मिन् समावेशयतीत्यर्थात् ॥ त्रि । द्रोणवापक्षेत्रे । द्रोणपरिमितव्रीह्यादिवापयोग्यक्षेत्रे ॥ द्रोणस्य वापः । तस्य वाप इति ठञ् ॥ त्रि । द्रोणम् पचति । सम्भवत्यवहरति पचति इति ठञ् ॥ द्रोणेन क्रीते ॥ निष्कादित्वाट्ठञ् ॥

द्रौपदी । स्त्री । कृष्णायाम् । विश्वमोचनायाम् । पाञ्चाल्याम् । याज्ञसेन्याम् । पाण्डवानां स्त्रियाम् ॥ अस्याः पञ्चस्वामित्वे हेतुर्ब्रह्मवैवर्त्ते यथा । राजा ददौ फाल्गुनाय कन्यायाश्च स्वयंवरे । पप्रच्छ मातरं वीरो वस्तु प्राप्तं मयाधुना ॥ तमुवाच स्वयं माता युक्ताश्चात्रभिः सह । ग्रभीगैरेणपूर्वञ्च परपमात् दात्तया ॥ द्रौपद्याः स्वामिनस्तेन हेतुना पञ्चपा-

ण्डवा इति ॥ द्रुपदस्यापत्यं स्त्री । अण् । ङीप् ॥

द्रौपदेयः । पुं । प्रतिविन्ध्यादिपञ्चसु द्रौपदीतनयेषु ॥ द्रौपद्याः अपत्यम् पुमान् । स्त्री भ्योढक् ॥

द्वन्द्वः । पुं । रोगविशेषे ॥ उभयपदार्थप्रधाने समासे । अव्ययीभावतत्पुरुषबहुव्रीहिसमासभेदानामुभयपदार्थसाम्याभावेनापकृष्टत्वात् द्वन्द्वसमासो भगवद्विभूतिः ॥ सद्विधा । इतरेतरयोगसमाहारभेदात् ॥ परस्परविरुद्धे सम्मानावमानादौ । शीतोष्णादौ ॥ यथा क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्वशब्देन वर्णिता इति ॥ न । रहस्ये ॥ कलहे । आह्वने ॥ मिथुने । युग्मे ॥ द्वौ द्वौ सहाभिव्यक्तौ इति द्वन्द्वम् । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिष्विति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम् भावो ऽत्वञ्चोत्तरपदस्य नपुंसकत्वञ्च निपात्यते एष्वर्थेषु । पार्थे द्वन्द्वमिति निर्देशात् पुंस्यपि ॥ दुर्गे ॥ यथा । राज्ञो वर्णं न हि बलं द्वन्द्वमेव बलं बलम् । अव्ययत्वान् राजास्थिरो द्वन्द्वबलाद्भवेदिति ॥

द्वन्द्वगदः । पुं । रागद्वेषादिरूपे हृद्रोगे ॥ यथा । अहं हरिः सर्वमिदं जनार्दनो नान्यततः कारणकार्यजातम् । ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्तीति विष्णुपुराणम् ॥

द्वन्द्वचरः । पुं । } चक्रवाके ॥ द्वन्द्वं च
द्वन्द्वचारी । पुं । } रति । चर० । पचाद्यच् । ताच्छील्ये णिनिः ॥

द्वन्द्वजः । पुं । द्विदोषजरोगे ॥ अस्य पूर्वरूपम् । रूपैरन्यतराभ्यान्तु संसृष्टैर्द्वन्द्वजं विदुरिति । अन्यतराभ्यां जृम्भानैषदाहाभ्यां जृम्भान्दाहविभ्यां नैषदाहाभ्यां चिभ्यां वा संसृष्टैरूपैः श्रमादिभि र्द्वन्द्वजं पूर्वरूपं विदुर्मो-नीयुः ॥

द्वन्द्वयुक्तिः । पुं । दुर्गविचारग्रन्थे ॥ स यथा । राज्ञो वर्णं न हि बलं द्वन्द्वमेव बलं बलम् । अव्ययत्ववान् राजास्थिरो द्वन्द्वबलाद् भवेत् ॥ तथाच । एकः शतं योधयति प्राकारस्थो धनुर्द्धरः । शतं दशसहस्राणि तस्माद् दुर्गं विशिष्यते ॥ अकृत्रिमं कृत्रिमञ्च तत् पुन द्विविधं भवेत् । यद्दैवरचितं द्वन्द्वं गिरिनद्यादिसंस्थितम् ॥ अकृत्रिम मिदं ज्ञेयं दुर्गद्व्य मरिमृभुजाम् । प्राकारपरिखारण्यसंश्रयं यद् भवेदिह । कृत्रिमं नाम विज्ञेयं षड्प्यावधृत्य

न्तु वैरिणाम् ॥ तत्राकृत्रिमदुर्गयुक्तिर्यथा । अभ्युच्चविस्तीर्णगिरिर्दुरारोहः सकाननः । सजलाशयसम्भारभोज्यद्रव्यसमाश्रयः ॥ सुखनिःसरणो दुर्गः पर्वताख्यो महीभुजाम् । नद्यो गभीरविस्तीर्णाः स्युर्दिक्षु चतस्रस्थिताः ॥ तन्मध्ये भूप्रदेशो यो नदीदुर्गः स उच्यते । यदन्यच्च चिरकालीनं दुर्लङ्घ्यविपिनादिकम् ॥ तन्मध्यरचिता भूमिर्दुर्गत्वेनोपतिष्ठते । वनदुर्गमितिख्यातं यथा पूर्वं महत्तरम् ॥ * ॥ कृत्रिमदुर्गयुक्तिर्यथा । यस्मिन् राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः । तस्य मध्ये महीपालः कृत्रिमं दुर्गमारभेत् ॥ गर्तैरलङ्घ्या विस्तीर्णा गम्भीराःपूर्णवारयः । दुर्गत्वेन समादिष्टाः परिखा वहुयादसः ॥ विशालभालसुघनं वहुकण्टकिसङ्कटम् । दुर्गत्वेन समादिष्टं विस्तीर्णं विषमं वनम् ॥ अधोऽधो वर्द्धमानोऽपि कन्दरोऽल्पजलस्रवम् । दुर्गत्वेन समुद्दिष्टः स दुर्लङ्घ्यो हि भूभुजाम् ॥ सर्वतः परिखां कृत्वा निवन्धोपरि कन्दरम् । तज्जलप्लुतदेशत्वात् जलदुर्गं तदुच्यते ॥ एषां समावे निम्नस्य भूप्रदेशस्य खननात् । वर्षासु



प्लवते वारि जलदुर्गं ततो भवेत् ॥ एतयो रपि संमिश्रात् संमिश्रं दुर्गमाचरेत् । आश्रित्य कृत्रिमं दुर्गं वलवद्वैरिणे दिशि ॥ अन्यच्च कृत्रिमं दुर्गं कृत्वा नरपति र्वसेत् । रथपतिर्यदा वैरी स्थलदुर्गं तदाचरेत् ॥ गजाश्वनायके वैरी जलदुर्गं तदाचरेत् । गिरिदुर्गं नृपः सेवेत् यस्य स्याद् विविधो रिपुः ॥ सर्वोऽपि हि विविधो युद्धः समासादुपदिश्यते । प्रतिराजस्य राज्यान्ते प्रकटे गुप्तएव च ॥ राज्यान्ते सैनिकान् रक्षेत् प्रकटे निवसेत् स्वयम् । गुप्ते स्त्रीकोषसम्भारं संरक्षे दिति निश्चयः ॥ * ॥ अथसामान्यतो गुणाः ॥ तथा हि नीतिशास्त्रम् । सर्वेषामपसरणं दुर्गमुत्तम मुच्यते । अन्यच्च वन्दिशालेव न तादृग् वलमाश्रयेत् ॥ धनुर्दुर्गं महीदुर्गं गिरिदुर्गं तथैव च । मनुष्यदुर्गसंसर्गं वनदुर्गञ्च तानि षट् ॥ * ॥ अन्येतु । न दुर्गं दुर्गमित्याहुर्यो दुर्दुर्गं प्रकीर्त्तितम् । योऽर्थशून्यं हि यद् दुर्गं स्ततकायसमं हि तत् ॥ * ॥ अथान्यच्चापि । यावत् प्रमाणं नगरं हि राज्ञां ततो भवे दुत्तममध्यमाभ्याम् । त्रिंशत्तल दण्डाष्टगुणोत्तरेणन्निर्देशजानां धरि

ताचलिषु । दैर्घ्यं पञ्चसु त्रिष्वपञ्चसु स्वेषु सम्प्रोच्यते हृल्लासा द्वात्रिंशल्लक्षणः कथमसौ गोपेषु सम्भाव्यते ॥ इति श्रीहरिभक्तिरसामृतसिन्धुः ॥ सप्तसु नेत्रान्तपादकरतलतालुधरोष्ठजिह्वानखेषु । षट्सु वक्षःस्कन्धनखनासिकाकटिमुखेषु । त्रिषु कटिललाटवक्षस्सु । केचित्कटिस्थाने शिरः पठन्ति । त्रिषु ग्रीवाजङ्घामेहनेषु । पुनस्त्रिषु नाभिस्वरसत्त्वेषु । पञ्चसु नासाभुजनेत्रहनुजानुषु । पुनः पञ्चसु त्वक्केशरोमदन्ताङ्गुलिपर्वसु ॥ द्वात्रिंशद्राशि सल्लक्षणेभ्योऽन्येभ्यो विशिष्टानि लक्षणानि यस्य सः, गोपेषु कथमिति भगवदवतारादिष्वप्येतादृशस्याश्रवणादिति भावः । इति श्रीमद्बलेश्वरं प्रति कस्याचित् सवयसो गोपस्याश्चर्यसूचकं वचनम् ॥

द्वादश । त्रि । द्वादशानां पूरणे ॥ तस्य पूरणे डट् ॥

द्वादश । त्रि । सङ्ख्याप्रभेदे ॥ सङ्ख्येये ॥ द्वौ च दश च । द्व्यधिका दशेति वा । अष्टनः सङ्ख्यायामात्वम् ॥

द्वादशकरः । पुं । षडानने । कार्त्तिकेये ॥ वृहस्पतौ ॥ द्वादश करा अस्य ॥

द्वादशपत्रकम् । न । वामनपुराणोक्ते देवस्य योगविशेषे ॥



द्वादशलोचनः । पुं । कार्त्तिकेये ॥ द्वादश लोचनान्यस्य ॥

द्वादशांशः । पुं । स्वस्वद्वादशांशे ॥ मेषादीनां राशीनां स्वराशे द्वादशांशकाः । यथा । मेषे प्रथमद्वादशांशेऽकांशो मेषस्य । द्वितीयो वृषस्य । तृतीयो मिथुनस्य । तथा कर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनानां क्रमादेकैकांशा ज्ञेयाः ॥ वृषादिष्वप्येवं स्वराशिमारभ्य द्वादशांशा ज्ञेयाः ॥

द्वादशांशाधिपः । पुं । राशीनामधिपा एव द्वादशांशाधिपास्तु ते ॥ ये मेषादीनामधिपास्त एव द्वादशांशाधिपा ज्ञेयाः ॥

द्वादशांशुः । पुं । वृहस्पतौ ॥

द्वादशाक्षः । पुं । स्कन्दे ॥ बुद्धमुनौ ॥ इति हेमचन्द्रः ॥

द्वादशाख्यः । पुं । बुद्धे ॥ इति त्रिकाण्डशेषः ॥

द्वादशाङ्गः । पुं । धूपविशेषे ॥ यथा । गुग्गुलुश्चन्दनं पथ्यं कुष्टश्चागुरुकुङ्कुमम् । आतीकोषश्चकर्पूरं जटामांसी च वालकम् ॥ त्वगुशीरश्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितइति ॥

द्वादशाङ्गुलः । पुं । वितस्तौ ॥ द्वादशाङ्गुलयः प्रमाणमस्य । तद्धितार्थेति द्विगुः । द्विगोर्नित्यमिति मात्रचो लु

क् । तत्पुरुषस्याङ्गुलेरित्यच् ॥

द्वादशात्मा । पुं । दिवाकरे ॥ द्वादशआत्मानो मूर्त्तयो यस्य ॥ अर्कवृक्षे ॥

द्वादशायुः । पुं । कुक्कुरे ॥

द्वादशार्च्चिः । पुं । वृहस्पतौ ॥

द्वादशी । स्त्री । तिथिविशेषे ॥ सा च न्द्रस्य द्वादशकलाक्रियारूपा । सा च विष्णोस्तिथिः ॥ मार्गशीर्षशुक्लद्वादशी मत्स्यद्वादशी । पौषी कूर्म्मद्वादशी । माघी वराहद्वा० । फाल्गुनी नृसिंहद्वा० । चैत्री वामन द्वा० । वैशाखी जामदग्न्यद्वा० । ज्यैष्ठी रामद्वा० । आषाढी कृष्णद्वा० । श्रावणी बुद्धद्वादशी । भाद्री कल्किद्वा० । आश्विनी पद्मनाभद्वा० । कार्त्तिकीधारा यणद्वादशी ॥ एतासांनाम धरणी व्रतम् ॥ इतिवाराह पुराणम् ॥ द्वादशीजातस्य फलम् । बहुप्रजः सर्व जनानुरागी भूपालमान्य स्तिथि प्रियः स्यात् । चेद्द्वादशी यस्य जनस्य सूतौ प्रवासशीलो व्यवहारदक्षः ॥

द्वापरः । पुं । संशये । सन्देहे ॥ त्रेतायुगानन्तरयुगे ॥ भाद्रकृष्णत्रयोदश्यांगुरुवारे ऽस्योत्पत्तिः ॥ अस्यपरिमाणं यथा । अष्टौ शतसहस्राणि वर्षाणां द्वापरं युगमिति ॥ तत्रमां भक्ष्मपुराणादौ द्रष्टव्यः ॥ ततोपिद्वा



परे प्राप्ते स्मृत्युक्तसुकृतोज्झिते । धर्मार्द्धलोपे मनुजे आधिव्याधिसमाकुले ॥ संहिताद्युपदेशेन त्वयैवोद्धारिता नराइति श्रीमहानिर्वाणतन्त्रे प्रथमोल्लासः ॥ तत्रतारकब्रह्मनाम । हरे मुरारे मधुकैटभारे गोपालगोविन्द मुकुन्द सौरे । यज्ञेशनारायण कृष्ण विष्णो निराश्रयं मां जगदीशरक्षेति ॥ द्वौपरौ प्रकारौ यस्यास्ता । सर्वे नाम सङ्ख्ययोरिति द्विशब्द स्य पूर्व्वनिपातः । पृ० स्त्वम् ॥ द्वाभ्यां परोवा ॥ द्वापराये ॥

द्वापरायः । पुं । द्यूतक्रीडासाधनीभूता यस्य यत्रभागे द्वौ अङ्कौ भवतस्तस्मिन्भागे ॥ द्वापरनामको ऽयः ॥

द्वामुष्यायणः । पुं । औद्दालकौ । गौतमे ॥

द्वाः । स्त्री । निर्गमने । प्रतीहारे ॥ उपाये ॥ यथा ज्ञानद्वारा भवेन्मुक्तिरिति ॥ द्वारयति । द्वृवरणे । णिजन्तः । क्विप् ॥ यद्वा । द्वार्य्यते । सं क्विप् ॥

द्वारम् । न । अभ्युपाये ॥ निर्गमने ॥ यथा । गृहिणां शुभदं द्वारं प्राकारस्य गृहस्य च । न मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् ॥ मुखे ॥ बाह्येन्द्रिये रूपनीतं विषयं समनोद्वारा बुद्धिर्यस्मात् तद्विषयमवगा

यते ऽध्यवस्यति, तस्माद् बाह्यानीन्द्रियाणि द्वाराणि भवन्ति । द्वारयति । द्वृ । णिच् । द्वार्यते वा ॥

द्वारकः । पुं । द्वारकापुर्याम् ॥ इतिशब्दरत्नावली ॥ द्वेःपार्श्वगान्तरे ॥

द्वारकण्टकः । पुं । कपाटे ॥

द्वारका । स्त्री । द्वारवत्याम् । अब्धिनगर्याम् ॥ सर्वतीर्थपराश्रेष्ठा द्वारका बहुपुण्यदा । यस्याः प्रवेशमात्रेण नराणां जन्मखण्डनम् ॥ दानञ्च द्वारकायाञ्च श्रीकृष्णदेवपूजनम् । शतगुणन्तीर्थानां गङ्गादीनाञ्चभूमिमेति ब्र० वै० पु० ॥

द्वारकेशः । पुं । श्रीकृष्णे ॥ द्वारकाया ईशः ॥

द्वारताली । स्त्री । द्वारयन्त्रे ॥

द्वारदातु । पुं । वरदातौ । भूमीसहचे ॥ इति भावप्रकाशः ॥

द्वारदुर्गक्रिया । स्त्री । कीलखननजलोषणादिभिर्दुर्गमत्वकरणे ॥

द्वारपः । त्रि । प्रतीहारे । द्वास्थे ॥ द्वारंपाति । पा० । आत इति कः ॥

द्वारपालः । पुं । द्वाररक्षके । प्रतीहारे ॥ द्वारं पालयति । पालरक्षणे । कर्मण्यण् ॥

द्वारपालकः । पुं । दौवारिके । द्वारपे ॥ स्वार्थे कन् ॥

द्वारपिण्डी । स्त्री । देहल्याम् ॥

द्वारयन्त्रम् । न । द्वारताल्याम् । तालके । ताला इति भाषा ॥ द्वारस्य द्वारेवा यन्त्रम् ॥

द्वारवती । स्त्री । अब्धिपुर्याम् । द्वारकायाम् ॥ सान्तःकरणायां बुद्धौ ॥ नकेवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः अपितु ये अपि अहङ्कारमनसी द्वारि ते अप्यपेक्ष्य बुद्धिः प्रधानम् ॥

द्वारवलिभुक् । पुं । बके ॥

द्वारस्थः । पुं । वेत्रिणि । दौवारिके ॥ द्वारेतिष्ठति । स्था० । कः ॥

द्वारावती । स्त्री । तन्नामाख्यायाम् । द्वारिकायाम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरीद्वारावती चैव सप्तैता मोक्षदायिकाः ॥ एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन । पुरीद्वारावती विष्णोः मात्स्यजन्योपरिस्थिता ॥ मुक्तिदा एताः सर्वाश्च एकत्र गणिताः सुरैः । यानि यानिच श्रेयांसि काशीमासिकराणि वदन्ति भूतशुद्धितन्त्रम् ॥

द्वारि । न । प्रधाने । प्रकृतौ ॥ सान्तःकरणा बुद्धिः सर्वं विषयं अवगाहते यस्मात् । तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणीति साङ्ख्याः ॥

द्वारिका । स्त्री । द्वारावत्याम् ॥ इ०शेषु० ॥
द्वारी । त्रि । द्वारपाले ॥ द्वारमस्यास्ति । इनिः ॥
द्वाविंशतिः । स्त्री । द्व्यधिकविंशतौ ॥
द्वासप्ततिः । स्त्री । द्विसप्ततौ ॥ द्व्यधिकसप्ततिः ॥
द्वास्थः । त्रि । प्रतीहारे ॥ द्वारि तिष्ठति । ष्ठा० । सुपीतिकः । खर्परे शरि वा विसर्गलोपो वक्तव्यः ॥
द्वास्थितः । त्रि । द्वारपाले ॥ द्वारि तिष्ठति । ष्ठा० । गत्यर्थाकर्मकेति क्तः । पाक्षिको विसर्गलोपः ॥
द्वास्थितदर्शकः । त्रि । दौवारिके ॥
द्वौ । त्रि । दो इति भाषाप्रसिद्धायां सङ्ख्यायाम् ॥ सङ्ख्येये ॥ यथा । द्वौ विप्रौ ॥
द्विकः । पुं । काके ॥ कोके ॥ द्वौ कौ वर्णविशेषौ यस्य नाम्नि स्वार्थः ॥ द्वितीयके ॥ द्वितीयेन रूपेण ग्रहणं ग्रन्थस्य । तावतिथं ग्रहणमिति लुग्वेति कन् पूरणप्रत्ययस्य वा लुक् । ग्रन्थस्य प्रयोगः ॥ न । द्वये ॥
द्विककारः । पुं । वायसे । काके ॥ दौक का दौन । त्रियस्य ॥
द्विककुत् । पुं । उष्ट्रे ॥ इति हेमचन्द्रः ॥
द्विगुः । पुं । सङ्ख्यापूर्वे तत्पुरुषान्तर्गतसमासविशेषे ॥ स त्रिविधः । तद्धितार्थः समाहारः उत्तरपदपरश्चेति भेदात् । तद्धितार्थोऽपि द्विविधः । । तद्धितप्रत्ययमात्रस्य अजादेर्हंसादेर्योऽर्थो विषये इत्येकः । अपत्यार्थप्रत्ययादिकं त्यक्त्वा अजादेस्तद्धितार्थे वाच्ये इत्यपरः । तद्धितार्थविषयो यथा । द्वयोर्मात्रोरपत्यं द्वैमातुरः । पञ्चानां नापितानामपत्यम् पाञ्चनापितिः ॥ तद्धितार्थे वाच्यो यथा । पञ्चभिर्गोभिः क्रीतः पञ्चगुः ॥ समाहारो यथा । त्रयाणां सखीनां समाहारः त्रिसखम् । समाहारे अदन्तानां स्त्रीत्वं पात्रादेस्तु क्लीबत्वम् ॥ उत्तरपदपरो यथा । पञ्चगावो धनं यस्य पञ्चगवधन इत्यादिः ॥ इति मुग्धबोधटीकायां दुर्गादासः ॥
द्विगुणः । त्रि । द्वाभ्यां पूरणे । अङ्कस्य अभ्याघाते ॥ द्वौ गुणौ आवृत्तौ यस्य ॥
द्विगुणाकृतम् । त्रि । द्विःकृष्टक्षेत्रे । वारद्वयकृष्टक्षेत्रे ॥ द्विगुणं कृतम् । सङ्ख्यायाश्च गुणान्ताया इति डाच् ॥
द्विगुणितः । त्रि । द्विरावृत्तकृते ॥
द्विजः । पुं । ब्राह्मणे ॥ क्षत्रिये ॥ वैश्ये ॥ जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते ॥ न जातिर्नैकुलं राजन् न स्वाध्यायः श्रुतं न च । कार

रणानि द्विजत्वस्य हत्त मेवतु कारणम् ॥ इतिवह्नि पुराणे वशिष्ठ वाक्यम् ॥ दन्ते ॥ अण्डजे ॥ द्विर्जायते । जनेः । अन्येष्वपीतिडः ॥ तुम्बुरुवृक्षे ॥

द्विजकुत्सितः । पुं । श्लेष्मातकवृक्षे । सेष्मातके ॥ द्विजैः कुत्सितः ॥

द्विजदासः । पुं । शूद्रे ॥ षि । द्विजानां दासे ॥

द्विजदेव । पुं । ब्राह्मणे ॥ द्विजेषु देव इव ॥ रूपे ॥ इति श्रीधरस्वामी ॥

द्विजन्मा । पुं । विप्रे ॥ दशने ॥ द्वे जन्मनी यस्य ॥ ब्राह्मणादिवर्णे ॥ खगे ॥

द्विजपतिः । पुं । चन्द्रे ॥ द्विजानांपतिः ॥

द्विजप्रपा । स्त्री । पक्षिणां जलपानार्थं रचितकूपादन्तिकस्थाने । तस्ले । आलवाले ॥ द्विजानां प्रपा ॥

द्विजप्रिया । स्त्री । सोमलतायाम् ॥ षि । द्विजस्य प्रियवस्तुनि ॥

द्विजबन्धु । पुं । नैवर्णिकाधमे ॥ द्विजा बन्धवोऽस्य सः ॥

द्विजब्रुवः । पुं । जातिमात्रोपजीविनि ब्राह्मणे । ब्राह्मणब्रुवे ॥

द्विजराजः । पुं । चन्द्रे ॥ अनन्ते ॥ गरुडे ॥ द्विजानां राजा । राजाहः सखिभ्यष्टच् ॥ कर्पूरे ॥

द्विजलिङ्गी । पुं । क्षत्रिये ॥ षि । विप्रचिह्नधारके ॥

द्विजवरः । पुं । द्विजोत्तमे ॥ द्विजेषु द्विजानां वा मध्ये वरः ॥ चतुष्कस्य पञ्चमे (॥॥) पर्याये ॥

द्विजवर्यः । पुं । विप्रश्रेष्ठे ॥

द्विजव्रणः । पुं । दन्तार्बुदे ॥

द्विजशसः । पुं । राजमाषे । बरबटी इतिगौडभाषाप्रसिद्धे ॥ षि । द्विजैः शस्ते ॥

द्विजसेवकः । पुं । शूद्रे ॥ षि । द्विजानां सेवाकर्त्तरि ॥

द्विजा । स्त्री । भार्ग्याम् ॥ हरेण्वौ । रेणुकानामगन्धद्रव्ये ॥ टाप् ॥

द्विजाङ्गी । स्त्री । कटुकायाम् ॥

द्विजातिः । पुं । विप्रे ॥ वेदाध्ययनादितुल्यधर्मत्वात् ब्राह्मणादिषिके ॥ ब्राह्मणः क्षत्रियो वैश्य स्त्रयोवर्णाद्विजातयः । चतुर्थएकजातिस्तु शूद्रो नास्तितु पञ्चम इतिमनुः ॥ शूद्रादिजातिभिर्जाता न भूमेर्भागमर्हतीतिस्मृतिः ॥ द्वे जाती जन्मनी यस्य सः ॥ मातुरग्रेधिजननं द्वितीयं मौञ्जिवन्धने इत्युक्तेः ॥ पक्षितपौण्डजेषु ॥

द्विजायनी । स्त्री । यज्ञोपवीते ॥ इति शब्दरत्नावली ॥

द्विजालयः । पुं । कोटरे ॥ द्विजानां गृहे ॥

द्विजावलिः । स्त्री । दन्तपङ्क्तौ ॥

द्विजिह्वः । पुं । सर्पे ॥ त्रि । खले ॥ द्वे जिह्वे यस्य सः ॥ चौरे ॥

द्विजोत्तमः । पुं । ब्राह्मणे ॥

द्विट्सेवी । त्रि । शत्रुसेविनि ॥

द्वितयम् । न । युग्मे । द्वये ॥ द्वाववयवौ अस्य । संख्याया अवयवे तयप् ॥

द्वितयी । स्त्री । युग्मायाम् ॥ टिड्ढेङीप्

द्वितीयः । त्रि । द्वयोः पूरणे । द्विपूरके ॥ द्वयोः पूरणः । द्वेस्तीयः ॥ द्वितीये भागे ॥ पूरणाद्भागे तीयादन् ॥ पुं । पुत्रे ॥

द्वितीयकः । पुं । ज्वरविशेषे ॥ द्वितीये अहनि भवः । कालप्रयोजनाद्रोगे इतिकन् ॥ द्विके ॥ द्वितीयेन रूपेण ग्रहणम् । तावतिथं ग्रहणमिति लुग्वेति कन् ॥

द्वितीया । स्त्री । तिथिभेदे । चन्द्रमसो द्वितीयकलाक्रियारूपायाम् ॥ सा अश्विनीकुमारयोर्जन्मतिथिः ॥ अथ जातस्य फलम् । निखिलगुणगभीरो ज्ञानशीलो दयालुः स्वकुलकुमुदचन्द्रः स्वच्छचित्तोऽतिशूरः । निजभुजबलगर्वाच्छादितारातिवर्गो भवति विपुलकीर्त्तिर्यो द्वितीयाप्रसूतः ॥ अनध्यायद्वितीया यथा । प्रे कोचैत्रा द्वितीयास्ताः प्रेतपक्षे गरे तथा । याच कोजागरे जाते चैत्रास्याः परे पिया ॥ चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः । परास्त्वेतास्त्वनध्यायाः पुराणैः परिकीर्त्तिताः ॥ मध्योर्माघमासस्य द्वितीयां परिवर्जयेदिति ॥ सप्तधर्मिणाम् । पत्न्याम् ॥ अमुष्मात् ग्रस् इति त्रिके ॥ टाप् ॥

द्वितीयाकृतम् । त्रि । द्विगुणाकृते । वारद्वयकृष्टे क्षेत्रे ॥ द्वितीयं कृतम् । कृञो द्वितीयेति डाच् ॥

द्वितीयाभा । स्त्री । दारुहरिद्रायाम् ॥

द्विदन् । त्रि । दन्तद्वययुक्तोपपादौ ॥ द्वौ दन्तावस्य । वयसि दन्तस्य दतृ ॥

द्विदाम्नी । स्त्री । रज्जुद्वययुक्तायां गवि ॥

द्विदेहः । पुं । श्रीगणेशे । विनायके ॥ द्वाभ्यां देहोऽस्य ॥

द्विदैवः । पुं । विशाखानक्षत्रे ॥

द्विद्वादशम् । न । योगविशेषे ॥ कन्या या द्वादशे भर्त्तुः कन्या द्वितीयगा । द्विद्वादशं विजानीयाद्वर्जितं विद्वैरपि ॥

द्विधा । अ । द्विप्रकारे ॥

द्विधागतिः । पुं । कुम्भीरे ॥ त्रि । द्विप्रकारगतिविशिष्टे ॥

द्विधातुः । पुं । गजानने । हेरम्बे ॥ न । धातुद्वये ॥

द्विधात्मकम् । न । जातीकोषे । जायफल इति भाषा ॥

द्विधालेख्यः । पुं । चिन्तालवृक्षे ॥ त्रि । द्विप्रकारलेखनीये ॥

द्विनग्नकः । पुं । दुश्चर्मणि ॥

द्विपः । पुं । इभे । हस्तिनि ॥ द्वाभ्यां मुखशुण्डाभ्यां पिबति । पा० । सुपीति योगविभागात्कः ॥ नागकेशरे ॥

द्विपघातः । पुं । हस्तिबन्धके ॥

द्विपथम् । न । चतुष्पथे । पथद्वये ॥ द्वयोः पथोः समाहारः । तद्धितार्थेति समासः । ऋक्पूरिति समासान्तो ऽच् ॥

द्विपदः । पुं । मनुजे ॥ देवे ॥ पक्षिणि ॥ राक्षसे ॥ यथा । द्विपदे चतुर्भेदा । नरदेवपक्षिराक्षसाः ॥ द्विपदाख्ये ॥

द्विपदराशिः । पुं । द्विपदाख्ये ॥

द्विपदा । स्त्री । ऋग्विशेषे ॥ द्वौ पादा यस्याः । संख्यासुपूर्वस्येति पादस्यान्तलोपः । टाबृचीति टापि पादः पत् ॥

द्विपदाख्यः । पुं । द्विपदराशौ ॥ मिथुनतुलाघटकन्या द्विपदाख्या धनुषपूर्वभागश्च ॥

द्विपदी । स्त्री । मात्रावृत्तान्तरे ॥ आदौ षट्कलमत्र गतमेतत् तदनु पञ्चचतुष्कलम् । गुर्वन्तं द्विपदी भवतीह विंशत्यष्टकलं द्वयम् ॥ यथा । मधुरमपि समयि विनिधेहि शिवमासि नि मधुकरमर्द्दविमोचने । विषमायुधविषमायुधशासनविकले सुमुखि लोचने ॥ द्वौ पादौ यस्याः । संख्यासुपूर्वस्येति पादशब्दस्यान्तलोपः । पादोऽन्यतरस्यामिति ङीपि भत्वात् पादः पत् ॥



द्विपमदः । पुं । हस्तिमदे ॥

द्विपरार्द्धावसानम् । न । परान्तकाले ॥ द्वितीयस्य परार्द्धस्य अवसानम् ॥

द्विपर्णी । स्त्री । वनकोल्याम् ॥ माषपर्णीपृश्निपर्ण्योः ॥ त्रि । पर्णद्वययुक्ते ॥

द्विपात् । त्रि । पादद्वययुक्ते ॥ द्वौ पादौ यस्य ॥

द्विपाद्यम् । न । द्विगुणदण्डे ॥ द्वौ पादौ परिमाणमस्य । पण्पादमाषशताद्यत् । इह पादः पदित्यनेन । यस्येतिलोपस्थानिवत्त्वात् । पद्यत्यतदर्थे इत्यपि न । प्राग्वृत्तार्थस्य वत्तनग्रहणात् ॥

द्विपायी । पुं । हस्तिनि । गजे ॥

द्विपुटः । पुं । सुगन्धिश्वेतपुष्पे । दूका इति पर्वतीय भाषा प्रसिद्धे ॥

द्विपृष्ठः । पुं । राजप्रभेदे । वसुसम्भवे ॥

द्विमात्रकः । पुं । गणेशे ॥

द्विमुखः । पुं । राजसर्पे ॥ त्रि । मुखद्वययुक्ते ॥ द्वौ मुखौ यस्य ॥

द्विमुखा । स्त्री । कर्कर्याम् । गडुआ गाडू झारी वधनी इत्यादि भाषा ॥

जलौकायाम् ॥ दोमुखीयस्याः ॥

द्विमुखाहिः । पुं । सर्पभुजि । राजसर्पे ॥ द्विमुखश्चासावहिश्च ॥

द्विमुखोरगः । पुं । राजसर्पे ॥

द्विमूर्द्धः । त्रि । मस्तकद्वययुक्ते असुरविशेषे ॥ द्वौ मूर्द्धानौ यस्य । द्वित्रिभ्यांष मूर्द्ध्नः इतिषः ॥

द्विमूर्द्धा । पुं । असुरविशेषे ॥

द्विरः । पुं । भ्रमरे ॥ द्वौ रौ नाम्नि यस्य ॥

द्विरदः । पुं । गजे । हस्तिनि ॥ द्वौ रदौ यस्य ॥ स्त्रियांटापि द्विरदा ॥

द्विरदान्तकः । पुं । सिंहे ॥

द्विरशनम् । न । वारद्वयभोजने ॥ मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यशः । अहनि च तथा तस्विन्यां सार्द्धप्रहरयामान्तः इति विध्याह्निकतत्त्वम् ॥

द्विरसनः । पुं । सर्पे ॥ द्वे रसने यस्य सः ॥

द्विरागमनम् । न । वधूप्रवेशानन्तरं परावृत्त्या पितृगृहमागताया वध्वाः पुनर्भर्तृगृहप्रवेशे ॥ तदुक्तम् । हस्ते पाणिग्रहे येषात् पितुः पतिगृहं प्रति । पुनरागमनं वध्वा स्तद्विरागमनं विदुरिति ॥

द्विरापः । पुं । हस्तिनि ॥ इति शब्दमाला ॥

द्विराषाढः । पुं । मिथुनस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासद्वये ॥ स चाषाढमलमासे भवति । यथा । मिथुनस्थो यदाभानुरमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ अपिच । माघादिषु षट्केषु मासि दर्शद्वयं यदा । द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युत इति मलमासतत्त्वम् ॥

द्विरुक्तः । त्रि । विषादादिना द्विवारमुच्चारिते ॥ विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे । प्रसादने सम्भ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यतीति ॥

द्विरुक्तिः । स्त्री । द्विवारकथने ॥

द्विरूढा । स्त्री । पुनर्भूः । द्विवारविवाहितायाम् ॥

द्विरूपः । पुं । कोषविशेषे ॥ द्वे रूपे यस्य ॥ त्रि । रूपद्वयविशिष्टे ॥

द्विरेफः । पुं । भ्रमरे ॥ त्रि । बर्बरे ॥ द्वौ रेफौ नाम्नि यस्य ॥

द्विवचनम् । न । येन पदेन द्वावर्थावुच्येते तस्मिन् ॥ द्वयोरर्थयोर्वचनम् । वचेः करणेल्युट् । कर्मणिषष्ठ्या समासः ॥

द्विवर्षा । स्त्री । द्विहायन्याम् ॥ द्वे वर्षे वयः प्रमाणमस्याः । आर्हीयठक् । अध्यार्द्धेतिलुक् ॥

द्विवर्षिका । स्त्री । द्विवर्षायाङ्गवि ॥

द्वे वर्षे वयो यस्याः सा द्विवर्षा । द्विवर्षैव । स्वार्थे कः । प्रत्ययस्थादितीत्वम् ॥

द्विवार्षिकः । त्रि । द्विवर्षभवे ॥

द्विवाहिका । स्त्री । दोलायाम् ॥

द्विविदः । पुं । वानरविशेषे ॥ यो बलरामेण हतः ॥ समुद्रस्योत्तरे तीरे द्विविदो नाम वानरः । ऐकाह्निकज्वरं हन्ति तस्य नामानुकीर्त्तनात् ॥

द्विवेशरा । स्त्री । लघुरथे । लघ्व्याम् ॥

द्विशफः । पुं । द्विखुरे पशौ ॥ यथा । गौरजो महिषः कृष्णः शूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तमः ॥ इति श्रीभागवतम् ॥

द्विशत । अ । द्वयोर्द्वयोः ॥ द्वौ द्वौ ददातीति द्विशः । संख्यैकवचनाच्च वीप्सायामिति शस् ॥

द्विट् । पुं । शत्रौ ॥ त्रि । द्वेष्टरि ॥ द्वेष्टि । द्विष अप्रीतौ । क्विप् ॥

द्विषन् । त्रि । शत्रौ ॥ द्वेष्टि । द्विष० । द्विषोऽमित्रे इति शतृ ॥

द्विषन्तपः । त्रि । शत्रुतापने ॥ द्विषन्तं तापयति । तप० । णिजन्त. । द्विषत्परयोस्तापेरिति खच् । खचि ह्रस्वः । मुम् ॥

द्विष्ट. । त्रि । द्वेषविषये ॥

द्विष्ठ. । त्रि । उभयस्थे ॥ तयोरयद्विष्ठतयेति जगदीशः ॥ द्वयोस्तिष्ठति । स्था० । कः ॥

द्विः । त्रि । क्रियाद्वयगणने ॥ यथा । द्विः शरं नाभिसन्धत्ते द्विः स्थापयति नाश्रितान् । द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषत इति ॥ द्विवारमित्यर्थे द्वित्रिचतुर्भ्यः सुच् ॥

द्विसप्ततिः । स्त्री । द्व्यधिकसप्तत्याम् ॥

द्विसहस्राक्षः । पुं । अनन्ते । नागराजे ॥

द्विसीत्यम् । त्रि । द्विगुणाकृते । द्विवारकृष्टक्षेत्रे ॥ द्विवारं सीतया सम्मितम् । नौवयोधर्मेत्यादिना यत् ॥

द्विस्विन्नम् । न । सिद्धतण्डुले । उसनाचाउर इतिभाषा ॥ द्विः स्विन्नं पृथक् शुल्कदेशविशेषके । नाद्यमत्रं विप्राणां भक्षणे च निवेदने ॥ अभक्ष्यं तथा तीनाञ्च विधवाब्रह्मचारिणाम् । ताम्बूलञ्च यथा मत्स्यान् तथैते वस्तुनी ध्रुवमिति ब्र० वै० ब्रह्मखण्डम् ॥

द्विहः । पुं । गजे । हस्तिनि ॥ नाम्नः ॥ इतिशब्दरत्नावली ॥

द्विहल्यम् । त्रि । द्विसीत्ये । द्विगुणाकृते ॥ द्विवारं हलेन कृष्टम् । मतजनहलादितियत् ॥

द्विहायनी । स्त्री । द्विवर्षायाङ्गवि ॥ द्वौ हायनौ यस्याः । दामहायनान्ता

च्चेति ङीप् ॥

द्विहृदया । स्त्री । दोहदिन्याम् ॥ स्वहृदयेन गर्भहृदयेनच द्विहृदयागर्भिणी भवति ॥

द्वीन्द्रियग्राह्यः । पुं । इन्द्रियद्वयग्रहणीये गुणे ॥ सत्सङ्ख्यादिसप्तद्रवत्वस्नेहरूपः । यथा । सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एवच । एतेतु द्वीन्द्रियग्राह्या अथस्पर्शान्तशब्दकाः ॥ इति भाषापरिच्छेदः ॥ द्वीन्द्रियग्राह्याः ॥ चाक्षुषप्रत्यक्षत्वाचप्रत्यक्षयो विषया इत्यर्थः ॥

द्वीपः । पुं । न । जलमध्यस्थस्थले । अन्तरीपे ॥ पुराणादिप्रसिद्धेषु सप्तसु ॥ तेचयथा । जम्बूशाककुशक्रौञ्चशाल्मगोमेदपुष्कराः । लक्षादिद्विगुणा द्वीपाः क्षाराद्यब्धिभिरावृताः ॥ द्विर्गता आपोऽत्र । ऋक्पूरित्यः समासान्तः । द्यन्तरुपसर्गेभ्योऽप ईत् इत्यपईत् ॥ भूमेरर्द्धं क्षारसिन्धोरुदकस्थं जम्बूद्वीपं प्राहुराचार्यवर्य्याः । अर्द्धे ऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥ शाकं ततः शाल्मलमत्रकौशं क्रौञ्चञ्च गोमेदकपुष्करेच । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति ॥ इति सिद्धान्तशिरोमणिः ॥

द्वीपकर्पूरजः । पुं । चीनकर्पूरे ॥

द्वीपखर्ज्जूरम् । न । } द्वीपजम् । न । } मद्धापारेवते ॥

द्वीपवान् । पुं । नदे ॥ अब्धौ ॥ द्वीपमस्त्यस्य । मतुप् ॥

द्वीपवती । स्त्री । भूमौ ॥ नद्याम् ॥ द्वीपमस्त्यस्याम् । मतुप् । ङीप् ॥

द्वीपशत्रुः । पुं । शतावर्य्याम् ॥

द्वीपान्तरवचा । स्त्री । चोपचीनी इति भाषा प्रसिद्धे द्रव्ये ॥

द्वीपिका । स्त्री । शतावर्य्याम् ॥

द्वीपी । पुं । व्याघ्रे । बघेरा इतिभाषा ॥ चित्रके । चीता इतिभाषा द्वाभ्यामीयते । ईङ् गतौ । घा० पः । द्वीपं चर्मास्त्यस्य । अतइनिठनाविती निः ॥

द्वीपिनखः । पुं । व्याघ्रनखे ॥

द्वीपिशत्रुः । पुं । शतमूल्याम् ॥

द्वीशः । पुं । विशाखानक्षत्रे ॥ द्वौ इन्द्राग्नी ईशौ यस्य सः ॥

द्वेधा । अ । द्विप्रकारे ॥ सङ्ख्याया विधार्थे धा । एधाच्चेतिसूत्र एधाचादेशः ॥ द्वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषुच । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

द्वेषः । पुं । शत्रुतायाम् । द्वेषणे । वैरे । विरोधे । दुःखसाधने विद्यमाने

द्वेषः

किमपि दुःखं मे माभूदिति विपर्यय
विशेषे तामिस्रे ॥ स चाष्टादशविध
स्तामिस्रे द्रष्टव्यः ॥ दुःखमनुशेतेऽनु
शयी वृत्तिविशेषः क्रोधानुगतरजः
परिणामः । ईदृशं सर्वं सर्वदा मे मा
भूदिति । तत्र शत्रुव्याघ्रादिषु सत्
सु न निवारयितुं शक्यम् । न च सर्वे
ते दुःखहेतवो हन्तुं शक्यन्ते अतः
स द्वेषः सदा हृदयं दहति । यदा तु
स्वस्येव परेषां सर्वेषामपि दुःखं मा
भूदिति करुणां दुःखिषु भावयेत्
तदा वैर्य्यादिद्वेषनिवृत्तौ चित्तमसौ
इति । यद्वासौ पुण्यपुरुषेषु मुदि
तां भावयेत् तदा तद्वासनाभावात्
स्वयमेवाप्रमत्तोऽशुक्लाकृष्णे पु-
ण्ये प्रवर्त्तते । तथा पापपुरुषेषूपे-
क्षां भावयन् स्वयमपि तद्वासनाभा
वात् पापान्निवर्त्तते । ततश्च पुण्या
करणपापकरणनिमित्तस्य पश्चात्ता
पस्याभावे चित्तं प्रसीदति । एवं सु
खिषु मैत्रीं भावयतो न केवलं रा-
गो निवर्त्तते किन्त्वसूयेर्ष्यादयोऽपि
निवर्त्तन्ते । तथा दुःखिषु करुणां
भावयतः शत्रुवधादिकरो द्वेषो यदा-
निवर्त्तते तदा दुःखिप्रतियोगिकत्व
सुखित्वप्रयुक्तेर्ष्यापि निवर्त्तते ॥ ए
वं दोषान्तरनिवृत्तिरप्यूहनीया ॥

द्वैगुणि

दुःखेन तत्साधनेन चेदं मे माभूदिति-
स्पृहाविरोधिनी चित्तवृत्तिः क्रोध
इति ईर्ष्येति चोच्यते द्वेषणम् ।
द्विष० । घञ् ॥ * ॥ स चात्मनो
विशेषगुण इति सि० मु० ॥ द्वेषस
शत्रुत्वनिषेधो यथा । इन्द्रियस्ये
न्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । त
योर्न वशमागच्छेत् तौ ह्यस्य परिप
न्थिनौ । इति भगवद्गीता ॥ अस्य का
रणं द्विष्टसाधनताज्ञानम् । इति
भाषा प० ॥

द्वेषणः । त्रि । शत्रौ ॥ द्वेषशीलः । कु
धमण्डार्थेभ्यश्चेतियुच् ॥ न । द्वेषे ॥

द्वेषपक्षः । पुं । क्रोधेर्ष्यासूयाद्रोहाम
र्षाभिमानेषु ॥ द्वेषस्य पक्षः ॥

द्वेषी । त्रि । वैरिणि । शत्रौ ॥ द्वेष्टि
तच्छीलः । द्विष० । सम्पृचेतिघि
नुण् ॥

द्वेष्टा । त्रि । विद्वेषकर्त्तरि ॥

द्वेष्यः । त्रि । द्वेषविषये । द्वेषकर्मणि
स्वकृतापकारमपेक्ष्य प्रकारकर्त्तरि
॥ अधिगते ॥ द्वेष्टुमर्हः ॥ यत् ॥

द्वै । स । विसर्गे ॥

द्वैगुणिकः । त्रि । वार्द्धुषौ । वृद्ध्याजीवे
॥ द्विगुणार्थं द्रव्यं द्विगुणम् । तत्प्रयच्छ
ति द्विगुणं ग्रहीतुमेकगुणं दादिति ।
प्रयच्छतिगर्ह्यमितिठक् ॥

द्वैतम्। न। युगले। द्वये। द्वैधीभावे॥ द्विधा इतं द्वीतम्। तस्य भावः। युवादित्वादण् स्वार्थे वा॥ द्वैताद्वैतयोः प्रमाणभूतवेदप्रतिपाद्यत्वात् कस्य सत्यत्वं कस्यासत्यत्वमित्याऽऽकांक्षायामाहुराचार्य्याः॥ अद्वैतमेव सत्यं तस्मिन् द्वैतं न सत्यमध्यस्तम्। रजतमिव शुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम्॥ आरोपितस्य हि स्यादद्वैतं वस्तुवस्तुनि द्वैते। युक्तं नैव तदा स्यात् सत्ये ध्यातो भवत्यसत्यानाम्॥ यस्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावः। आरोपणं न शून्ये तस्मादद्वैतसत्यता ग्राह्या॥ प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम्। द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वादिति॥ प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थत इति॥

द्वैतवनम्। न। शोकमोहादिरहिते तपोवने॥ द्वे इते गते यस्मात् तद्द्वीतम्। द्वीतमेव द्वैतम्। तच्च तद्वनञ्च॥

द्वैतवादी। त्रि। जीवेश्वरयोर्भेदवादिनि। ईश्वरातिरिक्तजीवस्वीकारि॥ तस्य मतं यथा। परमात्मनो जीवात्मा पृथक् तन्मध्ये केषाञ्चिन्मते प्रकृतिरतिरिक्ता केषाञ्चिन्मते प्रकृतिरदृष्टमात्रे पर्य्यवसिता एवं जीवश्च पृथक्। अत्र प्रमाणम्। जन्मकर्ममरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैवेति साङ्ख्यकारिका॥ अस्यार्थः। पुरुषबहुत्वं सिद्धम्। कस्मात्। जन्ममरणकरणानां प्रतिनियमात्। निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियबुद्धिवेदनाभिः पुरुषस्याभिसम्बन्धो जन्म न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात्। तेषामेव देहादीनामुपात्तानां परित्यागो मरणम् न त्वात्मनो विनाशस्तस्य कूटस्थनित्यत्वात्। करणानि बुद्ध्यादीनि त्रयोदश। तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था। सा खल्वियं सर्व्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते। तदा खल्वेकस्मिन् जायमाने सर्व्वे जायेरन् म्रियमाणे वा म्रियेरन्। अन्धादौ चैकस्मिन् सर्व्व एवान्धाः एकस्मिन् विचित्ते सर्व्व एव विचित्ताः स्युरित्यव्यवस्था प्रतिक्षेत्रं पुरुषभेदे तु भवति व्यवस्था। न चैकस्यापि पुरुषस्य देहोपधानभेदाद् व्यवस्थेति युक्तम्। पाणिस्तनाद्युपधानभेदेनापि जन्ममरणादिव्यवस्थासम्भवात्।

द्वैतवा

नहि पाणौ कृत्ते आते वा सर्वान्दोस्म
न्त्यवयवे युपतिर्ज्वाला स्ताता भ
वतीति । इतश्च प्रतिदेहं पुरुषभेद
इत्याह । अयुगपत् प्रवृत्तेश्चेति प्रवृ
त्तिश्च प्रयत्नलक्षणा यद्यप्यन्तः कर
णवर्तिनी तथापि पुरुष उपचर्यते ।
तथाच तस्मिन्नेकशरीरे प्रयतमाने
सर्व्व सर्वशरीरेष्वेकइति सर्व्वेष प्र
यतेत । ततश्च सर्वाण्येव शरीराणि
युगपच्चालयेत् । नानात्वेतु नायं दो
षइति । इतश्च पुरुषभेद इत्याह ।
त्रैगुण्यविपर्ययाच्चेति । चकारो
भिन्नक्रमः सिद्धमित्यस्यानन्तरं द्रष्टव्यः
। सिद्धमेव नासिद्धम् । त्रयोगुणास्त्रै
गुण्यम् । तस्य विपर्ययो ऽन्यथाभावः
। केचित् खलु सत्वनिकायाः सत्वब
हुलाः यथोर्द्ध्वस्रोतसः । केचिद् रजो
बहुलाः यथामनुष्याः । केचित् त-
मोबहुलाः यथातिर्य्यग्योनयः । सो
ऽयमीदृशस्त्रैगुण्यविपर्ययो ऽन्यथा
भाव एतेषु तेषु सत्वनिकायेषु न भ
वेत् यद्येकः पुरुषः स्यात् । भेदेत्व-
यमदोष इति ॥ * ॥ तथेश्वरः सर्वज्ञः
परमात्मा एक एव । जीवः प्रतिशरी
रं भिन्नो विभुर्नित्यश्चेति गौतममत
म् ॥ एवञ्चाऽयोर्जीवेश्वरत्वप्रतिपाद
नात् तयोरद्वैतं नाभिमतम् । भेसरा

द्वैतवा

ऽनुपपत्तेः । १ । १ । १६ । भेदव्यपदेशा
च्च । १ । १ । १७ । सुषोपलक्ष्यव्यप
देशात् । १ । ३ । २ । आकाशोर्था
न्तरत्वादिव्यपदेशात् । १ । ३ । ४१ ।
भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ ।
२१ । इति सूत्रैर्जीवेश्वरयोर्द्वैत
निरूपणाच्च । इति गौतमभाष्यम
तम् ॥ यतो द्वैतमतेयुक्ति रेवप
मार्णं युक्त्यायत् फलतितदेव सर्वाध्या
त्मविद्याप्रतिपादकश्रुतीनां तात्पर्य
मितितेषामनुमतम् ॥ * ॥ सूत्रार्थ
स्तु । इतर ईश्वरादन्यः संसारीजीवो
नआनन्दमयः । कस्मात् सतपस्तप्त्वा इ
दं सर्वं मसृजतयदिदं किञ्चेतीतिज
गत्सर्गवचनानुपपत्तेः सर्वविकारसृष्टि
श्चनपरस्यात्मनो ऽन्यस्योपपद्यते
॥ * ॥ रसं ह्येवायं लब्ध्वानन्दी भवती
तिश्रुतौ प्राप्यप्रापकत्वभेदोक्तेर्नजी
वआनन्दमयः ॥ * ॥ अथमर्थो ऽस्त
तो भवस्यत्र ब्रह्म समश्नुते इतिमु
क्तानां सुषुप्युपलक्षणप्राप्यत्वश्रुतेः
॥ * ॥ आकाशोवैनाम नामरूपयो
र्निर्वहिता स्यादौभूताकाशइतिचेन्न
। ते यदन्तरा तद्ब्रह्मेत्यत्र । ते नाम
रूपे यदन्तरा यतो भिन्ने इति नामा
दीनां त्रातिगगनरूपार्थान्तरत्वेन ।
श्रादिना ब्रह्मत्वेनाप्याकाशस्याव्यपदे

स्यात् ॥ * ॥ एष आनन्दमय आत्मा न मनुष्येषु नजायते न म्रियते न ह्रसते न वर्द्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते इति भोगसाधेयोग्यरसाभ्यवहारकोशवत्त्व अगत्श्रुतिः । चकारादयुक्तत्वात् जगद्व्यापारार्थोपास्याभ्यासादिति ॥ * ॥ विकल्पोविनिवर्त्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते इत्यागमविदः ॥

द्वैती । त्रि । भेदवादिनि ॥ कपिलकाणादबुद्धार्हतादिहष्टानुसारिणि ॥ यथा ॥ स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् । परस्परं विरुध्यन्ते तैरयं न विरुध्यत इति ॥ व्यवस्थासु स्वसिद्धान्तरचनासु निश्चिताः एवमेवैषपरमार्थो नान्यथेति तत्र तत्र निरुक्ताः स्वसिद्धान्तदर्शनमिति समेत्यान्योन्यं विरुध्यन्ते तैर्मदीयोयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते यथा स्वहस्तपादादिभिः ॥ अद्वैतं परमार्थोहि द्वैतं तद्भेद उच्यते । तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ द्वैतंनानात्वं तस्माद्वैतस्य भेदः कार्यम् ॥

द्वैतीयीकः । त्रि । द्वितीये ॥ तीयादीकक् स्वार्थे वा वाच्यः ॥

द्वैधम् । अ । द्विप्रकारे ॥ द्वित्योश्च धमुञ् ॥ सैन्यंद्विधास्थितौ ॥ एकेनसन्धिरपरेण विग्रह इत्येवं द्विप्रकारो द्वैधम् ॥ विवादे ॥ धमुञन्तात् स्वार्थे डदर्शनम् ॥ यथिद्वैधानितृणानि ॥

द्वैधीभावः । पुं । द्वैधे । नीतिवेदिनां राज्ञांगुणविशेषे ॥ बलिनो द्विषतो मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षित इतिनीतिः ॥

द्वैपः । पुं । द्वीपचर्मावृते रथे । वैयाघ्रे ॥ द्वीपिनो विकारः । प्राणिरजतादिभ्योऽञ् । द्वैपेनचर्मणा परिवृतो रथः । द्वैपवैयाघ्रादञ् ॥ न । व्याघ्रचर्मणि ॥ द्वीपिनो विकारः । प्राणिरजतादिभ्योऽञ् ॥ त्रि । द्वीपिसम्बन्धिनि ॥ व्याघ्रचर्मसम्बन्धिनि ॥ द्वीपसम्बन्धिनि ॥ यथा ॥

द्वैपदिकः । पुं । द्विपदामधीते वेदवेत्यर्थे ॥ उ । ठक् ॥

द्वैपायनः । पुं । व्यासे ॥ द्वीप अयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः । स एव । प्रज्ञाद्यण् ॥ द्वीपेन्यस्तयाया बालस्तस्माद्द्वैपायनोभवदिति पुराणम् । तयासत्यवत्या ॥

द्वैप्यः । त्रि । द्वीपवासिनि । समुद्रसमीपवर्त्तिद्वीपभवे ॥ द्वीपादनुसमुद्रं यञ् ॥

ध:

धः । पुं । धकारे ॥ धर्म्मे ॥ कुबेरे ॥ ब्रह्मणि ॥ न । वसुनि । धने ॥

धटः । पुं । दिव्यतुलायाम् । तुलापरीक्षायाम् ॥ तुलायाम् । तराजु इति भाषा ॥ तुलाराशौ ॥

धटकः । पुं । चतुर्द्दशशतपरिमाणे । द्विचत्वारिंशत्शिकासु ॥

धटपरीक्षा । स्त्री । तुलापरीक्षायाम् ॥

धटी । स्त्री । वासस्त्रीरे । धटीरितिभाषा ॥ कौपीने ॥

धटीदानम् । न । गर्भाधानानन्तरस्त्री सम्प्रदानकचीरवस्त्रदाने ॥ यथा । मूलश्रवणहस्तेषु पुष्यादित्युत्तरासु च । स्त्रणेपौष्णे धटीदेया सौम्यवारे शुभे तिथाविति ज्योतिः सारसंग्रहः ॥

धत्तूरः । पुं । उन्मत्ते । धुस्तूरे ॥ धत्तूरो मदवर्णाग्निवातकृत्ज्वरकुष्ठनुत् । कषायो मधुर स्तिक्तो यूकालिक्षाविनाशनः ॥ उष्णो गुरुर्व्रणश्लेष्मकण्डूकृमिविषापहः ॥ * ॥ धयति धातून् । धेट्० । बा० करत्प् । धुसो दरादित्वात् साधुः ॥

धनम् । न । गोधने ॥ वित्ते । स्वापतेये । ऋक्थे । अर्थे । द्रविणे ॥ यदुक्तं द्रविणं नाम प्राणा एते बहिश्चराः । स तस्य हरते प्राणान् यो यस्य हरते धनम् ॥ इति कूर्मपुराणम् ॥ श्रीभागवते । राजन् यमनुगृह्णामि हरिष्ये तद्धनं शनैः । ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितमिति ॥ दानं भोग स्तथा नाशो धनस्य गतिरीदृशी । दानभोगौ कृतौ नो चेन्नाशः पापात्मनां किलेति देवीभागवतम् ॥ धनात् कुलं प्रभवति धनाद्धर्मः प्रवर्त्तते । नाधनस्य भवेद्धर्मः कामश्चैवकथञ्चनेति च ॥ तत् त्रिविधम् उक्तं गारुडे २१५ अध्याये । यथा । धनन्तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च । कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥ * ॥ क्रमायातं प्रीतिदायं प्राप्तञ्च सह भार्य्यया । अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनम् ॥ * ॥ वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् । याजनाध्यापने नित्यं विशुद्धाच्च प्रतिग्रहः ॥ त्रिविधं क्षत्त्रियस्यापि प्राहुर्वैशेषिकं धनम् । युद्धोपलब्धं करजं दण्डव्यवहारतः ॥ वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम् । कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥ कुसीदकृषिवाणिज्यं प्रकुर्व्वीत स्वयंकृतम् । आपत्काले स्वयंकु-

॥ स्त्रियां द्व्या ॥

द्वैमातुरः । पुं । गणाधिपे । विघ्नराजे ॥ द्वयोर्मात्रोरपत्यम् । मातुरुत्संख्येत्यणि उत्वं रपरत्वञ्च । दुर्गाया मुण्डाभ्यां पालितत्वात् । गजमुखत्वात् शक्तित्वात् अपत्यत्वात् ॥ गङ्गाया अपत्यत्वाद्वा ॥ जरासन्धे ॥ त्रि । द्विमातृके ॥

द्वैमातृकः । पुं । नदीवृष्टिजलोद्भूतधान्यभृतदेशे ॥

द्वैपदीया । स्त्री । नागवल्लीप्रभेदे ॥

द्व्यङ्गः । पुं । द्विस्वभावराशौ ॥

द्व्यङ्गुलम् । त्रि । अङ्गुलिद्वयपरिमिते ॥ द्वे अङ्गुली परिमाणमस्य ॥ न । अङ्गुलिद्वयमात्रे ॥ द्वयोरङ्गुल्योः समाहारः ॥

द्व्यञ्जलः । त्रि । अञ्जलिद्वयपरिमिते ॥ द्वावञ्जली परिमाणमस्य ॥ न । अञ्जलिद्वयमात्रे ॥ द्वयोरञ्जल्योः समाहारः ॥

द्व्यणुकम् । न । परमाणुद्वयसंयोगादुत्पन्ने । परमाणुसमवेतद्रव्ये । परमाणुद्वयात्मके ॥ तच्च प्रत्यक्षादिविषयम् । यथा । विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः ॥ तस्य परिमाणमनित्यम् । यथा । अनित्ये द्व्यणुकादौ तु संख्याजन्यमुदाहृतमिति भाषापरिच्छेदः ॥

द्व्यन्यः । त्रि । द्वाभ्यामन्यस्मिन् ॥ द्वेऽन्ये यस्य वा ॥ न । द्वयोरन्ययोः समाहारे ॥

द्व्यर्थः । त्रि । अर्थद्वययुक्ते शब्दादौ ॥

द्व्यष्टम् । न । ताम्रे । शुल्वे ॥ द्वे हेमरूप्ये अश्नुतेऽस्य । अशू० । गन्धर्वतिलकः ॥

द्व्यहः । पुं । अहर्द्वये ॥ द्वे अहनी समाहृते । रात्राह्नाहाः पुंसि ॥

द्व्यात्मकः । पुं । मिथुनकन्याधनुर्मीनराशिषु ॥ यथा । चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः । इति ॥

द्व्यामुष्यायणः । पुं । तव मम चायमिति परिभाषया धर्मतः परिगृहीते ॥ अमुष्य प्रसिद्धस्यापत्यमामुष्यायणः । द्वयोरामुष्यायणः ॥ उभयोरप्यसौ पिण्डदाता भवति । यतः सुतो जायते ये अथार्थं धर्मतो गृह्यते तयोः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः । इति स्मृतेः ॥

द्व्याह्निकः । त्रि । दिनद्वयभवे ॥ द्व्यहे भवः ॥

वैन्नैनसायुज्यते हिनस्ति ॥ धनं ति। धनधान्ये। पचादच् ॥ खेटार्थे ॥ धनिष्ठानक्षत्रे ॥

धनकेलिः। पुं। कुवेरे। राजराजे ॥

धनच्छूः। स्त्री। पक्षिविशेषे। करेटव्यायाम् ॥ इ०वि० ॥

धनञ्जयः। पुं। अर्जुने। युधिष्ठिरराजसूयार्थं दिग्विजये सर्वान् राज्ञोजित्वा धनमाहृतवानिति संज्ञाप्रभावे पाण्डवानां मध्ये भगवद्विभूतौ ॥ वह्नौ ॥ धनमिच्छेद्धुताशनात् ॥ नागप्रभेदे ॥ अयञ्च जलाशयाधिपतिः ॥ पेशयकरे देहवर्त्तिवायौ ॥ जलहाति नतस्यापि सर्वव्यापीधनञ्जयः ॥ ककुभतरौ ॥ चित्रकवृक्षे ॥ मल्लेषम-भेदे ॥ यथा। मांसकूष्माण्डकदली वृक्षवेरादि साधयेत्। प्रलेपविधिना चार्यं प्रलेहोयं धनञ्जयः ॥ धनञ्जयति। जिजये। अस्मात्। संज्ञायां भृतवृजिधारिसहितपिदमः। इतिखच्। अरुर्द्विषदिति मुम् ॥

धनदः। पुं। कुवेरे ॥ धनं दयते। दे रक्षापालने। आतइति कः ॥ चित्रकवृक्षे ॥ त्रि। धनदातरि ॥ धनंददाति। डुदाञ्०। आतइति कः ॥

धनदा। स्त्री। देवीविशेषे ॥ टाप् ॥

धनदाची। स्त्री। उनाकरञ्जे ॥

धनदानुचरः। पुं। यक्षे ॥ धनदस्यानुचरः ॥

धनदानुजः। पुं। दशास्ये। रावणे ॥ धनदस्य अनुजः ॥

धनदायी। पुं। अग्नौ ॥ आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्। ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज्जनार्दनात् ॥ त्रि। रिक्थप्रदे ॥

धनन्ददा। स्त्री। जिनशक्तिविशेषे ॥

धनपतिः। पुं। कुवेरे। त्र्यम्बकसखे ॥ धनस्य धनानां वा पतिः ॥ त्रि। धनान्विते ॥

धनपिशाचिका। स्त्री।
धनपिशाची। स्त्री। } धनाशायाम्। तृष्णायाम्। धनलोभे ॥

धनप्रिया। स्त्री। काकजम्बाम् ॥

धनमानमदान्वितः। त्रि। धननिमित्तो योमान आत्मनि पूज्यत्वाध्यासः तन्निमित्तो योमदः परस्मिन् गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्विते ॥

धनलोलुपः। त्रि। धनविषये अतिलुब्धे ॥ यथा। यदासुम्लेच्छजातीयाराजानोधनलोलुपाः। भविष्यन्ति महाप्राज्ञ तदैवप्रबलः कलिरिति श्री महानिर्वाणतन्त्रम् ॥

धनवान्। त्रि। धनिनि। धनविशिष्टे ॥ धनमस्त्यस्यास्मिन् वा। तदस्यास्तीति

मतुप् ॥ धिगस्त्वेता विद्या धिगपि कविता धिक् सुजनता वयोरूपं धिक् धिगपि च यशो निर्धनवताम् । अजीर्यादेकः सकलगुणहीनोऽपि धनवान् यद्द्वारे यस्य तु प्रणयसमाः सन्ति गुणिन इति विवेकिन. खेदोक्तिः ॥

धनवती । स्त्री । धनिष्ठानक्षत्रे ॥ ङीप् ॥

धनस्थकः । पु । गोक्षुरे ॥ इति शब्दचन्द्रिका ॥

धनस्वामी । त्रि । उत्तमर्णे ॥

धनहरी । स्त्री । चण्डाहुमे । चोरनामगन्धद्रव्ये । गन्धहासके ॥ त्रि । धनहारिणि ॥ धनं हरति । हृञ् । हरतेरनुद्यमनेऽच् । गौ० ङीप् ॥

धनहारी । त्रि । धनहारके ॥

धनागारम् । न । भाण्डागारे ॥

धनाढ्यः । त्रि । धनसंयुक्ते ॥ धनेनाढ्यः ॥

धनाधिकृत. । त्रि । धनाध्यक्षे । खजाञ्ची इति भाषा ॥

धनाधिप. । पुं । कुबेरे । गुह्यकेश्वरे । धनदे ॥ धनानामधिपः ॥

धनाधिपतिः । पुं । कुबेरे ॥ धनानामधिपतिः ॥

धनाध्यक्ष. । पु । कुबेरे । धनदे ॥ धनाऽधिकृते । खजाञ्ची इति भाषा ॥ अस्य लक्षणं यथा । लोहवस्त्राजिनादीनां रत्नानाञ्च विधानवित् । विज्ञाता फल्गुसाराणां अनाहार्य्यः शुचिः सदा ॥ निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥ आयद्वारेषु सर्व्वेषु धनाध्यक्षसमा नराः । व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता ॥ इति मत्स्यपुराणम् ॥

धनाशा । स्त्री । धनलोभे ॥ जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः । जीविताशा धनाशा च जीर्य्यतोऽपि न जीर्य्यति ॥

धनाश्रीः । स्त्री । रागिणीविशेषे ॥

धनिकः । पुं । धन्याके ॥ अस्मिन्नर्थे क्लीबमिति राजनिर्घण्टः । पुंलिङ्ग इति मेदिनी ॥ धवे ॥ त्रि । साधौ ॥ धनिनि ॥ धनमस्यास्ति । अतइनिठनाविति ठन् ॥

धनिका । स्त्री । साधुनार्य्याम् ॥ वध्वाम् ॥ युवत्याम् ॥ प्रियङ्गुवृक्षे ॥

धनी । त्रि । आढ्ये ॥ बहुधनमस्यास्ति । अतइनिठनाविति इनिः ॥

धनिष्ठा । स्त्री । श्रविष्ठायाम् । पर्य्यायविंशतितमनक्षत्रे ॥ अतिशयेन धनवती । इष्ठन् । विन्मतोर्लुगिति मतुपो लुक् ॥ अस्यां जातस्य फलम् । आचाररतो दारचारुशीलो धनाधिमानी बलवान् दयालुः । यस्य प्रसूतौ च भवेद्धनिष्ठा महत् प्रतिष्ठा सहितो नरः

स्यात् ॥

धनीका । स्त्री । युवत्याम् ॥

धनीयकम् । क्ली । धान्याके ॥

धनुः । पुं । पियालवृक्षे । राशिभेदे ॥ शरासने ॥ हस्तचतुष्टयमाने ॥ इध नि ॥ धारयति धनति वा । धन० । भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उरिति उः ॥

धनुःपटः । पुं । पियालतरौ ॥ धनुषइव पटो विस्तारोऽस्य ॥

धनुःशाखा । स्त्री । मूर्वायाम् ॥

धनुःश्रेणी । स्त्री । मूर्वायाम् ॥ महेन्द्रवारुण्याम् ॥

धनुरधिपः । पुं । बृहस्पतौ ॥ धनुषः अधिपः ॥

धनुर्गुणः । पुं । ज्यायाम् । मौर्व्याम् ॥ धनुषो गुणः ॥

धनुर्गुणा । स्त्री । मूर्वायाम् ॥

धनुर्द्रुमः । पुं । वंशे ॥

धनुर्धरः । त्रि । धनुष्मति । धन्विनि ॥ धरति । धृञ्० । अच् । धनुषो धरः ॥

धनुर्द्धारी । त्रि । धनुर्द्धरे । निषङ्गिणि । चापिनि ॥ तल्लक्षणं यथा । शूरस्य धनुयुक्तस्य गजाश्वरथकोविदः । धनुर्द्धारी भवेद्राज्ञः सर्वक्लेशसहः शुचिरिति मत्स्यपुराणम् ॥

धनुर्भृत् । पुं । धनुर्द्धरे । धानुष्के ॥

धनुर्मध्यम् । क्ली । वक्रे ॥ धनुर्मध्यम् ॥

धनुर्मौर्वी । स्त्री । मूर्वायाम् ॥

धनुर्व्यासः । पुं । प्रवासे ॥

धनुर्लता । स्त्री । सोमवल्ल्याम् ॥

धनुर्वृक्षः । पुं । धन्वनवृक्षे ॥ भल्लातके ॥ वंशे ॥ अश्वत्थे ॥

धनुर्वेदः । पुं । अस्त्रशस्त्रप्रयोगोपसंहारप्रतिपादके मन्त्रसहिते पादचतुष्टयात्मके यजुर्वेदस्योपवेदे ॥

धनुष्करः । पुं । धानुष्के ॥ धनुःकरेऽस्य ॥ यद्वा । धनुः करोति । दिवाविभेतिटः ॥

धनुष्पटः । पुं । पियालवृक्षे ॥ धनुषइव पटो विस्तारोऽस्य ॥

धनुष्मान् । पुं । धानुष्के । धनुर्द्धारिणि ॥ धनुरस्यास्ति । मतुप् । तसौमत्वर्थे इति भत्वम् ॥

धनुः । पुं । पियाले ॥ पुं । न । राशिविशेषे । तौषिके ॥ एतद्राशिजातफलं यथा ॥ बहुकलाकुशलः प्रबलो महान् विमलताकलितः सरलोऽतिभाक् । यदधरोऽपि धनुर्द्धरगो नरो धनकरो प्रकरोति धनव्ययम् ॥ तत्स्यजातफलम् । धनुर्द्धरे समुत्पन्नो नीतिमान् धनवान् सुखी । कुलमध्ये प्रधानश्च प्राप्तः सर्वस्य पोषकः ॥

शरासने । कोदण्डे । कार्मुके ॥ अ-स्यलक्षणं यथा । धनुस्तु द्विविधं प्रोक्तं शार्ङ्गं वांशं तथैव च । कोमलं वर्णदृढता तयोर्गुणाउदाहृतः॥ सुखसन्धिकरणं सममुष्ट्यायतं धनुः। विपदोमुष्टिदेशेऽन्ये तदङ्गेभङ्गभावहे दितियुक्तिकल्पतरुः ॥ * ॥ धनुधा कार्यमेतावद्यावतांनामभिरक्षणम् ॥ * ॥ हस्तचतुष्टयपरिमाणे । काडा । इति गौडभाषा ॥ यथा । चतुर्विंशाङ्गुलोहस्तश्चतुष्कं धनुःस्मृतम् ॥ त्रि० । धनुर्धरे ॥ इधन्ति धारयन्ति । धन० । उसिः प्रत्ययः ॥ यद्वा । धनति । धनशब्दे । ऋर्त्तिपृवपियजित निधनितपिभ्योनिदित्युसिः ॥

धनूः । पुं । धनुषि ॥ नवमराशौ ॥ इधन्ति । धन्यते वा । धन० । कृषिचमितनिधनिसर्जिखर्जिभ्यऊः ॥

धनेश्वरः । पुं । कुबेरे ॥ धनानामीश्वरः ॥

धन्वधन्वम् । न । कपाटे ॥

धन्यः । पुं । अश्वकर्णवृक्षे ॥-त्रि । श्ला-घ्ये ॥ स्वनाम्ना पुरुषोधन्यः पितृनाम्ना च मध्यमः । अधमोमातृनाम्नाचमातृनामाधमाधमः ॥ कृतार्थे ॥ पुण्यवति । सुकृतिनि ॥ वार्हस्पत्योऽयन साद्दावर्यशास्त्रे ॥ धनायहिते ॥ धनस्यनिमित्ते ॥ धनंलब्धा । धनगर्णकृत्येतियत् ॥ धनस्य निमित्तं संयोग उत्पातोवा । गोद्व्यचइत्यादिनायत् ॥ धनंप्रयोजनमस्यवा ॥

धन्यव्रतम् । न । धनजनके व्रतविशेषे ॥

धन्या । स्त्री । आमलक्याम् ॥ धात्र्याम् । उपमातरि । धाय इति भाषा ॥ धन्याके ॥ पिष्डारकवनदेव्याम् ॥ टाप् ॥

धन्याकम् । न । कुस्तुम्बुरु खि । वितुन्नके । धनिआ इति भाषा ॥ शिलायां साधुसम्पिष्टं धन्याकं वस्त्रगालितम् । शर्करोदकसम्मिश्रं कर्पूरादि सुसंस्कृतम् । नवीने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥ धन्यते अर्थार्थिभिः । धनशब्दे । पिना० साधु ॥

धन्यासरस्वती । स्त्री । तीर्थविशेषे ॥

धन्वम् । न । चापे ॥ इत्यमरटीकायां भरतः ॥

धन्वङ्गः । पुं । धामिन् इति भाषाप्रसिद्धे धनुर्वृक्षे । गोधनुष्के ॥ धन्वनः कफपित्तास्रकासघ्नः तुवरोलघुः । बृंहणो बलकृद्रूक्षः सन्धिकृद्व्रणरोपणः ॥ इति भावप्रकाशः ॥

धन्वदुर्गम् । न । मरुवेष्टिते चतुर्दिक्षु प्रपयोजनमनुदके ॥

धन्वा । पुं । अल्पोदकदेशे ॥ मरुदेशे ॥ न । चापे ॥ स्थले ॥ धन्वते ऽस्मा

त् । धन्विःशोभोगत्यर्थः । कनिन्युवृपीतिकनिन् । धन्वोति अन्तर्भावितण्यर्थोषा ॥

धन्वनः । पुं । धामनि इति भाषा प्रसिद्धे धनुर्वृक्षे । रक्तकुसुमे । महाबले ॥

धन्वन्तरिः । पुं । देववैद्यविशेषे । नारायणांशे ॥ नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् । पुरा समुद्रमथने समुत्तस्थौ महोदधेः ॥ सर्ववेदेषु निष्णातो मन्त्रतन्त्रविशारदः । शिष्यो हि वैनतेयस्य शङ्करस्योपशिष्यकः ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥ काशिराजे । दिवोदासे ॥ यथा । अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् । शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम् ॥ धन्वं शल्यशास्त्रम् तस्यान्तं पारमियर्त्ति गच्छति । ऋ गतौ । अच् ॥ विक्रमादित्यसभास्थे वैद्याक्करे ॥

धन्वन्तरिग्रस्ता । स्त्री । कटुक्याम् ॥

धन्वयवासः । पुं । दुरालभायाम् । धमासा औरजवासा इति भाषा ॥ धन्वनो मरुभूमेर्यवासः । तथोत्पन्नत्वात् ॥

धन्वयवासकः । पुं । दुरालभायाम् ॥

धन्वयासः । पुं । दुरालभायाम् । यवासे । जवासा इतिभाषा ॥ धन्वनोयासः मरुभवत्वात् ॥

धन्वी । पुं । अर्जुने । पार्थे ॥ ककुभद्रुमे ॥ दुरालभायाम् ॥ बकुले ॥ त्रि । छेके । विदग्धे ॥ चापिनि । धनुर्द्धरे ॥ लोकार्ककेशवौ कोटी गङ्गाख्यौ नगरं धनुः । कलिरौच्यः शरो धन्मः शिवो धन्वी पुनातु माम् ॥ धनुश्चापोऽस्यास्ति । व्रीह्यादित्वादिनिः ॥

धन्विस्थानम् । क्ली । प्रत्यालीढादिषु ॥ वैसवं समपादञ्च वैशाखं मण्डलं तथा । प्रत्यालीढमथालीढं स्थानान्येतानि धन्विनाम् ॥ धन्विनां युद्धकाले स्थानम् ॥

धमः । त्रि । अग्निसंयोगकर्त्तरि ॥ शब्दकर्त्तरि ॥ धमतेः पचाद्यच् ॥

धमकः । पुं । कर्मकारे ॥ धमति । ध्मा शब्दाग्निसंयोगयोः । ध्मोधमश्चेति क्वुन् ॥

धमनः । पुं । नले । नडे । नरकटइति नरसल इतिचप्रसिद्धे तृणे ॥ त्रि । भस्त्राध्मापके ॥ क्रूरे ॥ धमति धम्यते वा । धम ध्माने सौत्रः । बहुलमिति युच् ॥

धमनिः । स्त्री । धमन्याम् ॥ धम्यते । धमिः सौत्रो ध्माने । अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिरित्यनिः प्रत्ययः ॥

धमनी । स्त्री । शिरायाम् । नाड्याम् ॥

कन्धरायाम् ॥ पृष्टविर्यासिन्याम् ॥ हरिद्रायाम् ॥ धम्यते । धमिःसौत्रः । अनिप्रत्ययः । ततः कृदिकारादक्तिन इति ङीष् ॥ नलिकायाम् ॥ पृश्निपर्ण्याम् ॥

धम्मिल्लः । पुं । संयतकचेषु । बद्धकुन्तलेषु । खोपा इति गौडे भाषा ॥ सकुसुमगर्भो, मौक्तिकपद्मरागखचितादिना बहिः संयतोबद्धः केशकलाप इतिभरतः । चूडा इतिमाघा ॥ धमति । धमध्माने सौत्रः । किप् । मिलति । मिलसङ्गमे । अच् । धम्वासौमिलश्च । कोलेर्धातोरिति सौत्रेषु न भवति । पृषोदरादिः ॥

धरः । पुं । गिरौ । पर्वते ॥ कार्पासतूले ॥ कूर्मराजे ॥ वसुविशेषे ॥ धरति । धृञ्० । पचाद्यच् ॥

धरणः । पुं । अद्रिपतौ ॥ लोके ॥ स्तने ॥ धान्ये ॥ दिवाकरे ॥ सेतौ ॥ न । चतुर्विंशतिरक्तिकारूपे मानभेदे । पल्ले ॥ दशपलमाने । पलं सुवर्णाश्चत्वारः पलानिधरणंदशेतिमनुः ॥ पलदशमांशे । इतिवैद्यकम् ॥ धारणे ॥ षोडशकृष्णमाषकैः परिमिते । पुराणे ॥

धरणिः । स्त्री । भूमौ ॥ धरति । धृञ्० । ध्रियते विश्वमनया । धृङ् अवस्थानेवा । अर्त्तिसृधृधमीत्यनिः ॥

धरणिधरः । पुं । विष्णौ ॥ धरण्याः धरः ॥ नगे ॥

धरणिस्थः । त्रि । भूमलचारिणि ॥ धरण्यांतिष्ठति । स्था० । कः ॥

धरणी । स्त्री । भुवि ॥ धरणीपतितंतोयं चातकानां वृथाकरम् ॥ शाल्मलिद्रुमे ॥ धरति विश्वम् । धृञ्० । अर्त्तिसृभिप्यादिना ऽनिः । कृदिकारादिति ङीष् ॥ नाड्याम् ॥ कन्दविशेषे । कन्दालौ । वनमान्दे ॥

धरणीकन्दः । पुं । धरणीनाममूलविशेषे ॥

धरणीकीलकः । पुं । नगे । पर्वते ॥

धरणीधरः । पुं । विष्णौ ॥ पर्वते ॥ कच्छपे ॥ शेषदिग्गजादिरूपेण धरणींधत्ते । धृञ्० । अच् ॥ धरण्या मरेशः ॥

धरणीपुरम् । न । चतुरस्रमण्डले ॥ पुं । [illegible] ॥ धरण्याः पुरम् । धरणीपुरंयस्य ॥

धरणीपूरः । पुं । सिन्धौ । समुद्रे ॥

धरणीप्लवः । पुं । समुद्रे ॥ धरणीप्लवोऽस्मिन् ॥

धरणीश्वरः । पुं । ईश्वरे । शिवे ॥ धरण्याईश्वरः ॥ नृपे ॥

धरणीसुतः । पुं । भौमे ॥ धरण्याः-

सुतः ॥

धरणीसुता । स्त्री । सीतायाम् । जानक्याम् ॥ धरण्याःसुता ॥

धरसंस्थः । त्रि । पर्व्वताकारे । गिरिसदृशे ॥ धरस्य संस्था सादृश्यं यस्य ॥

धरा । स्त्री । भुवि । पृथिव्याम् ॥ गर्भाशये । जरायौ ॥ मेदसि ॥ नाड्याम् ॥ महादानविशेषे ॥ धरतिविश्वम् । धृञ्० । धरा: शैला: सन्त्यस्यां वा । यद्वा । ध्रियते । धृङ्० । अच् ॥ तीर्थविशेषे ॥ यत्स्नानात् शोकनाशो भवति ॥

धराकदम्बः । पुं । धाराकदम्बवृक्षे । प्रावृष्ये । भृङ्गवल्लभे ॥

धराकदम्बकः । पुं । धराकदम्बे ॥

धरात्मजः । पुं । भौमे ॥ अङ्गारकग्रहे ॥ धरायाः आत्मजः ॥

धराधरः । पुं । वराहरूपे विष्णौ ॥ शेषे ॥ शिरसो: शेषाख्यैरशेषां धरां धारयसि सदा ॥ धराया धरः ॥ पर्व्वते ॥

धरामरः । पुं । भूमिदेवे । ब्राह्मणे ॥ यथा । धरामरेन्द्रप्राशिषु प्रधान मीयसे धरां यदि चमादरात् सदा प्रदेहि तत्फलप्रदाम् । पयस्विनीं स्वच्छकृतां सुवंशभुक्तिमुक्तिदां यदा तदा भवेच्छ्युर्निमेदकं निजेषकृमिति वीरवचः ॥

धरित्री । स्त्री । भूमौ ॥ धरतिविश्वम् । धृञ्० । अशि० इत्रः । गौ० ङीप् ॥

धरिमा । पुं । रूपे ॥ तुलायाम् ॥ यथा । तथा धरिममेयानां शतादभ्यधिके वधः ॥ ध्रियते । धृञ्० । हृभृधृसृस्तृश्भ्य इमनिच् ॥

धरिममेयः । त्रि । तुलापरिच्छेद्ये ॥

धर्त्तव्यः । त्रि । धारणीये ॥

धर्म्मम् । न । आलये । गृहे ॥ धरतिध्रियते वा । धृञ्० । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥

धर्म्मः । पुं । न । शास्त्रविहितकर्म्मानुष्ठानजन्ये ऽपूर्वे पूर्व्वमीमांसा प्रसिद्धे भाविफलाधारभूते पुण्ये । श्रेयसि । सुकृते । वृषे ॥ यथा । श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः प्रकीर्त्तित इति देवीभगवतम् ॥ स च वर्णाश्रमादिभेदेन षड्विधः । यथोक्तं भविष्यपुराणे । वर्णधर्म्मःस्मृतस्त्वेक आश्रमाणामतःपरम् । वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथेति ॥ तत्र वर्णधर्म्मो नित्यं मद्यं ब्राह्मणो वर्जयेदित्यादिः । आश्रमधर्म्मो ऽग्नीन्धनभैक्ष्यब्रह्मचर्यादिः । वर्णाश्रमधर्म्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः । गुणधर्म्मः शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः । निमित्तधर्म्मो विहि

सति भैषजं यः सततोश्रितानां स
ह्लोक एव परलोकगतस्य बन्धुः । धा
र्य्याः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवात्मभाव मधियान्ति न च स्थिरत्व
म् ॥ सत्याश्वमस्थाने ॥ धरति विश्वम्
प्रियमेवाधारयति वा । धृञ्० । कर्त्तरि
सुसुस्तुधृञ्भ्य सुभावाधापदियक्षि
नीभ्योमन्निति मन् ॥

धर्म्मकर्म्म । न । धर्म्मकार्य्ये । शुभादृष्टप्र
तिपादकक्रियायाम् ॥ वेदप्रणिहितं
धर्म्मकर्म्म तन्मङ्गलंपरमिति मत्स्यवै
वर्त्तं पुराणम् ॥

धर्म्मकथादरिद्रः । त्रि । भारतेकविजन्मा
भिमानवे ॥ इतिहेमाद्रिः ॥

धर्म्मकायः । पुं । बुद्धे ॥ इतित्रिकाण्डशे
षः ॥ धर्म्मोय कायोयस्य ॥

धर्म्मकीलः । पुं । राजशासने ॥ इ०त्रि० ॥

धर्म्मकीलकः । पुं । ब्रह्मशासने ॥ इतिश
ब्दरत्नावली ॥

धर्म्मकेतुः । पुं । बुद्धे ॥

धर्म्मक्षेत्रम् । न । धर्म्मभूमौ । धर्म्मस्य पू
र्व्वं मविद्यमानस्योत्पत्तौ विद्यमान-
स्य वृद्धौ निमित्ते ॥ धर्म्मक्षेत्रम् ॥
कुरुक्षेत्रे ॥ यथा । ब्रह्मवेदिः कुरुक्षे
त्रं पञ्च रामह्रदान्तरम् । धर्म्मक्षेत्रं कु
रुक्षेत्रं द्वादशयोजनावधि ॥ ॥ अ
पिच । तरन्तुकारन्तुकयो यदन्तरं



रामह्रदानाञ्च मचक्रुकस्य च । एत
त् कुरुक्षेत्र समन्तपञ्चकं प्रजापते रु
त्तरवेदिरुच्यते ॥ त्रि । धर्म्माधारे ॥

धर्म्मगुप् । त्रि । धर्म्मरक्षके ॥ धर्म्मं गोपा
यति । गुपू० । क्विप् ॥

धर्म्मघटः । पुं । वैशाखमासे प्रत्यहदा
तव्येसुगन्धोदकपूर्णकलसे ॥

धर्म्मचक्रः । पुं । बुद्धे ॥

धर्म्मचक्रभृत् । पुं । जिने ॥ इतित्रि० ॥

धर्म्मचारिणी । स्त्री । भार्य्यायाम् ॥

धर्म्मचिन्तनम् । न । धर्म्मचिन्तायाम् । पु
ण्यभावनायाम् ॥

धर्म्मचिन्ता । स्त्री । उपाधौ । धर्म्मचिन्त
ने ॥ धर्म्मस्यचिन्ता ॥

धर्म्मजीवनः । पुं । ब्राह्मणविशेषे । या-
जनप्रतिग्रहादिना परस्य धर्म्ममुत्पा
द्य यो ब्राह्मणोजीवति तस्मिन् ॥

धर्म्मज्ञः । त्रि । धर्म्मज्ञानविशिष्टे ॥

धर्म्मणः । पुं । वृक्षभेदे । धामिनिया
इति गौडभाषाप्रसिद्धे ॥ सर्पप्रभेदे ।
ढेमना इतिगौडभाषा ॥

धर्म्मतीर्थम् । न । तीर्थविशेषे ॥

धर्म्मत्वम् । न । हस्तिमत्त्वे । धारयत्व
इतियावत् ॥ यथा । गगनादेर्वृत्ति
मत्त्वत्वधर्म्मत्वाभावादिति जग
दीशः ॥

धर्म्मदानम् । न । प्रयोजनमनपेक्ष्यके

वस्तुधर्मबुद्ध्यापात्रेभ्योदाने ॥ यथा ऋदेवलः । पात्रेभ्योदीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्मबुद्ध्यायत् धर्मदानं प्रचक्षत इति ॥

धर्म्मदुघा । स्त्री । सुविनीतगव्याम् ॥ धर्मान् दोग्धीतिविग्रहे दुहेःकप् घश्चाऽन्तादेशः ॥

धर्म्मद्रवा । स्त्री । } गङ्गायाम् ।
धर्म्मद्रवी । स्त्री । } सिन्धौ ॥ यथा । विष्णुपादार्घसम्भूते गङ्गे त्रिपथगामिनि । धर्मद्रवीतिविख्याते पापंमेहर जाह्नवीति ॥

धर्म्मधातुः । पुं । सुगते । बुद्धे ॥

धर्म्मध्वजी । त्रि । जीविकार्थं जटादिधारिणि । लिङ्गवृत्तौ ॥ यो बहुजनसमक्षं धर्ममाचरति स्वतः परतश्चलोके ख्यापयति तस्य धर्मः ध्वजं चिह्नमिवेति धर्मध्वजी । धर्मश्चध्वजश्चिह्नम् । धर्मोध्वजइवबा ॥ धर्मध्वजोऽस्यास्ति । अतइनिः ॥

धर्म्मनैपुण्यकामः । त्रि । गृहीतवेदाध्ययननियमजन्यादृष्टेच्छौ ॥

धर्म्मपत्तनम् । न । मरिचे ॥ धर्मपत्तने जातम् । तत्रजातत्वात्तस्य । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यवन्याम् । धर्मपुर्याम् ॥

धर्म्मपत्नी । स्त्री । प्रथमोढायां सवर्णायाम् ॥ कीर्त्तौ ॥ श्रियि ॥ वाचि ॥ स्मृतौ ॥ मेधायाम् ॥ धृतौ ॥ क्षमायाम् ॥ नारीणां मध्ये कीर्त्याद्याः सप्तधर्मपत्न्यो भगवद्विभूतयः । यासामाभासमात्रसम्बन्धेनापि जनःसर्वलोकादरणीयो भवति तासां सर्वस्त्रीषूत्तमत्वमतिप्रसिद्धमेव ॥

धर्म्मपत्रम् । न । यज्ञोडुम्बरे ॥ धर्मार्थं पत्रे ॥

धर्म्मपालः । पुं । पञ्चाश्रमधर्मपालके ॥ धर्मम् पालयति । पाल० । कर्मण्यण् ॥

धर्म्मपुत्रः । पुं । युधिष्ठिरेन्द्रमे । अजातशत्रौ ॥ धर्मस्यपुत्रः ॥ नरनारायणयोर्ऋष्योः ॥ धर्मतःकृतेपुत्रे । धरम् बेटा इति भाषा ॥

धर्म्मप्रधानः । पुं । धार्मिके ॥ धर्मःप्रधानोयस्य ॥

धर्म्मभाणकः । पुं । भारतादिपाठके ॥

धर्म्ममूलम् । न । अद्रोहादिषु ॥ यथा अद्रोहश्चाप्यलोभश्च दमोभूतदया तपः । ब्रह्मचर्यं ततः सत्यमनुक्रोशःक्षमाधृतिः । सनातनस्यधर्मस्यमूलमेतद्दुरासदमिति मत्० पु० ॥

धर्म्ममेघः । पुं । असम्प्रज्ञातसमाधौ ॥ सर्वतो विरक्तस्य समाधिफलमपिसुख मनपेक्षमाणस्य योगिनोहृदभूमिः सन् धर्ममेघ इत्युच्यते । उ

क्षम। प्रसद्य स्थानेष्वकुसीदस्य सर्वं
थाविधेकश्यालेर्धर्ममेषःसमाधिस्ततः
क्लेशकर्मनिवृत्तिरिति ॥

धर्म्मयुक्तः । त्रि । नित्यनैमित्तिकस्वध
र्म्मोपयोगिनि ॥

धर्म्मयुज् । त्रि । धार्म्मिके । धर्म्मयुक्ते ॥

धर्म्मयूपः । पुं । श्रीहरौ ॥ यूपे पशुवत्
भगवत्समाराधनात्मका धर्म्मास्तत्र
बध्यन्ते ऽसौ धर्म्माणां यूपः ॥ यथा यूपः
पशूनां नियोजनस्थानमेवं विष्णुःस्व
समाराधनात्मकानां धर्म्माणां स्थान
मित्यर्थः ॥

धर्म्मराजः । पुं । यमे ॥ बुद्धे ॥ युधिष्ठिर
नृपे ॥ धर्म्मेण राजते । राज् । पचाद्य
च् ॥ धर्म्मस्य राजा वा । राजाहःसखि
भ्यष्टच् ॥ धर्म्मस्यासौ राजा चेति वा ॥

धर्म्मराजपरीक्षा । स्त्री । धर्म्माधर्म्मपरी
क्षायां ॥ यथाह बृहस्पतिः । पत्रद्वये
लेखनीयौ धर्म्माधर्म्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च
सामभिः ॥ आमन्त्र्य पूजयेद्गन्धैः
कुसुमैश्च सितासितैः । अभ्युक्ष्य पञ्च
गव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपल
क्षितौ । ततः कुम्भात् पिण्डमेकं गृ
ह्णीयाद्विचक्षणः ॥ धर्म्मे गृहीते शु
द्धःस्यात् सम्यग्धर्म्मपरीक्षकैरिति ॥

जीवदानमन्त्रादिकं शारदायां द्र
ष्टव्यम् ॥

धर्म्मलक्षणम् । न । धर्म्मस्वरूपे ॥ धृतिः
क्षमा दमो ऽस्तेयं शौचमिन्द्रियनि
ग्रहः । धीर्विद्या सत्यमक्रोधो दश
कं धर्म्मलक्षणम् ॥ इति मनुः ॥ अपि
च । पापेदानं मतिःकृष्णे मातापित्रो
श्च पूजनम् । श्रद्धा बलिर्गवांग्रासः प
ड्विधं धर्म्मलक्षणम् ॥

धर्म्मवाणिजिकः । पुं । पुण्यकर्म्मफलका
मिनि ॥

धर्म्मवान् । त्रि । पुण्यवति । धर्म्मविशि
ष्टे ॥ धर्म्मोऽस्यास्तीति मतुप् ॥

धर्म्मवर्ग्गः । पुं । चतुर्वर्गे ॥ धर्म्मघटितो
वर्गः ॥

धर्म्मवासरः । पुं । पूर्णिमायाम् ॥

धर्म्मवाहनः । पुं । श्रीसदाशिवे ॥ धर्म्मो
वाहनमस्य ॥ न । धर्म्मस्यवाने ॥

धर्म्मवित् । त्रि । धर्म्मज्ञे ॥

धर्म्मविप्लवः । पुं । धर्म्मव्यतिक्रमे । अधर्म्मे ॥

धर्म्मवैतंसिकः । पुं । पापकर्म्मणा धन
मासाद्यात्मनो धार्म्मिकत्वख्यापनार्थ
दानकर्त्तरि ॥

धर्म्मव्याधः । पुं । पापपुरुषविशेषे ॥

धर्म्मशास्त्रम् । न । मन्वादिप्रणीतस्मृतौ । ध
र्म्मसंहितायाम् ॥ धर्म्मप्रतिपादकं
शास्त्रम् ॥ धर्म्मशास्त्रप्रयोजनं यथा

। मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः । यमापस्तम्बसंवर्त्ताःकात्यायनबृहस्पती ॥ पराशरव्यासशङ्खलिखिता दक्षगौतमौ । शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः ॥ इति याज्ञवल्क्यः ॥ उशनश्शब्दपर्य्यन्तो द्वन्द्वैकवद्भावः । नेयं परिसङ्ख्या किन्तु प्रदर्शनार्थमेतत् । अतो बौधायनादेरपि धर्म्मशास्त्रत्वमविरुद्धम् । एतेषां प्रत्येकं प्रामाण्येऽपि साकाङ्क्षाणां साकाङ्क्षापरिपूरणमन्यतः क्रियते । विरोधे तु विकल्पः ॥

धर्म्मशीलः । त्रि । धर्म्मयुक्ते । धार्म्मिके ॥ धर्म्मःशीलमस्य ॥

धर्म्मशुद्धिः । स्त्री । अधर्म्माभिशङ्कयानिर्द्धारणे ॥

धर्म्मसंस्थापनम् । न । वेदमार्गपरिरक्षणे ॥ धर्म्मस्य सम्यक् अधर्म्मनिवारणेन स्थापनम् ॥

धर्म्मसंहिता । स्त्री । मन्वाद्युक्तस्मृतौ ॥ धर्म्मबोधार्थं रचिता । सम्पूर्णा हिता । ऋषिभिः कर्म्मणि क्तः इत्यादिः ॥

धर्म्मसम्मूढचेताः । त्रि । धर्म्मे विषये निर्णायकप्रमाणादर्शनात् संशयैर्व्याकुलचित्ते ॥ धर्म्मे सम्मूढं चेतोऽस्य ॥

धर्म्मसावर्णिः । पुं । एकादशमनौ ॥

धर्म्मसुतः । पुं । युधिष्ठिरे ॥ धर्म्मस्य सुतः ॥

धर्म्मसूः । पुं । कलिङ्गे । धूम्याटपक्षिणि ॥

धर्म्मस्थः । पुं । प्राड्विवाके ॥ धर्म्मे तिष्ठति । स्था० । कः ॥

धर्म्मस्थानम् । न । न्यायाधर्म्मभवने ॥

धर्म्माङ्गम् । न । ब्रह्मचर्य्यादिदशसु ॥ यथा । ब्रह्मचर्य्येण सत्येन तपसा च प्रवर्त्तते । दानेन नियमेनापि क्षमा शौचेन वल्लभ ॥ अहिंसया सुशान्त्या च अस्तेयेनापि वर्त्तते । एतैर्दशभिरङ्गैस्तु धर्म्ममेव प्रसूचयेदिति पा० भू० ॥

धर्म्मात्मजः । पुं । युधिष्ठिरे ॥

धर्म्मात्मा । पुं । धर्म्मस्वभावे । धर्म्मानुगतचित्ते ॥ धर्म्म आत्मा यस्य ॥ त्रिलिङ्गे विशेष्ये ॥

धर्म्माधर्म्मपरीक्षणम् । न । मितौचरीक्षापरीक्षाविशेषे ॥

धर्म्माधर्म्मवित् । पुं । मीमांसके ॥ धर्म्माऽधर्म्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकस्य कल्पनामात्रम् । देशकालादिषु धर्म्माऽधर्म्मयोर्विप्रतिपत्तिदर्शनात् ॥

धर्म्माधिकरणः । पुं । धर्म्माध्यक्षे ॥ तल्लक्षणं यथा । समः शत्रौ च मित्रे च सर्व्वशास्त्रविशारदः । विप्रमुख्यः कुलीनश्च धर्म्माधिकरणो भवेत् ॥ इति मत्स्यपु० ॥ न । राज्ञो विचारस्थाने ॥ यथा । धर्म्मशास्त्रानुसारेण अर्थशास्त्र

निरूपणम् । यथाधिक्रियते स्थाने धर्माधिकरणं हितत् ॥ इति वी॰ मि॰ ॥ पुरुषान्तरतत्त्वज्ञाः प्राणव प्रत्यप्यलोलुपाः । धर्माधिकरणे कार्या जनाखानकरानराः ॥ इति मत्स्य पु॰ ॥

धर्म्माधिकरणी । पुं । धर्माधिकरणाधिष्ठे । धर्माध्यक्षे । प्राड्विवाके ॥

धर्म्माध्यक्षः । पुं । धर्माधिकरणि ॥ कुलशीलगुणोपेतः सर्वकर्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥ परमेश्वरे ॥ धर्मपदञ्च कायाधर्माधर्मप्रतिपादकम् । तथाच धर्माधर्मौ फलदानाय अध्यक्षावस्थिति तौ अध्यक्षयतीति वा ॥

धर्म्माभासः । पुं । श्रुतिस्मृतीतरप्रोक्ते धर्म्मे ॥ यथा । श्रुतिस्मृतिभ्यामुदितं यत् स धर्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यत इति देवीगीता ॥

धर्म्मारण्यम् । न । पुण्यवनविशेषे ॥ तीर्थविशेषे ॥

धर्म्मासनम् । न । राज्ञो धर्मदर्शनार्थमासने । विचारासने । व्यवहारासने ॥

धर्म्मास्तिकायः । पुं । पुद्गलास्तिकायादिन्यस्मिन्नभ्युदयहेतौ ॥

धर्म्मिणी । स्त्री । रेणुकायाम् ॥

धर्म्मी । त्रि । पुण्ययुते । धर्मवति ॥ धर्मो विद्यतेऽस्य । इनिः ॥ अधिकदे प्रवृत्तौ ॥ धर्मा यागादिरूपाः श्रौताः स्मार्त्तास्तान्त्रिकाश्च भगवत्समाराधनरूपा ग्राह्यत्वेनास्य सन्त्यस्येति धर्मी । इनिः ॥ धर्म्मे सर्वम आत्तं प्रकारेतु विपर्ययः ॥

धर्म्मिष्ठः । त्रि । धार्म्मिके ॥

धर्म्मोत्तरः । त्रि । धर्मप्रधाने ॥

धर्म्मोपदेशकः । पुं । श्रीगुरौ ॥

धर्म्यम् । त्रि । धर्मयुक्ते ॥ धर्मादनपेतम् । धर्मपथ्यर्थन्यायादनपेते इति यत् ॥ धर्मेणप्राप्ये ॥ नौवयोधर्मेत्यादिना यत् ॥

धर्म्यविवाहः । पुं । ब्राह्मदैवार्षगान्धर्वप्राजापत्यरूपे विवाहविशेषे ॥

धर्षः । पुं । प्रागल्भ्ये ॥ अमर्षे ॥ शक्तिबन्धने ॥ संहतौ । हिंसायाम् ॥ धर्षणम् । धृषेर्भावे घञ् ॥

धर्षकः । त्रि । अभिभवकर्त्तरि ॥ नटे ॥

धर्षकारिणी । स्त्री । दूषितायां कन्यायाम् ॥

धर्षणम् । न । परिभवे ॥ रते ॥ धृषेः ल्युट् ॥ धर्षशब्दार्थे ॥

धर्षणी । स्त्री । अभिसारिकायाम् । असत्याम् ॥ धर्षति । ञिधृषा॰ । ल्युट् । ङीप् ॥

धर्षणीयः । त्रि । अभिभवनीये । धृष्ये ॥

धर्षिणी । स्त्री । पुंश्चल्याम् ॥

धर्षितम् । न । रतौ । मैथुने ॥ इति त्रिकाण्डशेषः ॥ त्रि । कृतधर्षणे । परिभूते । तिरस्कृते ॥ धृषेः क्तः । इडागमः ॥

धर्षिता । स्त्री । असत्याम् ॥ तिरस्कृतायाम् ॥

धवखडः । पुं । ह्ठकखड्गवृक्षे । धवआँकडा इतिगौडभाषा ॥

धवखडकः । पुं । धवखडे ॥

धवः । पुं । नरे ॥ धूर्त्ते ॥ पत्यौ ॥ स्वनामख्याते वृक्षे । मधुरवृक्षे । पीतफले । वीरे । शुष्कवृक्षे ॥ अस्य गुणाः । धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलञ्च मधुरं मतमिति भावप्रकाशः ॥ धवति धुवति धुनोति धुनाति वा । धूञ् धूञ्कम्पने धविधूनने वा । पचाद्यच् ॥ यद्वा । धूयते । अदोरप् ॥

धवलः । पुं । वृषश्रेष्ठे । महोक्षे ॥ चीनकर्पूरे ॥ धववृक्षे ॥ रागविशेषे ॥ वीरवृक्षे ॥ पाण्डुप्रमेहरवगे । धौरा इति भाषा ॥ धवलः पाण्डु रुक्ष्यो रक्तपित्तहरो हिमः । रसे पाके च मधुरः सङ्ग्राही वातशान्तिकृत् ॥ न । श्वेतमरिचे ॥ छन्दोभेदे ॥ यथा ॥ द्विजवरगणयुगसनगणनगणयुगकलं मिमलवलयमपि च कलयसकलजनसुखम् । फणिपतिवरभणित मनलधवल मिद शितं दिमलकवि सुहृदिव ललित मिति भुविविदितम ॥ यथा ॥ उपगतदृषसुरभिसमय इति सुमुखिशरे निधुवनमधिपिव सव मधुजनिवपमपदे । कमलनयन मनुसरसखि तवरमसपर प्रियतमगृ हगमनमुचितमनुचित मपरम् ॥ त्रि । शुक्ले । सितवर्णवृक्षे ॥ सुन्दरे ॥ धावु० । वाहुलकात् कलः धातोर्ह्रस्वश्च ॥

धवलपक्षः । पुं । हंसे ॥ शुक्लपक्षे ॥

धवलपाटली । स्त्री । सितपाटलिकायाम् ॥

धवलमृत्तिका । स्त्री । खटिकायाम् ॥

धवलयावनालः । पुं । यावनालविशेषे । शालितण्डुले । पाण्डुरे ॥

धवला । स्त्री । शुक्लवर्णायाङ्गवि ॥ धवलवर्णयोगात् अनुदात्तत्वाभावान्ङीष् ॥

धवलार्कः । पुं । मन्दारसे ॥ धवलश्चासावर्कश्च ॥

धवली । स्त्री । धवलवर्णायाङ्गवि । धवलायाम् ॥ गौरादित्वान् ङीष् ॥

धवलोत्पलम् । न । कुमुदे ॥

धवाणकः । पुं । समीरणे । वायौ ॥ धुनाति । धूञ् । आणको लूधूशिङ्धिधाञ्भ्यः ॥

धवित्रम् । न । यज्ञज्वलनज्वालनव्यजने । अग्नेः सन्धुक्षणाय मृगत्वचा रचिते व्यजने ॥ धूयते ऽनेन । धूञ् । अर्त्तिलू धूसूइति इत्रः ॥

धाः । पुं । ब्रह्मणि ॥ धारके ॥ बृहस्पतौ ॥

धाकः । पुं । वृषे ॥ भोजने । आहारे ॥ आधारे ॥ दधाति । डुधाञ् । कृदाधारार्चिकलिभ्यः कः । इति कः ॥

धाटी । स्त्री । अभ्यवस्कन्दे । प्रपाते । य वो. सम्मुखगमने ॥

धाणकः । पुं । दीनारभागे । स्वर्णभूषाभागे ॥ दधाति । डुधाञ् । आणको लूधूशिङ्धिधाञ्भ्यः ॥

धातकी । स्त्री । अग्निपुष्पायाम् । धाइपुष्प्याम् । धाइ इतिप्रसिद्धे गुल्मे ॥ धातकी कटुका शीता मदकृत् तुवरा लघुः । तृष्णातीसारपित्तास्रविषक्रिमिविसर्पजित् ॥ अस्याः पुष्पाणि ग्राह्याणि ॥ धातुं करोति । तत्करोतीति णिच् । टिलोपः । क्वुन् । पिप्पल्यादित्वात् ङीष् ॥

धातुः । पुं । इन्द्रियेषु ॥ शब्दयोनौ । श्लेष्मादौ ॥ अन्नार्थनिर्णयार्थम्



त्वं यथा । क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः । प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इति ॥ सकर्मकाकर्मकभेदेन धातवो द्विविधाः । तथाहि । सत्तार्थीभवनहर्षभीतिशयनक्रीडानिवासक्षयवृद्धिग्लानभोगतिस्थितिजराक्षुत्प्रमादोदये । सोह्वेखेटनवेगयुद्धदहनख्यातिज्वरोन्मादकौतुहृत्स्वेदपलायनभ्रमणकोपास्तुतौ संज्वरे ॥ हसौ जागरणोपक्रमनोत्साहेसतौ संशयेस्नाने । मन्दगतौ चान्वयपतनेचेष्टाकुधौ रोदने । इच्छौ सार्वकृतौ च सिद्धिविरतौ हर्षोपवेशे बले कम्पोद्वेगनिमेषभक्षयतनाद्ये धातवोऽकर्मकाः ॥ दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः । वाचकाभावमानस्य यतस्तस्मादकर्मकाः ॥ कौटिल्यादिषु चार्थेषु प्रोक्ता येते तु धातवः । सद्भावेऽकर्मकाः स्युस्ते तु स्युः सकर्मका इति ॥*॥ आकाशादिमहाभूतेषु ॥ शब्दाकाशादिगुणेषु ॥ रसादिषु । रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इत्युक्तेषु ॥ गैरिकमनःशिलाद्यश्मविकारे ॥ श्लेष्मादौ ॥ लेधातवोपिविद्वद्भिर्द्विता देहधारणात् । अन्नाद्रसस्ततः । त्रिमार्गादानविधे

यैःसोमसूर्यानिला यथा । धारयन्ति जगद्देहं कफपित्तानिलास्तथेति ॥ वस्थि ॥ स्वर्णादौ ॥ सुवर्णरूप्यताम्रारिहरितालमनःशिला । गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः । गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः ॥ * ॥ नवधातवो यथा । हेमतारारनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः ॥ * ॥ अष्टधातवो यथा । हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसमैत्य च धातवोऽष्टौ प्रकीर्त्तिता इतिहानसागरः ॥ अपि च । सुवर्णं रजतं ताम्रं लौहं रूप्यञ्च पारदम् । वङ्गञ्च सीसकं चैवमष्टौ दैवसम्भवा इति वैद्यकम् ॥ * ॥ सप्तधातवो यथा । स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यसदमेव च । सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः इतिभावप्रकाशः ॥ * ॥ वलीपलितखालित्यकार्श्याबल्यजरामयान् । निवार्य्य देहं दधति न्दृणांतद्धातवो मताः ॥ * ॥ सप्तोपधातवो यथा । माक्षिकं तुत्थकाभ्रे च नीलाञ्जनशिलाऽलकाः । रसकश्चेति विज्ञेया एते सप्तोपधातवः ॥ * ॥ शरीरस्यसप्तधातुभवसप्तोपधातवो



यथा । स्तन्यं रजश्च नारीणां काले भवति गच्छति । शुद्धमांसभवःस्नेहो यःसा सङ्कीर्त्यते वसा । स्वेदोदन्तास्तथाकेशास्तथैवौजश्च सप्तमम् । इति धातुभवाज्ञेया एते सप्तोपधातवः ॥ इतिमुग्धबोधः ॥ * ॥ लोकेषु ॥ वस्तुनि ॥ धीयते सर्वं निःक्षिप्यते सुस्यादावस्मिन्निति व्युत्पत्त्या आत्मनि ॥ दधाति शोभां धीयते वा । सुधाञ्० । सितनिगमिमसीति तुन् ॥ शरीरदूषकाद्दोषा मलिनी करणान्मलाः । धारणाद्धातवस्तेषु वातपित्तकफाश्रयः ॥ * ॥ चरितार्थं हरे वीर्य्यं चञ्चीवीर्य्यं मनःशिला । पारदं शिववीर्य्यं स्याद्गन्धकं पार्वतीरजः ॥

धातुकाशीशम् । न । } द्रव्यविशेषे । धातुकासीसम् । न । } कासीसे ॥

धातुघ्नम् । न । काञ्जिके ॥

धातुद्रावकम् । न । टङ्कणे ॥

धातुनाशनम् । न । काञ्जिके ॥

धातुपः । पुं । शरीरस्यप्रथमधातौ । रसइतिख्याते ॥

धातुपुष्पिका । स्त्री । धातृपुष्प्याम् । धाइफूल इतिभाषा ॥

धातुपुष्पी । स्त्री । धातुपुष्पिकायाम् । धातक्याम् ॥

धातुभृत् । पुं । पर्वते ॥ त्रि । धातुपो

पक्के ॥

धातुमाक्षिकम् । न । माक्षिके । पीतके ॥

धातुमारिणी । स्त्री । सर्जिकायाम् ॥

धातुराजकम् । न । रेतसि ॥

धातुवल्लभम् । न । टङ्कणे ॥

धातुवादी । पुं । कारन्धमिनि । धातुवादरते ॥

धातुवैरी । पुं । गन्धके ॥ इति राजनि० ॥

धातुशेखरम् । न । कासीसे ॥

धातूपलः । पु । कठिनिकायाम् ॥

धाता । पुं । अब्जयोनौ । ब्रह्मणि ॥ उपादानत्वात् सर्वस्य कर्मफलजातस्य विचित्रतया प्राणिभ्यो विभक्तरि । पोषयितरि । कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलदातेश्वरविभूतिः ॥ धातुर्गतिर्विचित्राच दुर्ज्ञेयाभुवनत्रये ॥ विष्णौ । श्रीपतौ ॥ अनन्तादिरूपेण विश्वं दधाति धारयति । दधाते स्तृच् ॥ भृगुमुनेः पुत्रे ॥ द्रब्यमेवत्सरे ॥ यथा । निष्पत्तिः सर्वशस्यानां मध्याधातरिकीर्त्तिता । इक्षुक्षीरगुडादीनां प्रचलत्वंवरानने ॥ पञ्चाशत्याष्टमेभेदे (॥ऽऽ।) ॥ त्रि । पालके ॥ धारणपोषणसामर्थ्ययुक्ते ॥ धारके ॥ दधाति । डुधाञ्० । तृच् ॥

धातृपुत्रः । पुं । सनत्कुमारे ॥ ब्रह्मणः सुतमात्रे ॥

धातृपुष्पिका । स्त्री । धातक्याम् ॥ धातृ पुष्पमस्याः । शैषिकः कप् ॥

धातृपुष्पी । स्त्री । धातक्याम् ॥ धातृ पुष्पमस्याः । पाक्षिकः कबभावः ॥

धात्रिका । स्त्री । आमलक्याम् ॥

धात्री । स्त्री । जनन्याम् ॥ मातरि ॥ आमलक्याम् ॥ वसुमत्याम् । भुवि ॥ उपमातरि ॥ धीयते । धेट्० । धः कर्मणिष्ट्रन् ॥ दधातिवा । डुधाञ्० । सर्वधातुभ्यःष्ट्रन् । षित्वान् ङीष् ॥

धात्रीपत्रम् । न । आमलकीदले ॥ तालीशपत्रे ॥

धात्रीपुत्रः । पुं । नटे ॥ उपमातुः सुते ॥ धात्र्याः पुत्रः ॥

धात्रीफलम् । न । आमलकीफले । आमला इतिभाषा ॥ धात्र्याःफलम् ॥ हरीतकीसमधात्रीफलं किन्तु विशेषतः । रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् ॥ हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः । कफं रूक्षकषायत्वात् फलंधात्र्यास्त्रिदोषजित् ॥ अङ्गारपाकमृदुपक्वसुपाचितानि सिन्धूत्थहिङ्गुमरिचादिसमन्वितानि । तप्तेघृतेपुनरपिप्रतिभर्जितानि धात्रीफलानि जनयन्ति हिजाठरा-

क्तिम् ॥

धानेयिका । स्त्री । धान्याम् । धायइ ति भाषा ॥ यथा । पठेद्धानेयिकावा प्यं प्राङ्मुखो वाप्युदङ्मुख इति ॥

धानेयी । स्त्री । धानेयिकायाम् ॥

धानम् । न । पोषणे ॥ निधाने ॥ धी-यते ऽस्मिन् । ल्युट् ॥

धानकम् । न । धन्याके ॥

धाना । स्त्री ।। भञ्जुरी इतिभाषाप्रसिद्धे भृष्टयवे ॥ धन्याके ॥ अभिनवोद्भिन्ने । अङ्कुरे ॥ चूर्णसक्तुषु ॥ धानाः । स्त्री । धाना भृष्टयवे स्त्रिय इति बहुवचननिर्देशात् बहुवचनान्तोपि ॥ यथाप्स्तुनिस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम् । धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः ॥ तथा मेदःकफच्छर्द्दिनाशिन्यः सम्प्रकीर्त्तिताः ॥ दधाति दधति वा । डुधाञ्० । धापृवस्यज्यतिभ्यो नः । टाप् ॥

धानाकाः । स्त्री । धानासु ॥ नित्यंबहुवचनान्तोयमिति शब्दरत्नावली ॥

धानाचूर्णम् । न । भृष्टयवचूर्णे । सक्तुषु ॥

धानी । स्त्री । पीलुवृक्षे ॥ आधारे ॥ यथा । राजधानीततः साभूत् सर्वेषा द्वभूभुजामिति ॥ धीयते ऽस्याम् ॥ करणा ऽधिकरणयोश्चेति ल्युट् । ङीप् ॥



धानुष्कः । त्रि । धनुर्द्धरे । धन्विनि ॥ धनुः प्रहरणं मस्य । तदस्येत्यधिकृत्य प्रहरणमिति ठक् । इसुसुक्तान्तात् कः ॥ यद्वा । धनुषाजीवति । वेत० ठक् ॥ तस्मात् तृतीयभवने ॥

धानुष्का । स्त्री । अपामार्गे ॥

धानुष्यः । पुं । वंशे ॥ इति राजनि० ॥

धानेयम् । न । } धन्याके । धनिका-
धानेयकम् । न । } इतिभाषा ॥

धान्या । स्त्री । एलायाम् । पृथ्वीकायाम् । एलावची इतिभाषा इतिशब्दचन्द्रिका ॥

धान्यम् । न । धन्याके ॥ परिमेये ॥ चतुस्तिलपरिमाणे ॥ पूर्वद्वारगृहे ॥ व्रीहिसामान्ये नीवारादौ ॥ धान इति भाषाप्रसिद्धे सतुषतण्डुलादौ । भोगार्हे । अन्ने ॥ धान्यं त्रिविधम् आशु षष्टिकशालिभेदात् । तत्र प्रावृट्कालभवमाशुः । ग्रीष्मजं षष्टिकः । हैमन्तोद्भवं शालिः ॥ * ॥ धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम् । तत्तु वर्षोषितं पथ्यं यतो लघुतरं हितम् ॥ वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति । न तु त्यजति वीर्यत्वं क्रमान्मुञ्चत्यतः परम् ॥ एतेषु यवगोधूमतिलमाषा नवा हिताः । पुराणा

विरसा रूक्षा न तथागुणकारिणः ॥ पुराणवर्षद्वयादुपरिस्थिताः । यवादयो नवाः स्वस्थानुमतिस्थिताः । पथ्याश्चिरान्तुपुराणास्थिताः । पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति वसन्ते वाग्भटेनोक्तत्वात् ॥ धान्ये मोषणे साधु । तत्रसाधुरितियत् ॥ यद्वा । दधाति । डुधाञ्० । दधाते र्यत् नुट्चेति यत् नुटौ ॥

धान्यकम् । न । धान्याके ॥ इ०रानि०॥

धान्यकोष्ठकम् । न । धान्यरक्षार्थगृहे । गोला इतिभाषा ॥

धान्यचमसः । पुं । चिपिटके ॥

धान्यत्वक् । स्त्री । तुषे ॥ धान्यस्यत्वक् ॥

धान्यधेनुः । स्त्री । दानार्थं धान्यनिर्मितधेनौ ॥

धान्यपञ्चकम् । न । शालिधान्यादिपञ्चसु ॥ यथा । शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिम्बिधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥ शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् ॥ कङ्ग्वादि क्षुद्रधान्यं स्यात्तृणधान्यञ्चतत्स्मृतमिति ॥ अतीसारे पाचनविशेषे ॥ यथा । धान्यशालकबिल्वाब्दनागरैः पाचितं जलम् । आमशूलविबन्धघ्नंपाचनंदीपनं परम् ॥ इतिभावमिश्रः ॥

धान्यमायः । पुं । धान्यविक्रयिणि ॥

धान्यराजः । पुं । यवे ॥

धान्यवर्द्धनम् । न । वार्द्धुष्ये । धान्यदृद्धौ ॥

धान्यवीजम् । न । धन्याके ॥

धान्यवीरः । पुं । माषे ॥

धान्यवृद्धिः । स्त्री । धान्यवर्द्धने । मध्यमेतावद्धान्यंदेहि ततोमासानन्तरं वर्षानन्तरंवा सपादं सार्द्धं द्विगुणंवा दास्यामीत्येवरूपायां वृद्धौ ॥

धान्यशीर्षकम् । न । धान्यमञ्जर्याम् ॥

धान्याकम् । न । धन्याके । कुस्तुम्बुरुणि ॥ धान्याकं तुवरं स्निग्धं मवृष्यं मूत्रलं लघु । तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् ॥ ज्वरघ्नं रोचनं ग्राहि स्वादुपाके त्रिदोषनुत् । तृष्णादाहवमिश्वासकासार्शः क्रिमिप्रणुत् ॥ आर्द्रन्तुतद्गुणं स्वादुविशेषात्पित्तनाशनम् ॥ धान्य मवति । अककुटिलाद्याकृतौ । अण् ॥

धान्याम्लम् । न । व्रीहिमञ्जर्याम् ॥

धान्याचलः । पुं । दानार्थं धान्यनिर्मितपर्वते ॥

धान्याभ्रम् । न । अभ्रकनारायौषधे शिवस्तुति ॥ पादांशशालिसंयुक्तं मभ्रं बद्धाय कम्बले । त्रिरात्रं स्थापये नीरे तत्क्लिन्नं मर्द्दयेत्करैः ॥ क

स्वादुग्राहितं लघ्वं वातकारकं तथयत् । तदाम्यामिति प्रोक्तम भ्रमारणसिद्धये इतिभावप्रकाशः ॥

धान्याम्लम् । न । काञ्जिके ॥ धान्याम्लं शालिचूर्णाच्छकोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात् प्रीणनं लघुदीपनम् । अरुचौ वातरोगेषु सर्वेष्वास्थापनेहितम् ॥ धान्येष्वभिषुतमम्लम् । शाकपार्थिवादि ॥

धान्यारिः । पुं । मूषिके ॥

धान्योत्तमः । पुं । शालिधान्ये ॥

धामकः । पुं । माषकपरिमाणे ॥ इति वैद्यकपरिभाषा ॥

धाम । न । देहे ॥ गृहे ॥ रश्मौ ॥ स्थाने । आश्रये ॥ जन्मनि ॥ प्रभावे ॥ त्विषि ॥ ज्योतिषि । स्वप्रकाशे । स्वस्वरूपे ॥ दधाति धीयते वा । डुधाञ् । मनिन् ॥

धामनिधिः । पुं । सूर्ये ॥ धाम्नांनिधिः ॥

धामनी । स्त्री । धमन्याम् ॥

धामवान् । त्रि । तेजस्विनि ॥

धामार्गवः । पुं । अपामार्गे ॥ घोषके । तोरञ्जी इतिप्रसिद्धे शाके ॥ देवदाल्यां च । पीतघोषाख्येपि ॥ धामार्गः । धामार्गं वाति । वा० । आतोनुपेति कः ॥ यद्वा । धामऋच्छति । ऋ० । अन्येष्वपि । धामार्गवश्चैवोपञ्च ।

गोरलद्वितखुवीति टच् ॥

धायः । त्रि । धारककर्त्तरि ॥

धायाः । त्रि । धारककर्त्तरि ॥ पोषककर्त्तरि ॥ यथाविश्वस्य धायाइति ॥

धाय्यः । पुं । पुरोहिते ॥

धाय्या । स्त्री । वह्निसन्धुक्षनार्थयामृचि । सामिधेन्याम् ॥ धीयते पुष्यते ऽग्निरनया धीयते ऽनया समिदितिवा । पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीष्विति धाञोयत् युगागमश्च ॥

धारः । पुं । जलधरासारवर्षणे ॥ ग्रावान्तरे ॥ ऋणे ॥ प्रान्ते ॥ गम्भीरे ॥

धारम् । न । दिव्यपानीयभेदे ॥ धाराभिः पतितं तोयं गृहीतं स्फीतवाससा । शिलायां वसुधायांवा धौतायां पतितञ्चयत् ॥ सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते । भाजने मृन्मयेवापि स्थापितं धारमुच्यते ॥ धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु । सौम्यं रसायनं बल्यं तर्पणं ह्लादि जीवनम् ॥ पाचनं मतिकृन्मूर्च्छातन्द्रादाहश्रमक्लमान् । तृष्णां हरति तत्पथ्यं विशेषात् प्रावृषिस्मृतम् ॥ * ॥ धाराजलञ्चद्विविधं गाङ्गसामुद्रभेदतः ॥ यदाश्विनेमासि सूर्यः स्वातीविशाखयोः

। तथाम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥ अन्यदाश्वगशीर्षादिष्वषेषु यदाम्बुदैः । अभिवृष्ट मिदं तोयं सामुद्रमितिसंचितम् ॥ * ॥ गाङ्गं जलं स्वादु सुशीतलञ्च रुचिप्रदं पित्तकफापहञ्च । निर्दोषमिष्टं लघु तच्च नित्यं गुणाधिकं व्योमिगृहीतमाहुः ॥ सामुद्रसलिलं शीतं कफवातकरं गुरु । चिपाया माश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ पतितं भुवि तत्तोयं गाङ्गं सामुद्रमेव वा । स्वस्वाश्रयवशाद् गच्छेदन्यदन्यरसादिकम् ॥ इति राजनिर्घण्टः ॥

धारकः । पुं । कलशे ॥ त्रि । धारणकर्त्तरि ॥

धारणः । पुं । सम्मते ॥ नीरे ॥ स्वर्लोके ॥ परमेष्ठिनि ॥ धृतौ ॥ न । विधारणे । धरणा इति भाषा ॥ धारयति । धृञ् । नन्द्यादित्वाल्ल्युः ॥

धारणा । स्त्री । योगाङ्गे ॥ देशबन्धश्चित्तस्य धारणा ॥ १ ॥ देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धारणेत्युच्यते । अयमर्थः । मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेशे ऋजुकायेन जितद्वन्द्वेन योगिना नासाग्रादौ समभ्यासस्य समाधेरभ्यासाय चेतसः स्थिरीकरणं कर्त्तव्यमिति ॥ * ॥ यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः ॥ तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः । कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणेति वि° पु° ॥ ध्येये चित्तस्य स्थिरबन्धने ॥ अद्वितीयवस्तुन्यन्तरिन्द्रियवृत्तिधारणे ॥ यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् । मनसो धारणञ्चैव धारणा सा परामता ॥ मर्यादायाम् । सत्यायाम् । न्याय्यपथस्थितौ ॥ बुद्धौ ॥ निश्चये ॥ धारयति धर्मम् । धृञ् । नं° ल्युः ॥ युच् ॥

धारणी । स्त्री । नाडिकायाम् ॥ बौद्धमन्त्रविशेषे ॥ श्रेण्याम् । पङ्क्तौ ॥

धारणीयः । त्रि । धार्य्यः । धारयितुं शक्यः ॥ धृञो ऽनीयर् ॥

धारणीया । स्त्री । धरणीकन्दे ॥

धारयित्री । स्त्री । धरित्र्याम् ॥ त्रि । धारयितरि ॥

धारा । स्त्री । सैन्याग्रिमस्कन्धे ॥ घटादिच्छिद्रे ॥ सन्ततौ ॥ द्रवद्रव्यस्य प्रपाते ॥ खड्गादेर्निशितमुखे ॥ इति

मे० ॥ उत्कर्षे ॥ इति हेमचन्द्रः ॥ यशसि ॥ अतिवृष्टौ ॥ समूहे ॥ घनासारवर्षणे ॥ सदृशे ॥ इति विश्वः ॥ पुरीविशेषे ॥ तुरङ्गगतिपञ्चके ॥ अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधा । आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ धौरितं वल्गितं धाराप्लुतमुत्तेजितं क्रमात् । उत्तेरितञ्चेति पञ्च शिक्षयेत् तुरगं गतीः ॥ उत्तेरितोतिवेगाढ्यो नमृखोति न पश्यति । धौरितं गतिमात्रे यद्योजितं वल्गितं पुरः ॥ अग्रकायः समुल्लासाकुञ्चिताख्यं मतं प्लुतम् । उत्तेजितं मध्यवेगं योजनं सव्यशक्तया ॥ पूर्वापरोन्नमनतः क्रमादुत्तारणं प्लुतम् ॥ अन्यथाख्येन संज्ञान्तरेणोक्ताः । गतिः पुलाचतुष्काचतुष्कमध्यजवापरा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥ एकैका त्रिविधा धारा ह्रस्वमिश्राद्विधीमता । लघ्वी मध्या तथा दीर्घाश्चैता योजयेत् क्रमादिति ॥ धार्य्यन्ते अश्वा अश्वा ऽनयावा । धृञ्० । ण्यन्तः । भि०अङ् । कह घोडीति गुणे निपातनाद्दीर्घो वा ॥

धाराकदम्बः । पुं । केलिकदम्ब इति गौडभाषा प्रसिद्धे कदम्बविशेषे । प्रावृषेण्ये । मेघाभे ॥

धाराङ्कुरः । पुं । नाशीरे ॥ शीकरे ॥ घनोपले ॥ इति मेदिनी ॥

धाराङ्गः । पुं । असौ । खड्गे ॥ तीर्थे ॥ इति हेमचन्द्रः ॥

धाराटः । पुं । चातके ॥ अश्वे ॥ मेघे ॥ मत्तमातङ्गे । मत्तगजे ॥ इति शब्दरत्नावली ॥

धाराधरः । पुं । जलधरे । मेघे ॥ धाराणां धरः ॥ खड्गे ॥

धारापूपः । पुं । अपूपविशेषे ॥ घृतमिश्रा कणिक्का या दुग्धेनालोडिता सुसा । धाराख्यापूपकं स्वाज्ये पक्वं खण्डेन योजयेत् ॥ आपूपकं सुमधुरं हृद्यं पित्तहरं परम् । सुस्निग्धं रोचकं हृद्यमत्यर्थं वातनाशनम् ॥

धाराफलः । पुं । मदनवृक्षे ॥

धारावनिः । पुं । वायौ ॥ इति त्रिकाण्डशेषः ॥

धाराविषः । पुं । खड्गे ॥ इति त्रिकाण्डशेषः ॥

धारासम्पातः । पुं । आसारे । महावृष्टौ ॥ धाराणां सम्पातः सम्यक्पतनम् । पतेर्भावे घञ् ॥

धारास्नुही । स्त्री । त्रिधारस्नुह्याम् ॥

धारिणी । स्त्री । धरायाम् ॥ शाल्मलिद्रुमे ॥

धारितः । त्रि । धृते ॥

धारी । पुं । पीलुवृक्षे ॥ त्रि । धारवि शिष्टे ॥

धारुः । त्रि । पानकर्त्तरि ॥ धयति तच्छी लः । धेट्० । दाधेट् सिशदस-दोष ॥

धारेश्वरी । स्त्री । देवीविशेषे ॥

धारोष्णम् । न । दोहनेनोष्णधारया सद्यः पतिते दुग्धे ॥ धारोष्णन्तवस तं पयोऽसमधरं निद्राकरं कान्तिदं दृष्यं दंहण मग्निवर्द्धनमतिस्वादु त्रि दोषापहमिति राज निघण्टुः ॥

धार्त्तः । त्रि । धूर्त्ते । द्यूतकृति ॥ धाव नम् । धावु० । सं० क्विप् । वाहुलका त् वलोपः । धा धावने आर्त्तिः । धार्त्ति रस्यास्ति । ज्यो० अच् ॥ यद्वा । धाधा वनेन आर्त्तः ॥

धार्त्तराष्ट्रः । पुं । असिताक्षाङ्घ्यसित च्छदेहंसविशेषे । कृष्णचञ्चुचरणे सपक्षधवलितहंसे । गेंडिहॉस इतिगौ डभाषा ॥ सर्पविशेषे । अष्टौ ॥ कौ रवे । धृतराष्ट्रापत्येषु दुर्योधनादिषु ॥ धृतराष्ट्रसम्बन्धिभीष्मद्रोणादौ ॥ धृतराष्ट्रे भवः । तत्रभव इत्यण् । त स्येदमित्यण् ॥

धार्त्तराष्ट्रपदी । स्त्री । हंसपद्याम् ॥

धार्त्ता । पु । धारके । धारणकर्त्तरि ॥ आगमशास्त्रानित्यत्वात् आर्द्धधातुक स्येड्वलादेरितिनेडागमः ॥

धार्म्मिकः । त्रि । देवयौ । धर्मशीले ॥ धर्मयुक्ते ॥ धर्ममधीते वेद वा । धर्म्मं चरति वा । उ० ठक् । चरति रिड् क्षासेवायाम् तत्त्वनुष्ठानमात्रे । से न दैववशाद्धर्मेप्रवृत्तोऽपि दुष्टत्वोधा र्मिक इतिनोच्यते ॥

धार्य्यः । त्रि । धारणीये ॥

धार्ष्ट्यम् । न । सामर्थ्ये ॥ प्रागल्भ्ये ॥ धृ ष्टस्यकर्म भावो वा । ष्यञ् ॥

धावकः । पुं । रजके । स्मृतीतु भिन्नाभे तौ ॥ त्रि । धावनकर्त्तरि । शीघ्रगा मिनि । धाउविया इतिभाषा ॥ धाव ति । धावु० । ण्वुल् ॥

धावन् । त्रि । द्रुतंगच्छति ॥ धावु० । शतृ ॥

धावनम् । न । गमने ॥ शुद्धौ ॥ धावु ग तिशुद्ध्योः । ल्युट् ॥

धावनिः । स्त्री । पृश्निपर्ण्याम् । धावति । धावुगतिशुद्ध्योः । वाहुलकादनिः ॥ कण्टकार्य्याम् ॥

धावनिका । स्त्री । कण्टकारिकायाम् ॥

धावनी । स्त्री । पृश्निपर्ण्याम् ॥ कण्ट कार्य्याम् ॥ कृदिकारादितिङीप् ॥ धातक्याम् ॥

धावितः । त्रि । गते ॥ मार्जिते ॥ धो या इतिभाषा ॥

धिक् । अ । अपकारशब्दैर्भयोत्पादने । निर्भर्त्सने ॥ निन्दायाम् ॥ यथा । धिक् भस्मरचितभालं धिक्ग्राममशिवालयम् । धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयामिति ॥ धक्कयति । धक्क नाशने । बाहुलकात् डिकप्रत्ययः । इधासेवी ॥

धिक्कारः । पुं । निकारे । तिरस्कारे ॥ धिक्करणम् । कृञ्० । घञ् ॥

धिक्कृतः । त्रि । अपध्वस्ते ॥ निन्दिते ॥ धिगिति कृतः । धिक्कारितो वा । क्तः ॥

धिक्क्रिया । स्त्री । निन्दायाम् ॥ इति हेमचन्द्रः ॥

धिग्वणः । पुं । शूद्रेण वैश्यायां सुत्पन्नायोगवी तस्यां ब्राह्मणादुत्पन्ने सङ्कीर्णजातिविशेषे ॥ तस्य चर्मकार्यम् ॥

धियाम्पतिः । पुं । मञ्जुघोषे । पूर्वजिनविशेषे ॥ इति त्रि० । आत्मनि ॥

धिषणः । पुं । विद्याचार्ये । बृहस्पतौ ॥ प्रशस्ता धिषणा अस्य ॥ धृष्णोति । ञिधृषा० । धृषेर्धिष् च संज्ञायामिति क्युर्वा ॥

धिषणा । स्त्री । बुद्धौ । मनीषायाम् ॥ धृष्णुवन्त्यनया । ञिधृषा० । क्युः । टाप् ॥

धिष्ण्यः । पुं । अग्निविशेषे ॥ शुक्रे ॥ न । स्थाने ॥ अग्निसामान्ये ॥ सद्मनि ॥ शक्तौ ॥ ऋक्षे । उडुनि ॥ धिष्यते धृष्णोति वा । धिषशब्दे ञिधृषा० वा । सानसिवर्णसिपर्णसीति साधु । धृषेर्ऋकारस्येकारो रपरत्वाभावोऽण्यप्रत्ययश्चतेनैव निपातनात् ॥

धीः । स्त्री । प्रज्ञायाम् । मतौ ॥ शास्त्रादितत्त्वज्ञाने ॥ ज्ञानभेदे ॥ ध्यायत्यनया । ध्यै० । ध्यायतेः सम्प्रसारणञ्चेति क्विप् । हलश्चेति दीर्घः ॥

धीगुणः । पुं । शुश्रूषादिषु ॥ ते यथा । शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इति ॥ धियो गुणः ॥

धीतः । त्रि । पीते । धीया इति भाषा ॥

धीतिः । स्त्री । पिपासायाम् ॥ इति हेमचन्द्रः ॥

धीदा । स्त्री । कन्यायाम् ॥ बुद्धौ । मनीषायाम् ॥ धियं ददाति । डुदाञ्० । कः । टाप् ॥

धीन्द्रियम् । क्ली । ज्ञानेन्द्रियेषु । मन आदिषु समस्तेषु व्यस्तेषु च ॥ मनः कर्णौ तथा नेत्रे रसना च त्वचा सह । नासिके चेति षट् तानि धीन्द्रियाणि प्रचक्षते ॥ धीसाधकमिन्द्रियम् ॥

धीमान् । पुं । बृहस्पतौ ॥ त्रि । पण्ड

ते ॥ धीर्विद्यते यस्य । मतुप् ॥ रूप्यापोहकुशले ॥

धीमती । स्त्री । बुद्धिमत्याम् । प्रशस्तबुद्धियुक्तायाम् ॥ धीरस्त्यस्याः । मतुप् । उगित्त्वान्ङीप् ॥

धीरः । पुं । ऋषभौषधे ॥ बलिराजे ॥ धियमीरयतीतिव्युत्पत्त्या विद्याभासद्वारा धीतादात्म्याध्यासेन धीप्रेरके । धीसाक्षिणि ॥ न । कुङ्कुमे ॥ त्रि । धैर्यान्विते ॥ स्वैरे ॥ पण्डिते ॥ मन्दे ॥ विनीते ॥ मनोयुते ॥ विवेकिनि ॥ धियं राति । रा० । आतोनुपसर्गे कः ॥ धियमीरयति । ईर० । अण् ॥ दधाति धीयते वा । सुधा-ऋ० । सुसूधाग्रधिभ्यः क्रन् । घुमास्थेतीत्वम् ॥ इत्याद्यपत् सुचित्तम् इति यथा ॥ स्त्रीसन्निकर्षात् धीरोपि विक्रियां भजते खलु ॥ * ॥ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ * ॥ गतस्वार्थमिमं लोकं विमुक्तो मुक्तबन्धनः । अविज्ञातगतिर्जह्यात् स वै धीर उदाहृतः ॥ धीरोद्धर्ये वदष्णोदूरे ॥

धीरत्वम् । न । धीरतायाम् ॥ यथा । प्रागल्भ्यौदार्यमाधुर्यशोभाधीरत्वकान्तयः । दीप्तिश्चायत्नजा भावहावहेलास्त्रियोऽङ्गजाः ॥ इति हेमचन्द्रः ॥

धीरपत्री । स्त्री । धरणीकन्दे ॥

धीरस्कन्धः । पुं । महिषे ॥ इति हेमचन्द्रः ॥

धीरा । पुं । ज्ञानदे गुरौ ॥ धियं राति ददाति । रा० । क्विप्चेति क्विप् ॥

धीरा । स्त्री । नायिकाप्रभेदे ॥ पण्डितायाम् ॥ काकोल्याम् ॥ महाज्योतिष्मत्याम् ॥ स्थिरायाम् इति सोमशौ ॥ अश्वगन्धायाम् ॥

धीराधीरा । स्त्री । नायिकाप्रभेदे ॥

धीललिः । स्त्री । दुहितायाम् ॥ इति हारावली ॥

धावा । पुं । कर्मकरे । धीवरे ॥ ध्यायति । ध्यै चिन्तायाम् । ध्याप्योः सम्प्रसारणञ्चेति वनिप् ॥

धीवरः । पुं । दासजातौ । कैवर्त्ते ॥ दधाति मत्स्यान् । डुधाञ्० । छित्वरच्छत्वरधीवरेत्यादिना ष्वरजन्तो निपातितः ॥

धीवरी । स्त्री । धीवरभार्यायाम् ॥ धीवरशब्दात् स्त्रियामित्यान्ङीप् । दधातेः क्वनिपि वनोरचेति ङीप्रेफौ ॥

धीव्याप्तता । स्त्री । बुद्धिव्याप्तत्वे ॥

धीशक्तिः । स्त्री । नियुक्तमे । बुद्धिसामर्थ्ये । शुश्रूषाद्यष्टविधधीगुणेषु ॥ धियः शक्तिः ॥

धीसखः । पुं । अमात्ये । मन्त्रिणि ॥ इ

तिहेमचन्द्रः ॥ धियःसखा । टच् ॥
धीसचिवः । पुं । धीसखे ॥ इत्यमरः
॥ धिया धियां वा सचिवः सहायः । धी
प्रधानःसचिवोवा ॥
धुः । स्त्री । कम्पने ॥ इत्येकाक्षरकोषः ॥
धुतः । त्रि । त्यक्ते ॥ कम्पिते । विधूते
॥ धुयतेस्म । धुञ्कम्पने । क्तः ॥
धुनानः । त्रि । कम्पयति ॥ धुनोतेः क
र्तरि शानच् ॥
धुनिः । स्त्री । नदीमात्रे ॥
धुनी । स्त्री । नदीमात्रे ॥ धुनोति वेत
सादीन् । धुञ्० । किप् । पृषोदरा
दित्वात् नक् । कामत्वात् ङीप् ॥
धुनीनाथः । पुं । समुद्रे ॥ धुनीनां
सरितांनाथः ॥
धुन्धुमारः । पुं । शक्रगोपे ॥ गृहधूमे
॥ पदाधिके ॥ कुवलयाश्वे । राज्ञो
बृहदश्वसुते ॥
धुन्धुरी । स्त्री । वाद्यभेदे ॥
धूः । स्त्री । भारे ॥ चिन्तायाम् ॥ रथा
द्यग्रभागे । यानमुखे ॥ धूर्वति । धु
र्वीहिंसायाम् । भ्राजभासेति क्विप् ।
र्वोरितिदीर्घः ॥
धुरन्धरः । पुं । धवद्रुमे ॥ त्रि । धुर्वहे ।
धुर्ये । भारवोढरियादौ ॥ धुरंधा
रयति । संज्ञायां भृतृवृजिधारीति
खच् । इति स्वामी ॥ वाचंयमपुरन्द

रैश्चेति चकारस्यानुक्तसमुच्चयार्थ
त्वात्सः इति नव्याः । खचि ह्रस्वः ।
अरुर्द्विषदिति मुम् ॥
धुरा । स्त्री । भारे ॥
धुरीणः । त्रि । श्रेष्ठे ॥ धुर्ये । धौरेये ॥
॥ धुरंवहति । खःसर्वधुरादित्यत्रख
इतियोगविभागात्खः ॥
धुरीयः । पुं । अनडुहि ॥ इतिरानि० ॥
धुर्य्यः । त्रि । श्रेष्ठे ॥ भारवोढरि । धौ
रेये ॥ कार्यनिर्वाहके ॥ धुरंवहति
। धुरोयड्ढकावितियत् ॥ पुं । अन
डुहि ॥ ऋषभौषधौ ॥
धुर्वहः । त्रि । भारवोढरि वृषे । धुर्ये ॥
वहतीति वहः । अच् । धुरोवहः ॥
धुवका । स्त्री । ध्रुवकायाम् । धुया इति
गौड भाषा ॥ धूञ्० । कः । ततोद्धा
तादीकः । क्षिपकादित्वान्नेत्त्वम् ॥
धुवनः । पुं । वह्नौ ॥ धुनोति धुनाति
वा । धुञ्० धूञ्० वा । भूसूधूभ्रस्जि
भ्यश्छन्दसीतिक्युन् ॥
धुवित्रम् । न । यज्ञे. सन्धुक्षणाय मृगत्व
ग्रचिते यात्रिकानां व्यजने ॥ धुवि
पंताखवृन्तं स्यादुतचेपव्यजनव्रत
त ॥ धूयते ऽनेन । धूविधूनने । अ
र्तिलूधूसूइति इत्रः । कुटादित्वेन
ङित्वात् गुणाभावादुवङ् ॥
धुस्तुरः । पुं । धुस्तूरे ॥

धुस्तूरः । पुं । धतूरा इतिप्रसिद्धे क्षुपे । उन्मत्ते । कनककाह्वये । धूस्तूरे ॥

धूः । स्त्री । धूनने ॥ इति मेदिनी ॥

धूकः । पुं । पवने । वायौ ॥ धुनोतीति धुनातीति वा । धुञ् धूञ् वा । अजियुधूनीभ्यो दीर्घश्च । कन् ॥

धूतः । त्रि । त्यक्ते ॥ कम्पिते ॥ भर्त्सिते ॥ तर्किते ॥ धूयते स्म । धू विधूनने । धूञ् वा । क्तः ॥

धूनकः । पुं । यक्षधूपे । राले । वक्रिवक्षभे ॥ इति त्रिकाण्डशेषः ॥

धूननम् । न । कम्पने । कंपाना इति भाषा ॥ धूञो ण्यन्तात् ल्युट् । धूञ् प्रीञोर्नुग्वक्तव्य इति नुक् ॥

धूपः । पुं । गुग्गुल्वादिगन्धद्रव्यविशेषोत्थधूमे तद्विशेषे च । गन्धविशेषिकायाम् ॥ स च षडङ्गदशाङ्गादिभेदभिन्नोऽनेकप्रकारः ॥ विषघ्नधूपो यथा । सक्तुः सर्जरसोपेतः सर्षपा एलवालुकैः । सुवर्णातस्करतरोः कुसुमैरर्जुनस्य तु ॥ धूपो वासगृहे हन्ति विषस्थावरजङ्गमम् । न तत्र कीटा न विषं दर्दुरा न सरीसृपाः ॥ न कृत्या कर्मणश्चात्र धूपोयं यत्र दह्यते ॥ * ॥ सर्पनिर्मोकधूपो यथा । कार्पासास्थिभुजङ्गस्य तथा निर्मोचनं भवेत् । सर्पनिर्मोचको धूपः प्रशस्तः सततं गृहे ॥ इति मत्स्यपु० ॥ अष्टाङ्गधूपो यथा । गुग्गुल्वगुरुकं तेजपत्रं सर्जरसम्भवम् । कर्पूरं वालकं कुष्ठं मुस्तकं कुङ्कुमं तथा ॥ अष्टाङ्गः कथितो धूपो गोविन्दप्रीतिदो मत इति ॥ * ॥ पञ्चाङ्गो यथा । चन्दनं कुङ्कुमं मुस्तं कर्पूरो गुग्गुलोऽगुरु । धूपोऽयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृत इति ॥ * ॥ अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति । कुणपो जायते भूमौ यातुधानो न संशय इति भूमिं प्रति वराहवाक्यम् ॥ * ॥ रोगनाशको धूपो यथा । कूर्मं मत्स्याश्च महिषगोसृगालाश्च वानराः । शिलाश्च वृश्चिकाश्चैव वराहोलूककुक्कुटाः ॥ एतेषाञ्च विण्मूत्रं मांसं रोमशोणितम् । धूपं दद्याज्ज्वरार्त्तीय उन्मत्तेभ्यश्च शान्तये ॥ एतान्येव चक्राणि धूपितानि महेश्वर । निघ्नन्ति रोगजातानि नृपसिद्धाशनिर्यथेति गारुडे १९९ अध्यायः ॥

धूपनः । पुं । श्रीवासवृक्षनिर्यासे । श्रीवेष्टे । सर्जरसे । राल इति भाषा ॥ न । धूपे ॥

धूपवृक्षः । पुं । सरलद्रुमे ॥

धूपागुरु । न । दाहागुरुणि ॥

धूपाङ्गः । पुं । श्रीवेष्टे । सरलरसे ॥

धूपायितः । त्रि । अध्वादिनाश्रान्ते । सन्तप्ते ॥ इत्यधूपगश्वादौ ॥ धूप्यते स्म । धूपसन्तापे । आयादय इतिवाआयः । क्तः । अकर्मकत्वात् कर्त्तरि-वा क्तः ॥

धूपार्हम् । न । कृष्णागुरुणि ॥ त्रि । धूपयोग्ये ॥

धूपितः । त्रि । दत्तधूपे ॥ सन्तापिते । अध्वादिनाश्रान्ते ॥ धूप्यते स्म । धूप० । क्तः । इट् । अकर्मकत्वात् कर्त्तरि वा क्तः ॥

धूमः । पुं । आर्द्रेन्धनप्रभवे । मेघाग्नयोर्जनके । अग्निध्वजे । अभ्रे । धूआँ इतिभाषा ॥ सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः । जलधरपदवी मवाप्य धूमो ज्वलनविनाश मनु प्रयाति नाशमिति श्रीकृष्णमिश्रः ॥ धूमीते । धूञ् । इषियुधीतिमक् ॥

धूमकेतनः । पुं । केतुग्रहे ॥ हुताशे ॥

धूमकेतुः । पुं । उत्पातविशेषे ॥ वह्नौ ॥ ग्रहभेदे ॥ धूमः केतुश्चिह्नमस्य ॥

धूमगन्धिकम् । न । रोहिषतृणे ॥

धूमजाङ्गजम् । न । वज्रक्षारे ॥

धूमध्वजः । पुं । अग्नौ ॥

धूमप्रभा । स्त्री । धूमान्धकारनरके ॥

धूममहिषी । स्त्री । कुज्झटिकायाम् ॥

धूमयोनिः । पुं । मेघे ॥ धूमो योनिरस्य । उक्तञ्चाभ्राणां धूमकार्यत्वं पौराणिकैः । यस्य धूमोद्भवं त्वभ्रं द्विजानामहितं सदा । दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतम् ॥ मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति । अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः ॥ इति ॥ मुस्तके ॥

धूमलः । पुं । कृष्णलोहितवर्णे ॥ त्रि । तद्विशिष्टे ॥ धूमं लाति । ला० । कः ॥

धूमसी । स्त्री । धुवाँस इतिप्रसिद्धे माषादिचूर्णे ॥ यथा । माषाणां द्वाय क्षोये स्थापिता त्यक्तकञ्चुकाः । आतपे शोषिता यन्त्रे पिष्टा सा धूमसीस्मृता ॥ इतिभावप्रकाशः ॥

धूमाग्निः । पुं । अर्कनिष्कासनोपयोगिन्यग्निविशेषे ॥ विरुद्धाग्निर्यो धूमशिखो धूमाग्निः स उदाहृतः ॥

धूमाभः । त्रि । धूमवर्णे ॥

धूमावती । स्त्री । दशमहाविद्यान्तर्गतविद्याविशेषे ॥ तीर्थविशेषे ॥

धूमिका । स्त्री । कुज्झटिकायाम् ॥

धूमितः । त्रि । सञ्जातधूमे ॥

धूमोत्थम् । न । वज्रक्षारे ॥

धूमोर्णा । स्त्री । यमपत्न्याम् ॥ इति त्रिकाण्डशेषः ॥

धूमोर्णापतिः । पुं । यमे ॥ इतिहारा

वली ॥

धूम्या । स्त्री । धूमसमूहे ॥ धूमानां समूहः । पाशादिभ्यो यः ॥

धूम्याटः । पुं । पक्षिविशेषे । कलिङ्गे । भृङ्गे । फिङ्गा इतिगौडभाषा ॥ धूम्या इवअटति । अट० । अच् ॥

धूम्रः । पुं । कृष्णरक्तमिश्रितवर्णे । धूमले । खरलोमनिभवर्णे ॥ तुरुष्के । सिह्लके ॥ त्रि । तद्वति ॥ धूमं राति । रा० । कः । पृषोदरादिः ॥

धूम्रकः । पुं । उष्ट्रे ॥

धूम्रकेशः । पुं । असुरविशेषे

धूम्रधीः । त्रि । मलिनबुद्धौ ॥ धूम्राधीर्यस्य ॥

धूम्रपत्रा । स्त्री । क्षुपविशेषे । धूम्राह्वायाम् । स्वयम्भुवायाम् ॥

धूम्रमूलिका । स्त्री । मूर्वाहिये ॥

धूम्रलोचनः । पुं । शुम्भासुरस्यसेनापतौ ॥ कपोते ॥

धूम्रवर्णः । पुं । तुरुष्के । सिह्लके ॥ श्यामरक्तमिश्रितवर्णे । धूमले ॥ त्रि । तद्वर्णविशिष्टे ॥

धूम्रशर्णा । स्त्री । वह्नेर्जिह्वाविशेषे ॥ धूम्रोवर्णोऽस्याः ॥

धूम्रा । स्त्री । श्यामपुल्याम् ॥

धूम्रिका । स्त्री । शिंशपावृक्षे ॥

धूर्ज्जटिः । पुं । शिवे । गङ्गाधरे ॥ धूर्भूता जटिर्यस्य ॥ यद्वा । जटति । जट० । सर्वधातुभ्यइतीन् । धूर्गङ्गा जटिष्वस्यति ॥ धुरन्धैलोक्यचिन्ताया: जटिः सङ्घातोऽस्य वा ॥

धूर्त्तः । पुं । धूस्तूरे । उन्मत्ते ॥ चोरके ॥ न । खण्डलवणे ॥ लौहकिट्टे ॥ त्रि । विटे ॥ वञ्चके । मायिनि ॥ यथा । स्वर्णकारः स्वर्णवणिक् कायस्थ स्व...र। नरेषुमध्येत धूर्त्ताः कृपाहीना म...ले ॥ हृदयंक्षुरधाराभं तेषांच नास्ति स...रम् । एतेषु सज्जनः कोपिकायस्थो नैत...षतौ ॥ ब्रुद्धिः शिवयुक्तिश्च यास्त...धिममान सः । नोविश्वसेत् तेपुसातं स्व...कस्था य हेतवे ॥ इतिब्रह्मवैवर्त्तेश्री...ज न्म ८५ ऽध्यायः ॥ धूर्त्तकृति ॥ ...ति । धुर्वी० । हसिमृग्रिण्वितितन् ...रालोपः । इतिवर्त्तितदीर्घः ॥ धूर्व्वतेस्म । कर्म्मणिक्तो वा ॥ धूर्य्यति । मतिबुद्धिपूजार्थेभ्यश्चेतिचकारात्कर्त्तरि वाक्तः ॥ यद्वा । धूर्व्वनम् । भावेक्तः ॥ तदस्यास्तीत्यर्शआद्यच् ॥

धूर्त्तकः । पुं । धूर्त्ते ॥ शृगाले ॥

धूर्त्तकृत् । पुं । धूस्तूरे ॥

धूर्त्तजन्तुः । पुं । मानुषे ॥ इतिशब्दचन्द्रिका ॥

धूर्त्तमानुषा । स्त्री । रास्नायाम् ॥ इ० शब्द०॥

धूर्वहः । त्रि । धुरन्धरे । भारवोढरि ॥

धूर्वी । स्त्री । रथाग्रभागे । यानमुखे ॥

धूलकम् । नं । विषे ॥ इतिशब्दचन्द्रिका ॥

धूलिः । स्त्री । रजसि । रेणौ । पांशौ । धूल इतिभाषा ॥ धुवति धूयते वा । धू विधूनने । बाहुलकात् लिः ॥ धवनम् । धूञ्॰ । सं॰ क्विप् । धुवा लीयते । इक्कृष्यादिभ्यः ॥ संख्याविशेषे ॥

धूलिका । स्त्री । कुज्झटिकायाम् ॥

धूलिकेदारः । पुं । क्षेत्रे । वप्रे ॥ इतित्रिकाण्डशेषः ॥

धूलिगुच्छः । पुं । } फल्गुचूर्णे ।
धूलिगुच्छकः । पुं । } पटवासके ॥
इतित्रिकाण्डशेषः ॥

धूलिध्वजः । पुं । पवने ॥ इतित्रिकाण्डशेषः ॥

धूलिपुष्पिका । स्त्री । केतक्याम् ॥

धूली । स्त्री । धूलौ । पांशौ ॥ ङीप् ॥

धूलीकदम्बः । पुं । तिनिशे ॥ नीपे ॥ वरुणपादपे ॥

धूलीपटलः । पुं । उड्डीयमानधूलीसमूहे ॥

धूसरः । पुं । गर्दभे । खरे ॥ उष्ट्रे ॥ कपोते ॥ तैलकारे ॥ ईषत्पाण्डुरवर्णे । शुक्लपीतमिश्रितवर्णे ॥ कृष्णश्वेतवर्णे ॥ त्रि । तद्वर्णविशिष्टे ॥ धुनाति । धूञ्॰ । कृधूमदिभ्यः किदिति सरः ॥

धूसरच्छदा । स्त्री । श्वेतवुह्नायाम् ॥

धूसरपत्रिका । स्त्री । हस्तिशुण्डीक्षुपे ॥

धूसरा । स्त्री । पाण्डुफलीवृक्षे ॥

धूसरी । स्त्री । किन्नरीभेदे ॥

धूस्तुरः । पुं । धुस्तूरे । कितवे । धतूरा इतिभाषा ॥ धूसयति । धूस कान्तिकरणे । क्विप् । तुतोर्ति । तुर त्वरणे । इगुपधज्ञाप्रीकिरः कः । धूश्चासौ तुरश्च ॥

धुस्तूरः । पुं । उन्मत्तवृक्षे । धत्तूरे । काञ्चनाह्वये ॥ धूसयति । धूस॰ । क्विप् । तूर्यते । तूरी गतित्वरणहिंसयोः । इगुपधत्वात् कः । धूश्चासौ तूरश्च ॥ धुस्तूर धूर्त्त तवशेखरनिवासयोग्यस्थाने पिशाचपतिना विनिवेशितोऽसि । किं कैरवाणि विकसन्ति तमः प्रयाति किं वाद्य शशी सीति किं द्रवदः स्रवन्ति ॥

धृतः । त्रि । गृहीते । कृतधारणे । धरा इतिभाषा ॥ अवलम्बिते । धृञ्॰ । क्तः ॥

धृतकः । त्रि । भरण्याधमाजीवने ॥

धृतराष्ट्रः । पुं । सुराज्ञि ॥ नागभेदे ॥ दुर्योधनस्य पितरि ॥ पक्षिविशेषे ॥ धृतःराष्ट्रो येन ॥

धृतराष्ट्री । स्त्री । हंसपत्न्याम् ॥

धृतात्मा । पुं । नारायणे ॥ एकरूपेण ज
न्मादिषड्भावविकाररहिततया धृतः
आत्मा येन । यद्वा । धृङ् अवस्थाने
। गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः
। धृतः एकरूपेणावस्थितः आत्मा स्व
रूपमस्येति ॥ त्रि । परमात्मनिनि-
हितचित्ते ॥ यथा । किं दुःसहन्नु
साधूनां विदुषां किमपेक्षितम् । किं
मकार्यं कदर्याणां दुस्त्यजं किं धृता
त्मनामिति ॥

धृतिः । पुं । अध्वरे । यष्टौ ॥ स्त्री । तुष्टौ ।
सन्तोषे ॥ योगविशेषे ॥ तद्योगजातफ
लं यथा । धृतियोगसमुत्पन्नः प्राज्ञःस
न्तुष्टमानसः । वावदूकः सभायाञ्च
श्रीशो विनयान्वित इति ॥ सुखे ॥ धा
रणायाम् ॥ धैर्ये । अधिचलतायां-
म् । अवसादेपिशरीरेन्द्रियसङ्घा-
ते स्तम्भनधर्म्मे ॥ अवसन्नानां देहे
न्द्रियाणां अवष्टम्भहेतुभूतप्रयत्ने ।
देहेन्द्रियेषु अवसादं प्राप्तेषु तदुत्त
म्भके प्रयत्नविशेषे । येनोत्तम्भितानि
करणानि शरीरञ्च नावसीदन्ति ॥
साचकपिलपत्नी । यथा । धृतिः क
पिलपत्नीच सर्वैः सर्वत्र पूजिता । स
र्वलोकाअधैर्य्याश्चयत्तस्याःचयया वि
नेतिदेवी भागवतम् ॥ ज्ञानस्य भा
र्य्यादामपि ॥ ज्ञानस्तिस्रोभार्य्यास्तु
ष्टिर्मेधाधृतिस्तथेतिदेवी भागवतम् ॥
उच्छृङ्खलप्रवृत्तिकारणेन चापल
प्राप्तौ तन्निवर्त्तनशक्तौ ॥ * ॥ सत्त्वा
दिगुणभेदाद्धृतिस्त्रिविधा । यथा । धृ
त्यायया धारयते मनः प्राणेन्द्रियक्रि
याः । योगेनाव्यभिचारिण्या धृतिः
सा पार्थ सात्त्विकी ॥ ययातुधर्म्मका
मार्थान् धृत्या धारयतेऽर्जुन । प्रसङ्गे
नफलाकाङ्क्षी धृतिः सापार्थराज
सी ॥ ययास्वप्नं भयंशोकं विषादं म
दमेवच । न विमुञ्चति दुर्मेधा धृतिः
सापार्थतामसीति ॥ मत्स्यामपिवि
पदि देहेन्द्रियसङ्घातस्यानवसादे ॥
अष्टादशाक्षरायां वृत्तौ ॥ अष्टादशा
ङ्के ॥ धरणम् । धृञ्० । क्तिन् ॥ पाञ्च
भौतिके मनसिधृत्यंशोभूमेर्गुणः ॥

धृतिमत् । [illegible] । सुपार्श्वाख्यविष्कम्भशैल
मूले उद्याने ॥ त्रि । सुखदुःखयोरे
करूपे ॥ धृति रस्यास्ति । मतुप् ॥

धृत्वा । पुं । धर्म्मे ॥ विष्णौ ॥ भ्रियन्तेस्मि
न् भूतानि । धृङ्अवस्थाने । अर् ति
वा । धृञ्० । श्रीङ्मृशीत्यादिनाक्व
निप् । तुक् ॥ ब्रह्मणि ॥ विप्रे ॥
समुद्रे ॥ मेधाविनि ॥

धृत्वरी । स्त्री । भुवि ॥

धृषुः । त्रि । दक्षे ॥ प्रगल्भे ॥ पुं । सङ्घा
ते ॥ धृष्णोति । ञिधृषा० । धृमिदि

व्यधिगेधिधृषिम्य इतिज्ञः ॥

धृष्टः । त्रि । वियाते । निर्लज्जे ॥ प्रगल्भे ॥ निर्दये ॥ नायकप्रभेदे ॥ व्यक्ताङ्गोनिर्भयोधृष्ट इत्यस्य लक्षणम् । भूयोनिःशङ्कः कृतदोषोपि भूयोनिवारितोपि भूयःप्रश्रयपरायणो धृष्ट इतिच ॥ धृष्णोतिस्म । ञिधृषा० । गत्यर्थेतिक्तः । धृषिशसीतीड भावः ॥

धृष्टद्युम्नः । पुं । द्रुपदपुत्रे । पाण्डवानां सेनापतौ ॥ धृष्टंद्युम्नंयस्य ॥

धृष्टा । स्त्री । असत्याम् । वन्ध्यायाम् ॥

धृष्णक् । त्रि । धृष्टे । वियाते ॥ धृष्णोति । धृषेश्चेतिनजिङ् ॥

धृष्णिः । पुं । किरणे ॥ धृष्णोति । ञिधृषा प्रागल्भ्ये । बाहुलकात् निः । प्रत्ययेगुणाभावश्च ॥

धृष्णुः । पुं । कल्किकायाम् ॥ त्रि । धृष्टे ॥ धृष्णोति । ञिधृषा० । त्रसिगृधिधृषिक्षिपेःक्नुः ॥

धेनः । पुं । समुद्रे ॥ नदे ॥ धयन्तियम् । धेट् पाने । धेटश्चेतिनन् धातोरित्त्वाद्भावः ॥

धेना । स्त्री । नद्याम् ॥ भारतीप्रभेदे ॥

धेनिका । स्त्री । } धन्याके ॥
धेनी । स्त्री । }

धेनुः । स्त्री । गोमात्रे ॥ शर्वाशासीतु



वक्ष्यामिशृणुष्वैकमना द्विज । प्रथमा गौरकपिला द्वितीया गौरपिङ्गला । तृतीया रक्तकपिला चतुर्थीनीलपिङ्गला ॥ पञ्चमीशुक्लपिङ्गाची-षष्ठीतु शुक्लपिङ्गला । सप्तमी चित्रपिङ्गाची अष्टमी बभ्रुरोहिणी ॥ नवमीश्वेतपिङ्गाची दशमीश्वेतपिङ्गला । ताहशास्तेप्यनडुाहः कपिलास्तु प्रकीर्त्तिता इति इतिवह्निपुराणे उत्तरखण्डे १५ अध्यायः ॥ नवप्रसूतायां सद्यःप्रसूतिकायाम् ॥ धयतिसुताम् । धीयते वा । धेट्० । धेटश्चेतिनुः ॥ दानीया दशधेनवो यथा । यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः । तासां स्वरूपं वक्ष्यामिनामानिच भवाधिप ॥ प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथापरा । तिलधेनुस्तृतीयाच चतुर्थीजलसंज्ञिका ॥ क्षीरधेनुश्चविख्याता मधुधेनुस्तथापरा । सप्तमीशर्कराधेनुर्दधिधेनुरथाष्टमी ॥ रसधेनुश्चनवमी दशमीस्यात्स्वरूपतः ॥ कुम्भाःस्युर्द्रवधेनूनामितरासान्तु राशयः ॥ सुवर्णधेनुमप्यत्रकेचिदिच्छन्तिमानवाः ॥

धेनुकः । पुं । असुरविशेषे ॥ धेनुरिव । इवेप्रतिकृताविति कन् ॥ रतिबन्धविशेषे । तल्लक्षणंयथा । न्यस्तह

स्वगृहगत्वा निजे पदे योपिदेतिकटिकृतवल्लभा। अग्रतो यदि शने रघोमुखी धेनुकं रपयदुन्नतेप्रिये ॥ अपरश्च। सुप्तांस्त्रियं समालिङ्ग्य स्वयं सुसोरमेत् पुनः। लघुलिङ्गं चालयेद्योषन्योयं धेनुकः स्मृतः॥ इति रतिमञ्जरी ॥

धेनुकसूदनः। पुं। श्रीकृष्णे ॥ धेनुकं सूदयति। सूद०। ल्युः॥

धेनुका। स्त्री। करिण्याम्। हस्तिन्याम्॥ धेनौ। गवि॥ धेनुरिव। इवेतिकन्। धेनुरेव। स्वार्थे कन्वा॥

धेनुकारिः। पुं। श्रीकृष्णे॥ धेनुकस्यारिः॥

धेनुकासुरसूदनः। पुं। श्रीकृष्णे॥

धेनुदुग्धम्। न। गोक्षीरे॥ चिर्भिटे॥

धेनुदुग्धकरः। पुं। गर्जरे॥

धेनुष्या। स्त्री। बन्धकेस्थितायां धेनौ सेव्यायाम्॥ संज्ञायां धेनुष्येति धेनुशब्दस्य युगागमोयत् प्रत्ययश्चस्वार्थे निपात्यते संज्ञायाम्। ऋणप्रत्ययायाधेनु र्दीयते तदर्थं यावत्तद्दानं न दीयते तावत् दुग्धार्थं दीयते तथा सत्येवम्॥

धेयः। त्रि। विधेये। प्रयोज्ये॥

धेनुकम्। न। स्त्रीणां करणे। धेनूनां समूहे॥ अचित्तहस्तिधेनोष्ठगिति धेनुशब्दात् समूहार्थेठक्। इसुसुक्ता



न्तात्कः॥

धैर्य्यम्। न। धृतौ। धीरतायाम्॥ स्थिरा चित्तोन्नति र्यातु तद्धैर्य्यमिति संज्ञितमितिभूपालकोपः॥ अप्रमादे। अव्याकुलत्वे॥ विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतावन्तःकरणवृत्तिविशेषे॥ निर्विकारचित्तत्वे॥ मनसोनिर्विकारत्वं धैर्यं सत्स्वपि हेतुषु। इतिरसिकाः॥ धीरस्य कर्मभावोवा। ष्यञ्॥

धैवतः। पुं। तन्त्रीकण्ठोत्थितस्वरविशेषे॥ सप्तस्वरान्तर्गतषष्ठस्वरे॥ अश्वस्तुधैवतं रौति॥ गत्वा नाभेरधोभागं वस्तिं प्राप्योर्ध्वगःपुनः। धावन्निव च यो याति कण्ठदेशं सधैवतः॥ धीमतामयंधैवतः। पृ०॥

धैयात्यम्। न। धीष्टोभावे॥ ष्यञ्। इतिकुशायनेतिनिपातनात्संकारादेशः॥

धोडः। पुं। डुण्डुभे। राजिले। धोडाख्यसर्पे इतिगौडभाषा॥

धोरणम्। न। हस्त्यश्वरथदोलादौ वा हनमात्रे॥ धोरति अनेन वा। धोरयति वा। धोऋगतिचातुर्थे। ल्युः ल्युट्वा॥ अश्वस्यप्रसगतौ। धोरिते॥

धोरणिः। स्त्री। परम्परायाम्॥

धोरितम् । न । अश्वप्रथमगतौ । धोरणे । धौरितके ॥ धोरितं गतिमान्यं यद्योजितं वल्गितं पुरः । अथका यः समुल्लासाकुञ्चिताख्यं भवत्त्रिकम् ॥ धोरणम् । धोर्ऋ० । भावे क्तः ॥

धोरितकम् । न । अश्वगतिभेदे । धौरितके ॥ स्वार्थे कन् ॥

धौतः । त्रि । मार्जिते । मृष्टे । निर्णिक्ते । प्रक्षालिते । धोया इतिभाषा ॥ धाव्यतेस्म । धाव्० । क्तः ॥ उज्ज्वलिते ॥ शुभ्रे ॥ ईषद्धौतं स्त्रियाधौतं यद्धौतं रजकेनच । अधौतं तद्विजानीया-दितिकर्मलोचनः ॥ न । रूप्ये ॥

धौतकटः । पुं । स्योने । प्रसेवके । सूत्रनिर्मितभाण्डे । धोकडा इतिगौडभाषा ॥

धौतकोषजम् । न । पत्रोर्णे ॥

धौतकौषेयम् । न । पत्रोर्णे । मुकुटा इतिभाषाप्रसिद्धे वस्त्रे ॥ धौतञ्चतत् कौषेयञ्च ॥

धौतशिलम् । न । स्फाटिके । शालिपिष्टे ॥

धौम्यः । पुं । देवलमहर्षेःकनिष्ठभ्रातरि । पाण्डवानांपुरोहिते ॥

धौम्र. । पुं । धूम्रवर्णे ॥ न । धूम्रत्वे ॥ वास्तुस्थानभेदे ॥

धौरः । पुं । धवळत्वे ॥ इ०भा०म० ॥

धौरितम् । न । धौरितके ॥ धोरणम् । धोर्ऋ० । भावेक्तः । इट् । प्रज्ञादित्वादण् ॥

धौरितकम् । न । तुरङ्गगतिचातुर्ये ॥ धौरितमेव । स्वार्थे कन् ॥

धौरेयः । त्रि । भारवाहे । धुर्यवृषे ॥ धुरंवहति । धुरोयड्ढकाविति ढक् ॥ पुं । अनडुहि ॥

धौर्य्यम् । न । धोरिते । अश्वस्यप्रथम गतौ ॥

ध्माकारः । पुं । लोहकारके ॥ इतिहलायुधः ॥

ध्मातः । त्रि । सन्धुक्षिते । धमाया इति भाषा ॥ श्वासभूयिष्ठतयादीर्घस्वरस्यतेयोवर्णःसध्मातउच्यते ॥

ध्मापनम् । न । शोषणे ॥

ध्मापितः । त्रि । शोषिते ॥

ध्यातः । त्रि । ध्यानविषयीकृते । चिन्तिते ॥ ध्यै चिन्तायाम् । क्तः । नध्याख्येति न तस्य नत्वम् ॥

ध्यानम् । न । चिन्तने ॥ अद्वितीयवस्तुनि विच्छिद्यविच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहे ॥ शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितःप्रत्ययसन्तान एकाग्रतेतियमाहुरितिभाष्यम् ॥ ध्येयप्रत्ययैकतानतायाम् ॥ एकतत्त्वाभ्यासस्य भगव

दाकारवृत्तिप्रवाहोत्तरोत्तराऽन्याकारप्रत्ययाव्यवहिते निदिध्यासनसंज्ञे ॥ चित्तस्यात्माकारप्रत्ययावृत्तौ ॥ यद्वैवासीतितद्ध्यानिरालम्बतयास्थितिः । ध्यानशब्देनविज्ञातापरमानन्ददायिनी ॥ परमात्मचिन्तने ॥ धारणानिश्चलस्य चित्तस्य विनेयपल्लवकाद्याकारविषयायां चिन्तायाम् ॥ चिन्तातद्विषयाध्यानमित्युक्तेः ॥ तत्रप्रत्ययैकतानताध्यानम् ॥ तत्तस्मिन् देशे यत्र चित्तंधृतं तत्रप्रत्ययस्यध्यानस्यैकतानता विसदृशपरिणामपरिहारेणयदेवधारणायामवलम्बनीकृतं तदालम्बनतयैवनिरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ ध्यानपदार्थमुक्तंतन्त्रे । यथा । ध्यैचिन्तायांस्मृतोधातु श्चिन्तातत्त्वेन निश्चला । एतद्ध्यानमिहप्रोक्तंसगुणं निर्गुणंद्विधा ॥ सगुणंमन्त्रभेदेननिर्गुणंकेवलंमतमिति ॥ अपिच । ध्यानंतुद्विविधं प्रोक्तंसरूपारूपभेदतः । अरूपंतयघद्ध्यानमवाङ्मनसगोचरम् ॥ अव्यक्तंसर्वतोव्याप्तमिदमित्थंविवर्जितम् । अगम्यंयोगिभिर्गम्यंकृच्छ्रैर्बहुसमाधिभिः ॥ मनसोधारणार्थायशीघ्रंस्वाभीष्टसिद्धये । सूक्ष्मध्यानप्रवोधायस्थूलध्यानंवदामिते ॥ अरूपायाः कालिकायाःकालमातुर्महाद्युतेः । गुणक्रियानुसारेण क्रियतेरूपकल्पनेतिश्रीमत्वानिर्वाणतन्त्रेपञ्चमोल्लासः ॥ ध्यायते यत् । ध्यै० । धातुसकात्कर्मणिल्युट् ॥

ध्याननिष्ठः । त्रि । ध्यायिनि ॥

ध्यानयोगः । पुं । ध्यानरूपयोगे ॥ यथा । विविक्तसेवीलघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरोनित्यं वैराग्यंसमुपाश्रितः इतिश्रीभगवद्गीता ॥ ध्यानयोगस्यपरमात्मसाक्षात्कारहेतुःश्वेताश्वतरशाखायामुक्ता । ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिंस्वगुणैर्निगूढामिति ॥

ध्यामम् । न । दमनकवृक्षे ॥ गन्धतृणे ॥ त्रि । श्यामले । दग्धसमानवर्णे ॥ ध्यायते पशुभिः । ध्यै० । बाहुलकान्मक् ॥

ध्यामकम् । न । रोहिषतृणे ॥

ध्यामा । पुं । परिणामे ॥ न । चिन्तायाम् ॥ तेजसि ॥ ध्यायति । ध्यै० । नामन्सीम्निति साधुः ॥

ध्यायी । पुं । योगिनि ॥

ध्येयः । त्रि । उपास्ये । चिन्तनीये । ध्यातव्ये ॥ ध्येयं सदापरिभवघ्न अभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल

भवाब्धिपोत वन्देमहापुरुष ते चरणारविन्दम् ॥

ध्राजिः । स्त्री । वातसंहतौ ॥

ध्राडिः । पुं । पुष्पचये ॥

ध्रुवः । पुं । शङ्कौ ॥ हरे ॥ विष्णौ ॥ वटे ॥ उत्तानपादजे । प्रसिद्धेनक्षत्रविशेषे ॥ वसुभेदे ॥ योगविशेषे ॥ सर्वजातस्य फलम् । नरीनर्त्ति वाणी सदा वक्त्रपद्मे चरीकर्त्ति काव्यं धरीभर्त्ति वस्तून् । ध्रुवाख्ये प्रसूतिर्यदा तस्य कीर्त्तिर्दिगन्ते नितान्तं भवेद्व्याप्तमूर्त्तिरिति ॥ * ॥ नासाग्रे ॥ स्थाणौ ॥ ध्रुवके ॥ शरारिपक्षिणि ॥ न । निश्चिते ॥ तर्के ॥ खे । आकाशे ॥ परब्रह्मण्येकादशभेदे (ऽऽ।।।) ॥ त्रि । सन्तते ॥ शाश्वते ॥ अपरिणामिनित्ये ॥ स्थिरे ॥ निश्चिते ॥ यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ पुं । ऊर्द्धमुखगहे ॥ न । उत्तराधरयोर्दिशोर्नक्षत्रेषु ॥ ध्रुवति स्थिरो भवति । ध्रुगतिस्थैर्ययोः । अच् । कु० डित्त्वम् । षपड् ॥ ध्रुवति । ध्रुवस्थैर्ये । इगुपधेतिकोवा ॥ गाने ॥ यदाह । ध्रुवादिनाम्नश्चप्रयत्नेमाग्राह्यति ॥ पुं । आवर्त्ते । आवर्त्तसंख्या द्रोमसंस्थाने ॥ तदुक्तम् । आव-



र्त्तसाम्या द्वावर्त्तौ रोमसंस्थान संज्ञिनामिति ॥ तेचद्वयंयथा । द्वा वुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एकोभाले शयानेच द्वयाय साध्रुवाः स्मृताइति ॥

ध्रुवकः । पुं । स्थाणौ ॥ गीताङ्गविशेषे ॥ सचोक्तः सङ्गीतदामोदरे । उत्तम.षट्पदःप्रोक्तोमध्यमः पञ्चम.स्मृतः । कनिष्ठश्च चतुर्भिःस्याद्ध्रुवकोयं मयोदितः ॥ उक्तांद्विखण्डमुद्ग्राहे-द्विखण्डं ध्रुवके मतम् । ततोद्विखण्डमाभोगेतालमानरसैःसह ॥ आभोगेकविनामस्यात्तथानायकनामच । उद्ग्राहं प्रथमं गीत्वाध्रुवंगायेत्ततः परम् ॥ ततोऽन्तराध्रुवस्तस्मादाभोगध्रुवकौतत.। उद्ग्राह:प्रथम.पाद: कथित.पूर्वसूरिभि: ॥ गीत्वापूर्वपदंन्यासोयत्र ॥ ध्रुवको मतः । यत्रैव कविनामस्यात्तत्राभोगइतीरित:॥ ध्रुवकादिषुसर्वेषु भवेदेवं विध.क्रम: । सतुषोडशधायथा । जयन्त.शेखरोऽस्तात्साममधुरोनिर्मलस्तथा । कुन्तल.कमलश्चैव सानन्दश्चन्द्रशेखर: ॥ सुखद:कुमुदोजायीकन्दर्पो जयमङ्गल.। तिलकोललितश्चेतिध्रुवका.षोडशस्मृता. ॥ एकादशाक्षरपदाद्येकैकाक्षरवर्द्धितै. । गन्धर्वैर्ध्रुवा.षोडश

सुः षड्विंशत्यक्षरावधिः ॥ द्विगुणैरक्षरैरेव पदमेकमिहेष्यते । उद्ग्राहध्रुवकाभोगैरित्थं षट्पदनिर्णयः ॥ एकपादे तु ध्रुवके पदेनैकेन तद्ध्रुवः । चतुष्पादे तु ध्रुवके पृथङ्नास्त्येव तद्ध्रुवइति ॥

ध्रुवका । स्त्री । आघ्रायाम् ॥ ध्रुवकायाम् ॥ ध्रुवति । ध्रुव० । इगुपधत्वेति कः । ततो ऽज्ञातार्थे कः । क्षिपकादित्वात् नेत्वम् ॥

ध्रुवा । स्त्री । मूर्वायाम् ॥ आद्याम् । अशारिपत्रिणि ॥ शालपर्ण्याम् ॥ ध्रुया इति गौडभाषाप्रसिद्धे स्रुग्भेदे । वटपत्राकृतियज्ञपात्रे । स्रुद्धाम् ॥ वैकङ्कतीध्रुवेत्यमरः ॥ ध्रुवति । ध्रुव० । इगुपधेतिकः । ध्रु० । अचि कुटादित्वात् ङित्त्वम् । उवङ् ॥ साध्व्याम् ॥ गीतभेदे ॥

ध्रौव्यम् । न । स्थैर्ये ॥

ध्वंसः । पुं । विनाशे । जन्याभावत्वे ॥ जगतोनाशुपसंहारे ॥

ध्वंसनम् । न । अधःपतने ॥ गमने ॥ ध्वंसे ॥

ध्वंसितः । त्रि । खण्डिते ॥

ध्वंसी । पुं । गिरिजपीलौ ॥ त्रि । ध्वंसविशिष्टे ॥

ध्वंसी । स्त्री । त्रसरेणुपरिमाणे ॥ यथा



। जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते । त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभिरिति वैद्यकपरिभाषा ॥

ध्वजः । पुं । शौण्डिके ॥ गर्वे । दर्पे ॥ पुं । न । पताकायाम् ॥ खट्वाङ्गे ॥ मेढ्रे ॥ चिह्ने ॥ पूर्वदिग्गोगृहे ॥ ध्वजति । ध्वजगतौ । अन्तर्भावितण्यर्थो ऽच् । पताका च ॥ बहुपटविरचिता पताका ध्वजः ॥ तद्विशेषः श्रीमहानिर्वाणतन्त्रे यथा । पताकाध्वजदाने न देवप्रीतिः शतं क्रमाः । ध्वजदण्डस्तु कर्त्तव्यो द्वात्रिंशद्धस्तसम्मितः ॥ दृढश्छिद्ररहितः सवक्रः शुभदर्शनः । वेष्टितो रक्तवस्त्रेण कोटौ चक्रसमन्वितः ॥ पताका तस्य योज्या तत्रवाहनचिह्निता । प्रशस्तमूलाद्यग्रादिवस्त्रविनिर्मिता । शोभमाना ध्वजा ज्ञेया पताका साप्रकीर्त्तितेति ॥ * ॥ सेनाचिह्नं चिती शानां दण्डो ध्वजइति स्मृतः । सपताकोनिष्पताकः स पुनर्द्विविधो बुधैरित्यादि विशेषो युक्तिकल्पतरौ मत्स्यादिपुराणेषु च द्रष्टव्यः ॥

ध्वजद्रुमः । पुं । तालवृक्षे ॥ माडवृक्षे ॥

ध्वजप्रहरणः । पुं । वायौ ॥

ध्वजभङ्गः । पुं । क्लीवत्वजनके रोगविशेषे ॥

ध्वजवान् । त्रि । केतनयुक्ते । सपताके ॥

ध्वजाहृतः। पुं। सङ्ग्रामे स्वामिसकाशाज्जिते दासविशेषे॥ न। अविभाज्यधनविशेषे॥ सङ्ग्रामादाहृतं यत्तु विजित्य द्विषतां कुलम्। स्वाम्यर्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते॥

ध्वजी। पुं। पृथिवीधरे॥ रथे॥ ब्राह्मणे॥ भुजङ्गमे॥ तुरङ्गे॥ मद्यविक्रयजीविनि। शौण्डिके॥ मयूरे॥

ध्वजिनी। स्त्री। सेनायाम्॥ ध्वजाः सन्त्यस्याम्। अतइनिठनाविति इनिः॥

ध्वजिनीपतिः। पुं। सेनापतौ॥

ध्वजोत्थानम्। न। इन्द्रमहोत्सवे। भाद्रशुक्लद्वादश्यां विधीयमाने शक्रोत्सवे॥

ध्वनः। पुं। शब्दे॥ इति द्विरूपकोषः॥

ध्वनमोदी। पुं। षट्पदे। भ्रमरे॥

ध्वनिः। पुं। शब्दमात्रे॥ ध्वननम्। ध्वन शब्दे। खनिकष्यज्यसीति इः॥ कोऽयं ध्वनिर्नाम येन दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति प्रत्यासीदतश्च पटुत्वमन्दत्वादिभेदं वर्णेष्वासञ्जयतीति शारीरकभाष्यम्॥ स्त्री। शङ्कुकर्णस्यान स्यायां देव्याम्॥

ध्वनिग्रहः। पुं। कर्णे। श्रोत्रे॥ ध्वनिं गृह्णाति। ग्रह०। विभाषा ग्रहइति पचेऽच्॥

ध्वनितः। त्रि। शब्दिते। कृतस्वनमृदङ्गादौ। स्वनिते॥ ध्वनिते॥ ध्वन्यतेस्म। ध्वन०। क्तः॥

ध्वनिनाला। स्त्री। वीणायाम्॥ वेणौ॥ काहलायाम्। काहलीति हिमवत्प्रान्तप्रसिद्धे धत्तूरपुष्पसदृशे वाद्यविशेषे॥

ध्वनिविकारः। पुं। काकाम्। शोकभयादिना शब्दविकृतौ॥

ध्वस्तः। त्रि। स्रस्ते। गलिते। च्युते॥ ध्वस्यतेस्म। ध्वंसु अवस्रंसने। क्तः। गत्यर्थाकर्मकेति कर्त्तरि क्तोवा॥

ध्वाङ्क्षः। पुं। काके॥ मत्स्याशखगे। बके॥ तक्षके॥ भिक्षुके। अर्थिनि॥ गृहे॥ ध्वाङ्क्षति। ध्वाक्षि घोरवाशिते च। चात् काङ्क्षायाम्। पचाद्यच्॥

ध्वाङ्क्षजङ्घा। स्त्री। काकजङ्घायाम्॥

ध्वाङ्क्षजम्बूः। स्त्री। काकजम्ब्वाम्॥

ध्वाङ्क्षतुण्डी। स्त्री। काकनासायाम्॥

ध्वाङ्क्षदन्ती। स्त्री। } काकतुण्ड्याम्॥
ध्वाङ्क्षनखी। स्त्री। }

ध्वाङ्क्षनाम्नी। स्त्री। काकोदुम्बरिकायाम्॥

ध्वाङ्क्षनाशिनी। स्त्री। हपुषायाम्॥

ध्वाङ्क्षनासा। स्त्री। } काकनासा-
ध्वाङ्क्षनासिका। स्त्री। }

याम् ॥

ध्वाङ्क्षपुष्ट. । पुं । कोकिले ॥

ध्वाङ्क्षमाची । स्त्री । काकमाच्याम् ॥

ध्वाङ्क्षनासी । स्त्री । काकनासायाम् ॥

ध्वाङ्क्षदन्ती । स्त्री । काकतुण्ड्याम् ॥

ध्वाङ्क्षाराति: । पुं । मेचके । उलूके ॥

ध्वाङ्क्षी । स्त्री । काकोलिकायाम् ॥ र वे.सङ्क्रान्तिविशेषे ॥ यत्रार्विन्दुवा रैभवेद्ध्वाङ्क्षनाम्नी तदाख्यत्वेसौख्यं खभेदेववेभ्यः ॥

ध्वाङ्क्षोली । स्त्री । काकोल्याम् ॥

ध्वान । पुं । शब्दे ॥ ध्वननम् । ध्वन० । । भावेघञ् ॥

ध्वान्तम् । न । अन्धकारे ॥ ध्वन्यते । ध्वन० । क्त । क्षुब्धस्वान्तेतिनिपा तितम् ॥ नरकविशेषे ॥

ध्वान्तवित्त. । पुं । खद्योते ॥

ध्वान्तशत्रु. । पुं । ध्वान्तशात्रवे ॥

ध्वान्तशात्रव: । पुं । अर्के ॥ चन्द्रे ॥ वह्नौ ॥ श्योनाकवृक्षे ॥ ध्वान्तस्यशात्रव: ॥

ध्वान्ताराति. । पुं । सूर्ये ॥ चन्द्रे ॥ वह्नौ ॥

ध्वान्तोन्मेष । पुं । खद्योते ॥ ध्वान्तेउन्मेषोऽस्य ॥

## न.

न । अ । निषेधे ॥ यथा । न मिथ्याभा षणं कुर्यान्नपरानिष्टचिन्तनम् । प रस्त्रीगमनञ्चैव ब्रह्मचर्यावि निवर्जये दिति ॥ उपमायाम् ॥ नह्यति । ण हबन्धने । डप्रत्यय: ॥

न: । पुं । सुगते ॥ बन्धे ॥ द्विरष्टके ॥ प्र स्तुते ॥ रत्ने ॥ नकारे ॥

नंयुक: । त्रि । नाशके ॥ नश्यत्यस्मा ने वायुना । नश अदर्शने । पचि- नशोर्युकन् कनुमौचेतिसाधुः ॥

नंशा । त्रि । नाशाश्रये ॥

न.क्षुद्र: । पुं । क्षुद्रनासिके ॥

नकिम् । अ ।

नकिर् । अ । वर्जने ॥

नकीम् । अ ।

नकुटम् । न । नासिकायाम् ॥

नकुल. । पुं । चतुर्थे पाण्डुसुते ॥ बभ्रौ । सर्पहवि । सूचिवदने ॥ शिवे ॥ वि । निष्कुले ॥ नास्तिकुलमस्य । नभ्रा णनपादिति नञ् प्रकृत्या ॥

नकुलाढ्या । स्त्री । गन्धनाकुल्याम् ॥

नकुली । स्त्री । कुक्कुट्याम् ॥ मांस्याम् ॥ शङ्खिन्याम् ॥ कुङ्कुमे ॥ नकुल भार्यायाम् ॥

नकुलीश: । पुं । काशीपीठस्थभैरवे ॥

नकुलेश्वरी । स्त्री । देवीविशेषे ॥

नकुलेष्टा । स्त्री । रास्नायाम् ॥ नकुला ना मिष्टा ॥ नाईं इति प्रसिद्धे रास्ना

भेदे ॥

नक्तम्। न। निशि। रात्रौ ॥ अव्यया-
यानक्तव्रतेऽपि। यथा। उपवासात्
परं भैक्ष्यं भिक्षायरमयाचितम्। अया
चितात् परं नक्तं तस्मान्नक्तेन वर्त्त-
येत् ॥ देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने
ऋषिभिस्तथा। अपराह्णे पितृभिर्भुक्तं
सन्ध्यायां गुह्यकादिभिः ॥ सर्व्ववेला
मतिक्रम्य नक्तभुक्तमभोजनम्। वा
माचारो महादेवो नक्तमेवाहुरेवम्
म् ॥ इति देवी पु० ॥ अकालव्याप्तु
तं नात्र तु। दिवसस्याष्टमे भागे म
न्दीभूते दिवाकरे। नक्तं तद्धि विजा
नीयान्न नक्तं निशि भोजनम् ॥ नक्ष
त्रदर्शनान्नक्तं गृहस्थेषु विधीयते।
यतेर्दिनाष्टमे भागे रात्रौ तस्य निषे
धनमिति ॥

नक्तकः। पुं। वस्त्रके। कर्पटे। न्याता
इति भाषा ॥ नक्ते। ओनवी ब्रीडे।
बाहुलकात् तन्। स्वार्थे कन्। नक्तं
क सुखमस्मादा। पृ० मलोप ॥

नक्तचारी। पुं। उलूके। मेचके ॥ वि
डाले ॥ त्रि। रात्रिचरमात्रे ॥

नक्तञ्चरः। पु। राक्षसे ॥ चौरे ॥ मेच
के ॥ इत्यमरादौ ॥ नक्तं चरति।
चर०। चरेष्टः ॥ गुग्गुलौ ॥

नक्तन्दिवम्। अ। अहोरात्रे ॥ नक्तञ्च



दिवाच। अचतुरेत्यादिना सप्तम्य ४
र्थवृत्त्यो रव्यययो र्द्वन्द्वे निपातनाद्
च् समासान्तः ॥

नक्तम्। अ। निशि। रजन्याम् ॥ नज
ते। ओनजी ब्रीडे। तन् प्रत्ययः ॥

नक्तमालः। पुं। करञ्जवृक्षे ॥ नक्तमा
सौ मालश्चेति। नक्तं मा अलति वा
। अल०। पचाद्यच् ॥

नक्तमुखा। स्त्री। रात्रौ ॥ इतिशब्दायुधः ॥

नक्तव्रतम्। न। दिवाभोजनाभावविशि
ष्टे रात्रिभोजने ॥ हविष्यभोजनं स्ना
नं सत्यं माहारलाघवम्। अग्निका
र्य्यं मधः शय्या नक्तभोजीषडाचरेत्
॥ इति भविष्यपुराणम् ॥ नक्तं नि
शायां कुर्व्वीत गृहस्थो विधिसंयुतः।
यतिश्च विधवाचैव कुर्य्यात् तत् सदि
वाकरम् ॥ सदिवाकरन्तु तत् प्रोक्त
मन्तिमे घटिकाद्वये। शिशावन्त्य-
विशेषं यामार्द्धे प्रथमे सदा ॥ मार्क
ण्डेयः। एकभक्तेन नक्तेन तथैवाया-
चितेन च। उपवासेन दानेन नैवा
द्वादशिको भवेदिति ॥

नक्ता। स्त्री। कलिकारीम् ॥

नक्तान्धः। त्रि। राज्यन्धे ॥

नक्तान्ध्यम्। न। राज्यन्धतायाम् ॥

नक्रः। पु। कुम्भीरे। नाँका इति तद्बुधा
इतिच भाषाप्रसिद्धे जलजन्तौ ॥ न।

दीनि। शुभाशुभसूचकानि सूचय
सीति तथा ॥

नक्षत्रेशः। पुं। चन्द्रे॥ नक्षत्रनामी
-शः ॥ कर्पूरे ॥

नखः। पुं। न। पुनर्भवे। करवहे॥
पुं। खण्डे॥ इति हेमचन्द्रः॥
न॥ व्याघ्रनखाख्यगन्धद्रव्ये। शु-
क्तौ। कोलदले॥ सिध। शङ्खनखाख्या
ऽन्या शुक्त्या व्याघ्रदरीकरा इति रत्न-
माला॥ नखद्वयं ग्रहश्लेष्मवातास्रज्वर
कुष्ठहृत्। लघूष्णं शुक्रलं वर्ण्यं स्वादु
व्रणविषापहम् ॥ अलक्ष्मीमुखदौ-
र्गन्ध्यहृत् पाकरसयोः कटुः ॥ नखन
ति खन्यते वा। खनु अवदारणे।
अन्ये.ऽडः॥ नखमस्त्येति वा। नभ्रा
डिति साधुः॥ यथा। नह्यति। वाक
बन्धने। नहेर्ह्वलोपश्चेति खः॥ स्व
स्यपत्रस्य तौ शुक्ति नखरी यदरक्त-
दा। मर्द्दांत्विसौ शङ्खनखः शङ्खा-
ख्यो गन्धसारकः॥

नखकुट्टः। पुं। नापिते॥ इति त्रिकाण्ड
शेषः॥

नखनिकृन्तनम्। न। नखच्छेदनार्थ-
नापितशस्त्रविशेषे। नहेर्नी इति-
भाषा॥

नखनिष्पावः। पुं। निष्पावीभेदे। अ
क्षुल्लिफलायाम्। ग्राम्यायाम्॥



नखपर्णी। स्त्री। वृश्चिकाक्षुपे॥

नखपुष्पी। स्त्री। पृक्कायाम्॥

नखमुचम्। न। धनुषि॥

नखम्पचा। स्त्री। यवाग्वाम्॥ नखम्प-
चतीति विग्रहे मितनखे चेति नख-
कर्म्मोपपदात् पचेः कर्त्तरि खश्। अ
रुर्द्विषदिति मुम्। पचिरत्राभिताप-
वाची॥

नखरः। पुं। नखे। करकाटके। कर
वहे॥ नखं राति। रा+। कः॥

नखरजनी। स्त्री। ओषधिविशेषे॥ त
स्याः फले॥ हरीतक्यादिभ्यश्चेति फल
प्रत्ययस्य लुप्॥ नखच्छेदनास्त्रविशे
षे। नहेर्नी इति भाषा॥ यथा। अनन्त
चरश्चोपान्तवारिणी नखहारिणी। पु
नर्भवच्छेदकरी गच्छेत्र नखरञ्जनीति॥

नखरायुधः। पुं। कुक्कुटे॥ व्याघ्रे॥
सिंहे॥

नखराह्वः। पुं। करवीरवृक्षे॥ इति
राजनिर्घण्टः॥

नखरी। स्त्री। नख्याम्॥ क्षुद्रनख्याम्॥

नखविष्किरः। पुं। पक्षिविशेषेषु॥ न
खैर्विकीर्य्य ये भक्षयन्ति। तेषु श्ये
नादयः॥

नखवृक्षः। पुं। नीलवृक्षे॥

नखशङ्खः। पुं। शम्बूके। क्षुद्रशङ्खे॥

नखाघातः। पुं। रतिक्रीडायां स्थानवि

मोचेत पुरुषं प्राकृताम्बन । नग्नमूत्रं पुरीषं वा नग्ने संस्पृष्टमैथुनमिति कूर्मपुराणम् ॥

नग्नाटः । पुं । दिगम्बरे ॥

नग्नाटकः । पुं । दिगम्बरयोगिनि ॥

नग्निका । स्त्री । अनागतार्त्तवायाम् । अप्राप्तरजस्कायाम् ॥ विवस्त्रायाम् ॥ नजतेस्म । ओलजी० । गत्यर्थेति क्तः । ओदितश्चेतिनः । स्वार्थेकन् ॥

नचेत् । अ । निषेधे ॥

नञ् । अ । नञभावे निषेधेच स्वरूपार्थे व्यतिक्रमे । ईषदर्थेच सादृश्ये तद्विरुद्धतदन्ययोः ॥ इति मेदिनी ॥ अपिच । तत् सादृश्य मभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ सादृश्ये यथा । अब्राह्मणः ॥ अभावे । यथा । अपापम् ॥ अन्यत्वे यथा । अघट पटः ॥ अल्पत्वे यथा । अनुदरा कन्या ॥ अप्राशस्त्ये यथा । अकेशी ॥ विरोधे यथा । असुरः ॥ नकारो न लोपी नञिति विशेषणार्थः ॥ द्वौनञौ प्रकृतमर्थं गमयतः । यथा । नाविष्णुः कीर्त्तयेद्विष्णुं नाविष्णुर्विष्णुमर्चयेत् । नाविष्णुः संस्मरेद्विष्णुं नाविष्णुर्विष्णुमाप्नुयादिति महाभारतम् ॥

नटः । पुं । शैलूषे । कृशाश्विनि । नव रसाभिनयचतुरे नर्त्तकविशेषे । चा शालीनिति ॥ वर्णसङ्करजातिविशेषे यथा । शौण्डिक्यां गोपिका जातो नटो वरुड एवचेति पराशरपद्धतिः ॥ व्रात्यायाञ्च क्षत्रियाज्जात इति मनुः ॥ अशोकवृक्षे ॥ श्योनाकवृक्षे ॥ नले । किष्कुपर्व्वणि ॥ गोदन्तहरिताले ॥ शा त्यास् चषियास् समर्थाया मुत्पन्न जात्यन्तरे । अस्त्रे ॥ नटति । नट नृत्यौ । पचाद्यच् ॥ यद्वा । नमति । बाल० । अमिदेत्यादिनानमेर्डटः । डित्त्वाट्टिलोपः ॥

नटनम् । न । नर्त्तने । नाट्ये । अवस्थे ॥ नट अवस्यन्दने । ल्युट् ॥ आर्षत्वे ॥

नटनारायणः । पुं । रागविशेषे ॥

नटभूषणम् । न । }
नटमण्डनम् । न । } हरिताले ॥

नटवरः । पुं । नटश्रेष्ठे ॥

नटसञ्ज्ञकः । पुं । गोदन्तहरिताले ॥ नटे ॥

नटान्तिका । स्त्री । लज्जायाम् ॥ इति हारावली ॥

नटी । स्त्री । नल्योषधौ ॥ वेश्यायाम् ॥ नटस्त्रियाम् ॥ गौरादित्वात् ङीष् ॥

नटेश्वरः । पुं । शिवे ॥ इति हेमचन्द्रः ॥

नट्या ॥ स्त्री । नटसमूहे ॥ पाशा० यः ॥

नडः । पुं । नर्त्तकभेदे । पोटगले ॥ नडति । नडगद्गदे । अच् ॥

नडकीयः । त्रि । नड्वले ॥ नडाः सन्त्यस्मिन् । नडादीनां कुक् चेतिछः ॥

नडप्रायः । त्रि । नडबहुलदेशे । नड्वति ॥

नडसंहतिः । स्त्री । नड्यायाम् ॥ नडानां संहतिः ॥

नडवः । त्रि । कान्ते । लम्बिते ॥ इति भूरिप्रयोगः ॥

नडवा । स्त्री । विलासिन्याम् ॥

नड्या । स्त्री । नडसंहतौ ॥ नडानां समूहः । पाशादिभ्यो यः ॥

नड्वान् । त्रि । नडप्रायदेशे ॥ नडाः प्रायाश्च । कुमुदनडवेतसेभ्यो ड्मतुप् । झय इति मादुपधाया इति वत्वम् ॥

नड्वलः । त्रि । नडप्रायदेशे ॥ नडाः सन्त्यस्मिन् । नडशादाड्ड्वलच् ॥

नड्वाभू । स्त्री । गृहविशेषे । कुट्टिमे ॥ इति भूरिप्रयोगः ॥

नतः । पुं । गन्धनाडिकाविशेषे ॥ न । तगरपादाम् । तगरमूले ॥ त्रि । कुटिले ॥ नम्रे । नमति स्म । क्त ॥

नतद्रुमः । पु । लताशाले ॥ इतिरत्न० ॥

नतनासिकः । त्रि । चिपिटनासे । अवटीटे ॥ नता नम्रा नासिका ऽस्य ॥

नताङ्गी । स्त्री । नार्याम् ॥ इतिरत्नि० ॥

नतिः । स्त्री । नमस्कारे ॥ नमने ॥ क्तिन् ॥ अथ सप्त प्रकारा या नतेर्लक्षणानि । त्रिकोणं षट्कोणं चार्द्धचन्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम् ॥ ऐशानीवाथ कौवेरीदिक् कामाख्या प्रपूजने । प्रशस्ता पश्चिमादीच सर्वमूर्त्तेषु सर्वतः ॥ त्रिकोणादिव्यवस्थाञ्च यदि पूर्वमुखो यजेत् । पश्चिमाच्छाम्भवीं गत्वा व्यवस्थां निर्द्दिशेत् तदा ॥ यदोत्तरामुखः कुर्यात् साधको देवपूजनम् । तदायाम्यास्तु वायव्यां गत्वाक्षयांस्तु संक्षितिम् ॥ दक्षिणाद्वायवीं गत्वादिशं तस्माच्छाम्भवीम् । ततोऽपि दक्षिणं गत्वा नमस्कार स्त्रिकोणवत् ॥ त्रिकोणो यो नमस्कार स्त्रिपुरा प्रीतिदायकः ॥ १ ॥ दक्षिणाद्वायवीं गत्वा वायव्याच्छाम्भवीं ततः । ततोऽपि दक्षिणां गत्वा तांत्यक्त्वाग्नौ प्रविश्य च ॥ अग्नितो राक्षसीं गत्वा ततश्चाप्युत्तरादिशम् । उत्तराच्च तथाग्नेयीं भ्रमणं त्रिकोणवत् ॥ षट्कोणोयो नमस्कारः प्रीतिदः शिवदुर्गयोः ॥ २ ॥ दक्षिणाद् वायवीं गत्वा तस्माद्व्यावृत्य दक्षिणम् । गत्वा यो ऽसौ नमस्कारः सोऽर्द्धचन्द्रः प्रकीर्त्तितः ॥ ३ ॥ सकृत् प्रदक्षिणं कृत्वा

वस्तु साकृतिसाधकः । नमस्कारः कथ्यतेऽसौ प्रदक्षिण इति द्विजैः ॥ ४ ॥ त्यक्त्वा स्व मानं स्थानं पश्चाद्गत्वा नमस्कृतिः । प्रदक्षिणं त्रिनोयात्तु नित्यमभुविद्वद्वत् ॥ दण्डवत् प्रोच्यते दैवैः सर्वदेवौघमोदकः ॥ ५ ॥ पूर्ववद्दण्डवद्भूमौ निपत्य हृदयेन तु । चिबुकेन मुखेनाथ नासया हनुकेन च ॥ ब्रह्मरन्ध्रेण कर्णाभ्यां यद्भूमिस्पर्शनं क्रमात् । तदष्टाङ्ग इति प्रोक्तो नमस्कारो मनीषिभिः ॥ ६ ॥ प्रदक्षिणत्रयं कृत्वा साधको यस्तु वाकृतिः । ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यः स्यान्नमस्कृतौ ॥ स उग्र इति देवौघैः कथ्यते विष्णुतुष्टिदः ॥ ७ ॥ नदानां सागरो यादृग् द्विपदां ब्राह्मणो यथा । नदीनां जाह्नवी यादृग् देवानामिव चक्रधृक् ॥ नमस्कारेषु सर्वेषु तथैवोग्रः प्रशस्यते । त्रिकोणाद्यैर्नमस्कारैः कृतैरेवन्तु भक्तितः । चतुर्वर्गं लभेद्भक्तो न चिराद्देवसाधकः ॥ नमस्कारो महायज्ञः प्रीतिदः सर्वदा सदा । सर्वेषामपि देवानामन्येषामपि भैरव ॥ योऽसावुग्रो नमस्कारः प्रीतिदः सततं हरेः । महामायाप्रीतिकरः स नमस्कार्योऽसमः ॥ इति कालीपुराणम् ॥

नदः । पुं । पुनर्भवे । भिक्षौ । शोणसिन्धुभैरवदामोदरब्रह्मपुत्रादौ ॥ अब्धौ ॥ निनदे ॥ नदति । णद० । पचाद्यच् ॥

नदनुः । पुं । मेघे ॥ सिंहे ॥ नदति । णद अव्यक्ते शब्दे । अनुङ्नदेश्चेति अनुङ् ॥

नदी । स्त्री । सरिति । तरङ्गिण्याम् । तटिन्याम् ॥ अस्याश्च लक्षणम् । धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥ इति ॥ सर्वा गुर्वी प्राङ्मुखी वाहिनी स्याल्लघ्वी पश्चाद्वाहिनी निश्चयेन । देशे देशे तद्गुणा सा विशेषात् कैवापक्वे गौरवं लाघवञ्च ॥ प्रायो मृदुवहा गुर्व्यो लघ्व्यः शीघ्रवहाः स्मृताः । नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ॥ हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम् । विन्ध्यात् प्राचीप्राच्यवाचीप्रतीची याचोदीची स्यान्नदी सा क्रमेण । वातारोपं श्लेष्मपित्तानिलोत्थं पित्तोद्रेकं पथ्यपाकञ्च धत्ते ॥ पारिपात्रभवा याश्च विन्ध्याद्रिप्रभवाश्च याः । शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ इति राजनिर्घण्टः ॥ पचादिषु नदट् इति टित्त्वनिपातनात्-

टिङ्कृतिङ्कीप् ॥ नदीनाम्विशेषोयः सवराहे निरूपितः । तथामत्स्यपुराणादौ द्रष्टव्योवेत्तुमिच्छुभिः ॥

नदीकदम्बः । पुं । महाश्रावणिकायाम् । मुण्डाम् ॥ न । नदीसमूहे ॥

नदीकान्तः । पुं । समुद्रे ॥ नद्याःकान्तो यस्य ॥ इज्जले । निचुलद्रुमे ॥ सिन्धुवारके ॥

नदीकान्ता । स्त्री । जंबाम् ॥ काकजङ्घौषधौ ॥ लतायाम् ॥

नदीकूलम् । न । सरित्तटे ॥ नद्याःकूलम् ॥

नदीकूलप्रियः । पुं । अम्बुवेतसे ॥ नदीकूलं प्रियं यस्य ॥

नदीजः । पुं । अर्जुनवृक्षे ॥ यावनालशरे ॥ हिज्जलवृक्षे ॥ न । स्रोतोञ्जने ॥ त्रि । नद्यां जाते ॥

नदीजा । स्त्री । अग्निमन्थवृक्षे ॥

नदीतरस्थलम् । न । }
नदीतरस्थानम् । न । } घट्टे ॥ नदीभिन्नस्थाने ॥

नदीनः । पुं । वरुणे ॥ समुद्रे ॥ नदीनां इनःस्वामी ॥

नदीनिष्पावः । पुं । धान्यप्रभेदे । कटुनिष्पावे । कर्बुरे ॥

नदीमातृकः । त्रि । नद्यम्बुसम्पन्नव्रीहिपालितेदेशे ॥ नदी माता ऽस्य । नद्यृतश्चेतिकप् ॥

नदीवङ्कः । पुं । वङ्कुरे । बाँकइतिभाषा ॥ इतिशब्दमाला ॥

नदीवटः । पुं । वटीवृक्षे ॥

नदीष्णः । त्रि । नदीस्नानकुशले ॥ नद्यांस्नाति । प्याशौचे । सुपीतिकः । निनदीभ्यामितिषत्वम् ॥ नदीषे ॥ इतिपुरुषोत्तमः ॥

नदीसरउ । न । इन्द्रक्रीडासरोवरे ॥

नदीसर्जः । पुं । वीरतरौ । अर्जुनवृक्षे ॥

नदेयी । स्त्री । नादेय्याम् । भूमिजम्बाम् ॥

नद्धः । त्रि । बद्धे ॥ उद्धृते ॥ नह्यते । बद्धबन्धने । कर्मणि क्तः । नहोधइतिधत्वम् ॥

नद्ध्री । स्त्री । चर्मसयरज्जौ । वरत्रायाम् ॥ नह्यतेऽनया । बाहु० । दाम्नीतिष्ट्रन् ॥

नद्याम्रः । पुं । समष्ठिलावृक्षे ॥

नद्यावर्त्तकः । पुं । यात्रायोगान्तरे । नन्द्यावर्त्तके ॥ यथा । स्वराधिगेबुधे लग्ने सिते वा सुरवन्दिते । नद्यावर्त्तकयोगोऽयं यातुरिष्टार्थसिद्धिदः ॥ अन्योपि । भूसुते स्वोच्चगे लाभे सगकुम्भगते यमे । नद्यावर्त्तकयोगोयं रणेशत्रुक्षयानघः ॥

ननन्दा । स्त्री । ननन्दिन्याम् । स्वभर्तृभगिन्याम् । ननंद इतिभाषा ॥ नन

जांस्नुपूतपृथ्वीतलम् । मुरहरचिच चेष्टितकलाकलापसंस्मारकः चिंतितनन्दने व्रज सखे सुखायनन्दावनम् ॥ त्रि । हर्षके ॥ आनन्दकारके ॥ नन्दयति । टुनदि० । नं०ल्युः ॥

नन्दनजम् । न । हरिचन्दने ॥

नन्दनन्दनः । पुं । श्रीकृष्णे ॥ नन्दस्य नन्दनः ॥

नन्दनन्दिनी । स्त्री । दुर्गायाम् ॥

नन्दनमाला । स्त्री । श्रीकृष्णप्रीतिकुसुममालिकाविशेषे ॥

नन्दना । स्त्री । दुहितरि ॥ इतिजटाधरः ॥

नन्दनः । पुं । पुत्रे ॥ नन्दयति । टुनदि० । ऋद्धिनन्दिजीविप्राणिभ्यःषिदाशिषीति क्युः ॥

नन्दयाचः । पुं । वरुणे ॥

नन्दपुत्री । स्त्री । पार्वत्याम् ॥ इतित्रिकाण्डशेषः ॥

नन्दयन्तः । त्रि । अर्भके ॥ नन्दयति । टुनदि० । तृभूवहिवसिभासीच्छादिनाऊच्पित् ॥

नन्दा । स्त्री । गौर्याम् ॥ नन्दते सुरलोकेषु नन्दने वसते ऽथवा । हिमाचले महापुण्ये नन्दादेवी ततःस्मृता ॥ संस्थाप्य नन्दिता यस्मात् तस्मान्नन्दा तु सा ऽभवत् । इतिवनामकार



णम् । संस्थाप्य वस्त्रादिभिर्हिमगिराविति शेषः ॥ अलिञ्जरे । नान्दृ-तिभाषा ॥ सम्पदि ॥ तिथिविशेषे ॥ यथा । प्रतिपदेकादशीषष्ठी नन्दा ज्ञेयामनीषिभिः ॥ अर्कसङ्क्रमविशेषे । स्थिरेशीघ्रवारेतुनन्देतिसंज्ञा सदाविप्रवर्गःसुखीमासमेकम् ॥ ननान्दरि ॥ तीर्थविशेषे ॥

नन्दात्मजः । पुं । श्रीकृष्णे ॥ नन्दस्य आत्मजः ॥

नन्दात्मजा । स्त्री । दुर्गायाम् ॥

नन्दिः । पुं । नन्दिकेश्वरे । पिनाकिनः प्रतीहारे ॥ पुं । न । द्यूताङ्गे ॥ आनन्दे ॥ नन्दति । टुनदि० । इन् ॥

नन्दिकः । पुं । नन्दिवृक्षे ॥

नन्दिका । स्त्री । इन्द्रक्रीडास्थाने ॥ अलिञ्जरे ॥

नन्दिकेश्वरः । पुं । शालङ्कायने । ताण्डवतालिके । शिवद्वारपाले ॥ पुराणविशेषे ॥

नन्दिघोषः । पुं । अर्जुनरथे ॥ वन्दिजनस्य घोषे ॥

नन्दितरुः । पुं । धवद्रुमे ॥

नन्दी । पुं । हरप्रतीहारे । गिरिशगेहे ॥ सन्निविधत्तोवह्निपुराणे ॥ यथा । आद्यः कनकनन्दीच गिरिकाख्यो द्वितीयकः । सोमनन्दी तृती

यस्तु चित्तेयानन्दिनस्तद्यदिति ॥ गर्द्द
भाण्डे ॥ वटद्रुमे ॥
नन्दिनी । स्त्री । उमायाम् ॥ गङ्गाया
म् ॥ ननान्दरि ॥ वशिष्ठधेनौ ॥ व
शिष्ठास्यधेन्वाम् ॥ व्याडिमातरि ॥
रेणुकाख्यौषधौ ॥ तीर्थविशेषे ॥
नन्दयति । टुनदि° । णिनि । ङीप् ॥
नन्दिनीतनयः । पुं । अभिधानविशेष
स्य कर्त्तरि । व्याडिमुनौ ॥
नन्दिनीसुतः । पुं । व्याडिमुनौ ॥ नन्दि
न्याः सुतः ॥
नन्दिपुराणम् । न । उपपुराणप्रभेदे ॥
नन्दिवर्द्धनः । पुं । भर्गे । शिवे ॥ पक्षा
न्ते ॥ तनये ॥ मित्रे ॥ त्रि । आनन्द
वर्द्धके ॥
नन्दिवृक्षः । पुं । नन्दीद्रुमे ॥ नन्दन-
म् । टुनदि° । इन् । नन्द्याः वृक्षः ॥
नन्दी । स्त्री । दुर्गायाम् ॥
नन्दीमुखी । स्त्री । पक्षिविशेषे ॥ यथा
। स्थूलाकठोराश्चाप यस्या अस्तूप
रिस्थिता । गुटिका चञ्चुसदृशी चे
या नन्दीमुखीति सा ॥ तन्द्रायाम् ॥
इतिहेमचन्द्रः ॥
नन्दीवर्त्तः । पुं । सामुद्रमत्स्यविशेषे ॥
नन्दीवृक्षः । पुं । नन्दिवृक्षे । स्थालीवृ
क्षे । वेलिआपीपर इति प्रसिद्धे ऽश्व
कान्तल ॥ न



न्दीवृक्षो लघु स्वादु स्तिक्त स्तुवर
उष्णकः । कटुपाकरसोग्राही विष-
पित्तकफास्रनुत् ॥ अश्वत्थाकारः क्षी
रवान् स्वनामप्रसिद्धोवृक्षः इति भर
तः ॥ कोङ्कणदेशप्रसिद्धे सुगन्धिद्र-
व्यविशेषे । तूणीके । पीतके । कु
ठेरके ॥ तूत इतिभाषाप्रसिद्धे वृक्ष
विशेषे । तुन्ने । कुबेरके । कान्तल
के । नन्दिवृक्षे ॥ गाम्भीरावृक्षे-
॥ इतिशब्दाम्बुधिः ॥ नन्दनम् । टुन
दि° । इन् । कृदिकारादिति ङीष् ॥
नन्द्याः वृक्षः ॥
नन्दीशः । पुं । नन्दिनि । शिवद्वारपाले
॥ भरतोक्ततालप्रभेदे ॥
नन्दीश्वरः । पुं । महादेवे । शिवे ॥ म
हाशिवद्वारपाले ॥ नन्दीशाख्यताले
॥ यथा । गोद्रुतौ लघुः प्लुतश्चाले
नन्दीश्वरे मताः इति सङ्गीतदामो
दरः ॥
नन्दीसरः । न । इन्द्रसरोवरे ॥
नन्द्यावर्त्तः । पुं । पश्चिमद्वाररहितो न
न्द्यावर्त्तात्वयकार्ये प्युत्तमपक्षे राज
वेश्मप्रभेदे ॥ लक्षणान्तरञ्च । द
क्षिणानुगतालिन्दत्रयं यत् पश्चिमामु
खम् । पूर्व्वमीयोत्तरञ्चार्धं नन्द्याव
र्त्तं वदन्तितदिति भरतधृत.साध्यः
॥ तगरद्रुमे ॥ मत्स्यविशेषे ॥ मद्य॥

· वर्त्तावर्त्तो यायायोगे ॥ नन्दयतीति नन्दी । नन्दी आवर्त्तो ऽस्य ॥

नपात् । त्रि । अरक्षके ॥ नपाति । न पात् यत्तिकः ॥

नपुंसकः । पुं । न । क्लीवे ॥ स्त्री न पुमानित्यस्य पुंसकभावो नञादिव्यवनिपातनात् ॥ नपुंसकोमवेदिति भाष्यात् पुंस्त्ययम् ॥ अस्य लक्षणं यथा । कनकेयमती स्त्री स्यात्तो नरः पुरुषः स्मृतः । उभयो रन्तरं यच्च तदभावेन पुंसकमिति ॥ * ॥ नपुंसकविशेषाणाह भावप्रकाशः । यथा । आसेक्यश्च सुगन्धिश्च कुम्भीकः स्त्रैर्ष्यक स्तथा । अमीसमुका वीजवां सुश्रुतो भूगासंज्ञकः ॥ तेषांलक्षयानि यथा । पित्रोश्च स्वल्पवीर्य्यत्वादासेक्यः पुरुषो भवेत् । सशुक्रं प्राप्यस भरो ध्वजोत्पत्ति मर्सप्रयम् ॥ यः पूतियोनौ जायेत स चि सौगन्धिको भवेत् । खगुदे ऽब्रह्मचर्यी यः स्त्रीषु पुंवत् प्रवर्त्तते । स कुम्भीकइतिज्ञेयो गुदयोनिस्तु संस्मृतः ॥ दृष्ट्वा व्यवाय मन्येषां व्यवायेयः प्रवर्त्तते । ईर्ष्यकः स तु विज्ञेयो दृष्टियोनिश्च सस्मृतः ॥ यो भार्य्यायामृतौ मोहा दङ्गनेव प्रवर्त्तते । तत्र स्त्रीचेष्टिताकारो जायते यस्तु संच क: ॥ इति भावप्रकाशः ॥

नप्ता । पुं । पौत्रे ॥ दौहित्रे ॥ नपत् नितिपितरो ऽनेन । पतन्न° । नप्तृने इत्यादितिसाधुः । नञः प्रकृतिभावः पतेरच्छब्दलोपश्चनिपातनात् ॥

नप्त्री । स्त्री । पौत्र्याम् ॥ दौहित्र्याम् ॥ न पतन्तिपितरो ऽनया नप्तृवत् साधुः । ऋन्नेभ्योङीप् ॥

नभः । पुं । आवणमासे ॥ व्योम्नि ॥ नभते । णभहिंसायाम् । पचाद्यच् ॥

नभःक्रान्ती । पुं । सिंहे ॥ इतिशब्दमाला ॥

नभः प्राणः । पुं । पवने ॥ इतित्रिकाण्डशेषः ॥

नभःसत् । पुं । निर्जरसि । देवे ॥

नभःसरित् । स्त्री । मन्दाकिन्याम् ॥

नभःस्थितः । पुं । नरकविशेषे ॥ त्रि । आकाशस्थिते ॥

नभःस्पृक् । त्रि । अत्युच्चव्यापिनि ॥ नभःस्पृशति । स्पृश° । क्विप् ॥

नभश्चक्षुः । पुं । सूर्य्ये ॥ इतिशब्दमाला ॥

नभश्चमसः । पुं । चन्द्रे ॥ चित्रापूपे ॥ इन्द्रजाले ॥ इतिमेदिनी ॥

नभश्चरः । पुं । विहङ्गमे ॥ विद्याधरे ॥ मेघे ॥ वाते ॥ ग्रहे ॥ देवे ॥ राक्षसे ॥ त्रि । व्योमचारिणि ॥

नभाः । पुं । घने । मेघे ॥ भाद्रे ॥ श्रा

मकोषपानपरमधुकरगीतमनोज्ञ-
तडाग. पञ्चमनादवादपरपरभृतका
ननसत्परभागः । वसुभविप्रयुक्तक
चवरततनुजीवितदामदुरन्तः किङ्कुर
वाद्य वच्चि मम सखचरि सन्निधि-
मेति वसन्तः ॥

नरोत्तमः । पुं । कृतकृत्यपुरुषे ॥ य
था । यःस्वकात् परतोवेह जातनि
र्वेदआत्मवान् । हृदिकृत्वा हरिं गे
हात् प्रव्रजेत् स नरोत्तमः ॥ स्वका
त्स्वतएव परतःपरोपदेशाज्जात-
वैराग्यः ॥

नर्क्कुटकम् । न । नासिकायाम् ॥ इति
हेमचन्द्रः ॥

नर्त्तकः । पुं । केलके ॥ मोटगले ॥ चा
रणे ॥ हिमे ॥ नटे । सर्वेष्वपि ॥
वि । शास्त्रानुसारेणनर्त्तनकृति ॥
अस्यलक्षणंयथा । यादृशं लक्षपा
पं साङ्गीतयोश्च तादृशम् । ल
क्ष्यस्य धारणात् पापं नर्त्तकः परि-
कीर्त्तितः ॥ अपिच । असम्मद्गुप्रमा
धी [illegible]मदाभ्रुकुटितत्परः । हासम
[illegible] वाचालो लास्यकोविद
[illegible] गोदरः ॥ नृत्यति ।
[illegible] मिश्रियमिष्टुचि
[illegible] । गम्भ-



[illegible] वैन् इति रामजनी इतिभाषा ॥
करेखोम् ॥ मल्लिकानामसुगन्धिद्रव्ये
॥ नृत्यति । नृती० । ष्वुन् । षि-
त्वात् ङीष् ॥

नर्त्तनम् । मं । नृत्ये ॥ नृती० ।
ल्युट् ॥

नर्त्तितम् । वि । ताण्डविते ॥

नर्द्दटकम् । न । छन्दोविशेषभेदे ॥ त-
ल्लक्षणंयथा । यदिभवतो नजौ भज
जला गुरु नर्द्दटकम् । इति ॥ यथा
। व्रजवनितावसन्तलतिकाविलसन्म
धुपे मधुमथनं प्रधानजनवाञ्छितक
ल्पतरुम् । विभुमभिनौति कोपि
सुकृती मुदितेन मुदा रुचिरपदाव
लीघटितनर्द्दटकेनकविरिति ॥

नर्द्दनम् । न । शब्दे ॥

नर्म्मकीलः । पु । भर्त्तरि । पत्यौ ॥ इ
तित्रिकाण्डशेषः ॥

नर्म्मठः । पुं । चिवुके ॥ षिड्गे ॥ चूचु-
के ॥ परिहासके ॥ इतिम० सं० ॥

नर्म्मदः । पुं । केलिसचिवे ॥ वि । हर्ष
दे ॥ नर्म्मददाति । सुदाम० । यति
वा । दो० । आतोनुपेतिक. ॥

नर्म्मदा । स्त्री । रेवायाम् । सोमोद्भवा
याम् । मेकलकन्यकायाम् ॥ अस्याः
स्मरणेन सर्पविषनाशोभवति । न
र्म्मदायैनमःप्रातर्नर्म्मदायैनमोनिशि

। नमोऽस्तु नर्म्मदे तुभ्यं त्राहि मां विषसर्पतः इति विष्णुपुराणम् ॥ पूतकायाम् ॥ टाप् ॥

नर्म्मदाप्रभवः । पुं । तीर्थविशेषे ॥

नर्म्म । न । परिहासवाक्ये ॥ नरथम् । नृनये । मनिन् ॥

नर्म्मरा । स्त्री । दर्य्याम् ॥ भस्त्रायाम् ॥ सरलायाम् ॥ निम्नगाम् ॥ इत्यभितोमेदिनिकरः ॥

नलः । पुं । नडे । पोटगले ॥ नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित् । उष्णो मूत्रस्त्रियोन्यर्त्तिदाहपित्तविसर्पजित् ॥ नृपतिविशेषे । सूर्य्यवंशीयनिषधराजपुत्रे ॥ यथा । अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः । नलस्तु नैषधस्तस्मान्नभस्तस्मादजायत ॥ * ॥ वीरसेननृपतेः पुत्रे ॥ यथा । नलौ द्वावेव विख्यातौ वंशे काश्यपसम्भवे । वीरसेनसुतस्तद्वन्नैषधश्च नराधिपः इति मात्स्ये १२ अध्याये ॥ * ॥ चन्द्रवंशीयनिषधराजपुत्रे । दमयन्तीपतौ ॥ यथा । कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति महाभारतम् ॥ पितृदेवे ॥ विश्वकर्म्मणः पुत्रे कपीश्वरे ॥ दैत्यविशेषे ॥ न । पद्मे ॥

नलकम् । न । शाखास्थि । नाडीवत् सरन्ध्रेऽस्थिपर्व्वणि ॥ इति हेमचन्द्रः ॥

नलकिनी । स्त्री । जङ्घायाम् ॥

नलकीलः । पुं । जानुनि ॥

नलकूवरः । पुं । कुवेरपुत्रे ॥ नलः कूवरो युगन्धरोऽस्य ॥

नलदम् । न । पुष्परसे ॥ उशीरे ॥ जटामांस्याम् ॥ इति मेदिनी ॥

नलदम्नुः । पुं । निम्बवृक्षे ॥ इति भूरिप्रयोगः ॥

नलदा । स्त्री । मांस्याम् ॥ इति हेमचन्द्रः ॥

नलपट्टिका । स्त्री । नलाख्याम् । दरमा इति गौडभाषाप्रसिद्धे कटविशेषे ॥

नलमीनः । पुं । चिङ्गिटमत्स्ये । नलवनचारिणि मत्स्ये ॥ नलवनस्थो मीनः नलामीन इति वा ॥

नलसेतुः । पुं । रामायणप्रसिद्धे समुद्रे सेतौ ॥ नलेन वानरविशेषेण निर्म्मितः सेतुः ॥

नलिका । स्त्री । करुनाले ॥ नाड्याम् ॥ गौडभाषया नली इति प्रसिद्धे सुगन्धिद्रव्यभेदे । विद्रुमलतिकायाम् । कपोतचरणायाम् । अस्याः पर्य्यायः प्रतिहा सुगन्धा प्रवालाकृतिः पपारी इति पंठारी इति क्वचित् प्रसिद्धा

नवतरः । त्रि । नव्ये ॥

नवतिः । स्त्री । सङ्ख्याविशेषे । ९० नब्बे इति भाषा ॥ सङ्ख्येये ॥ नवद्शतः परिमाणमस्य । पङ्क्तिविंशति त्रिंशच्चत्वारिंश द्पञ्चाशत्षष्टिसप्तत्यशीतिनवति शतम् प्रकृतेनैवमावत्तिप्रत्ययस्य ॥

नवतिका । स्त्री । तूलिकायाम् ॥

नवद्रव्यम् । न । त्वपायां क्षपविशेषे ॥

नवद्रुम् । न । संसर्गिकायाम् । यत्र स्थितिजलसमीपकादृशे ॥ नवच्चस हृतच्च ॥ सामान्यतो नूतने पर्वे ॥

नवदीधितिः । पुं । मन्नीसुते । भौम ग्रहे ॥ नवादीधितिर्यस्य ॥

नवदुर्गा । स्त्री । नवपत्रिकायाम् ॥ गौ र्यादिषु ॥ यथा । प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी । तृतीयं च न्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायनी तिच । सप्तमं कालरात्रिश्च महागौ रीतिचाष्टमम् ॥ नवमं सिद्धिदात्री स्या नवदुर्गाः प्रकीर्त्तिताः । उक्तान्ये तानिनामानि ब्रह्मणैवमहात्मना ॥ अग्निनादह्यमानस्तु शत्रुमध्येगतो रणे । विषमे दुर्गमेचैवभयार्त्ताः शर णागताः ॥ न तेषांजायते किञ्चिदशुभं रणसङ्कटे । नापदं तस्यपश्यामिशो कदुःखभयं नहि ॥ यैस्तु भक्त्यास्मृ तानूनं तेषांसिद्धिःप्रजायते ॥ इति मार्कण्डेयपुराणम् ॥

नवदोला । स्त्री । नवीनप्रेङ्खायाम् ॥

नवद्वारपुरम् । न । शरीरे । मनुष्यदे हे ॥ चक्षुःश्रोत्रे द्वेचक्षुषी द्वेनासि के वागेकेतिपिरविसर्ग देपायूपस्था खेकचः इति नवद्वाराणिसन्ति ॥ न वद्वाराणि यस्मिन् तत् नवद्वारम् । तच्चतत् पुरञ्चेतिविग्रहः ॥

नवधा । अ । नवप्रकारे ॥ यथा । चा चारो विनयो विद्या प्रतिष्ठा तीर्थद र्शनम् । निष्ठा वृत्ति स्तपो दानं न वधा कुललक्षणम् ॥

नवधातवः । पुं । हेमादिवस्तु ॥ यथा । हेमताराऽरनागाश्च ताम्ररङ्गे च ती क्ष्णकम् । कांस्यकं कान्तलोहञ्च धा तवो नवकीर्त्तिताः ॥

नव । त्रि । सङ्ख्याविशेषे । ९ नौ इति भाषा ॥

नवनयत्वम् । न । नवप्रकारत्वे ॥ प्रका रेद्विर्भावः । कर्मधारयवद्भावात् सु पोलुक् ॥

नवनी । स्त्री । नवनीते । नैनी इति भाषा ॥ इति पुराणम् ॥

नवनीतम् । न । नवोद्धृते । घृतादि संयोगेनन्यते । नैनीइति माखन इतिच भाषा ॥ नोत यदि नवनीतं

जातरजोऽङ्गनायाम् । नवरजः स्त्रियाम् ॥

नववधूः । स्त्री । नूतनपरिणीतायाम् । नवोढायाम् । नयी वहू इतिभाषा ॥

नववध्वागमनम् । न । नूतनपरिणीतायाः प्रथमतः क्रियमाणे भर्तृगृहागमने । गौनाइतिभाषा ॥

नवशः । चि । नवानाम् पूरणे ॥ तस्य पूरणेडट् ॥ ङीपि नवमी ॥

नवमल्लिका । स्त्री । नवमालिकायाम् । नेवारि इति नेवारी इतिच गौड भाषा प्रसिद्धे पुष्पे ॥

नवमल्ली । स्त्री । नवमालिकायाम् ॥ नवा स्तुत्या मल्ली ॥

नवमालिका । स्त्री । नवमल्लिकायाम् । ग्रीष्मोद्भवायाम् । सप्तलायाम् । नेवारा इति नेवारी इतिच भाषा ॥ नवा स्तुत्या मालिका ॥

नवमी । स्त्री । शुक्लकृष्णपक्षयोस्तिथिविशेषे । इयं चन्द्रस्य नवमकलाक्रियारूपा दुर्गाया स्तिथिः ॥ अस्यां जातस्यफलम् । विरोधकर्त्तासुजने रगम्यः परापकारार्थमतिः कुशीलः । आचारहीनः कृपणः कठोरः प्रसूतिकाले नवमी यदि स्यादिति ॥

नवयौवना । स्त्री । युवतौ । तरुणाम् । दिक्करीयाम् । अतिक्रान्तमुग्धभावायाम् । नवं यौवनं तारुण्यं यस्याः सा ॥

नवरत्नम् । न । नवप्रकारमणिषु ॥ यथा ॥ मुक्तामाणिक्यवैदूर्यगोमेदान् वज्रविद्रुमौ । पद्मरागं मरकतं नीलञ्चेति यथा क्रमादिति । तन्त्रसारः ॥ नवानां रत्नानां समाहारः ॥ * ॥ नवग्रहदोषशान्त्यैधार्याणि नवरत्नानि यथा । वैदूर्यं धारयेत्सूर्ये नीलञ्च मृगलाञ्छने । काञ्चनेयेषिमं विद्यात्पद्मरागं भवात्मजे ॥ गुरौ मुक्तां भृगौ वज्रं शनौ नीलं विदुर्बुधाः । राहौ गोमेदकं धार्यं केतौ मरकतं तथेतिदीपिका ॥

नवरात्रम् । न । आश्विनादिचतुर्मासेषु शुक्लप्रतिपदादिनवमीपर्यन्तमवश्यकर्त्तव्ये दुर्गाव्रतविशेषे ॥ नवरात्रचतुष्टयमुक्तं देवीभागवते । चैत्रेऽश्विनेतथाषाढे माघेकार्यो महोत्सवः । नवरात्रे महाराज पूजाकार्या विशेषत इति ॥ नवानां रात्रीणां समाहारः ॥

नवरात्रिकम् । न । नवरात्रे ॥

नववरिका । स्त्री । नवोढायाम् ॥

नववल्लभम् । न । दाहागुरुणि ॥ त्रि । नवीनप्रिये ॥

नववस्त्रम् । न । नवाम्बरे । कुनाश्ते ॥

नवशायकः । पुं । नवशाक इति गौड

भाषाप्रसिद्धे नवविधे गोपादिजातिविशेषे ॥ यथा । गोपो मालीच तैली तन्त्री मोदकवारजी । कुलालः कर्मकारश्च नापितो नवशायकाः ॥ इतिपराशरसंहिता ॥

नवश्राद्धम् । न । एकादशाहादिश्राद्धे ॥

नवसारः । पुं । न । नवसादरे ॥ तच्छुद्धिर्यथा । नवसारो भवेच्छुद्धः शूर्णतो विधिपाचितः । दोलायंत्रेण यत्नेन भिषग्भिर्योगसिद्धये इतिसारचन्द्रिका ॥

नवसादरम् । न । नौसादर इतिभाषाप्रसिद्धे द्रव्ये ॥ प्रतिश्यायेषु शिरसः पीडासु नवसादरम् ॥

नवसूतिका । स्त्री । अचिरप्रसूतायां धेनौ ॥ नवसूतं प्रसवोऽस्याः । शेषादिति कप् । प्रत्ययस्थादितीत्वम् ॥

नवा । स्त्री । नवीनायाम् ॥

नवांशः । पुं । नवमांशे । मेषादिद्वादशलग्नानां नवमे भागे ॥ यथा । मेषाद्या मकराद्याश्च तुलाद्याः कर्कटादयः । क्रमान्नवांशा राशीनां स्वांशाद्यांशोत्तमाः स्मृताः ॥ यथा । मेषे प्रथमनवांशे अंशो मेषस्य । द्वितीयांशो वृषस्य । तृतीयांशो मिथुनस्य । चतुर्थांश. कर्कटस्य । पञ्चमांशः सिंहस्य । षष्ठांशः कन्यायाः । सप्तमांशस्तुलायाः । अष्टमांशो वृश्चिकस्य । नवमांशो धनुषः ॥ * ॥ एवं वृषे प्रथमांशो मकरस्य । २ कुम्भस्य । ३ मीनस्य । ४ मेषस्य । ५ वृषस्य । ६ मिथुनस्य । ७ कर्कस्य । ८ सिंहस्य । ९ कन्यायाः ॥ * ॥ तथा मिथुने १ तुलायाः । २ वृश्चिकस्य । ३ धनुषः । ४ मकरस्य । ५ कुम्भस्य । ६ मीनस्य । ७ मेषस्य । ८ वृषस्य । ९ मिथुनस्य ॥ * ॥ एवं कर्के १ कर्कस्य । २ सिंहस्य । ३ कन्यायाः । ४ तुलायाः । ५ वृश्चिकस्य । ६ धनुषः । ७ मकरस्य । ८ कुम्भस्य । ९ मीनस्य ॥ एवं सिंहे मेषाद्याः ॥ कन्यायां मकराद्याः ॥ तुलायां तुलाद्याः ॥ वृश्चिके कर्कटाद्याः ॥ एवमेव धनुषि मेषाद्याः ॥ मकरे मकराद्याः ॥ कुम्भे तुलाद्याः ॥ मीने कर्काद्याः क्रमान्नवांशा ज्ञेया. ॥ उक्तञ्च । मेषे नवांशा मेषाद्याः वृषेच मकरादिकाः । मिथुनेच तुलाद्याः स्युः कर्कटे कर्कटादिका, इति ॥

नवांशकः । पुं । नवांशे ॥

नवाङ्गम् । न । पाचनविशेषे ॥ यथा । विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः । कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥

नवाङ्गा । स्त्री । कर्कटशृङ्ग्याम् ॥

नवाचम् । न । नवीभावे ॥ तच्चिमि

त्यर्थात् ॥

नवापयस्था । स्त्री । नूतनायां चीरवि हार्य्याम् ॥

नवाभोगः । त्रि । अभिनवप्रयत्ने । म- होत्साहे ॥ नवआभोगोयत्नोयस्य ॥

नवाम्बरम् । न । अनाहते । नवीन वस्त्रे ॥ नवञ्चतदम्बरञ्च ॥

नवार्चिः । पुं । मङ्गलग्रहे ॥ इति त्रिका ण्डशेषः ॥

नवाली । स्त्री । नवमालिकायाम् ॥

नवाहः । पुं । न । नवतिथौ । नवदिने ॥ प्रतिपत्तिथौ ॥

नवीनः । त्रि । नव्ये । नूतने ॥ नव एव । नवस्यनप्तनप्खाश्च प्रत्ययाः नूरादेशश्च ॥

नवीयः । त्रि । नवतरे ॥

नवेदाः । पुं । ज्ञाते ॥ नवेत्ति । विद० असुन् ॥

नवोढा । स्त्री । नववध्वाम् । कन्याम् । नववरिकायाम् ॥ मुग्धानायिका भेदे ॥ यथा । वलान्नीतापार्श्वं मु- खमनुमुखं नैयकुरुते धुनानामूर्द्धा नं क्षिपति वदनं चुम्बनविधौ । हृदि न्यस्तं हस्तं क्षिपति गमनारोपितम ना नवोढा वोढारं रमयतिच सन्ता पयतिचेतिरसमञ्जरी ॥ नवानूतना चासौ ऊढाविवाहिताचेतिविग्रहः ॥

नवोद्धृतम् । न । नवनीते ॥ नवाच्चत- त् उद्धृतञ्च । विशेषणमितिस- मासः ॥

नव्यः । त्रि । नवीने । नूतने ॥ नूयते । स्तुतौ । अचोयत् ॥ पुं । रक्तपु नर्नवायाम् ॥

नश् । न । नशने ॥ नाश० । आवेक्षिप् । नश्यति कर्त्तरिवाक्षिप् । पदगकाः यथा विधिकर्त्तव्याः ॥

नशाकः । पुं । काकविशेषे ॥

नशिता । त्रि । नाशाश्रये ॥ नशेस्तृन् ॥

नश्यत्प्रसूतिका । स्त्री । मृतवत्साया म् । मृतपुत्रिकायाम् ॥

नश्वरः । त्रि । अशाश्वते । नाशप्रतियो गिनि ॥ नश्यति तच्छीलः । नाश० इण्नशजिसर्त्तिभ्यः क्वरप् ॥ टिड्ढेति ङीपि । नश्वरी ॥

नष्टः । त्रि । तिरोहिते । अदर्शन विशिष्टे ॥ नाशाश्रये ॥ नश्यतिस्म । णश अदर्शने । गत्यर्थेति कर्त्तरि क्तः ॥ भावक्तान्तादर्शआद्यच् ॥

नष्टचन्द्रः । पुं । सौरभाद्रस्योभयपक्षे चतुर्थ्यामुदितेचन्द्रे ॥ यथा । नष्ट श्चन्द्रो न द्रष्टव्यः भाद्रेमासि सिता सिते । चतुर्थ्यामुदितो ऽमुष्ट प्रति षिद्धोमनीषिभिः ॥ चन्द्र दर्शनात् रतं कलङ्क मतिदुष्करम् । तस्मो द

ददाति हेमन्ते कामतो यदि पश्यति ॥ अज्ञानतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् । तदा शुद्धो भवेत् सद्यो निष्कलङ्की महीतले ॥ सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः । सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥ इति मन्त्रेणपूतञ्च जलं साधु पिबेद्ध्रुवम् ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

नष्टचेष्टता । स्त्री । प्रलये । शोकादिभिर्निष्पन्ननाशे । सर्पशोकादिभिः सकलचेष्टानाशे मूर्च्छापरपर्याये सात्त्विकभावे ॥ नष्टा चेष्टा यस्य । तस्य भावः । तल् ॥

नष्टाग्निः । पुं । प्रमादादिना कारणान्तरेण येन त्यक्तवैतानिके । वीरहणि ॥ नष्टोऽग्निर्यस्य ॥

नष्टाशौच्यः । त्रि । गतशौचविकाशापने ॥

नष्टासिद्धम् । न । लोप्त्रे । किञ्चिता सचौरनीतद्रव्ये । इति हारावली ॥

नष्टेन्दुकला । स्त्री । कुहूः ॥ नष्टा इन्दुकला यस्याम् ॥

नसा । स्त्री । नासिकायाम् ॥ इति त्रिकाण्डशेषः ॥

नसः । पुं । नासिकायाम् ॥ इति शब्दमाला ॥ न । नस्ये ॥ इति रत्नमाला ॥ पञ्चविधं नस्यकर्म यथा । प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा । शिरोविरेचनञ्चैव नस्यकर्म तु पञ्चधेति ॥

नस्ता । स्त्री । नासाकृतच्छिद्रे ॥

नस्तितः । पुं । नस्योतः । रज्जुना स्यूतनासे गवादौ । नाथा बैल इति भाषा ॥ नसनम् । नासकौटिल्ये । क्तः । नस्तं कृतमस्य प्रातिपदिकाद्धात्वर्थे इति णिच् । ततः कर्मणि क्तः ॥

नस्तोतः । पुं । नस्योते ॥ नस्यमोतमस्य । बस० । कर्मणि क्तः । नस्तया उतः ॥

नस्यम् । न । नस्ते । श्रावणे । नासिकादेयचूर्णादौ ॥ यथा । सिद्धार्थकं वचा हिङ्गुकरञ्जं देवदारु च । मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥ प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् । नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥ अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् । भूतेभ्यश्च भयं हन्ति राजद्वारे च शासने ॥ इति गारुडे १९९ अध्यायः ॥

नस्या । स्त्री । नासिकायाम् ॥ नासारन्ध्रात् । नकेल इति नाथ इति च भाषा ॥ त्रि । नासिकायां भवे ॥ नासिकायां भवा । नासिकायै हिता वा । शरीरावयवाद्यत् । नस्नासिकाया यत्तस्क्षुद्रेष्विति नसादेशः ॥

नाकु:

नक्षोत: । वि । नक्षिते । नासारज्जुयुक्तेष्पादौ ॥ नक्षया नासारज्ज्वा उत: ॥

नच । च । प्रस्यारम्भे ॥ नच्चर्च ॥

नहि । च । निषेधे ॥ नह्यति । याइवम्भने । इन् ॥

नहिकिम् । च । निषेधे ॥

नहुष: । पुं । नागविशेषे ॥ सोमवंशभवेन्द्रपतिविशेषे ॥ सचपुरूरवसोज्येष्ठात्मजस्यायुषस्तनय इति पुराणम् ॥ न । नगरे ॥ नह्यति । च ह० । पून्विकक्षिध्यउपच ॥

नहुषाख्यम् । न । तगरपुष्पे ॥

नहुषात्मज: । पुं । ययातिन्दपे ॥

ना । च । निषेधे ॥ नह्यति । याइवन्भने । डा ॥

नाक: । पुं । स्वर्गे ॥ अकंदु:खम् भाक्षाव अकमिति नाक: । नभ्राडून पादिति नञोप्रकृतिभाव: ॥ को ब्रह्मा स इभा यस्मिन्निति वा ॥ न । ब्रह्मलोके ॥

नाकनाथ: । पुं । इन्द्रे ॥

नाकनायक: । पुं । इन्द्रे ॥

नाकनायकपुरोहित: । पुं । वृहस्पतौ ॥

नाकपृष्ठ: । पुं । स्वर्गे ॥

नाकी । पुं । सुरे । देवताधाम् ॥ नाक: स्वर्गोस्त्यस्य । इनि: ॥

नाकु: । पुं । मुनिविशेषे ॥ पृथ्वीधरे ॥ वल्मीके ॥ नक्अकति । अक० । वाहुलकादु: ॥ यद्वा । नम्यते भूरनेन । णम० । फक्षिपाटिनमिमनिजनाड्गुक्पटिनाकिधतश्चे त्युणादिसूत्रे - ण । इकारस्याकारस्यार्थ: ॥

नाचण:

नाकुल: । पुं । नकुलपुत्रे ॥ वि । नकुलसम्बन्धिनि ॥ न । नकुलेश्वरीदेव्याः स्थाने ॥ स्यायमुर्व्यनिनाकुले ॥

नाकुली । स्त्री । कुक्कुटीकन्दे ॥ चविके ॥ रास्नायाम् ॥ नाई इति भाषाप्रसिद्धे कन्दविशेषे ॥ नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिमूषकवृश्चिकाखुविषज्वरकृमिव्रणान् ॥ यवतिक्तायाम् ॥ श्वेतकण्टकार्याम् ॥ नकुलानामियम् प्रियत्वात् । तस्येदमित्यण् । न वाङ्मवं यथा वा ॥

नाचण: । पुं । मासविशेषे ॥ सचद्विविध: । सप्तविंशतिनक्षत्रात्मक एक: । यथा । सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्र इह चोच्यते इति ॥ सर्वनक्षत्रभुक्तात्नाक्षत्रोमास उच्यते इतिच ॥ अस्य प्रयोजनम् । नक्षत्रसत्रागयनानि चेन्दोर्मासेन कुर्याद्गणात्मकेन । स सविंशतिनक्षत्रात्मकेन ॥ जन्मनक्षत्रेभनिमेमयारयोगे मनोदुःखदानम् । यथोक्तं दीपिकायाम् । जन्म

काञ्जिकेनच । पुनः पुटेच्छरावाभ्यामेवंषड्भिः पुटैर्मृतिः ॥ * ॥ नागसिन्दूरवर्णाभो म्रियते सर्वकार्यकृत् ।सतिक्तमधुरो नागो स्रुतो भवति भस्मसात् ॥ आयुः कीर्तिं वीर्यवृद्धिं करोति सेवनात्सदा । रोगान्नुश्निमितो नागो वज्रवद्भुजकारकः ॥

नागकन्दः । पुं । हस्तिकन्दे ॥

नागकर्णः । पुं । रक्तैरण्डे ॥

नागकिञ्जल्कः । पुं । नागकेशरपुष्पे ॥

नागकुमारिका । स्त्री । गुडूच्याम् ॥ मञ्जिष्ठायाम् ॥

नागकेशरः । पुं । नागकेसरवृक्षे ॥

नागकेसरः । पुं । काञ्चनाह्वये । चाम्पेये । नागपुष्पे ॥ नागाख्यःकेसरः ॥

नागगन्धा । स्त्री । नाकुलीकन्दे ॥

नागगर्भम् । न । सिन्दूरे ॥

नागच्छत्रा । स्त्री । नागदन्त्याम् ॥

नागजम् । न । सिन्दूरे ॥ रङ्गे ॥ वि । नागजाते ॥ नागाज्जातम् । आ मो॰ ड: ॥

नागजिह्वा । स्त्री । अनन्तमूलायाम् ॥ मनःशिलायाम् ॥ नागानांजिह्वेव ॥

नागजिह्विका । स्त्री । नागजिह्वार्थे ॥ स्वार्थेकः ॥

नागजीवनम् । न । वङ्गे ॥ इति हेमचन्द्रः ॥

नागदन्तः । पुं । हस्तिदन्ते ॥ गृहान्निर्गतदारुणि । खूंटी इति हांतिया इति च भाषा ॥

नागदन्तकः । पुं । भित्तिस्थदारुणि । निर्यूहे ॥ नागदन्तएव । स्वा॰ कः ॥

नागदन्तिका । स्त्री । वृश्चिकाल्याम् । बिछिटी इति गौड भाषा ॥ राम दूत्याम् ॥

नागदन्ती । स्त्री । श्वेतहस्तिन्याम् । हस्तिकर्णपलाशायाम् । भूरुह्याम् ॥ कुम्भाख्यमेपली । नागदुवीति प्रसिद्धौषधौ ॥

नागदमनी । स्त्री । क्षुद्रक्षुपविशेषे । दमनाम् । दुःस्पर्शायाम् । नागदमन्याम् ॥

नागदलोपमम् । न । पद्मपफले । पान्का इति भाषा ॥

नागद्रुः । पुं । सुधायाम् । समन्तदुग्धायाम् ॥

नागद्वीपः । पुं । भारतवर्षस्थो पद्वीपविशेषे ॥

नागधामा । पुं । सीसके ॥

नागनिर्यूहः । पुं । नागदन्तके ॥

नागपत्रा । स्त्री । नागदमन्याम् ॥

नागपत्री । स्त्री । लक्ष्मणाख्यायामोषधौ ॥

नागपदः । पुं । रतिबन्ध विशेषे ॥ यथा । पादौ स्कन्धे तथा हस्ते निवेशित भगे मधु । कामदेव कामुको मार्गे ...

वन्धो नागपदो मतः ॥ इति रति० ॥

नागपाशः । पुं । वरुणास्त्रे ॥ ग्रन्थिविशेषे । साङ्केतया बद्धनासु नागपाश इति स्मृतः ॥ ... नागपाश यथा ... ॥

नागपाशकः । पुं । रतिबन्धविशेषे । यथा । स्वजङ्घाद्वयमध्यस्थौ हस्ताभ्यां धारयेत् कुचौ । रमेत् निःशङ्कितः कामी बन्धोयं नागपाशकः ॥ इति रतिमञ्जरी ॥

नागपुरम् । न । पाण्ड्यदेशे ऽनेन नाम्ना प्रसिद्धे नगरे । उरगपुरे ॥ हस्तिनापुरे ॥ वङ्गपुराख्ये गङ्गायमुनयोः स्नायप्रसिद्धे देशविशेषे ॥

नागपुष्पः । पुं । पुन्नागवृक्षे ॥ नागकेसरे ॥ नागपुष्पः कषायोष्णो रूक्षो लघ्वामपाचनः । ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनः । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहः ॥ चम्पके ॥

नागपुष्पफला । स्त्री । कुष्माण्ड्याम् ॥

नागपुष्पिका । स्त्री । स्वर्णयूथ्याम् ॥

नागपुष्पी । स्त्री । गजपुष्प्यां लतायाम् ॥ नागिन्याम् ॥ नागदमन्याम् ॥

नागफणः । पुं । पटोले ॥

नागबन्धु । पुं । अश्वत्थवृक्षे ॥ नागानामबान्धवे ॥

नागबलः । पुं । भीमसेने ॥ त्रि । हस्तितुल्यपराक्रमे ॥

नागबला । स्त्री । गाङ्गेरुक्याम् । गोरक्षचाकुलियाइति गौडभाषा ॥ नागानां हस्तिनां बला ॥

नागभृत् । पुं । कुकुन्दुर्गे ॥ इति त्रिकाण्डशेषः ॥

नागमल्लः । पुं । ऐरावते । शक्रगजे ॥

नागमाता । स्त्री । कद्र्वाम् ॥ मनसादेव्याम् ॥ मनःशिलायाम् ॥

नागमारः । पुं । केशराजे । भृङ्गराजे ॥ त्रि । हस्तिमारके ॥

नागयष्टिः । स्त्री । पुष्करिण्यादि खितकाष्ठविशेषे । नागाख्यायाम् । रड़ काठ इति गौड भाषा । जाखन इति भाषा ॥

नागयष्टिका । स्त्री । खातस्थकाष्ठविशेषे । नागाख्यायाम् । जाखन इति भाषा ॥

नागरः । पुं । देवरे ॥ नागरङ्गे ॥ न । मुस्तके ॥ शुण्ठ्याम् ॥ रतबन्धे । त्रि । विदग्धे ॥ नगरोद्भवे ॥ नगरेभवः । तत्रभवइत्यण् ॥ यद्वा । अगं राति । रा० । क० । न अगरः । नकारेण सुसुपेतिसमासः ॥

नागरकः । पुं । चौरे ॥ शिल्पिश्रेष्ठ

दिग्विजिगमि ॥ नगरे भवः। नगरा
त् कुलत्वप्राचीप्रयोरिति बुञ् ॥
रतिबन्धविशेषे। यथा। ऊरुमूले
परिक्षिप्य योषिदूरुद्वयं यदि। श्रो
वाधृत्वा कराभ्यां च बन्धो नागरकोम
त इति रतिमञ्जरी ॥
नागरक्तम्। न। सिन्दूरे ॥ नागसम्भो
षिते ॥
नागरघनः। पुं। नागरमुस्तायाम् ॥
नागरङ्गः। पुं। जम्बीरविशेषे। ऐराव
ते। नारङ्गे। नरङ्गी इति भाषाप्र-
सिद्धे। पर्यायः ॥ नागरङ्गस्त्वच। र
त्ना०। कलम्बेतिपथम् ॥ नागरसि
ञ्ज्वृत्तेनरङ्गोऽस्तीति वा ॥
नागरमुस्तकम्। न। भद्रमुस्तके ॥
नागरमुस्ता। स्त्री। मुस्ताप्रभेदे। च-
क्राङ्कायाम्। भारेव्याम्। चूडाला-
याम्। नागरमोथा इति भाषा ॥
नागराजः। पुं। अनन्ते। शेषे ॥ नागा
नां राजा। राजाहःसखिभ्यष्टच् ॥
पिङ्गलनागे ॥ ऐरावते ॥
नागराह्वम्। न। शुण्ठ्याम् ॥
नागरी। स्त्री। स्नुहीवृक्षे ॥ विदग्ध-
नार्याम् ॥ नागरभार्यायाम् ॥
नागरीटः। पुं। नागरीभिःकृतेऽभद्रच्छ
शब्दे ॥ विङ्गे ॥
नागरूकः। पुं। नागरङ्गे ॥



नागरेणुः। पुं। सिन्दूरे ॥
नागरेयकः। त्रि। नगर्यां भवादौ ॥ क
त्र्यादित्वाड्ढकञ् ॥
नागलता। स्त्री। मेहने। शेफसि ॥
प्रतिविकारविशेषः ॥ ताम्बूल्याम् ॥
नागलोकः। पुं। पाताले ॥ नागानां
लोकः ॥
नागवल्लरी। स्त्री। नागवल्ल्याम् ॥
नागवल्लिका। स्त्री। नागवल्ल्याम् ॥
नागवल्ली। स्त्री। ताम्बूल्याम्। पानकी
बेल इति भाषा ॥ नागलोकस्य वल्ली
। शा० ॥ इयञ्च श्रीमद्राम्रवाटादि-
नानाग्रामस्थानभेदाद्देशभिन्ना।
एकाप्येषा देशस्थानविशेषान्नाना
कारं याति नामगुणैश्च। यथा।
श्रीवाटीमधुरा तीक्ष्णा वातपित्त-
कफापहा। रसाढ्या सरसा हृद्या वि
पाके शिशिरा स्मृता ॥ आम्रवाटी
कटुकाक्षसिक्ता तीक्ष्णा तथोष्णानु
रूपाककर्त्री। विदाहपित्तास्रविको
पनी च विष्टम्भहा वातनिबर्हणीच ॥
सप्तसोमधुरा तीक्ष्णा कटु रूप्यांश्च
पाचनी। गुल्मोदराध्मानहरा रुचि
कृद्दीपनीपरा ॥ * ॥ अन्यच्च। गुहा
गरेसतीरा प्रसिद्धा सत्पर्णचूर्णाति
रसातिहृद्या। सुगन्धितीक्ष्णा मधु
रातिहृद्या सन्दीपनीपुंस्त्वकराचव-

स्या ॥ विरेचनीयक्तसुगन्धिकारि-
णीति ॥ * ॥ नाग्नायाम्लसरासुती
क्ष्णामधुराचक्ष्यापिमादाध्नुत्पित्तो
द्रेकशरासुदीपनकरीवस्यामुखामो
दिनी । स्त्रीसैाभाग्यविवर्द्धिनीमद
करीश्रेयासदावल्लभागुल्माध्मानवि-
बन्धजिच्चकथितासामाखवेतुस्थिता ॥
कन्धिपुष्पिकाभामकषायोष्णाक-
टुसया । मलापकर्षाकफश्वासपित्त
ह्रातमाग्निनी ॥ वैषियोयाकटुस्तो
क्ष्णाह्याद्दोर्घस्वाचसा । कफवात
हरारुच्याकटुदीपनपाचनीतिराज-
निर्घण्टः ॥

नागवारिकः । पुं । राजकुञ्जरहस्तिपे ॥
गणाध्यक्षे ॥ गरुडे ॥ चित्रमेखले
। मयूरे ॥

नागवीटः । पुं । व्याकरा इति गौडभा
षाप्रसिद्धे । टाङ्करे ॥ इति त्रिकाण्ड
शेषः ॥

नागवीथी । स्त्री । अश्विन्यादिनक्ष-
त्रघटितग्रहस्थानमध्यान्तर्गतोत्तर-
स्थानस्थपथविशेषे ॥ यथा । सर्वं
ग्रहाणां त्रीण्येव स्थानानि द्विजस-
त्तमाः । स्थानंजारद्गवंमध्यं तथैरा
वतमुत्तरम् ॥ वैश्वानरंदक्षिणतोनि
र्दिष्टमिहतत्त्वतः । तदेवमधमोक्त
रदक्षिणमार्गत्रयं प्रत्येकं वीथीत्र-
येणविधाभिद्यते । तथाहि । त्रिभि-
स्त्रिभिरश्विन्यादिनक्षत्रैः नागवीथी
गजवीथी ऐरावती चेत्युत्तरमार्गे
वीथीत्रयम् । तथा चोक्तम् । अश्वि
नी कृत्तिकायाम्या नागवीथीतिश-
ब्दिता । इति विष्णुपुराणम् ॥ वध्य
पापस्थविशेषे ॥

नागवृक्षः । पुं । नागकेसरे ॥

नागशुण्डी । स्त्री । हस्तीशुण्डीफले ॥

नागसम्भवम् । न । सिन्दूरे ॥ नागसी
संसक्षयोऽस्य ॥

नागसुगन्धा । स्त्री । भुजङ्गाक्ष्याम् ॥

नागस्तोकम् । न । वत्सनाभे ॥

नागस्फोता । स्त्री । दन्त्याम् ॥ नागद
न्त्याम् ॥

नागहनुः । पुं । नखनामगन्धद्रव्ये ॥

नागहन्त्री । स्त्री । वन्ध्याकर्कोटक्याम् ॥

नागाख्यः । पुं । नागकेसरे ॥ न । हस्ति
नापुरे ॥

नागाङ्गना । स्त्री । नागपत्न्याम् ॥ ना
गयष्टौ ॥ इति मेदिनी ॥ द्विरदस्य
शुण्डे ॥ इति हेमचन्द्रः ॥

नागाञ्चला । स्त्री । नागयष्ट्याम् ॥

नागाधिपः । पुं । अनन्ते ॥ हस्तिराजे ॥

नागाननः । पुं । श्रीगणेशे ॥ नागस्यान
नमस्य । समुदायशब्दा अवयवेष्वपि
वर्त्तन्त इति नागमुखपरो नागशब्दः ॥

नागान्तकः । पुं । गरुडे ॥ नागानामन्तकः ॥

नागारातिः । पुं । वन्ध्याकर्कोटक्याम् ॥

नागासानुः । स्त्री । कुम्भतुम्ब्याम् ॥

नागाशनः । पुं । गरुडे ॥ नागान् अश्नाति । अश० । ल्युः ॥ नागा अशनं यस्येति वा ॥

नागाह्वम् । न । हस्तिनापुरे ॥

नागाह्वा । स्त्री । लक्ष्मणाकन्दे ॥

नागिनी । स्त्री । नागपुष्प्याम् ॥ नागदन्त्याम् ॥ नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तजित् । विनिहन्ति विषं मूत्रं योनिदोषवमिक्रमीन् ॥

नागी । स्त्री । रम्भयोपायाम् । स्थूलायोगजयो, रिति ॥ नागशब्दाज्जातेरपदेति स्त्रोल्पेर्थे ङीष् ॥

नागोदरम् । न । उदरत्राणे ॥ इति हेमचन्द्रः ॥

नागोदरम् । न । उरस्त्राणे ॥ इतिशब्दरत्नावली

नाचिकेतः । पुं । अनले ॥ नचिकेतसामासे वैदिकोपाख्यानविशेषे ॥

नाचिकेतुः । पुं । चन्द्रौ ॥ इतित्रिकाण्डशेषः ॥

नाटः । पुं । नृत्ये ॥ कर्नाट इति प्रसिद्धदेशे ॥

नाटकः । पुं । कामाख्यायां पर्वतविशेषे ॥ यथा । ऐशान्यां नाटकेशैलेशङ्करस्य महाश्रमम् । निवसति तत्रेश्वरस्तद्दीनातु पार्वतीति कालिका पुराणम् ॥

नाटकम् । न । महारूपके । गद्यपद्यप्राकृतभाषामये ग्रन्थविशेषे ॥ देवतादर्शनान्तञ्च कर्त्तव्यं नाटकं बुधैः । राजर्षिदर्शनान्तं वा तैरपि द्वैः समामतः ॥ त्रि । नर्त्तके ॥ नाटयति । नाटेर्ण्वुल् ॥

नाटकशैलः । पुं । स्त्रिविशेषे ॥ यथा । अस्तिनाटकशैले तु सरोमानससन्निभम् । यत्र सार्द्धं शैलपुत्र्या जलक्रीडां सदाहरः ॥ कुरुते नरशार्दूल स्वर्णपङ्कजशोभिते । तस्य पश्चात् मध्यपूर्वभागे व्यवसरित्त्रयम् ॥ अवतीर्णं प्रयात्येव दक्षिणं सागरं प्रति । इति कालिका पुराणे ८२ अध्यायः ॥

नाटकसन्धिः । पुं । मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यपञ्चभेदभिन्ने ॥ यथा । मुखं प्रतिमुखंचैव गर्भो विमर्श एवच । तथा निर्वहणञ्चेति नाटके पञ्चसन्धय इति ॥

नाटकीयम् । न । नाटकपर्य्ये ॥ नाटके भवम् । वृद्धाच्छः ॥

नाटाम्रः । पुं । तरम्बुजे । खतापनसे ॥

नाटार. । पुं । नटतनये ॥ नटस्या प त्यम् । आरगुदीचामित्यारक् ॥

नाटिका । स्त्री । नाटकविशेषे ॥

नाटेयः । पुं । नट्या अपत्ये ॥

नाटेर. । पुं । नटीसुते ॥ इतिहेम चन्द्रः ॥

नाट्यम् । नं । तौर्य्यत्रिके । नृत्यगीत वाद्यात्मके ॥ लास्ये, नर्त्तने ॥ वाक्या र्थाभिनये ॥ नटस्येदम् । छन्दोगौ क्थिकेति ञ्यः ॥ यो यस्येदयितोभा वः सतं नाट्येनिरीक्षते । अतःसर्व मनोहारि नाट्य कस्य नरञ्जकम् ॥ अस्योत्पत्तिर्यथा । इत्थानु श्रूयते ब्रह्मा मङ्क्षेणा प्यर्थितः पुरा । चकारा हुम्य वेदे भ्यो नाट्यवेदन्तु पञ्चमम् ॥ उपवेदाश्च वेदानां चत्वारः कथि ता. स्मृतौ । तथोपवेदो गान्धर्वःशि वेनोक्त स्वयम्भुवे ॥ तेनापि भरता योक्तस्तेन मर्त्ये प्रचारितः । शिवाज्ञ योनिभरता सखाद्य प्रयोजका इतिसङ्गीतदामोदरः ॥ नटानाञ्च कर्म । ष्यञ् ॥

नाट्यधर्मिका । स्त्री । दर्शनार्थं शास्त्रो क्तनाट्ये ॥ यथा । गीतवाद्यन्त्यत्र यं नाट्य तौर्य्यत्रिकन्दनत् । सङ्गीतं प्रेक्षणार्थे स्मिन् शास्त्रोक्ते नाट्यधर्मि केति हेमचन्द्रः ॥

नाट्यप्रियः । पुं । शिवे ॥

नाट्यशाला । स्त्री । प्रासादद्वारसमी पगृहे । नाट्यमण्डप इतिभाषा ॥ य था । नाट्य शाला च कर्त्तव्याद्वारदे शसमाश्रयेति गरुडपुराणम् ॥

नाट्यालङ्कारः । पुं । सङ्गीतप्रसिद्धे च तुष्षष्टिप्रकारे नाट्यभूषणहेतौ ॥ ■ चप्रकारःसङ्गीतदामोदरादिभ्योज्ञा तव्यः ॥

नाट्योक्तिः । स्त्री । नाटकविषयक- थनरीति ॥ नाट्येउक्तिः ॥ सायथा । आर्येतिब्राह्मणे । महाराजेतिच- त्रिये । हलेतिसख्यौ । हण्डे इतिनी चे । हञ्जे इतिचेट्याम् । आर्यपुत्रेति स्वामिनि ॥ राष्ट्रियेतिराजश्याले । हञ्जो इतिसमाने । देवेतिराजनि । भट्टेतिसार्वभौमे । आवुत्तेतिभगिनी पतौ । अज्जुका इतिगणिकायाम् । भाव इतिविदुषि । आवुक इतिजन के । युवराजोभर्त्तृदारक इतिच कु मारे । देवोभट्टारकइतिच राजनि । भर्त्तृदारिकेतिराजसुतायाम् । दे वी इति कृताभिषेकायांनृपस्त्रियाम् । भट्टिनी इति इतरासुराज्ञीषु । अन्त्य ह्ययमित्यनयोर्मतौ । अन्येतिमा तरि । वाहुःइतिवालायाम् । मारि ष इति आर्ये । अत्तिकेतिज्येष्ठायांभ

गिन्याम् । निर्वृत्तमितिनिष्ठायाम् ॥ इत्यमरः ॥

नाडिः । स्त्री । नाड्याम् ॥

नाडिकम् । न । कालशाके ॥ इतिभावप्रकाशः ॥

नाडिका । स्त्री । घटिकायाम् । घडी इतिभाषा ॥

नाडिकेलः । पुं । नारिकेले ॥

नाडिचीरम् । न । निर्वेष्टने । नलीइतिगौडभाषा ॥ इतिहारावली ॥

नाडिन्धमः । पुं । स्वर्णकारे ॥ नाडीं वंशनलीं धमति । ध्माधेटोर्नासिकास्तनयोः । नाडीमुष्ट्योश्चेतिकर्त्तरिखश् । ध्माधेतिध्मादेशः । खित्यनव्ययस्येतिह्रस्वः ॥

नाडिन्धयः । पुं । नाडीपानकर्त्तरि ॥ नाडीं धयति । धेट्७। नाडीमुष्ट्योश्चेतिखश् । ह्रस्वः ॥

नाडिपत्रम् । न । नाडीचशाके ॥

नाडी । स्त्री । शिरायाम् ॥ तत्रकायनाडी त्रिविधा । तत्रैकावायुवहा । अन्या मूत्रविट्श्लेष्मरसवाहिनी । अपरा क्षारवाहिनीतिकश्चिद्भरतः ॥ * ॥ अथनाडीक्रमः । सार्द्धत्रिकोट्योनाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम् । नाभिकन्दनिबद्धास्तास्तिर्यगूर्द्ध्वमधः स्थिताः ॥ द्विसप्ततिसहस्राणि तासांस्थूला.प्रकीर्त्तिताः । देहे धमन्योधमन्यास्ताः पञ्चेन्द्रियगुणावहाः ॥ तासाञ्च सूक्ष्मशुषिराणि, शतानिसप्त सुस्तानि यैरसकृदन्नरसंवहद्भिः । आप्याय्यते वपुरिदं हि नृणां मनीषा मनः सवह्निरिविसिन्धुशतैः समुद्रः ॥ आपादतः प्रततगात्रमशेषमेषा मामस्तकादपिच नाभिपुरःस्थितेन । एतनुसृदङ्गइवचर्म्मचयेननद्धं कायं च यामिव शिरागतसप्तकेन ॥ * ॥ सप्तशतानां मध्ये चतुरधिकाविंशतिः स्फुटास्तासाम् । एकापरीक्षणीया दक्षिणकरचरणविन्यस्ता ॥ चतुर्विकेतितदुताम् । तिर्यक्कूर्मो देहिनां नाभिदेशे वामे वक्त्रं तस्य पुच्छञ्चयाम्ये । ऊर्द्ध्वभागे हस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ तौ ॥ वक्त्रे नाडीद्वयं तस्य पुच्छे नाडीद्वयं तथा । पञ्च पञ्च करे पादे वामदक्षिणभागयोः ॥ तासां मध्ये एकेति । एकस्या एव पादादूर्द्ध्वगमनात् दक्षिणेति प्राधान्ये पुरुषाश्रया ।दुक्ताम् । वामे भागे स्त्रिया योज्या नाडी पुंसस्तु दक्षिणे । इतिप्रोक्ता मयादेविसर्व्वदेहेषुदेहिनाम् ॥ *॥ नपुंसकस्यतुस्त्रीपुंसयोरन्यतराकारप्रकटता मपेक्ष्य परीक्षा । साम्य

मुनस्यादेव । कूर्पिमस्यतुप्रकृतिस्थ
ता । चरणेति वामस्यतु दक्षिणग्र
न्थिपश्चात्पार्श्वस्था । दक्षिणस्यतु
वामग्रन्थिपश्चात्पार्श्वस्थैव सदुपदे
शात् । करस्थातुवक्ष्यते ॥ * ॥ प
रीक्षाप्रकारमाह । सव्येन रोग
धृतिकूर्परभागभाजा पीड्याथ दक्षि
णकराङ्गुलिकाचयेन । अङ्गुष्ठमूलम
धि पश्चिमभागमध्ये नाडीं प्रभञ्ज
नगतिं सततं परीक्षेत् ॥ सव्येन क
रेण । रोगधृतिर्गूढधारणा मिथ्या
पीडने हेतुः । रोगार्थ्यां वातादि पि
शुनवायूनां धारणं यथा-स्यात् तथा
। पीड्येति कश्चित् । भागइति समुद्दि
तकफोणिपरम् भाजेति परीक्षा
कालेपि तत्र हस्तस्थितये । आपी-
ड्येत्यर्थात् नाडीम् एतच्चापीडनं वा
तादि मैर्थ्यापर्य्यायबोधनाय । अथे
च्छया पीडनानन्तरम् नतु परीक्षा-
कालेप्यापीडनस्थितिः । दक्षिणेति
प्रायिकम् स्वपरीक्षाया अन्यथात्वा
त् । एचेति योग्यतया तर्ज्जनीमध्य
मानामिकाग्रहणम् । पश्चिमेत्य
ङ्गुष्ठस्याधोभागः । मूलेति तदुक्तम् ।
अङ्गुष्ठस्यतु मूलेया धमनी जीवसा
क्षिणी । तच्चा गतिवशाद्विद्यात् सु
खं दुःखञ्च देहिनाम् ॥ प्रभञ्जनग



तिर्य्यगेति नाड्यन्तरनिरासः । सतत
मिति सुस्थतादशायामपि । तदुक्त
म् । भाविरोगाभिबोधाय सुस्थनाडी
परीक्षणमिति ॥ * ॥ परीक्षणीय
माह । वातं पित्तं कफं द्वन्द्वं सन्निपा
तं तथैवच । साध्या साध्यविवेकञ्च
सर्व्वं नाडी प्रकाशयेत् ॥ सन्निपात
मिति सामान्यतः । साध्यासाध्यमि
ति विशेषतश्चेत्यर्थः । सर्व्वमित्यनेन
द्वन्द्वरोगादिक मित्युपसंहारः ॥
इति नाडीप्रकाशे प्रथमोद्योतः ॥ * ॥
अथ नाडीज्ञानसमय माह । प्रातः
कृतसमाचारः कृताचारपरिग्रहम्
। सुखासीनः सुखासीनं परीक्षार्थ
मुपाचरेत् ॥ प्रातरिति प्रायिकम् अ
न्याह्नि उपहता इत्युक्तेः ॥ * ॥ नि
षिद्धकालमाह । सद्यः स्नातस्य भुक्त
स्य क्षुत्तृष्णातपसेविनः । व्याया
माक्रान्तदेहस्य सम्यङ् नाडीन बुध्य
ते ॥ तैलाभ्यङ्गेच सुप्तेचतथाचभो
जनान्तरे । तथा न ज्ञायते नाडी य
था दुर्गतरा नदी ॥ सुप्ते निद्राकाले
। भोजनान्तरे भोजनमध्ये भोजना
वसानभावेच । वातमूर्च्छादिव्याधि
करोगे नायंविधिः ॥ * ॥ अथ वाता
दिस्वभावक्रममाह । आदौच वहते
वातो मध्येपित्तं तथैवच । अन्तेच

वहते श्लेष्मा नाडिकापयसञ्चयम्
॥ आदावित्ति । कफोणिपोङितदिती
यवर्गे । ननु तर्जनीनिवेशस्थले स्था
नभेदस्य कुत्राप्यवचनमात्वात् ॥ *
॥ सुस्थताज्ञानार्थं माह । भूलताभ
मनुप्राया स्वच्छा स्वास्थ्यमयी शिरा ।
। प्रायेति बाहुल्येन । स्वच्छा परितो
वाव्यरक्षिता । स्वास्थ्यमयी सुस्थता
व्यञ्जिका च । तथा । प्रातःस्निग्धमयी
नाडी मध्याह्ने चोष्णतान्विता । सा
याह्ने धावमाना च चिराद्रोगविवर्जि
ता ॥ चिरादिति । अतीतानागतयो
र्द्वयोरप्युक्तिः पथ्याश्रितानामेव ॥ *
॥ वातादीनां क्रमेण गतिं माह ।
वाताद्वक्रगता नाडी चपला पित्त
वाहिनी । स्थिरा श्लेष्मवती ज्ञेयामि
श्रिते मिश्रिता भवेत् ॥ वक्रेति ।
वायोस्तिर्यग्गमनात् तिरोवहन्ती
ति । एवं तत्प्रकोपादिना वायोरादि
गतिरपि ज्ञातव्या । चपलेति । वह्ने
रूर्द्ध्वज्वलनादूर्द्ध्वं चञ्चला । स्थिरेति
जलस्य नीचगमनादनुल्बणा । मिश्रि
ते मिश्रितचिह्नाभवति । तेन द्विदो
षजेोभयचिह्ना । सर्वजे सर्वचिह्नेति ।
चपलतास्थिरतयोः समयभेदेनावि
रोधः ॥ * ॥ उक्तवक्रादिसामान्यस्य
विशेषमाह । सर्पजलौकादि गतिं व



दन्तिविबुधाः प्रभञ्जनेन नाडीम् । पि
त्तेन काककुलावकभेकादि गतिं विदुः
सुधियः ॥ राजहंसमयूराणां पारा
वतकपोतयोः । कुक्कुटादिगतिं धत्ते
धमनी कफसंवृता ॥ आदिना वाते
कुटिलगति दीक्षायिका । आदि श
ब्देन पित्ते कलिङ्गकाकादिगतिः
। कफे गजवराङ्गनादिगतिः ॥ * ॥ द्व
न्द्वजस्यापि क्रमेणैव भेदमाह । मु
हुः सर्पगतिं नाडीं मुहुर्भेकगतिं त
था । वातपित्तद्वयोद्भूतां प्रवदन्ति वि
चक्षणाः ॥ भुजगादिगतिञ्चैव राज
हंसगतिं धराम् । वातश्लेष्मसमुद्भूतां
भाषन्ते तद्विदो जनाः ॥ मण्डूकादि
गतिं नाडीं मयूरादिगतिं तथा । पि
त्तश्लेष्मसमुद्भूतां प्रवदन्ति मनी-
षिणः ॥ * ॥ त्रिदोषजां सम्याह । स
र्पगादिलावकादिहंसादीनाञ्च बिभ्र
ती गमनम् । वातादीनाञ्च समं ध
मनीसन्ध्य भाषन्ते ॥ सममिति
न्यूनाधिकता निरासः । क्रमगत्यात्
नासाध्यत्वम् । तथा । वातातित्तिरि
वार्त्ताकागमनं सन्निपाततः । कदाचि
न्मन्दगा नाडी कदाचित् शीघ्रगा भ
वेत् ॥ त्रिदोषप्रभवे रोगे विज्ञेया
हि भिषग्वरैः । पित्ताकमतथा कृ
च्छ्रसाध्यत्वमसाध्यत्वञ्च ॥ * ॥ सा

मान्यतः सुखसाध्यत्वमाह । यदा यं धातु माप्नोति तदा नाडी तथा गतिः । तथाच सुखसाध्यत्वं नाडी ज्ञानेन बुध्यते ॥ अयमर्थः । अपरा ह्लादौ नाडी धातोल्लक्षणा प्रथमं वा तगत्यैव वहति ततो यथायथमपि त्तादिगत्या ततु पित्तात्ययात्मेवा तादिगत्या तदासुखसाध्यत्वं व्यति रेकेण व्यतिरेकः । तदुक्तं मन्यैः । नाडी यथाकालगति चयाणां प्रकोपशान्त्यादिभिरेव भूयः ॥*॥ अथासाध्यरूपमाह । मन्दंमन्दं शिथिलशिथिलं व्याकुलं व्याकुलंवा स्थित्वा स्थित्वा वहति धमनी याति नाशञ्च सूक्ष्मा । नित्यं स्थानात् स्खलति पुनरप्यङ्गुलिं संस्पृशेद्वा भावैरेवं बहुविधविधैः सन्निपातादसाध्या ॥ मन्दं मन्दं मुहुरनुक्रटमप्रखरमिति यावत् । शिथिले गति स्खलदिति रूपम् । व्याकुलेति चलदित्यस्ततः । वाशब्दः समुच्चये । स्थित्वास्थित्वे त्यादिभ्यामाचतद्रूपैव गतिः । नाशमदर्शनम् । गच्छति कदाचिन्नाडीस्पन्दोपि न सम्भाव्यत इत्यर्थः । सूक्ष्मेति यदि लभ्यते तदा तथैवानित्यं प्रायः स्थान मङ्गुष्ठमूलं तस्मात् स्खलति कदापि तत्र न स्पन्दत इत्यर्थः । तदुक्तम् । हन्तिच स्थानवि



च्युतेति किञ्चित् स्फुरतीति कुत्रापि । पुनरपीति कियद्दिनमन्येन प्रकृष्टो मङ्गुलीमूलमेवमिति स्थैवं रूपैर्बहुभिर्भावैर्धर्मैः । उक्तञ्चान्यत्र । महातापेपि शीतत्वं शीतत्वे तापि तापिता । नानाविधगतित्वञ्च तस्यु नं संशयः ॥ अत्रोत्पत्तौ यथा कृष्टपित्तादिकृततापनिरासः । शीतत्वत्यपापि मह्त्वेति सम्बध्यते । तथा । निर्दोषे स्पन्दते नाडी मृत्युकालेपि निश्चला । निश्चला स्पन्दसामान्याभाववती । अतीसारादौ वस्तिपातादि स्वेदादिना स्पन्दोपलम्भात् ॥ तथा । पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रतीं स्वस्थानभ्रमणं मुहुर्विदधतीं चक्राधिरूढामिव । तीव्रत्वं दधतीं कदापि शिथिलतां सूक्ष्मत्वमातन्वतीं नो साध्या धमनी वदन्ति सुधियो नाडीगतिज्ञानिनः ॥ अयमर्थः । पूर्वमित्यनुक्रमविपर्यये पित्तादिगतिमतीं वारंवारमेवं क्रमेण चक्रोपरि भ्राम्यमाणामिव । तथा तीव्रत्व मतिशय वेगम् एवञ्च कदाचिन्मन्दवद्गमनाम् । तयोस्तरोत्तरं कृशता मापादयन्तीति विशिष्टो हेतुः । तथाचान्यत्र । याच्युताच स्थिरा पर्यन्तायाश्चेयं मांसवाहिनी । याच

सूक्ष्माच वक्राच तामसाध्यां विदुर्बुधाः ॥ अथवा सहजतोऽपुच्चतरा पृथगिवोन्नतावा। कदाचिद्दितिस्थिरा प्रणिधानेनैव गम्यमानस्पन्दा च। मांसवाहिनी मांसाधारइव गमिष्यती लगुडप्रायेति। तदुक्तम्। मांसेन लगुडाकृतिः। मांसेनसमं वहतीति यदुक्तं तद्रूपपरिचायकम कारणात् ज्ञस्यात्। इयमपि विशिष्ट बोधनाय। यावत्सूक्ष्माचवक्राचेति पृथगिववाक्यान्तरमिति ॥ * ॥ असाध्यत्वापवादमाह। भागमयादमूर्च्छा भयशोकप्रमुखकारणान्नाडी। सम्मूर्च्छितापिगाढं पुनरपिसाजीवितं धत्ते ॥ चिरतरबहुलभारोद्वहनेनवा विषवेगधारावाहिरुधिरदर्शनादिजनितमूर्च्छयावा राक्षसादिसन्दर्शनादिभयेनवा पुत्रादिविरहजनितशोकातिरेकेणवा सम्मूर्च्छितापि अतिनिस्पन्दापि। गाढमिति सुतरां काष्ठादियोगेपीत्यर्थः। पुनरितिस्वास्थ्यतां यातीत्यर्थः। भागानां रथ्यादीनां प्रवाहइति न युक्तम् भयशोकयोः पृथग्विधानात्। प्रसुखेत्यनेन हेत्वन्तराभिधानम्। तदुक्तम्। पतित. सन्धितो भेदी नष्टशुक्रश्चयोनरः। साम्यते विस्मय त्वस्य न किञ्चिन्मृत्युकारणम् ॥ पतित उच्चादितः सन्धितोऽस्थ्यादिसन्धानेन संहितः। भेदी अतीसारवान्। नष्टशुक्रो यक्ष्मादिनाविरमणेनवा शुक्रक्षयात्। विस्मयोऽसाध्यत्वानुमानं साम्यति नावतरति। कारणं प्रागुक्तमत्रदेव अन्यत्रापि। तथाभूताभिषङ्गेपिविदोषवद्दुपस्थिता। समाक्षावहते नाडी तथावन क्रमंगता ॥ अपमृत्युर्नरोगाद्या नाडी सन्सन्निपातवत्। भूताभिषङ्गे तथा भूतसामान्याभिषङ्गेच देवगुर्वादो नाडी सन्निपातधर्मावाविर्भोउपस्थिता। मा मातत्यव भवति नतु तत् फलप्रदा। भेदमाह। समेति। वातपित्तकफस्वभावक्रमवती तथाक्रमं व्यतिक्रमं नगता। तस्मादेव अपमृत्युः अपगतो मृत्यु र्यस्या. सा तथा। परमार्थत. सन्निपातवदपि सन्निपातजन्या न स्यादिति। तदुक्तम्। स्वस्थानच्युतेन शोकेन हिमाक्रान्तेन निर्गदाः। भवन्ति निश्चला नाड्यो न किञ्चित् तत्र दूषणमिति ॥ स्वस्थानच्युतेन उच्चादितः पतने। अङ्गष्ठमूलतः स्तस्या इति तुल्यार्थः। निर्गदा इत्यत्र सद्गति. निर्गदा अपिनिश्चला भवन्ति। दूषणमसाध्यत्वभ्रमः। अन्ये

ध्रुवम् । तदानूनं मनुष्यस्य रुधिरा
पूरिता मता ॥ * ॥ आगन्तुकरूप
भेदमाह । भूतज्वरे सेकद्याऽतिवेगा
धावन्ति नाड्योऽपि यथाग्निगामाः ।
तथा । एकाहिकेन क्वचन प्रदूरेण
शान्तगामा विषमज्वरेण । द्वितीय
के वापि हि तीयतुर्ये गच्छन्ति तप्ता भ्र
मिवत् क्रमेण ॥ * ॥ अन्यथापि ।
उष्णा वेगधरा नाडी ज्वरकोपे प्रजा
यते । उद्वेगक्रोधकामेषु भयचिन्ता
श्रमेषु च ॥ भवेत् क्षीणगतिर्नाडी
ज्ञातव्या वैद्यसत्तमैः ॥ प्रसङ्गादाह
। व्यायामे भ्रमणे चैव चिन्तायां श्रम
शोकतः । नानाप्रभावगमना शिरा
गच्छति विज्वरे ॥ * ॥ अजीर्णरूप
माह । अजीर्णे तु भवेन्नाडी कठिना
परितो जडा । प्रसन्ना च द्रुता शुद्धा त्वरि
ता च प्रवर्त्तते ॥ * ॥ तच्छ्रेषमाह
। पक्वाजीर्णे पुष्टिहीना मन्दं मन्दं
वहेत् जडा । असृक्पूर्णा भवेत् को
ष्णा गुर्वी सामा गरीयसी ॥ * ॥ प-
सङ्गात् भक्षणज्ञानमाह । पुष्टिस्तैल
गुडाहारे मांसे च लगुडाकृतिः । क्षी
रे च स्तिमिता वेगा मधुरे भेकवद्गम
ति ॥ रम्भागुडवटाहारे रूक्षशुष्का
दिभोजने । वातपित्तार्त्तिरूपेण ना
डी वहति निष्कुमम् ॥ * ॥ अथ रस



ज्ञानम् । मधुरे बर्हिगमना तिक्ते स्या
द्भूलता गतिः । अम्ले कोष्णा प्लवग
तिः कटुके भृङ्गसन्निभा ॥ कषाये
कठिना म्लाना लवणे सरला द्रुता । ए
वं द्वित्रिचतुर्योगे नाना धर्मवती ध
रा ॥ तथा । द्रवेऽतिकठिना नाडी
कोमला कठिनाशने । द्रवद्रव्यस्य का
ठिन्ये कोमला कठिनापि च ॥ चौर्ये
पृथग् द्रव्यचेष्टैषु पुष्टैव जायते ॥
* ॥ अग्निमान्द्यधातुक्षयलक्षण मा
ह । मन्दाग्नेः क्षीणधातोश्च नाडी
मन्दतरा भवेत् । तदुक्तम् । क्षीण
धातोश्च मन्दाग्नेर्नाडी क्षीणतमा
ध्रुवम् । तथा । मन्देऽग्नौ क्षीणतां
याति नाडी हंसाकृतिस्तथेति । अ
न्यत्तु । आमाशये पुष्टिविवर्द्धनेन भ
वन्ति नाड्योऽश्वभुजाभिगुप्ता ॥ आ
हारमान्द्यादुपवासतो वा तथैव ना
ड्यो भुजगायमानाः ॥ * ॥ प्रसङ्गाद्
दीप्ताग्निज्ञानमाह । लघ्वी भवति
दीप्ताग्नेस्तथा वेगवती मता ॥ * ॥
प्रसङ्गाद् ग्रहणी सम्याह । पादे च
हंसगमना करे मण्डूकसप्लवा । त
स्याश्च मन्दता देहे त्वथवा ग्रहणी
गदे ॥ तथा । भेदेन शान्ता ग्रहणी
गदेन निर्वीर्यरूपा त्वतिसारभेदे ।
बिल्वाम्लिकायां नवगा कदाचित् दामा

तिसारे पृथुता जडा च ॥ * ॥ अथ विसूचिकाज्ञानम् । निरोधे मूत्रशकृतोर्विड्ग्रहे स्तिमिताश्रिताः । विसूचिकाभिभूते च भवन्ति भेकवत्क्रमाः ॥ * ॥ प्रसङ्गात् आनाहमूत्रकृच्छ्रज्ञानमाह । आनाहे मूत्रकृच्छ्रे च भवेन्नाडी गरिष्ठता ॥ * ॥ शूलज्ञानमाह । वातेन शूलेन मरुत्प्रवेन सदैव वक्रा हि शिरावहन्ती । ज्वालामयी पित्तविचेष्टितेन साध्या न शूलेन च पृष्ठक्रमा ॥ * ॥ अथप्रमेहज्ञानम् ॥ प्रमेहे ग्रन्थिरूपांसा सुतसा त्वामदूषणे ॥ * ॥ विषविष्टम्भगुल्मज्ञानमाह । उत्पित्तुरूपा विषविष्टिकायां विष्टम्भगुल्मेन च वक्ररूपा । अन्त्यर्थवातेन अधःस्फुरन्ती ग्रन्थानभेदिन्यसमासकाले ॥ * ॥ गुल्मे विशेष माह कश्चित् । गुल्मेन कम्पाऽथ पराक्रमेण पारावतस्येव गतिङ्करोति ॥ * ॥ अथ भगन्दरज्ञानम् । प्रयाति कठिने देहे प्रयाति पैत्तिकं क्रमम् । भगन्दरानुरूपेण नाडीव्रणनिवेदने ॥ प्रयाति वातिकं रूपं नाडी पावकरूपिणी ॥ * ॥ अथ वान्तादिज्ञानम् । वान्तस्य शल्याभिहतस्य जन्तोर्वेगावरोधाकुलितस्य भूयः । गतिं



विधत्ते धमनी गजेन्द्रमरालमानेव कफोल्वणेन ॥ * ॥ स्त्रीरोगादिकमपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ॥ क्वचित् प्रकरणोल्लेखात् क्वचिद्वैचित्र्यमाश्रितः । क्वचिद् देशात् क्वचित् कालात् सङ्कीर्णमङ्गनिर्णयः ॥ नाडीपरिचयज्ञानं प्रायशो नैव दृश्यते । तेन शास्त्रानि मयोक्तं यत् तत् समाधेय सुतर्कैः ॥ * ॥ इति शङ्करसेनकविराजकृतौ नाडीप्रकाशे तृतीयोल्लासः ॥ * ॥ * ॥ * ॥

अथ भावमिश्रोक्ता नाडीपरीक्षा । पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु । अङ्गुष्ठमूलगां नाडीं परीक्षेत भिषग्वरः ॥ अङ्गुलीभिस्तिसृभिर्नाडीमवहितः स्पृशेत् । तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम् ॥ सद्यः स्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः । व्यायामश्रान्तदेहस्य सम्यङ् नाडी न बुध्यते ॥ वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्जनीतले । पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे ॥ तर्जनीमध्यमामध्ये वातपित्तेऽधिके स्फुटा । अनामिकायां तर्जन्यां व्यक्ता वातकफे भवेत् ॥ मध्यमानामिकामध्ये स्फुटा पित्तकफेऽधिके । अङ्गुलि

चितयेऽपि स्यात् मध्यस्था सन्निपातिनः ॥ वाताद्वक्रगतिं नाडी चित्ता द्रुतमुर्ध्वगामिनी । कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता ॥ वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः । वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिकेऽस्वतः ॥ उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके । कामात् क्रोधाद्वेगवहा क्षीणा चिन्ताभययुता ॥ क्षिप्रास्थिरत्वाचलेद्या सा च स्थितिस्थानच्युता तथा । अतिक्षीणा च शीता च प्रायात् हन्ति न संशयः ॥ ज्वरकोपेन धमनी सोष्णा वेगवती भवेत् । मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा मता ॥ चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा । सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता ॥ इति ॥ * ॥ * ॥ * ॥ प्रसङ्गाद्योगिनामुपकाराय इडादिनाडीनां निरूपणम् । दक्षिणाङ्गः स्मृतः सूर्यो वामभागे निशाकरः । नाडीद्वैव विदु स्तासु मुख्या तिस्रः प्रकीर्त्तिताः ॥ इडा वामेतरयोर्मध्ये सुषुम्णा पिङ्गला परे । मध्या तास्वपि नाडी स्यादग्नीषोमस्वरूपिणी ॥ अनेका वाममुष्काधः स्याधनुर्वक्राधा मनासापर्यङ्गता । एवं पिङ्गला द



क्षिणाण्डाधः स्या धनुर्वक्रा दक्षिणनासान्तं गता ॥ पृष्ठवंशान्तर्गता सुषुम्णे स्यर्थैः । इति सारदातिलकम् ॥ * ॥ नाडीनां संवहो देहे विकल्पयोनिः खगाण्डवत् । तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः ॥ कन्दस्य मध्यस्था योनि कल्पन्ति स्थानं यावत् मूलमिति यावत् ॥ प्रधानाः प्राणवाहिन्यो भूयस्तेषु दश स्मृताः । इडा च पिङ्गला चैव सुषुम्णा च तृतीयिका ॥ गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ॥ अलम्बुषा कुहूश्चैव शङ्खिनी च दश स्मृताः ॥ एवं नाडीमयं चक्रं विज्ञेयं शक्तिचक्रके । इडायाः पिङ्गलायाश्च मध्ये यासा सुषुम्णिका ॥ इयञ्च त्रिगुणा ज्ञेया ब्रह्मविष्णुशिवात्मिका । रजोगुणाच्च वज्राख्या चित्रिणी सत्त्वसंयुता ॥ तमोगुणा ब्रह्मनाडी कार्यभेदक्रमेण चेति निरुत्तरतन्त्रे प्रथमः पटलः ॥ * ॥ इडापिङ्गलयोः स्वरूपं यथा । इडा च शङ्खचन्द्राभा तस्या वामे व्यवस्थिता । पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रितेति योगार्णवः ॥ इडायां संस्थितश्चन्द्रः पिङ्गलायां दिवाकर इति तन्त्रान्तरम् ॥ गुप्तकम्बले । नाले ॥ ब्रह्मान्तरे ॥ गण्डदूर्वायाम्

नाथः । पुं । कुलगुरौ ॥ कुलपरम्परागतस्वामिनि ॥ नासारज्ज्वौ ॥ ये प्ययुक्ते । अधिपे । आर्थे । स्वामिनि ॥ त्रि । प्रार्थनीये ॥

नाथमानः । त्रि । उपतप्यमाने ॥ याचमाने ॥

नाथवान् । त्रि । पराधीने । परतन्त्रे ॥ नाथोऽस्यास्ति तदस्यास्तीति मतुप् ॥

नाथहरिः । पुं । पशौ ॥ नाथं हरतीति विग्रहे हरतेर्हृतिनाथयोः पशाविति नाथकर्मण्युपपदेऽहरतेरिन् प्रत्ययः ॥

नादः । पुं । ध्वनौ । शब्दे ॥ वर्णे ॥ अर्द्धेन्दौ । अर्द्ध मात्रायाम् ॥ णद॰ । घञ् ॥ ब्रह्मस्वरूपे घोषविशेषे ॥ यथा ॥ सच्चिदानन्दविभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः ॥ नादो बिन्दुश्च बीजञ्च स एव त्रिविधो मतः । भिद्यमानात् पराद्बिन्दोरुभयात्मा रवोऽभवत् ॥ स रवः श्रुतिसम्पन्नः शब्दो ब्रह्माभवत्परमिति ॥ सकलात् मूर्त्तात् । नादो घोषः । बिन्दुः प्रणवः स च वर्णश्च सर्ववर्णप्रभवत्वात् ॥ * ॥ नाभेरूर्द्ध्वं हृदिस्थानान्मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नादः प्रकीर्त्तितः ॥ अपि च । आकाशाग्निमरुज्जातो नाभेरूर्द्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमायाति यः स नाद इतीरितः ॥ स च प्राणिभवोऽप्राणिभवश्चोभयसम्भवः । आद्यः कायभवो वीणादिभवस्तु द्वितीयकः ॥ तृतीयो विच वंशादिभव इत्थं त्रिधा मतः । यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यो मतः ॥ तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः । वह्निमारुतसंयोगान्नादः समुपजायते ॥ न नादेन विना गीतं न नादेन विना स्वरः । न नादेन विना रागस्तस्मान्नादात्मकं जगत् ॥ न नादेन विना ज्ञानं न नादेन विना शिवः ॥ नादरूपं परं ज्योतिर्नादरूपी परं हरिः ॥ इति सङ्गीतदामोदरः ॥

नादेयम् । न । सैन्धवलवणे ॥ सौवीराञ्जने ॥ नदीनदसम्बन्धिजले ॥ शेषिकेष्वर्थेषु नद्यादिभ्यो ढक् ॥ नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् । नादेयमुदकं रूक्षं वातलं लघु दीपनम् ॥ अनभिष्यन्दि विशदं कटुकं कफपित्तनुत् ॥ नद्यः शीघ्रवहा लघ्व्यः सर्वा याश्चामलोदकाः । गुर्व्यः शैवलसञ्छन्ना मन्दगाः कलुषाश्च याः ॥ नदीसरस्तडागस्थे कूपप्रस्र

षधादित्वे । उदके देशभेदेन गुणा
न् दोषांश्चलक्षयेत् ॥ पुं । काशतृणे
॥ वानीरवृक्षे ॥ त्रि । नदीनदसम्ब
न्धिजलादौ ॥ नदीभवे ॥ अग्राह्ये ॥
अवश्यदेये ॥ यथा । नादेयमादेयं
भरद्वसन्तयोर्नाऽऽदेयमिति । अ
स्यार्थः । नदीभवं नादेयं जलं शर
दि नआदेयम् । अपितु देयं दातव्य
मिति । वसन्तेच पुनरादेव नादेयं
नग्राह्यमिति ॥

नादेयिका । स्त्री । नादेय्याम् ॥ नादे
य्येव । स्वार्थे कः । ह्रस्वः ॥

नादेयी । स्त्री । नागरङ्गे ॥ जयायाम् ।
पताकाविशेषे । वैजयन्तिकायाम् ॥
अम्बुवेतसे ॥ भूमिजम्बाम् ॥ जवा
याम् ॥ यष्टुछे ॥ अग्निमन्थे ॥ काक
जम्बाम् ॥ नद्यांभवा । नद्यादिभ्यो
ढक् । टिड्ढेतिङीप् ॥

नाना । अ । विनार्थे ॥ नाना नारीं नि
ष्फला लोकयात्रेतियथा ॥ अनेका
र्थे ॥ यथा । नानाविधं देवभूतां स
मानम् ॥ उभयार्थे ॥ नेति नाना ।
विनञ्भ्यांनानाञौनसहेति नञो-
नाञ्प्रत्ययः ॥

नानाकन्दः । पुं । पिण्डालौ ॥ बहुविध
मूले ॥

नानात्वम् । न । अनेकभावे । द्वैतद
र्शने ॥ यथा । जीवात्मनोरनन्यत्वम
भेदेन प्रशस्यते । नानात्वं निन्द्यतेय
च्चतदेवंहि समञ्जसमिति गौडपा
दाः ॥ द्वैतंहि सर्वं प्राणिसाधारणं स्वा
भाविकं शास्त्रबहिष्कृतैःकुतार्किकैर्वि
रचितं नानात्वदर्शनं मनुष्यद्वितीय
सर्वोपाधिषु युक्त्यानिन्द्यते यावेद
वाक्या. स्मृतय इत्यादिस्मृत्याच ॥

नानाध्वनिः । पुं । वीणावेणुकाहलादि
शब्देषु ॥ इति शब्दावली ॥

नानाननः । त्रि । अनेकविधास्ये ॥ ना
नाप्रकाराणि आननानि यस्य ॥

नानारूपः । त्रि । बहुविधे । विविधे
। अनेकप्रकारे ॥ नाना रूपं यस्य ॥

नानार्थः । त्रि । अनेकार्थे ॥ भिन्नप्रयो
जने ॥

नानावर्णः । पुं । बहुविधशुक्लादिवर्णे ।
त्रिषु । कर्बुरे ॥ त्रि । तद्वति ॥

नानाकाशानुरोध. । त्रि । भगवति परमे
श्वरे ॥ अस्ति भाति सर्वेषः कल्पकः
बद्धःमुक्त एकः अनेक इत्यादीन्
नानावादान् अनुरुध्यति माययानुव
र्ततेय इतिव्याख्यानात् ॥

नानाविधः । त्रि । अनेकप्रकारे ॥ ना
नाविधा यस्यसः ॥

नानुष्ठेयः । त्रि । अकर्त्तव्ये । अननुष्ठेये ॥

नान्तरीयकम् । त्रि । अवश्यभाविनि ॥

यथा। प्रतिबन्धकाभावे नान्तरीयकी कार्योत्पत्तिः । अवश्यम्भाविनी-त्यर्थः ॥

नान्दम् । न । स्तोत्रे ॥ नमति अनेनना वेम० । अमुजिशमिनकी तिष्ठन् वृद्धिश्च ॥

नान्दी । स्त्री । समृद्धौ ॥ नाटकादौ मङ्गलश्लोके । मङ्गलपाठे ॥ यथोक्तं भरतादिभिः । आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्त्तते । देवद्विजनृपादीनां तस्मान्नान्दीति सा स्मृता ॥ * ॥ नाटके विघ्नविघाताया दौ नान्दीकार्या । यदाह भरतः ॥ यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नप्रशान्तये ॥ देवद्विजनृपादीनामाशीर्वादपरायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिता ॥ अन्यच्च । देवद्विजनृपादीनां आशीर्वन्दनपूर्विका । नान्दी कार्या बुधैर्यत्नाद्नमस्कारेण संयुता ॥ गङ्गा नागपतिः सोमः सुधानन्दा जया प्रियः । एभिर्नामपदैः कार्या नान्दी धाराभिरङ्किता ॥ प्रशस्तपदविन्यासा चन्द्रसङ्कीर्त्तनान्विता । आशीर्वादपरा नान्दी योज्येयं मङ्गलात्मिका ॥ काचिद्दशपदा नान्दी काचिदष्टपदा तथा । सूत्रधारः पठेन्नान्दीं मध्यम



स्वरमाश्रितः ॥ इति भावती माधवटीका ॥

नान्दीकः । पुं । तोरणस्तम्भे ॥

नान्दीकरः । त्रि । नान्दीवादिनि । नान्दीपाठकारिणि ॥ नान्दी माशीर्वचनस्तिकादिरूपं मङ्गलं करोतीत्यर्थः । दिवाविभेतिटः ॥ भेरी प्राया नान्दीसवादनशीले इति केचित् ॥ अथ वदिङ्गमौवादनार्थं विख्याहुः ॥

नान्दीपटः । पुं । वीनाहे । कूपादीनां मुखबन्धने ॥ इति हेमचन्द्रः ॥

नान्दीमुखः । पुं । कूपादिमुखबन्धने । नान्दीपटे ॥ वृद्धिश्राद्धभुजि, पितृगणे ॥ यथा । नान्दीमुखं पितृगणं, पूजयेत् प्रयतो गृहीति विष्णुपुराणम् । सपत्नीकाः पित्रादिपितरम् मातामहादिपितरश्चेति ॥ न । वृद्धिश्राद्धे ॥

नान्दीमुखी । स्त्री । सामगेतरवृद्धिश्राद्धभुक्मातृगणे ॥ शर्करीछन्दोभेदे ॥ स्वरभिद्वियद्विनौतौ गनान्दीमुखी गौ । यथा । सरसखगकुलालापनान्दीमुखीयं शरहरिभुजलताचारुफेनस्मितश्रीः । मुरहरकलयासम्मासाद्य किन्त प्रमुदितहृदया भानुजान्हवतीह ॥

नान्दीवादी । त्रि । नान्दीश्लोकपाठकारिणि । नान्दीकरे ॥ नान्दीवदनश्री

त्वः । सुषीतिवदेषिति: ॥ न टक्का
-दौ मङ्गलार्थं भेर्यादिवाद्के ॥

नापितः । पुं । नार्दे इतिख्याते वर्णसङ्क
रजातिविशेषे । क्षुरावसायिनि । चु
रिणि । पट्टिकायां कुवेरिणी जाते ।
इति प० प० ॥ शूद्रायां क्षत्रियात्सा
तोयमिति विवादार्णवसेतुः ॥

नापितशालिका । स्त्री । नापितशाला
याम् । खरकुट्याम् ॥

नाभकः । पुं । वनतिक्ते ॥

नाभागः । पुं । नभगात्मजे ॥ नभगस्या
पत्यम् । अण् ॥

नाभिः । पुं । मुख्यनृपे । क्षत्रियभेदे
॥ चक्रमध्ये । रथचक्रपिण्डिकायाम् ॥
क्षत्रिये ॥ स्त्री । मृगमदे ॥ पुं । स्त्री ।
प्राण्यङ्गविशेषे । उदरावर्ते । तुन्दकू
प्याम् ॥ संदीइति भाषा ॥ त्रि । प्रधा
ने । मुख्ये ॥ नह्यते बध्यते । नह० ।
। नहो भश्चेति इञ् ॥ नभ्यते बध्यते
नभ्यते ऽनया ऽस्यां वा । नभ० ।
इञमादिभ्यः ॥ यद्वा नाभयति । स्वा
र्थे ण्यन्तादिञ् ॥

नाभिकण्टकः । पुं । गर्भण्डे ॥ आवर्ते
॥ इतिशब्दरत्नावली ॥

नाभिका । स्त्री । कटभीवृक्षे ॥

नाभिगुडकः । पुं । गर्भण्डे । तोण्डे ।
फूलीसूंडी इति टूंडीर इति भाषा ॥



नाभिगोलकः । पुं । स्फीतनाभौ । ना
भिकण्टके । गर्भण्डे ॥ नाभेर्गोलकः ॥

नाभिजः । पुं । ब्रह्मणि । कमलासने ॥

नाभिजन्मा । पुं । ब्रह्मणि । स्रष्टरि ।
विधातरि ॥ नाभौ जन्मास्य ॥

नाभिनाला । स्त्री । अमरायाम् । ना
भिसम्बन्धिन्यां नाड्याम् ॥

नाभिभूः । पुं । अब्जयोनौ । ब्रह्मणि ॥

नाभिवर्षं । पुं । भारतवर्षे ॥

नाभी । स्त्री । नाभौ ॥ मृगमदे ॥ कृ
दिकारादितिङीष् ॥

नाभीलम् । न । नार्या वङ्क्षणे ॥ नाभि
गाम्भीर्ये ॥ कृच्छ्रे ॥ गर्भण्डे । नाभि
गोलके ॥

नाभ्यम् । त्रि । नाभिहिते ॥ नाभये
हितम् । शरीरावयवाद्यत् । नाभि
नभञ्चेतिनाभेर्नभादेशस्तु न भवति
। तस्यगवादिषु तासन्नियोगशिष्टत्वेन
रथनाभावेवप्रवृत्ते ॥ नाभिसम्ब
न्धिनि ॥

नाम । अ । क्रोधे ॥ अभ्युपगमे ॥ वि
स्मये ॥ स्मरणे ॥ सम्भाव्ये । सम्भाव
नायाम् ॥ कुत्सायाम् ॥ प्राकाश्ये ॥
विकल्पे ॥ अलीके ॥ इच्छितदर्थे ॥
नामयति नाम्यते वा । सम प्रह्वत्वे
। अन्येभ्योऽपीतिड. ॥

नामकरणम् । न । संस्कारविशेषे ॥

नामन् । न । आकाशादिदेहान्ते संज्ञाविशेषे । सत्त्वप्रधाने नामधेये । वाचकशब्दे । अभ्यायाम् । आह्वायाम् । पर्य्याये ॥ नम्यते ऽभिधीयते ऽर्थोऽनेन । म्ना० । नामन्सीमन्निति निपातितः ॥ यद्वा । म्नायते । अभ्यस्यते । म्ना० । नामन्निच्यादिना निपातनान्मलोपः ॥ न नामग्रहणं कुर्य्यात्कृपणस्य गुरोस्तथा । भार्य्यायाश्चाभिशस्तस्य जनकस्य विशेषतः ॥ आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥ नमनस्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्त्या स्यादिविभक्त्यन्ते शब्दे ॥ यथा । उणादयः कृदन्तश्च तद्धितान्तं समासजम् । शब्दानुकरणञ्चेति नाम पञ्चविधं स्मृतम् ॥ सर्व्वाण्येतानि नामानि परब्रह्माभिधानि च । सर्व्वान् कामानवाप्नोति समाराध्य जगद्गुरुम् ॥ सम्यक्त्वेन गोविन्दमित्येतद्वाक्यम्नान्यथा । तन्मयो वाञ्छितान् कामान् यद्याप्नोति मानवः ॥ इति विष्णुधर्म्मवचनम् ॥ चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत् । नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥ इति पुराणम् ॥ भगवन् सर्व्वधर्म्मज्ञ सर्व्वशास्त्रविशारद । कस्मात् धर्म्मबहुत्वेन राज्ञां का गति-



र्भवेत् । यद्यस्ति तदुपायो हि दयया तं वदस्व मे । इति जन्मेजयप्रश्ने व्यास उवाच ॥ एक एव महाराज तत्रोपायोऽस्ति नापरः । सर्व्वदोषनिरासार्थं ध्यायेद्देवीपदाम्बुजम् ॥ न सन्ति पातकान्युच्चैस्तावन्ति यावती शक्तिरस्ति हि । नाम्नि देव्याः पापदाहे तस्मात् भीतिः कुतोऽनघ ॥ अवशेनापि यन्नाम लीलयोच्चारितं यदि । किं किं ददाति तज्जन्तु समर्थानखिलराघवः ॥ प्रायश्चित्तन्तु पापानां श्रीदेवीनामसंस्मृतिः । तस्मात्कलिभयाक्रान्तः पुण्यक्षेत्रेषु सत्तमः ॥ निरन्तरं परम्बायानामसंस्मरणं चरेत् । छित्त्वापि स्वाम्भूतानि हत्वा सर्व्वमिदं जगत् ॥ देवीं नमति भक्त्या यो न स पापैर्विलिप्यते । रहस्यं सर्व्वशास्त्राणां मया राजन्नुदीरितम् ॥ विमृश्यैतदशेषेण भज देवीपदाम्बुजम् । अजपां नाम गायत्रीं जपन्ति निखिला जनाः ॥ महिमानं न जानन्ति मायाया वैभवं महत् । गायत्रीं ब्राह्मणाः सर्व्वे जपन्ति हृदयान्तरे ॥ महिमानं न जानन्ति मायाया वैभवं महत् ॥ एतत् सर्व्वं समाख्यातं यत् पृष्टन्तु नृपानघ । युगधर्म्मव्यवस्थायां किं भूयः श्रोतुमिच्छसि ॥ इति श्रीदेवीभागवते महापुराणे ६ स्क

विशतितस्थनरस्य तूर्णं सङ्कुचमाव
इयराहुग्रहेष चन्द्रः ॥ नारङ्गन्तु प
रं वर्ण्यं सुगन्ध मतिचारुकम् । वात
श्लेष्मघ्नं किञ्चित् पित्तघ्नं विमर्दकं स्मृ
तमिति ॥ न । गर्ज्जरे ॥

नारङ्गचीरिणी । स्त्री । चीरिकाप्रभे
दे ॥ स्निग्धानारङ्गमज्जार्थे पयेत् स
र्पिषि नाधिते,। [illegible] खण्डं विमि.वि
ष्य पक्वं मस्त्वीभता२येत् ॥ शीतमू
सेविनिःक्षिप्य साभयाद्रैश्रितं पवः ।
नारङ्गचीरिणीचैषा सुगन्धिसुरभी
कृता ॥ विष्टम्भिनी गुरुर्हानं पित्तघ्न
गुरुपाचिका ॥

नारङ्गवर्णकम् । न । गाजरे । गर्ञ्जने ॥

नारदः । पुं । देवर्षिप्रवरे । देवर्षीणां
मध्येभगवतोविभूतौ ॥ नरस्यधर्म्यम्
। नराद्वेतियत्क्व्विविष्यम् । नारं
ददाति । कातोऽनुपेतिकः ॥ नारं पा
नीयमित्युक्तं तत् पितृभ्यः सदाभवा
न् । ददाति तेन ते नाम नारदेतिभ
विष्यती त्यागमः ॥ नारं नरसमूहंच
ति कलहेनेतिवा ॥ नुरिदं नारम
ज्ञानम् । तत् द्यति ज्ञानोपदेशेने
तिवा । दो अवखण्डने । कः ॥ नरा
णां परमात्मसम्बन्धिनां परमात्मवि
षयकं ज्ञानं ददाति उपदिशतीति
वा ॥ न । पञ्चविंशति सहस्रश्लोका

त्मके महापुराणविशेषे ॥

नारदीयम् । न । उपपुराणविशेषे ॥
त्रि । नारदसम्बन्धिनि ॥

नारसिंहम् । न । उपपुराणविशेषे ॥
त्रि । नृसिंहसम्बन्धिनि ॥

नारसिंहवपुः । पुं । विष्णौ ॥ नरस्य सिं
हस्याचावयवा यस्मिन् वपुषि दृश्यन्ते
तद्वपुर्यस्य सः । नरश्च सिंहश्च नरसिंहौ
तयोरवयवाः अवयवेच प्राग्वोच
दित्युपेभ्यइत्यण् । नारसिंहा नरसिं
हयोरवयवा यस्मिन् सन्तीत्यणन्ता
न्नारसिंहशब्दान्मत्वर्थीयोऽर्श आद्य
च् । तथाच नारसिंहः नरसिंहाव
यववत् वपुर्यस्य सतथा ॥

नारा । स्त्री । जले । नीरे ॥ इतिशब्द० ॥

नाराचः । पुं । सर्वलौहमयेशाखे । प्र
क्षेडने ॥ नरान् आचामति । आ
चमु० । अन्ये०डः । ततः प्रज्ञाद्यण् ॥
यद्वा । नराणां समूहोनारम् । नारं
आचामति । डः ॥ अम्बुदक्लिन्ने ॥
दुर्द्दिने ॥ * ॥ धृतिच्छन्दः प्रभेदे । इह
ननरचतुष्कसृष्टन्तु नाराचम् उच्य
ते । यथा । दिनकरतनयातटीकान
ने चारुसञ्चारिणी स्वयगनिकटस्थ
दृष्टे येयंथा कृष्ण राधात्वयि । ननु
विकिरतिनेत्रनाराचमेषाशि इच्छे
दनंतदिह मदनविभ्रमेऽद्भुतं विना

पेषयित्वाविनिः क्षिपेत् । शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥ आजंवाप्यदिवागव्यञ्चीरंदत्त्वा चतुर्गुणम् । * । पाने वस्तौतथाभ्यङ्गेभोज्ये चैवप्रशस्यते ॥ अश्वोवावातसम्भग्नो गजोवाप्यदिवानरः । पङ्गुश्च पीठसर्पीचतैलेनानेनसिध्यति ॥ अधोभागेचयेवाताः शिरोमध्यगताश्चये । दन्तशूलेहनुस्तम्भेमन्यास्तम्भेगलग्रहे ॥ यश्चशुष्यति चैकाङ्गंगतिर्यस्यचविह्वला । क्षीणेन्द्रियानष्टशुक्राज्ज्वरक्षीणाश्चयेनराः ॥ बधिराल्लजिह्वाश्च मन्दमेधसस्तथा । अल्पप्रजाचया नारीयाच गर्भंनविन्दति ॥ वातार्त्ताश्चवृषणौयेषामन्त्रवृद्धिश्चदारुणा । एतत् तैलवरंतेषांनाम्नानारायणंस्मृतम् ॥ इतिस्वल्पनारायणतैलम् ॥ * ॥ शतावरीचांशुमतीपृश्निपर्णीशटीबला । एरण्डस्यचमूलानि बृहत्योः पूतिकस्यच ॥ गवेधुकस्य मूलानितथासहचरस्यच । एषांदशपलान् भागान् जलद्रोणे विपाचयेत् ॥ पादशेषं रसे पूते गर्भं चैनं समावपेत् । पुनर्नवावचादारुशताह्वाचन्दनागुरु ॥ शैलेयंतगरं कुष्ठमेलामांसी स्थिराबला । अश्वाह्वासैन्धवंरास्नापलाशादीनि चपेषयेत् ॥ गव्याजपयसः प्रस्थौद्वौ



द्वावत्र प्रदापयेत् । शतावरीरसप्रस्थं तैलप्रस्थंविपाचयेत् ॥ * ॥ अस्य तैलस्य सिद्धस्य शृणुवीर्यमतःपरम् । अश्वानांवातभग्नानां कुञ्जराणांतथान्नृणाम् ॥ तैलमेतत् प्रयोक्तव्यं सर्ववातनिवारणम् । आयुष्मांश्चनरः पीत्वानिश्चयेन दृढोभवेत् ॥ गर्भमश्वतरीविन्द्यात् किम्पुनर्मानुषी तथा । हृच्छूलंपार्श्वशूलञ्च तथैवार्द्धावभेदकम् ॥ अपचींगण्डमालाञ्च वातरक्तं हनुग्रहम् । कामलां पाण्डुरोगञ्चअश्मरीञ्चाविनाशयेत् ॥ तैलमेतद्भगवता विष्णुनापरिकीर्त्तितम् । नारायणमितिख्यातंवातान्तकरणं शुभमितिवृद्धनारायणतैलम् ॥ * ॥ बिल्वाश्वगन्धाबृहतीश्वदंष्ट्राश्योनाककवाट्यालकपारिभद्रम् । क्षुद्राकठिल्लातिबलाग्निमन्थं मूलानिचैषां सरसायुतानाम् ॥ मूलंविदध्याद्दशपाटलीनां प्रत्येकमेषां प्रपदन्तितज्ज्ञाः ॥ सपादमस्य विधिनोद्धृतात्स्वद्रोणै रपामष्टभिरेवपक्त्वा ॥ पादावशेषेणरसेनतेन तैलाढकाभ्यां समसेव दुग्धम् । छागस्यमांसद्रवमेव तुल्यमेकत्रसम्यग्विपचेत् सुबुद्धिः ॥ दद्याद्रसञ्चैवशतावरीणां तैलेन तुल्यं पुनरेवतत्र । रास्नाश्वगन्धाद्रुमदारुका

मवच्छन्दतम् ॥

नाराचिका । स्त्री । नाराच्याम् ॥

नाराची । स्त्री । एषणिकायाम् । स्वर्णकारादीनां तौलदण्डविशेषे । काँटा इति नारचा इति च भाषा ॥ गौरादित्वात् ङीष् ॥ स्वल्पो नाराचो वास्य भेदो नाराचीति कश्चित् ॥

नारायणः । पुं । अच्युते । भगवति । वासुदेवे ॥ निरुक्तिर्यथा । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ इति मनुः । यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥ इति मन्त्रार्थः । नारायणाय नम इत्ययमेव सत्यं संसारघोरविषसंहरणाय नित्यम् । शृण्वन्तु भव्यमतयो यतयोऽस्तरागा उच्चैस्तरामुपदिशाम्यहमूर्द्ध्वबाहुः ॥ इति नृसिंहपुराणम् ॥ आम्विकनिकर्षिनस्तु नाराख्यातानि तत्त्वानि नाराणीति विदुर्बुधाः । तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥ नराणां समूहो नारम् । तत्समूह इत्यर्थः । तदयनमस्य । पूर्वपदादिति णत्वम् ॥ यद्वा । नराज्जाताः नारा आपः । ता अयनं यस्य ॥ क्वचिन्मन्वन्तरे नरस्य धर्मस्यापत्यत्वमुपगत-



इति । नरस्यापत्यम् । नडादिभ्यः फक् इति नारायणः ॥ श्रीकृष्णे ॥ नारायणस्त्वं न हि सर्वदेहिनाम् आत्मास्यधीशोऽखिललोकसाक्षी । नारायणोऽङ्गं नरभूजलायनात् तच्चापि सत्यं न तवैव माया ॥ श्रीकृष्णस्य सेनाविशेषे ॥ धर्मपुत्रर्षिविशेषे ॥ सन्न्यासिनि । परिव्राजके ॥ दण्डग्रहणमात्रेण नरो नारायणो भवेदिति स्मृतेः ॥

नारायणक्षेत्रम् । न । गङ्गाप्रवाहावधिहस्तचतुष्टयमिते नारायणस्वामिकेस्थाने ॥ यथा । प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाचनेति ॥

नारायणतैलम् । न । औषधपक्वतैलविशेषे ॥ तत् द्विविधम् । स्वल्पं बृहच्चेति भेदात् ॥ यथा । बिल्वाग्निमन्थश्योनाकपाटलापारिभद्रकाः । प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ॥ पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ चन्दनं तगरं कुष्ठं एलापर्णीचतुष्टयम् । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ एषां द्विपलिकान् भागान्

पेषयित्वाविनिः क्षिपेत् । शतावरी
रसञ्चैव तैलतुल्यं प्रदापयेत् ॥ आ
जंवायदिवागव्यंक्षीरंदत्त्वा चतुर्गुण
म् । * । पाने वस्तौतथाभ्यङ्गेभोज्ये
चैवप्रशस्यते ॥ अश्वोवावातसम्भग्नो
गजोवायदिवानरः । पङ्गुः पीठस
र्पीचतैलेनानेनसिध्यति ॥ अधोभा
गेचयेवाताः शिरोमध्यगताश्चये ।
दन्तशूलेहनुस्तम्भेमन्यास्तम्भेगलग्र-
हे ॥ यश्चशुष्यति चैकाङ्गंगतिर्यस्यच
विह्वला । क्षीणेन्द्रियानष्टशुक्राज्वर
क्षीणाश्चयेनराः ॥ बधिरालल्लजिह्वा
श्च मन्दमेधसएवच । अल्पप्रजाचया
नारीयाच गर्भंनविन्दति ॥ वातार्त्तौ
वृषणौयेषामन्त्रवृद्धिश्चदारुणा । एत
त् तैलवरंतेषांनाम्नानारायणंस्मृत
मितिस्वल्पनारायणतैलम् ॥ * ॥ श
तावरीचांशुमतीपृश्निपर्णीशटीबला
। एरण्डस्यचमूलानि बृहत्योः पूति
कस्यच ॥ गवेधुकस्य मूलानितथास
हचरस्यच । एषांदशपलान् भागा
न् जलद्रोणे विपाचयेत् ॥ पादशेषं
रसे पूते गर्भं चैनं समावपेत् । पुनर्न
वावचादारुशताह्वाचन्दनागुरु ॥ शै
लेयंतगरं कुष्ठमेलामांसी स्थिराब-
ला । अश्वाह्वासैन्धवंरास्नापलार्द्धानि
चपेषयेत् ॥ गव्याजपयसः प्रस्थौद्वौ

नाराय

द्वावप्प्रदापयेत् । शतावरीरसप्र-
स्थं तैलप्रस्थंविपाचयेत् ॥ * ॥ अस्य
तैलस्य सिद्धस्य शृणुवीर्यमतः परम्
। अश्वानांवातभग्नानां कुञ्जराणांत
थान्नृणाम् ॥ तैलमेतत् प्रयोक्तव्यं
सर्ववातनिवारणम् । आयुष्मांश्च न
रः पीत्वानिश्चयेन दृढोभवेत् ॥ ग
र्भमश्वतरीविन्द्यात् किम्पुनर्मानुषी
तथा । हृच्छूलंपार्श्वशूलञ्च तथैवा
र्द्धावभेदकम् ॥ अपचींगण्डमालाञ्च
वातरक्तं हनुग्रहम् । कामलांपाण्डु
रोगञ्चअश्मरीञ्चापिनाशयेत् ॥ तै
लमेतद्भगवता विष्णुनापरिकीर्त्ति
तम् । नारायणमितिख्यातंवातान्त
करणंशुभमितिवृहन्नारायणतैलम्
॥ * ॥ बिल्वाश्वगन्धावृहतीश्वदंष्ट्राश्यो
नाकवाट्यालकपारिभद्रम् । क्षुद्राक
ठिल्लासिबलातिबलान्यं मूलानिचैषां
सरल्वायुतानाम् ॥ मूलंद्विदशादश्यपा
टलीनां प्रत्येकमेषां प्रवदन्तितज्
ज्ञाः ॥ समादप्रस्थं विधिनोद्धृताम्बुद्रो
णे रसमष्टभिरेवपक्का ॥ पादावशे-
षेणरसेनतेन तैलाढकाभ्यां समसे
षदुग्धम् । छागस्य मांसद्रवमेव तुल्य
मेकत्रसम्यक्विपचेत् सुबुद्धिः ॥ दद्या
द्रसञ्चैवशतावरीणां तैलेन तुल्यं पु
नरेवतत्र । रास्नाश्वगन्धासुरदारुका

हं पर्णीचत्वगुरुकेशराणि ॥ सिन्धू
त्थमांसीरजनीद्वयञ्चशैलेयकं चन्द
नपुष्कराणि । एलासयष्टीतगराब्द
पत्रम् भृङ्गाह्वयञ्चास्तुवचापलाशम् ॥
स्थौणेयवृश्चीरकचोरकाख्यमेभिः-
समस्तैर्द्विपलप्रमाणैः । कर्पूरकाश्मी
रलगाण्डजानां स्यात् सुगन्धाय च
दक्षिकेचित् ॥ प्रस्वेददौर्गन्ध्यनिवा
रणार्थं चूर्णीकृतानांद्विपलप्रमाणम्
। कालोद्भवसम्यग्विधिवद्विपक्वंनाराय
णंनाम महच्चतैलम् ॥ * ॥ सर्वैःप्र
कारैर्विधिवत् प्रयोज्यमभ्यक्ष पुंसां प
वनार्द्दितानाम् । ये पङ्गवः पीठविसर्पि
णश्च एकाङ्गहीनार्द्दितवेपमानाः ।
बाधिर्य्ययुक्ताश्चयपीडिताश्च मन्याहनु
स्तम्भशिरोगदार्त्ताः । मुक्तानरास्ते
बलवीर्य्ययुक्ताः संसेव्यतैलं सततंभ
वन्ति ॥ वन्ध्याचनारीलभतेच पु
त्रंवीरोपमं सर्वगुणोपपन्नम् । शा
खाश्रितेकोष्ठगते चवाते वृद्धौविधेयं
पवनार्द्दितानाम् ॥ जिह्वानिलेदन्तग
तेचशूले श्चोन्मादकौब्जज्वरकर्षिता
णाम् । प्राप्नोति चर्मोर्मंपमदीप्रिय
स्त्वंजीवेच्चिरंचापिभवेद्युवेव ॥ देवा
सुरैर्युद्धवरे समीक्ष्यसाध्वश्विभक्ता
नसुरैःसुरान्च । नारायणेना पिरुक्तं
दयार्थं स्वनामतैलंविहितन्तुतेषाम्
॥ इति सुखबोधे महानारायणतैल
म् ॥

नारायणप्रियः । पुं । शिवे ॥

नारायणबलिः । पुं । मृतपतितादीनां
प्रायश्चित्तात्मके कर्मविशेषे ॥

नारायणस्थानम् । न । तीर्थविशेषे ॥

नारायणाश्रमः । पुं । बदर्याश्रमे ॥

नारायणास्त्रम् । न । विष्णोरस्त्रभेदे ॥

नारायणी । स्त्री । लक्ष्म्याम् । श्रियि
॥ उमायाम् । पार्वत्याम् । दुर्गाया
म् ॥ नारायणस्येयम् । नारायणस्य
विष्णोःशक्तिः ॥ यथा । नारश्चजीव
राशिरयनी स्थानभूता तत्स्वरूपे-
त्यर्थः ॥ नरायणा नराधारा समुद्भव
यनाऽपिवा । नारायणीसमाख्याता
नरनारीप्रवर्त्तिका ॥ यस्तत्त्वदृष्टास
र्वेषुभूतेष्वन्तर्हितायतः । देवी या
समिदंसर्वंजगत्स्थावरजङ्गममिति
देवीपुराणम् ॥ गङ्गायाम् ॥ मुद्गल
मुनेःपत्न्याम् ॥ शतावर्य्याम् । प्र
भीरौ ॥

नारिकेरः । पुं । नारिकेरे ॥ रत्नयो-
रभेदः ॥

नारिकेलः । पुं । नारिकेले ॥ नलति
नल्यते वा । बाहुलकात्-
इण् । केनवायुना इलति चलति ।
इलगतौ । अच् । नारिकेयर्याकेलस्य

। रलयोरभेदः ॥

नारिकेलक्षीरी । स्त्री । क्षीरिकाभेदे ॥ यथा । नारिकेलं तमूकृत्य च्छिन्नं पयसि गोः क्षिपेत् । सिताग व्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥ नारिकेलोद्भवा क्षीरी स्निग्धा शीता ऽतिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहेतिभावप्रकाशः ॥

नारिकेलिः । पुं । स्त्री । } शिरःफले । सदापुष्पे । सदाफले ॥
नारिकेली । स्त्री ।

नारी । स्त्री । स्त्रियाम् । योषिति । प्रतीपदर्शिन्याम् ॥ नृनरयोर्वृद्धिश्चेति शार्ङ्गरवादिगणे पाठात् ङीन् जाति लक्षणस्य ङीषो ऽपवादो ङीन् तत् सन्नियोगेन वृद्धिश्च ॥ यथा । नुर्नरस्य वा धर्म्यो । कृतो ऽपि मराश्चेतिशार्ङ्गरवाद्यात् । ङीन् ॥ अस्याश्चतस्रो जातयो भवन्ति । तथाहि । पद्मिनीचित्रिणीचैवशङ्खिनीहस्तिनीतथा । चतस्रो जातयो नार्या रतौचेष्टाविशेषतश्चेतिरतिमञ्जरी ॥ अध्यायछन्दोभेदे । मोनरी ॥ यथा । गोपानां नारीभिः । श्लिष्टोव्यात् कृष्णोवः ॥ त्रिवृघुनि [॥।] ॥

नारीकवचः । पुं । सूर्यवंशीयमूलकराजे । अश्मकपुत्रे ॥ यो ऽसैा निःक्षत्रे क्ष्मातले ऽस्मिन् क्रियमाणे विवस्त्राभिः स्त्रीभिः परिवार्य रक्षितः । ततस्तं नारीकवचमुदाहरन्तीतिविष्णुपुराणे ४ अंशे ४ अध्यायः ॥

नारीकेलः । पुं । नारिकेरे ॥ इतिशब्दचन्द्रिका ॥

नारीकेली । स्त्री । नारिकेले ॥ नारिकेलशब्दे ॥

नारीचम् । न । नालिता इतिगौडभाषाप्रसिद्धशाकविशेषे ॥ तस्य गुणाः । वहुक्षीरकान्विते सुस्वेदितं नारिचसंज्ञशाकम् । सवेन्धनं तक्रविलोड्य पाचितं समापितं प्राकृतभाग्यकेन ॥ रुच्यं वातहरं वल्यं कफक्वरोगनाशनम् । रुच्यं पित्तहरं किञ्चिच्छाकंनारीचसंज्ञकम् ॥

नारीतरङ्गः । पुं । } पिङ्गे । कामुके ॥
नारीतरङ्गकः । पुं ।

नारीदुग्धम् । न । स्त्रियाःक्षीरे ॥ नार्या लघु पयः शीतं दीपनं वातपित्तजित् । चक्षुःशूलाभिघातिनं नस्याश्च्योतनयोर्वरम् ॥

नारीदूषणम् । न । स्त्रीणांदोषोत्पादके ॥ यथा । पानंदुर्जनसंसर्गः पत्या चविरहो ऽटनम् । स्वप्नोन्यगेहवासश्चनारीणांदूषणानिषट् ॥

नारीष्टा । स्त्री । मल्लिकायाम् ॥

केरश्च ॥

नालिकेरकः। पुं। नालिकेरे॥

नालिकेरक्षीरिका। स्त्री। नारिकेल क्षीरम्॥

नालिता। स्त्री। पट्टशाके। नारीचे॥

नाली। स्त्री। शाककदम्बे। इत्युक्त टू तिभाषा॥स्वतःप्रसिद्धेशाकविशेषे॥ नालेन रहिता नाली सुस्निग्धा मु ष्टिपीडिता। एते सन्ने परिष्किता। स्निग्धेर्मिशीपचसंयुता॥ नाली सरा-लघुः शीता पित्तनुत् कफवातदा। प्रसन्नेशकरी चैवा स्निग्धा शोथ-प्रिया मता॥ इस्तिकर्णवेधन्याम्॥ घट्याम्॥ पद्मे॥ पद्मदण्डे॥ प्रणा ड्याम्॥ वाद्यविशेषे॥ नलति बन्न या वा। याच। इत्यपगेतिघञ्॥ नालयति वा। पचाद्यच्। गौरादि त्वात् ङीष्॥

नालीकः। पुं। शरे॥ शरे॥ शल्ये॥ मुखनालाय संकुचितंशरे॥ न। अब्ज षण्डे॥

नालीकिनी। स्त्री। पद्मसमूहे। पद्मि न्याम्॥ नालीकानि सन्त्यास्याम्। पुष्करादित्वादिनिः॥

नालीघटी। स्त्री। दण्डबोधिकायन्त्र भेदे॥

नालीव्रणः। पुं। नाडीव्रणे॥

नावनम्। न। नस्ये। नासाग्राह्यौषधे॥

नावयनिकः। पुं। कालविशेषे॥ नाव यवोऽस्मिन् वर्त्तते॥ तदस्मिन्न स्तीत्यधिकृत्य उपसङ्ख्यानाट्ठञ्॥

नाविकः। पुं। कर्णधारे। नौप्रवृत्तदण्ड धारके॥ नावा तरति। नौद्यचष्-ट्टितिठन्॥ नौरस्यास्तीति। ब्रीह्या दित्वाट्ठन्॥

नावी। त्रि। नौमति॥ नौरस्यास्ति। ब्रीह्यादित्वादिनिः॥

नाव्यम्। त्रि। नौतार्य्यदेशे॥ न। नौ तरणयोग्यजले॥ नावा तार्य्यम्। नौ वयोधर्म्मेत्यादिनायत्। वान्तोयी-त्यवादेशः॥

नाशः। पुं। पलायने॥ निधने॥ अनु पलब्धौ। अदर्शने॥ परिध्वंसे॥ नशनम्। नश०। घञ्॥ कुतनाश कारणंयथा। अन्वतात् पारदार्य्याच्च तथाऽभक्ष्यभक्षणात्। अश्रौत धर्म्माचरणात् क्षिप्रं नश्यति वैकुल म्॥ अश्रोत्रियेवेदत्याग ह दपते-पुतपैथच। विप्रकापारणीनेषु क्षि प्रनश्यति वैकुलम्॥ इति पुराण म्॥ यावत्त्वपेदधर्म्मः स्यु र्यावत् स्या च्छङ्कराचनम्। यावत्स्याच्छुचिसू त्रञ्च तावन्नाशोभवेदपि॥

नाशनः। त्रि। नाशकर्त्तरि॥ नाशय

यूथैस्तु घोलकारै विंशद्भिर्वायुर्सेवकैरितिनारसिंह पुराणे ४५ अध्यायः॥

नासिक्यम्। न। नासिकायाम्॥ त्रि। नासायांभवे॥ शरीरावयवात्वत्॥

नासिक्यौ। पुं। अश्विनीकुमारयोः॥

नासिक्यकम्। न। नासिकायाम्॥

नासीरम्। न। नायकाग्यके। नायकस्याग्रेसारिकायां सेनायाम्॥ सेनामुखे॥ पुं। अग्रेसरे॥

नास्ति। अ। अस्तित्वाभाववति। अविद्यमानतायाम्। नहिं इति भाषा॥ यथा। अतिथिर्बालकश्चैव राजाभार्यास्तथैव च। अस्तिनास्तिनजानन्ति देहिदेहि पुनः पुनः॥ इतिचाणक्यम्॥

नास्तिकः। पुं। ईश्वरनास्तित्ववादिनि पाषण्डे। वेदाप्रामाण्यवादिनि। नास्तिपरलोक इतिमतिविशिष्टे। लौकायतिके। बार्हस्पत्ये॥ सचषड्विधः। माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः चार्वाकः दिगम्बरश्चेति भेदात्॥ नास्ति परलोकः इतिमतिरस्य। अस्तिनास्तिदिष्टं मतिरिति नास्तीतिनिपातात् षष्ठ्यर्थास्तीतिनिपातात्स्थातसमुदायाद्वा ठक्॥ यद्वा। नास्ति यज्ञफलम् नास्तिच परलोकः इत्येवंकायति। कैशब्दे। डः॥

नास्तिकता। स्त्री। मिथ्यादृष्ट्याम्। परलोकास्त्वित्वबुद्धौ। कर्मफलापवादकज्ञाने॥ नास्तिकस्य भावः। तल्॥

नास्तिकवृत्तिः। त्रि। नास्तिपरलोक इति प्रवर्त्तके॥

नास्तिक्यम्। न। शास्त्रीय फलवत्कर्मसु फलाभावबुद्धौ॥ नास्तिकस्य कर्मभावोवा। पुरोहितादित्वात् यक्॥

नास्तिदः। पुं। आम्रवृक्षे॥ इतिशब्दचन्द्रिका॥

नास्यम्। त्रि। बलीवर्द्दादिनासासम्बन्धिन्यां रज्जौ। नाथइति भाषा॥ नासायां भवम्। शरीरावयवात्यत्॥

नाहः। पुं। बन्धने॥ कूटे॥

नाहलः। पुं। म्लेच्छजात्यन्तरे॥ इति हेमचन्द्रः॥

नाहुषिः। पुं। ययातिभूपतौ॥ नहुषस्य अपत्यम्। अतइञ्॥

नि। अ। निषेधे॥ भृशार्थे॥ नित्यार्थे॥ संशये॥ क्षेपे॥ कौशले॥ उपरमे॥ सामीप्ये॥ आश्रये॥ दाने॥ मोक्षे॥ अन्तर्भावे॥ बन्धने॥ राशौ॥ अधोभावे॥ विन्यासे॥ निश्चये॥ निषेधेपीति दुर्गादासः॥

निःचषः। त्रि। चषिय शून्यदेशादे॥

निःशङ्कः। त्रि। निर्भये॥

निःशब्दः । त्रि । शब्दरहिते । चुप् इतिभाषा ॥

निःशलाकः । त्रि । निर्जने । रहसि ॥ निर्गता शलाका यस्मात् ॥ शलाकाया निर्गतो वा ॥

निःशल्या । स्त्री । दन्तीवृक्षे ॥

निःशूकः । पुं । शुकशालौ ॥

निःशेषः । त्रि । निखिले । समस्ते ॥ निःक्रान्तं शेषात् । निरादय इति समासः ॥

निःशोकः । त्रि । शोकवर्जिते ॥

निःशोध्यः । त्रि । निर्मले । मृष्टे । शोधिते ॥ अनवस्करे ॥ निष्क्रान्तं शोध्यं यस्मात् ॥ शोध्यान्निष्क्रान्तमिति वा ॥

निःश्रयणी । स्त्री ।
निःश्रयिणी । स्त्री । } अधिरोहिण्याम् ॥ इति शब्दरत्नावली ॥

निःश्रेणिः । स्त्री । वंशकाष्ठादिनिर्मितसोपाने । अधिरोहिण्याम् । मइनी इतिसीढी इति च भाषा ॥ निश्चिता श्रेणिः पङ्क्तिरत्र ॥ खर्जूरीपादपे ॥

निःश्रेणिका । स्त्री । निःश्रेणी इति कोकणप्रसिद्धे तृणवि० । निरसाख्याम् । वनवल्लर्याम् ॥ निःश्रेण्याम् । अधिरोहिण्याम् ॥ यथा । मानुष्यं दुर्लभं प्राप्य सेविता न महेश्वरी । निःश्रेणिकाग्रात् पतित अधस्त्वेश विद्वे ॥ अपि च । आसाद्य जन्म मनुजेषु चिरादुरापं तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् । नाभ्यर्चयन्ति जगतां जननीं ये त्वां निःश्रेणिकाग्रमधिरुह्य पुनः पतन्तीति देवीभागवतम् ॥

निःश्रेणी । स्त्री । अधिरोहिण्याम् ॥

निःश्रेयसम् । न । मङ्गले ॥ मोक्षे ॥ विद्यायाम् ॥ अनुभावे ॥ भक्तौ ॥ पुं । शङ्करे । शिवे ॥ निश्चितं नितरां वा श्रेयः निःश्रेयसम् । अचतुरविचतुरेत्यादिना निपातितम् ॥

निःश्रेयसकरः । पु । ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनि कर्मयोगे । सन्न्यासे ॥ निःश्रेयसं करोति । कृञ्० । कृञोहेतुताच्छील्यानुलोम्येष्विति टः ॥

निःश्रेयसकरी । स्त्री । विद्यायाम् ॥ टित्वान्ङीप् ॥

निःश्वासः । पुं । मुखादिभिर्निर्गमनशालिनि वायौ ॥ निर्गतः श्वासः ॥ निःश्वसनं वा । श्वस० । घञ् ॥

निःषन्धिः । त्रि । दृढे ॥ सुषा० षत्वम् ॥

निःषमम् । अ । गर्हे । निन्द्यमाने ॥ निर्गतसमसम । तिष्ठद्गुप्रभृतीनि चेत्यव्ययीभावत्वम् । सुषिनिर्दुर्भ्य इति षत्वम् ॥

निःसङ्गः । पु । देहादिसङ्गरहिते पर

मात्मनि ॥ निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनोऽनात्मनायोगो वास्तवो नोपपद्यते ॥ स्वतोऽशुद्धं स्वतःशुद्धं स्वतोमुक्तं निरात्मिका । अविचारितसंसिद्धि रविद्या लिङ्गते कथम् ॥ चि । सविषयत्यकामव्यासक्ते । निरपेक्षे ॥ प्रत्यानभिनिवेशवति ॥ मोक्षनरक्षिते ॥ यथा । मत्स्यस्य सङ्गा दृभवस्य योमे सुतादिरागो मुषितोऽस्मि तेन । निःसङ्गता मुक्तिपदं यतीनांसङ्गाद्दशेषाः प्रभवन्ति दोषाः ॥ निःसङ्गएव मुक्ताःस्युः दोषाः सर्वेपि सङ्गजाः । सङ्गात् पतत्यहो ज्ञानी चावश्यंकिमुतात्पविद्दितिकृष्णार्णवः ॥

निःसत्त्वः । त्रि । धैर्यशून्ये ॥

निःसन्धिः । त्रि । सन्धिरहिते । दृढे ॥

निःसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥

निःसरणम् । न । मरणे ॥ उपाये ॥ मोक्षे ॥ निर्गमे ॥ गेहादिमुखे । निर्गमन प्रवेशमार्गे ॥ निस्सरन्त्यनेन । सृगतौ । करणे ल्युट् ॥

निःसपत्नः । त्रि । असपत्नरे ॥ सद्द्दीर्ने पूर्वात् मपात्मजनात् तरप् ॥

निःसहत्वम् । न । अक्षमत्वे ॥ सहने । षह० । पचाद्यच् । उपसर्गेणसमासे त्वप्रत्ययः ॥

निःसारः । पुं । श्योनाकप्रभेदे ॥ शाखोटवृक्षे ॥ त्रि । साररहिते ॥ यथा । मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् । यः करोति ॥ सम्मूढो जलबुद्बुदसन्निभे ॥ जगत् सर्वन्तु निःसार मनित्यं दुःखभाजनम् । उत्पद्यते यथादेतत् यथादेतद्विपद्यते ॥

निःसारकः । पुं । अतीसारभेदे ॥ दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडित स्तु । सुतप्तकुप्यक्वथितेन चापि क्षीरेण शीतेन मधुप्लुतेन ॥ भुञ्जीतपथ्यमितिशेषः ॥

निःसारणम् । न । गृहादीनां निर्गमादिपथे । निःसरणे ॥ निष्कासने ॥

निःसारा । स्त्री । कदलीवृक्षे ॥

निःसारितः । त्रि । निष्कासिते । बहिष्कृते ॥

निःसीमः । त्रि । अपर्यन्ते ॥

निःसृतः । त्रि । निर्गते ॥

निःस्नेहः । त्रि । स्नेहवर्जिते ॥ निर्गतःस्नेहोयस्मात् ॥

निःस्नेहा । स्त्री । अतस्याम् ॥ निश्चये नस्नेहोऽस्याम् ॥

निःस्रावः । पुं । आचामे । भक्तरसे । मांड इति प्रसिद्धे भक्तरसे ॥

निःस्वः । त्रि । दरिद्रे ॥ अस्यपर्य्यायो यथा । सूर्पाकारौ विरूक्षौ च यकौ पा

दौ शिरालकौ । संशुष्कौ पाण्डुरनखौ निःस्वस्य विरलाङ्गुली ॥ इतिगारुडे सामुद्रकम् ॥ निर्गतं स्वमस्य । स्वान्निष्क्रान्तो वा ॥

निकटः । त्रि । समीपे । आसन्ने ॥ निवक्षम् । निकटार्थोत्र. सम्प्रोदश्चेति यात् कटच् ॥ निकटति वा । कटे॰ । पचाद्यच् ॥

निकरः । पुं । निवहे । समूहे ॥ सारे ॥ न्यायदातव्यवित्ते ॥ निधौ ॥ निकीर्यते । कॄविक्षेपे ॥ ऋदोरप् ॥

निकर्षणम् । न । सन्निवेशे । पुरादौ गृहादिरचनापरिच्छिन्नदेशे ॥ पुरादेर्बहिर्विहरणभूमौ ॥ कर्षणान्निर्गतम् । निरादय इति समासः ॥

निकषः । पुं । शाणपाषाणे । कषे ॥ निकषति । कष॰ । अच् ॥ निकषस्य नेनश । गोचरसञ्चरेष्यः । धकारात् घीवा ॥

निकषणम् । न । उल्लेखने ॥

निकषा । अ । मध्ये ॥ समीपे । निकटे ॥

निकषा । स्त्री । विश्रवसोभार्यायाम् । राक्षसमातरि ॥ निकषत्यन्यम् । कष हिंसायाम् । का समिष्रिनिकषि-भ्याम् ॥

निकषात्मजः । पु । राक्षसे ॥ निकषाया आत्मजः ॥

निकषोपलः । पुं । शाणे । निकषे ॥

निकामम् । न । यथेप्सिते । इष्टानतिक्रमे ॥ निकमनम् । कमु॰ । घञ् ॥

निकायः । पुं । लक्ष्ये ॥ सधर्मिप्राणिसंघातौ ॥ संघतानां समुच्चये ॥ निलये । सद्मनि ॥ परमात्मनि ॥ निचीयते । चिञ्॰ । सङ्घेचानौत्तराधर्ये इतिघञ् आदेश्चकः ॥ चि । कायरस्थिते ॥

निकाय्यः । पुं । निलये । गृहे ॥ निचीयतेऽस्मिन् धान्यादिकमितिनिवहे चिनोतेरधिकरणे ण्यत् आयादेशो धात्वादेः कुत्वञ्च पाय्यसान्नाय्यनिकाय्यधाय्या इत्यादिना निपात्यते ॥

निकारः । पुं । परिभवे ॥ उत्कारे । धान्यस्योत्क्षेपणे ॥ अपकारे । विप्रकारे ॥ निकृष्टीकरणम् । कृञो घञ् ॥ निकरणम् । कॄविक्षेपे । कॄधान्य इति घञ् ॥

निकारणम् । न । वधे । मारणे ॥ ॥ कृञ् । स्वार्थणिजन्ताद्भावे ल्युट् ॥

निकारी । त्रि । अपकारिणि ॥

निकाशः । पु । प्रकाशे ॥ निकाशनम् । निकाशते वा । काशृ॰ । घञ् अच्वा ॥ समीपे ॥

निकासः । पुं । नीकाशे ॥

निकुञ्चः । पुं । कुडवपादे । प्रसृत इति ख्याते ॥ निकुञ्चति । कुञ्च० । अच् ॥

निकुञ्चकः । पुं । निकुञ्चे ॥ स्वार्थे कः ॥ जलवेतसे । वानीरवृक्षे ॥

निकुञ्चितम् । न । सङ्गीतप्रसिद्धे अङ्गहारान्तर्गत शिरोविशेषे ॥

निकुञ्जः । पुं । न । कुञ्जे । लतादिपिहितस्थले ॥ कौजायते । कावत्रनि वा । जनी० । सप्तम्यांजनेर्डः । पृ० । निरत्रोपसर्गान्तरनिवृत्त्यर्थः ॥

निकुञ्जिकाम्ला । स्त्री । कुञ्जवल्ल्याम् ॥ इयङ्कुञ्जेःश्रीवल्लीसदृशी ॥

निकुम्भः । पुं । कुम्भकर्णसुतनये ॥ दन्तिकौषधौ ॥

निकुम्भाख्यबीजम् । न । जयपाले ॥

निकुम्भितम् । न । नृत्यविषयकाऽष्टोत्तरशतकरणान्तर्गतकरणविशेषे ॥

निकुम्भिला । स्त्री । लङ्कायाः पश्चिमभागवर्त्तिन्यां शक्तिविशेषे ॥

निकुम्भी । स्त्री । दन्तीवृक्षे ॥

निकुरम्बम् । न । कदम्बके । समूहे ॥ निकुरति । निकुर्वते वा । कुरच्छेदने । कुरशब्दे वा । बाहुलकादम्बच् ॥

निकृतः । त्रि । विप्रलब्धे ॥ नीचे ॥ विप्रकृते ॥ अस्तशौ ॥ वञ्चिते ॥ दुःखीकृते ॥ न्यक्कारि । क्तः ॥

निकृतिः । स्त्री । भर्त्सने ॥ क्षेपे ॥ शठे ॥ शाठ्ये ॥ अभिभवे ॥ दैन्ये ॥ निकृष्टाकृतिः क्रिया परप्रतारणरूपा । यद्वा । पराभीष्टस्यनिकर्त्तनम् । कृती० । इक्कृष्यादिभ्यस्तीक् ॥

निकृष्टः । त्रि । अधमे ॥ निकृष्यतेस्म । कृष० । क्तः ॥ जात्याचारादिभिर्निन्दिते ॥

निकेतः । पुं । निकेतने । आश्रये । वेश्मनि ॥ निकेतनम् । कितनिवासे । घञ् ॥

निकेतनम् । न । गृहे । गेहे ॥ निकेत्यतेऽस्मिन् । कित० । अधिकरणेल्युट् ॥

निकोचकः । पुं । अङ्कोठवृक्षे । टेरा इति भाषा ॥ निकुच्यते । कुचशब्दे तारे । कुलादित्वात्वुन् ॥

निक्वणः । पुं । वीणाया अन्यस्य च शिञ्जादेःशब्दे । प्रक्वाणे । क्वणे । क्वाणे ॥ क्वणशब्दे । नाविति अनुपसर्गे इति चानुवर्त्तमाने क्वणोवीणायाञ्चे-त्यप् ॥

निक्वाणः । पुं । निक्वणे । क्वाणे ॥ क्वण० । क्वणोवीणायाञ्चेति पक्षेघञ् ॥

निक्षणम् । न । चुम्बने ॥ णिक्षचुम्बने । ल्युट् ॥

निचितः । त्रि । परिचिते । न्यस्ते ॥ स्थापितधनादौ ॥ निचिप्यतेस्म । चिपप्रेरणे । क्तः ॥

निक्षेपः । पुं । उपनिधौ । न्यासे । स्वधनस्यान्यस्मिन्नर्पणरूपे, व्यवहारविशेषे । धरोहर इतिभाषा ॥ यथा । "स्वद्रव्यं यत्र विस्रम्भा न्निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत् प्रोक्तं व्यवहारपदंबुधैः ॥ असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीया दुपनिधिं निक्षेपं गणितं विदुः ॥ निक्षेपं वृद्धिशेषञ्च क्रयं विक्रय मेवच । याच्यमानो नचे द्द्यात् वर्द्धते पञ्चकंशतमिति नारदः ॥ निक्षिप्यते । चिप० । घञ् ॥ भिक्षिप हस्तिसंस्कर्तुमर्पिते भाण्डे ॥

निक्षेपितः । त्रि । प्रयोजनेनान्येन निवेशिते ॥ क्षिपेर्ण्यन्तात्कर्मणिक्तः ॥

निक्षेप्ता । त्रि । निक्षेपस्यकर्त्तरि ॥ निक्षिपति । क्षिप० । तृच् ॥

निखर्वः । पुं । न । दशखर्वसङ्ख्यायाम् । १००००००००००० ॥ निखर्वति । खर्वगतौ । पचाद्यच् ॥ त्रि । वामने । बौना इतिभाषा ॥

निखातः । त्रि । खनित्वारोपिते ॥

निखिलः । त्रि । अखिले । निःशेषे । समस्ते ॥ निरस्तं खिलं यस्मात् ॥

निगडः । पुं । न । बन्धने । शृङ्खलायाम् । बेडी इतिभाषा ॥ निगतो गडः सेचनमस्मात् कठिनत्वात् ॥ निगलति वा । गल अदने । अच् । डलयोरेकत्वम् ॥ हस्तिनो लोहमये पादबन्धोपकरणे । अन्दुके ॥

निगडितः । त्रि । बद्धे ॥ निगडःसञ्जातोऽस्य । तारकादित्वादितच् ॥

निगदः । पुं । होमधूमे ॥ इतिविकाण्डशेषः ॥

निगदः । पुं । भाषणे । कथने । निगद्दे ॥ निगदनम् । गद० । नौगदेच्च पू वा ॥ निगदस्तु जनैर्वैद्यस्याग मातु च्चैर्जपे ॥

निगदितः । त्रि । उक्ते ॥

निगमः । पुं । वाणिजे । वणिजि ॥ निगमे पुर्याम् भवः । तत्रभवइत्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥ पुर्याम् ॥ कटे ॥ वेदे ॥ वणिक्पथे ॥ निश्चये ॥ अध्वनि ॥ मतिश्रायाम् ॥ पर्थायकथनेन वेदार्थबोधकेग्रन्थविशेषे ॥ निगम्यते ऽनेनवा । गम्लृ० । गोचरसञ्चरेतिसाधुः ॥

निगमनम् । न । प्रतिकूलप्रमाणाभावकुञ्चकप्रतिज्ञोपसंहारवचने । तस्माततथेतिवचने ॥ यथा । असकृदनुचिन्तितानाम् व्याहततरनिजोप

देशानाम् । प्रामाण्यपरमसीम्नो नि
गमनमिदमेव निखिलनिगमाना
म् ॥ १०३ ॥ इदमेवात्मैकत्वमेव
॥ हेत्वपदेशात् प्रतिज्ञायाः पुनर्वच
नं निगमनम् । इति गौतमः ॥ ३८ ॥
हेतोर्व्याप्तिविशिष्टपक्षधर्मत्वस्यापदे
शात्कथनं प्रतिज्ञायाः प्रतिज्ञार्थस्य सा
ध्यविशिष्टपक्षस्य वचनं निगमनम् ।
तथा च व्याप्तिविशिष्टपक्षधर्महेतुक
थनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः
व्याप्तपक्षधर्म्महेतुसाध्यसाध्यविशि-
ष्टबोधकत्वाहसाध्यबोधकोवाक्या-
वयवो निगमनमिति । अस्य-
त्वन्वयिव्यतिरेकिभेदात्प्रभेद इत्या
शयः । व्यतिरेकिणिस्तु तस्मात्तथे
त्थेवाकार इत्यपरे ॥

निगमाचार्य्यवाक्यम् । क्ली । वेदगुरुवच
ने । उपनिषद्व्याख्यानुपदेशे ॥ नि
गमस्य आचार्य्यः तस्य वाक्यम् ॥ नि
गमाचार्य्ययोर्वा वाक्यम् ॥

निगमान्तः । पुं । उपनिषदि ॥

निगरः । पुं । भोजने ॥

निगरणः । पुं । गले ॥ होमधूमे इति
शब्दरत्नावली ॥ क्ली । भोजने । नि
गलना इतिभाषा ॥

निगादः । पुं । निगदे । कथने ॥ निग
दनम् । गद० । नौगदेत्यवमाने

षञ् ॥

निगारः । पुं । भक्षणे । गरणे ॥ निग
रणम् । गनिगरणे । उभयोर्घञितिः
षञ् ॥

निगालः । पुं । अश्वगलदेशे ॥ निगल
त्यनेन । गलअदने । हलश्चेतिघ
ञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ निगि
रत्यनेनवा । गॄ० । उभयोर्घञितिघ-
ञ् । अचिविभाषेतिलः ॥ यथा
वन्धसमीपस्थो निगालः कीर्त्तितो
वुधैः । तस्मिन्चेत्स्युःखिताभरोमजाः
शुभकृन्मतः । इत्यश्वशास्त्रम् ॥

निगालवान् । पुं । अश्वे ॥ अस्त्यर्थे म-
तुप् ॥

निगीर्णः । त्रि । गिलिते । गिलाइति
भाषा ॥ निगीर्यतेस्म । गॄ० । क्तः ॥

निगूढः । पुं । यममुद्रे ॥ त्रि । संवृते ।
गुप्ते ॥ यथा । आस्ते विधुः परमनि
गूढ एवमौलौ मक्ष्योरिति त्रिजग-
तीजनचित्तवृत्तिः । अन्तर्निगूढन
यनामलपुत्रदाहं जानाति कः स्वय
मसौ वत वीतरागः ॥ आच्छादिते ।
नितरांगुह्यते स्म । गुहू० । क्तः ।
यस्यविभाषेतीड्भावः ॥

निगूढतत्त्वः । त्रि । संवृतयाथार्थ्ये ॥
निगूढं तत्त्वंयस्यसः ॥

निगृहीतः । त्रि । तर्जिते ॥ पीडिते ॥

निगृहीतचेताः । त्रि । वशीकृतचित्ते ॥

निग्रहः । पुं । भर्त्सने ॥ मर्य्यादायाम् । सीमायाम् ॥ बन्धने ॥ अनुग्रहाभावे ॥ निराकरणे ॥ चिकित्सायाम् ॥ पराहङ्कृतिखण्डनरूपे निरोधे ॥ निषिद्ध प्रवृत्तितिरस्कारे ॥ मनसो निरोधे ॥ सचहठनिग्रहरूपः क्रमनिग्रहरूपश्चेति द्विविधः ॥ मारणे ॥ प्रवृत्तिनिवृत्त्योर्निरोधे ॥ निवृत्तिकतयावस्थितौ ॥ नियमेनग्रहणम् । ग्रह० । ग्रहवृद्धिश्चम् ॥ निगृह्यतिवा । कर्त्तरि पचाद्यच् ॥

निग्रहस्थानम् । न । गोतमोक्तषोडशपदार्थेष्वन्तिमे पदार्थे ॥ यथा । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ ५९ ॥ निग्रहस्य खण्डीकारस्य स्थानंज्ञापकं निग्रहस्थानम् । तच्च विप्रतिपत्तिरप्रतिपत्तिश्च । विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः अप्रतिपत्तिः प्रकृताज्ञानम् । यद्यप्येतदन्यतरत् परनिष्ठं नोद्भावयितुं शक्यम् प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः । उद्देश्यानुगुणसम्यक्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्यादीनामक्त्वंश लक्षणमित्यपिवदन्ति ॥ प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि । चचकस्त्वर्थे । तेनैतान्येव निग्रहस्थानानि न पुनरपस्मारादिना ऽननुभाषणाह्निकम् । सर्वाजटितिसंवरणोभतिरोहितावयवी न्यर्थोलभ्यत इतिभाष्यः । नव्यास्तु चकारोऽनुक्तसमुच्चये तेनदृष्टान्तेऽसाधनवैकल्यादीनां परिग्रहः ॥

निग्राहः । पुं । शापे ॥ निग्रहणम् । आक्रोशेवन्योर्ग्रहइति घञ् । निग्राहस्ते रुपस्वभूयात् अपदृत्यर्थः ॥ निग्रहे ॥

निघः । पुं । समविस्तारदैर्घ्ये । तुल्यारोहपरिणाहे वृक्षादौ ॥ नियतं निश्चितेषेक्षया हन्यते ज्ञायते । निघो निमितनिमितसाधुः ॥

निघण्टिका । स्त्री । गुलञ्चकन्दे ॥

निघण्टुः । पुं । नामसङ्ग्रहे ॥ इति हेमचन्द्रः ॥

निघर्षः । पुं । घर्षणे ॥

निघसः । पुं । भोजने ॥ न्यदनम् । अद० । नौणनेऽत्यप् । घसमेसश्चेति

घञादेशः ॥

निघातः । पुं । अनुदात्ते ॥

निघातिः । स्त्री । लोहघातिन्याम् ।- लौहमयदण्डे ॥ निश्चयेन हन्ति । ह न० । वसिवपियजिराजिव्रजिसदिह नीवाशिभ्य इञ् । कुत्वम् ॥

निघुष्टम् । न । घोषणे ॥ निघुष्यते स्म । घुषिरविशब्दे । क्तः ॥

निघृष्टः । त्रि । घर्षिते । घसा इति भाषा ॥ यथा । सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ॥

निघृष्वः । पुं । खुरे ॥ निघृष्यतेऽनेन । घृषु संघर्षे । सर्वनिघृष्वरिष्वेति साधुः ॥

निघ्नः । त्रि । आयत्ते । अधीने ॥ निहन्यते निगृह्यते । हन्तेर्घञर्थे कः ॥ गुणिते ॥

निचयः । पुं । समुच्चये । वस्तुसमूहे ॥ यथा । सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितमिति ॥ निचीयते । चिञ्० । कर्मण्येरच् ॥

निचयकः । त्रि । निचये कुशले ॥ आकर्षादिभ्यः कन् ॥

निचयी । त्रि । उपचयवति ॥

निचायः । पुं । राशीकृते धान्यादौ । ढेर इतिभाषा ॥ निचीयते राशीक्रियते । चीञ्० । सर्वचिप्राप्ते परिमाणाख्यायां सर्वेभ्य इति घञ् ॥ यथा । एकस्तण्डुलनिचायः । अत्रैकत्वेन समुदायिनां परिच्छित्तिर्गम्यते ॥

निचिः । पुं । गोःकर्णशिरोदेशे ॥ इति भरतः ॥

निचिकी । स्त्री । उत्तमायां धेनौ । नैचिक्याम् ॥

निचितः । त्रि । सङ्कीर्णे ॥ आचिते ॥ पूरिते । व्याप्ते ॥ निर्मिते ॥

निचुलः । पुं । हिज्जले ॥ निचोले ॥ निचोलति । चुल समुच्छ्राये । पुरादीनामित्वा । इगुपधेति कः ॥ वेतसवृक्षे ॥

निचुलकम् । न । निचोलके ॥ पुं । वृश्चिकामत्स्ये ॥

निचूलः । पुं । इज्जलवृक्षे ॥ निचोले ॥

निचोलः । पुं । प्रच्छदपटे । पिछौरा इतिभाषा ॥ येन तूलशय्यादिप्रच्छाद्यते तस्मिन्निति स्वामी ॥ दोलिकावरणपटस्योक्ते ॥ स्त्रोपिधानपटे बुरका इतिप्रसिद्धे इत्यपरे ॥ निचोल्यते । चुल० ० । घञ् ॥ यद्वा । चोल्यते । चुडकृतौ । चु० । घञ् । डलयोरेकता ॥

निचोलकः । पुं । भटादेश्चोलाकृतिसन्नाहे । कूर्पासे । वारबाणे ॥ न । कुम्भिकाख्यमत्स्ये ॥

निचोली । स्त्री । प्रच्छदांशुके ॥

निच्छविः । स्त्री । तीरभुक्तिदेशे । तिरहुत इतिभाषा ॥ इ०वि० ॥

निच्छिविः । पुं । वर्णसङ्करप्रभेदे । व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नोजातिविशेषे । उक्तं ॥ यथा । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैवखसोद्रविडएवचेतिमनुः ॥

निजः । त्रि । आत्मीये । स्वीये ॥ नित्ये ॥ निजायते । अनी० । डमसंज्ञायामिति डः ॥

निजविभवः । पुं । स्वविभूतौ ॥

निजात्मा । पुं । परात्मनि ॥

निडीनम् । न । खगगतिप्रभेदे । पक्षिणःशनैर्याने ॥ निडीनंनीचैःपतनमितिमहाभारतम् ॥ भक्ष्य मान्वयं वा पश्यतः पतने ॥

निधिका । स्त्री । सतीलायाम् । तिलपर्याम् । कलायभेदे । तेउड़ा इति गौडभाषा ॥

नितम्बः । पुं । स्त्रियःपश्चात्कटितटे ॥ स्कन्धे ॥ रोधसि ॥ कटेर्पश्चाभागे ॥ कटके ॥ कटिमात्रे ॥ नितम्बति नितम्बतेवा । तम्बगतौ । अच् घञ्वा ॥ यथा । निभृतं तम्यते कामुकैः । तमुकांक्षायाम् ॥ ताम्यते सुरतसम्मर्दात् । तमुग्लानौ । उत्पादयश्चेतिसाधुः ॥

नितम्बिनी । स्त्री । स्त्रीविशेषे ॥ अतिशयितोनितम्बोयस्याः । अतइनिठनावितीनिः । ङीप् ॥ स्त्रीमात्रेपि ॥

नितराम् । अ । सुतरामर्थे ॥ अतिशयेनेत्यर्थे ॥ किमेत्तिङव्ययेघादिना अमुप्रत्ययः ॥

नितलम् । न । पातालविशेषे ॥

नितान्तम् । अ । एकान्ते । अत्यन्ते । अतिशये ॥ त्रि । तद्वति ॥ नितान्त्यतिस्म । तमुकाङ्क्षायाम् ॥ अकर्मकत्वात् कर्त्तरिक्तः । अनुनासिकस्येतिदीर्घः ॥

नितान्तनिर्मलस्वान्तः । त्रि । अत्यन्तशुद्धान्तःकरणे ॥ नितान्तंनिर्मलं स्वान्तं यस्य सः ॥

नित्यम् । न । सतते । अनारते । अजस्रे ॥ नियमेन भवम् । त्यप्नेर्ध्रुवे ॥ नियतम्भवइतिवा ॥ ध्वंसावयवजन्यकीभूताभावप्रतियोगिनि । यथा । एकादश्यां शुभोपवासं नित्यम् ॥ ध्वंसप्रागभावाप्रतियोगिनि । यथा । गगनंनित्यम् ॥ अपरत्वजायमाने । यथा । नित्यंक्रीडन्तिकुमाराः ॥ अवश्यःक्रियमाणत्वेन विधिबोधिते । यथा ॥ स्नानतर्पणादिकंनित्यम् ॥

अनवच्छिन्नपरम्परायाम् । यथा । वर्णा नित्याः ॥ पुं । समुद्रे ॥ त्रि । शाश्वते । अवन्ध्ये वस्तुनि । कालत्रयव्यापिनि । ध्रुवे । अविनाशिनि । अबाध्यसत्ये । आत्मस्वरूपे । ध्वंसाप्रतियोगिनि । उत्पत्तिविनाशरहिते । सर्वदाविद्यमाने । सर्वव्यापके ॥ नित्यवेदे । विधित्वेना ऽनादिपरम्परागते । पूर्वापरकोटिरहिते । सदकारणवति ॥ सत्त्वे ॥ विनाशयोग्यतारूपदोषाभाववत्त्वं नित्यत्वम् ॥

नित्यकर्म्म । न । अकरणे प्रत्यवायसाधनेषु सन्ध्यावन्दनादिषु ॥ प्रत्यवायशब्देनात्र मिदुःखमुच्यते । येषामकरणे विचार्यमाणे तत्प्राप्यते प्राप्यते तानि नित्यानीत्यर्थः । अकरणेऽप्रत्यवायजनकानि नित्यानीति यावत् ॥ निर्मित्तसमुपात्तदुरितक्षयार्थानि नित्यानीति नित्यकर्मलक्षणम् । तत्त्वकरणेऽप्रत्यवायोत्पादकानि नित्यानीति ॥ सन्ध्यावन्दनादीन्यादिपदात् पञ्चमहायज्ञादिग्रहः ॥ प्रत्यवायजनकाभावप्रतियोगिकार्यं नित्यकर्मेति स्मृतिः ॥ तथा । नित्यं नैमित्तिकञ्चैव नित्यनैमित्तिकन्तथा । गृहस्थस्य त्रिधा कर्म तन्निबोधमय पुत्रक ॥ पञ्चयज्ञाश्रि तं नित्यं यदेतत् कथितं तव । नैमित्तिकं तथा चान्यत् पुत्रजन्मक्रियादिकम् ॥ नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैरिति मार्कण्डेयपुराणम् ॥

नित्यकर्म्मफलम् । न । मनःशुद्धौ ॥

नित्यचौरम् । न । वेदेतरचौरे । रागप्रासक्तेर्यच्छेदने ॥ यथा । चूडोद्दिते तिथौ शुभे शुभेऽह्नि ईश्वरेनरः । नित्यचौरं प्रकुर्वीत जन्ममासे न कुत्रचित् ॥

नित्यगतिः । पुं । वायौ ॥ नित्यं गतिरस्य ॥

नित्यतृप्तः । त्रि । परमानन्दस्वरूपलाभेन सर्वत्र निराकाङ्क्षे ॥ नित्येन निजानन्देन तृप्तः ॥

नित्यत्वम् । न । कालाद्यनवच्छिन्नत्वे । नश्वास्तीति सिद्धोऽागमयोरध्वंसप्रतियोगित्वे ॥

नित्यदा । अ । अव्ययम् । शाश्वते ॥

नित्यदानम् । न । प्रतिदिनं दीयमानदाने ॥ यथा । अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे । अनुद्दिश्य फलं तत् स्यात् ब्राह्मणाय तु नित्यकमिति गरुडपुराणम् ॥

नित्यनैमित्तिकफलम् । न । मनःशुद्धौ ॥ पितृनोक्षमासिद्धिनि स्यादौ नामवान्तरफलम् । तथा आसेक

माहात्म्ये परमहंसावधूते ॥

निदाघकरः । पुं॰ । सूर्ये । भानौ ॥ निदाघा उष्णाः करा अस्य ॥

निदाघकालः । पुं॰ । ग्रीष्मर्त्तौ ॥ ज्येष्ठाषाढमासयोः ॥ यथा । प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसञ्चयः । दिनान्तरम्यो ऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये ॥

निदानम् । न । कारणे । हेतौ ॥ आदिकारणे ॥ शुद्धौ ॥ तपसः फलयाचने ॥ वत्सदाम्नि ॥ अवसाने ॥ नितरां दीयते ऽसाधारणतया जन्यते ऽनेन । डुदाञ्॰ । करणेति ल्युट् ॥ रोगविनिर्णये । रोगहेतौ ॥ निदानं पूर्वरूपाणि रूपाण्युपशय स्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ निमित्तहेत्वायतनप्रत्ययोत्थान कारणैः निदानमाहुः पर्यायैः प्राग्रूपं येनलक्ष्यते ॥ इतिमाधवः ॥

निदिग्धः । त्रि । उपचिते । लेपादिना वर्द्धिते । पुष्टिमापिते ॥ निदिह्यते स्म । दिहउपचये । क्तः ॥

निदिग्धा । स्त्री । एलायाम् ॥

निदिग्धिका । स्त्री । कण्टकारिकायाम् । कण्टकारीतिलोकेगधी इतिच भाषा ॥ निदिह्यते स्म । दिह॰ । क्तः । टाप् ॥ स्वार्थेकन् ॥ एलायाम् ॥

निदिद्रासन् । त्रि । निद्रातुमिच्छति ॥ निद्रातेः सन्नन्ताच्छतृः सन्नादेशः ॥

निदिध्यासनम् । न । श्रुतस्य मतस्य तत्त्वैकध्याने ॥ निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥ आत्मन्यथापि चित्तस्य वृत्तिं यथात्मनि चेद्भवेत् । पुनःपुनस्तेन शुद्धं तच्चित्तमैकाग्र्यमश्नुते ॥ विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुनिसजातीयप्रत्ययप्रवाहो ॥ विजातीयप्रत्ययान्तरितेनसजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेनात्मचिन्तने ॥ निदिध्यासनं विचारविशेषात्मकम् । तच्चविचारविशेषोध्यानात्मातद्ध्यानरूपं निदिध्यासनम् ॥ ताभ्यांनिर्विचिकित्सेऽर्थेचेतसःस्थापितस्ययत् । एकतानत्वमेतद्धिनिदिध्यासनमुच्यते ॥ ताभ्यां श्रवणमननाभ्याम् ॥ अपरोक्षबोधे ॥ अपरोक्षबोधोहिनिदिध्यासनमुच्यते इतिवार्त्तिकोक्तेः ॥



निदेशः । पुं॰ । शासने । आज्ञायाम् ॥ कथने । परिभाषणे ॥ उपकण्ठे । उपान्ते ॥ भाजने ॥ निपूर्वाद्दिशेर्घञ् ॥

आधारे । आश्रये ॥ निधीयते निक्षिप्यते तत्कालभोगायोग्यतया कालान्तरोपभोग्यं वस्त्वस्मिन्निति निधानम् । नि + धा + ल्युट् ॥ कार्य्यावसाने प्रवेशस्थाने ॥ यथा । एतन्नानावताराणां निधानं बीजमव्ययम् ॥

निधापनम्, क्ली, स्थापने ॥

निधिः, पुं, शङ्खपद्मादिसामान्यनिधौ । शेवधौ ॥ महापद्मादिनवविधेषु निधिषु ॥ यथा । महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्व्वश्च निधयो नव ॥ इत्यमरः ॥ मार्कण्डेयपुराणोक्ताष्टनिधिषु ॥ यथा । क्रोष्टुकिरुवाच ॥ भगवन् कथितं सर्व्वं विस्तरेण त्वया मम ॥ स्वरोचिषोद्भूतं जन्म तथा स्वारोचिषस्य तु ॥ या तु सा पद्मिनी नाम विद्या भोगोपपादिका ॥ तत्संश्रिता ये निधयस्तान्मे विस्तरतो वद ॥ अष्टौ ये निधयस्तेषां स्वरूपं द्रव्यसंस्थितिम् ॥ भवताभिहितं सम्यक् श्रोतुमिच्छाम्यहं गुरो ॥ मार्कण्डेय उवाच ॥ पद्मिनी नाम या विद्या लक्ष्मीस्तस्याश्च देवता ॥ तदाधाराश्च निधयस्तान्मे निगदतः शृणु ॥ तत्र पद्ममहापद्मौ तथा मकरकच्छपौ ॥ मुकुन्दकुन्दौ नीलश्च शङ्खश्चैवाष्टमो निधिः ॥ सत्यामृद्धौ भवन्त्येते सिद्धिः सम्भवन्त्यमी ॥ एते ह्यष्टौ समाख्याता निधयस्तव क्रोष्टुके ॥ एभिरालोकितं चित्तं मानुषस्य महामुने ॥ यादृक्स्वरूपं भवति तन्मे निगदतः शृणु ॥ पद्मो नाम निधिः पूर्व्वं स यस्य भवति द्विज ॥ तस्य तत्सुतानां च तत्पुत्राणां च नान्यगः ॥ दाक्षिण्यसारः पुरुषस्तेन चाधिष्ठितो भवेत् ॥ सत्त्वाधारो महाभागो यतोऽसौ सात्त्विको निधिः ॥ सुवर्णरूप्यताम्रादिधातूनां च परिग्रहम् ॥ करोत्यतितरां सोऽपि तेषां च क्रयविक्रयम् ॥ करोति च तथा यज्ञान् दक्षिणां सम्प्रयच्छति ॥ सम्पादयति कामांश्च सर्व्वानेव यथाक्रमम् । सभादेवनिकेतांश्च तत्कारयति तन्मनाः ॥ १ ॥ * ॥ सत्त्वाधारो निधिश्चान्यो महापद्म इति स्मृतः ॥ सत्त्वप्रधानो भवति तेन चाधिष्ठितो नरः ॥ करोति पद्मरागादिरत्नानां च परिग्रहम् ॥ मौक्तिकप्रवालानां च तेषां च क्रयविक्रयं ॥ ददाति योगशीलिभ्यस्तेषामावसथांस्तथा ॥ सत्कारयति तच्छीलः स्वयमेव च जायते ॥ तत्प्रसूतास्तथाशीलाः पुत्रपौत्रक्रमेण च ॥ पूर्व्वर्द्धिमानः सप्तासौ पुरुषांस्तन्न मुञ्चति ॥ महापद्मस्तु विप्रार्थ्य चार्थमुपजायते ॥ २ ॥ * ॥ तामसो

निधिः

मकरोनामनिधिस्तेनावलोकितः ॥
पुरुषोथतम. प्रायः सुशीलोपिजाय
यते ॥ बाणखड्गर्ष्टिधनुषां चर्म्मणांच
परिग्रहम् ॥ दंशनानांच कुरुतेया
तिमैत्रींचराजभिः ॥ ददातिशौर्यवृ
त्तीनांभूभुजांयेचतत्प्रियाः ॥ क्रय
विक्रयमस्त्राणां नान्यत्रप्रीतिमेतिच
॥ एकस्यैवभवत्येषनरस्यनसुतानुगः
॥ द्रव्यार्थंदस्युतोनाशं संग्रामेवापिस
व्रजेत् ॥ ३ ॥ * ॥ कच्छपाख्योनिधि
र्यंन्योनरस्तेनाभिवीक्षितः ॥ तमः
प्रधानोभवतियतो वैतामसोनिधिः
॥ व्यवहारान्नशिष्टैस्तुपण्यजातंकरो
तिच ॥ क्रियाः स्वानिखिलाश्चैवन
विश्वसितिकस्यचित् ॥ समस्तानियथा
गानिनिगृह्यास्तेहिकच्छपः ॥ तथा
वष्टभ्यवित्तानितिष्ठत्याकुलमानसः ॥
नददातिनचाभुंक्तेतद्विनाशभयाकु-
लः ॥ निधानमुर्व्यांकुरुतेनिधिः सो
प्येकपूरुषः ॥ ॥ ॥ * ॥ रजोगुणम
यश्चान्योमुकुन्दोनामयोनिधिः ॥ न
रोवलोकितस्तेनतद्गुणोभवतिद्विज
॥ वीणावेणुमृदंगादिगीतवाद्यपरि
ग्रहम् ॥ करोतिगायतांवित्तं नृत्यतां
चप्रयच्छति ॥ वंदिमागधसूतानांवि
टानांलास्यपाठिनाम् ॥ ददात्यहर्नि
शंभोगान्भुंक्ते तैश्चसमंद्विज ॥ कु

निधिः

लटासुरतिश्चास्य भवत्यन्यैश्चतद्वि-
धैः ॥ प्रयातिसंगमेकंचसनिधिर्भज
तेनरम् ॥ ५ ॥ * ॥ रजःसत्त्वमयश्चा
न्यः कुन्दोनाममहानिधिः ॥ उपैति
स्तंभमधिकंनरस्तेनावलोकितः ॥ स
मस्तधातुरत्नानां पण्यधान्यादिकस्य
च ॥ परिग्रहंकरोत्येषतथैवक्रयवि
क्रयम् ॥ आधारःस्वजनानांचाभ्याग
ताभ्यागतस्यच ॥ सहतेनापमानोक्तिं
स्वल्पामपिमहामुने ॥ स्तूयमान
श्चमहतीं प्रीतिंबध्नातियच्छति ॥ यं
यमिच्छतिवैकामं मृदुत्वमुपयातिच
॥ बह्व्योभार्याभवन्त्यस्यसूतिमत्यो
तिशोभनाः ॥ तदन्वयेसप्तनरान्नि
धिः कुन्दोनुवर्त्तते ॥ प्रवर्द्धमानोनुन
रमष्टभागेनसत्तम ॥ दीर्घायुश्चैव
सर्वेषांपुरुषाणांप्रयच्छति ॥ बन्धूना
मेवभरणं येचदूरादुपागताः ॥ तेषां
करोतिवैकुन्द परलोकेनचादृतः ॥
भवत्यस्यनचस्नेहः सहवासिषुजायते
॥ पूर्वमित्रैश्चशैथिल्यंप्रीतिमन्यैः क
रोतिच ॥ ६ ॥ * ॥ तथैवसत्त्वतमसी
योबिभर्त्तिमहानिधिः ॥ निधिः सनी
लस्तत्संगीनरस्तच्छीलभाग्भवेत् ॥
वस्त्रकार्पासधान्यादिफलपुष्पपरिग्रह
म् ॥ मुक्ताविद्रुमशंखानां शुक्त्यादी
नांतथाकृते ॥ काष्ठादीनांकरोत्येष

यचान्यज्जलसंभवम् ॥ क्रयविक्रयम प्येषांनान्यत्ररमतेमनः ॥ तडागान् पुष्करिण्यश्चतथारामान्करोतिच ॥ बंधंचसरितां कूपास्तथारोपयतेनरः ॥ अनुलेपनरुष्यादिभोगभोक्ताविजायते ॥ विपूरुषस्यापिनिधिर्नीलोनामेषजायते ॥ ७ ॥ * ॥ रजस्तमोमयस्यान्यः शंखसंज्ञोऽपियोनिधिः ॥ तेना पिनीयते विप्रसद्गुणित्वंनिधीश्वरः । एकस्यैवभवत्येषनरं नान्य मुपैतिच ॥ यस्यशंखोनिधिस्तस्यस्वरूपंक्रोष्टुके शृणु ॥ एकएवात्मनामिष्टमन्नंभुङ्क्तेत थांबरम् ॥ कदन्नभुक्परिजनोनचशोभनवस्त्रधृक् ॥ नददातिसुहृद्भार्यासुतपुत्रस्नुषादिषु ॥ स्वपोषणपरः शंखीनरोभवतिसर्वदा ॥ ८ ॥ * ॥ इत्येते निधयः ख्याता नराणामर्थदेवताः ॥ मिश्रावलोकित.मिश्रस्वभावफलदायिनः ॥ यथाख्यातस्वभावस्तुभवत्येकविलोकनात् ॥ सर्वेषामाधिपत्येच श्रीरेषाद्विजपद्मिनी ॥ ३५ * ॥ इति श्रीमार्कण्डेयपुराणेनिधिलक्षणं नामषष्टितमोऽध्यायः ॥ ६० ॥ नितरांधीयते । धाञः किः ॥ नितरां दधाति भोषयत्यनेनपुनर्वादयाव निधातृभिः निधीयतेवा । धिधारणे । सम्पदादित्वात् क्विप् । आगमशास्त्रानित्यत्वात् नतुक् ॥ आधारे ॥ यथा । गुणनिधिः ॥ नलिकानामगन्धद्रव्ये ॥ समुद्रे ॥ विष्णगाष्टस्यामिषभूतधनविशेषे ॥ महाकालादिनिधिशब्दे ॥

निधित्सुः । त्रि । निधातुमिच्छति ॥ दधातेः सन्नन्तादुः मघादेशः ॥

निधिनाथः । पुं । निधीशः । पुं । निधीश्वरः पुं । कुवेरे । धनदे ॥

निधुवनम् । न । कम्पे ॥ सुरते ॥ केलौ । क्रीडायाम् ॥ नितरां धुवनं हस्तपादादिचालनमत्र ॥

निध्यानम् । न । निर्वर्णने । दर्शने ॥ ध्याने ॥

निध्वानः । पुं । शब्दमात्रे ॥

निनङ्क्षुः । त्रि । नाशयितुमिच्छति ॥

निनदः । पुं । ध्वनौ । शब्दे ॥ निनदनम् । णद० । नौगदनदपठस्वनइति पक्षेऽप् ॥ रवस्वरघोषे ॥

निनयनम् । न । निष्पादने ॥ निनीयते । णीञ० । ल्युट् ॥

निनादः । पुं । शब्दे ॥ निनदनम् । णद० । नौगदनदेत्यादिनापक्षे घञ् ॥

निनादितः । त्रि । शब्दिते ॥

निनीषुः । त्रि । नेतुमिच्छौ ॥ यथा । उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरे

दुघः । निनीषुः कुलमुत्कर्षमधमान् धर्मांश्च त्यजेदिति मनुः ॥

निन्दकः । त्रि । निन्दाकारके । निन्दाशीले ॥ निन्दति तच्छीलः । णिदि॰ । निन्दहिंसेति वुञ् ॥ नभाराः पर्वता भारा नभाराः सप्तसागराः । निन्दका हि महाभारा भारा विश्वासघातकाः ॥

निन्दतमः । त्रि । निन्दितवक्ते ॥

निन्दनम् । न । कुत्सने । निन्दायाम् ॥ णिदि कुत्सायाम् । ल्युट् ॥

निन्दा । स्त्री । अपवादे ॥ कुत्सायाम् । गर्हणे ॥ अविद्यमानदोषाभिधानं निन्देति परीवादाद्विशेषः । धीराः स्वनिन्दामेव सहन्ते न गुरुदेवादिनिन्दाम् ॥ आत्मानं यदि निन्दसि स्वात्मानं स्वयमेव हि । शरीरं यदि निन्दसि सहायास्ते जना मम ॥ निन्दासमानादयमन्तं भूषणं यस्य योगिनः । धीविक्षेपः कथं तस्य वाचाटैः क्रियतामिह ॥ अनिन्दया यदि जनः परितोषमेति नन्वप्रयत्नसुलभोऽयमनुग्रहो मे । श्रेयोर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्तीति शिह्लणमिश्राः ॥ निन्दनम् । णिदि॰ । गुरोस्तत्र वदति भावे स्त्रियाम् ॥ दोषकथने ॥ अ-

निष्टबोधनद्वारा विध्यर्थप्रवर्त्तकवचने ॥ नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते ऽपितु विधेयं स्तोतुमिति न्यायः ॥

निन्दास्तुतिः । स्त्री । व्याजस्तुतौ ॥

निन्दितः । त्रि । गर्हिते । धिक्कृते । निन्दायुक्ते ॥ सर्वथैव निन्दितस्योपदेशः ॥

निन्दुः । स्त्री । मृतवत्सायाम् ॥ निन्द्यतेऽप्रजात्वेनासौ । णिदेरौणादिकडः ॥

निन्द्यः । त्रि । गर्ह्ये ॥

निपः । पुं । कदम्बवृक्षे ॥ पुं । न । कलशे ॥ नियतं पिबन्त्यनेन । पा॰ । घञर्थे कः ॥

निपठः । पुं । पाठे ॥ निपठनम् । पठ॰ । नौगदनदेत्यब्वा ॥

निपत्या । स्त्री । पिच्छिलायाम्भूमौ । फिसलन् इतिभाषा ॥ निपतन्त्यस्याम् । पत्लृ॰ । संज्ञायां समजेति क्यप् ॥ युद्धभूमौ ॥

निपाकः । पुं । पाके ॥

निपाठः । पुं । पठने । पाठे ॥ निपठनम् । पठ॰ । नौगदनदेत्यभावे घञ् ॥

निपातः । पुं । पतने ॥ मृतौ ॥ निकृष्टपातः ॥ चादिषु ॥ प्रादिषु ॥ निपातानां द्योतकत्वमेव न तु वाचकत्वमित्यभ्युपगमः ॥ निपतनम् ।

पतॢ० । घञ् ॥ उपसर्गातिरिक्तनिपातानां द्योतकत्त्वं वाचकत्वोभयस्वीकारोऽयंविभक्तीतिसूत्रे भाष्ये स्पष्टस्तेनतेषांवाचकत्वमपि ॥ उपसर्गाणांतुद्योतकत्त्वमेवेति गतिर्गतावित्यत्रभाष्ये स्पष्टम् ॥

निपातनम् । न । अधोनयने । अवनाये ॥ पतेः स्वार्थणिजन्ताल्ल्युट् ॥ लक्षणानुत्पन्नपदसाधने ॥ यल्लक्षणेनाऽनुत्पन्नंतत् सर्वं निपातनात् सिद्धम् । निपातनादिष्टसिद्धिरित्युक्तेश्च ॥

निपातितः । त्रि । निक्षिप्ते ॥

निपानम् । न । आहावे । उपकूपजलाशये । कूपोद्धृतजलस्थले । कूपादिसमीपे पशूनां जलपानार्थमुदकाधारे । खेल इतिभाषा ॥ नियतं पिबन्त्यस्मिन् । करणेतिपातेर्ल्युट् ॥ गोदोहनपात्रे । दोहन्याम् ॥

निपीडितः । त्रि । कृतपीडने । निष्पेडा इति निपीडा इतिच भाषा ॥ नितरांपीडितः ॥

निपुणः । त्रि । प्रवीणे । शिक्षे । निष्णाते । कार्यक्षमे । तर्कादिकुशले । शिक्षिते ॥ यथा । निपुणोपि न कर्त्तव्यो वाग्वादश्चक्रमध्यतः इत्यागमः ॥ निपुणति । पुण्यकर्मणिशुभे । इगुपधेतिकः ॥ कार्येपुकू(?)चमदृष्टौ ॥

निफला । स्त्री । ज्योतिष्मत्याम् ॥

निफेनम् । न । अफेने ॥ इतिराजनिर्घण्टः ॥

निबद्धः । त्रि । वशीकृते ॥ निबध्यतेस्म । बधबन्धने । क्तः ॥ अनुबद्धे ॥ रचिते ॥

निबन्धः । पुं । आनाहरोगे । मूत्रादिरोधे ॥ ग्रन्थसङ्गृत्तौ । सङ्ग्रहविशेषे ॥ प्रतिवर्षम् प्रतिमासादिवादातव्यत्वेन प्रतिश्रुतवस्तुरूपे ॥ निम्नहवे ॥ बन्धे ॥ यथा दैवीसम्पद्विमोक्षाय निबन्धायासुरी मतेति ॥

निबन्धनम् । बन्धबन्धने । घञ् ॥ न । गीते ॥ इतिशब्द० ॥

निबन्धनम् । न । बन्धने ॥ हेतौ ॥ वीणातन्त्रीनिबन्धनोर्द्ध्वभागे । उपनाहे ॥ निबध्यतेऽनेनास्मिन्वा । बन्ध० । करणाधिकरणयोश्चेति ल्युट् ॥

निबन्धितः । त्रि । बद्धे ॥ निबन्धः सञ्जातोस्य । तारकादित्वादितच् ॥

निबोधितः । त्रि । उपदिष्टे ॥

निभः । पुं । व्याजे ॥ त्रि । उत्तरपदस्थः सदृशे ॥ यथा । पितृनिभः पुत्रो मातृनिभाकन्येष्टनिभमपत्यमिति ॥ नियतं भाति । भा० । आतश्चोपसर्गइतिकः ॥ प्रकाशे ॥

निभालनम् । न । दर्शने ॥

निभृतम् । त्रि । भूतकाले । अतीते ॥ इति राजनिर्घण्टः ॥

निभृतः । त्रि । विनीते ॥ धृते ॥ नितरामभारि । भृञ्० । क्त. ॥ निश्चले ॥ एकान्ते ॥ नितराम् पोषिते ॥ नितराङ्गुप्ते ॥ निर्जने ॥ यथा । निभृतनिकुञ्जगृहङ्गतया निशि रहसि निलीयवसन्तमिति जयदेवः ॥ खातावच्छिन्ने ॥ अस्तायोपस्थिते ॥ यथा । नभसानिभृतेन्दुना तुलामिति रघुः ॥

निमग्नः । त्रि । जलादौनितराम् प्रविष्टे ॥

निमज्जथुः । पुं । शयने ॥ यथा । तल्पे कान्तासखैः सार्द्धमन्यैरधिङ्निमज्जथुमिति भट्टिः ॥

निमज्जनम् । न । अवगाहने । स्नाने ॥

निमन्त्रणम् । न । नियोजनविशेषे ॥ यस्याकरणे प्रत्यवायस्तन्निमन्त्रणम् । यथा । इहभुञ्जीतभवान् ॥ यस्याकरणे प्रत्यवायोन स्यात् तदामन्त्रणम् । यथा । इहशयीत भवान्। इति मुग्धबोधटीका ॥

निमन्त्रितः । त्रि । भोजनार्थं नियोजिते ॥

निमय. । पुं । परिवर्त्तने । परिदाने । विनिमये ॥ निमीयते। मीञ्हिंसायाम् । एरच् ॥

निमातव्यः । त्रि । परिवर्त्तनीये ॥ मेञोक्तव्यम् ॥

निमानम् । न । मूल्ये ॥ निमीयते क्रीयते ऽनेन । माङ्० । ल्युट् ॥

निमिः । पुं । इक्ष्वाकुराजः पुत्रे ॥

निमितः । त्रि । समन्तान्मिते ॥

निमित्तम् । न । उत्पत्तिमात्रकारणे । हेतौ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधि राकाशकल्पः । रवि र्लोकचेष्टानिमित्तं यथा यः सनित्योपलब्धिस्वरूपोहमात्मा ॥ चिह्नमपि ॥ शरव्ये ॥ शकुने ॥ निमित्तानिचपश्यामि विपरीतानिकेशव ॥ निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् । तस्मा देतानि राजा समुपलक्षयेत् ॥ फले ॥ निमेयति । निमिद्द्द० । कीलकः । संज्ञापूर्वकत्वान्नगत्वम् । मत्वालने यदिमित्तमिति निर्द्देशात् ॥

निमित्तकम् । न । चुम्बने ॥ निमित्ते ॥

निमित्तकारणम् । न । समवाय्यसमवायभिन्ने कारणे ॥ यथा । तुरीवेमादिकम् पटस्य । यथा वा द्व्यणुके ईश्वरः । घटस्य सलिल कुलाल दण्ड चक्रसलिलसूत्रादिकमिति ॥

निमित्तकृत् । पुं । काके ॥ इतिरानि० ॥

निमित्तवित् । पुं । दैवज्ञे ॥ इति हेमचन्द्रः ॥ शकुनज्ञे ॥

निमिषः । पुं । कालप्रभेदे ॥ अक्षिनिमीलने । अक्षिपक्ष्मणोः स्वाभाविकश्चोन्मेषस्तत्सहकारिणि ॥ निमिषति । मिष० । पचाद्यच् । कुटादित्वान्न गुणः ॥ इगुपधत्वात्को वा ॥

निमिषितम् । न । अक्षिव्यापारे ॥

निमीलम् । न । दीर्घनिद्रायाम् ॥

निमीलनम् । न । मरणे ॥ सङ्कोचने ॥ निमेषे ॥ मील निमेषणे । ल्युट् ॥

निमीलिका । स्त्री । व्याजे ॥ निमीलने ॥

निमीलितः । त्रि । मोहिते ॥ कृतनिमीलने ॥

निमेयः । पुं । परिवर्ते । नैमेये ॥ निमीयते । माङ् माने । अचो यत् । ईद्यति ॥

निमेषः । पुं । अक्षिनिमीलने । नेत्रपक्ष्मणोः स्वाभाविकश्चोन्मेषस्तत्सहकारिणि । पलकमीचना इति भाषा ॥ यथा । निमेषोन्मेषाभ्याम् प्रलयमुदयं याति जगतीति ॥ दृष्टिनिमीलनात्मके । कालप्रभेदे । पक्ष्मस्पन्दनकाले ॥ पुंसो यावत्कालमकृत्रिमनेत्रविकाशानन्तरं पक्ष्माकुञ्चनं जायते स निमेषः । इत्यमरटीकायाम्भरतः ॥ अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्तितः । द्वौ निमेषौ त्रुटिर्ज्ञेयो द्वे त्रुटी तु लवः स्मृतः । इत्यग्निपुराणम् ॥ लघ्वक्षरोच्चारणमात्रे काले ॥ लवद्वये ॥ निमिषति । मिष स्पर्धायाम् । इगुपधेति कः ॥

निमेषकः । पुं । निमेषे ॥

निमेषकृत् । स्त्री । तडिति ॥ निमेषं करोति । डुकृञ्० । क्विप् ॥

निमेषरुक् । पुं । खद्योते ॥ इति त्रिकाण्डशेषः ॥

निम्नम् । त्रि । गभीरे ॥ नीचा इति गहरा इति च भाषा ॥ निमनति । म्ना अभ्यासे । आतश्चेति कः ॥ घुषस्यादिषेङनाम्नाते चाडा इति प्रसिद्धे त्रिके ॥

निम्नगा । स्त्री । नदीमात्रे ॥ त्रि । नीचगामिनि ॥ निम्नङ्गच्छति । गम्लृ० । अन्येभ्योपीति डः ॥

निम्नोन्नतम् । त्रि । उन्नतानते । बन्धुरे ॥

निम्बः । पुं । अरिष्टे । सर्वतोभद्रे । पिचुमर्दे । नीम् इति भाषा ॥ निम्बः शीतो लघुर्ग्राही कटुपाकोऽग्निवातनुत् । अहृद्यः श्रमतृट्कासज्वरारुचिकृमिप्रणुत् ॥ व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ॥ * ॥ निम्बप

पंस्मृतं नेव्यं कृमिपित्तविषप्रणुत् । वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत् ॥ * ॥ नैम्बंफलंरसेतिक्तं पाकेतुकटुभेदनम् । स्निग्धंलघूष्णंकुष्ठघ्नंगुल्मार्शःकृमिमेहनुत् ॥ * ॥ निम्बशाकन्तु । निम्बस्यकोमलदलानि सुयत्नभृष्टान्याज्येऽथिपेषदनुसैन्धवसमयुक्तान् । आलोचितपटुलवणाम् स्वरामठेनवावारितादहसिरोचन मेधवेद्याः ॥ * ॥ निम्बसि स्वास्थ्यम् । णिविसेचने । पचाद्यच् । यव-योरैक्यम् ॥ कल्कनिम्बजकर्कंकृमिकुष्ठप्रमेहजित् ॥ * ॥ निम्बतैलन्तु कुष्ठघ्नंतिक्तंकृमिहरम् परमिति राजवल्लभः ॥ कार्येत्वगुग्राह्या ॥

निम्बकः । पुं । अरिष्टद्रुमे ॥ स्वार्थेकः ॥

निम्बतरुः । पुं । मन्दारवृक्षे । वकाम म इतिभाषाप्रसिद्धे पारिभद्रे ॥ नियमयति । यमउपरमे । पृ० । निं बतिवा । णिविसेचने । पचाद्यच् । यवयोरैक्यम् । कर्मणिघञ्वा । निम्बसंज्ञकतरुः । शाकपार्थिवादिः ॥

निम्बबीजः । पुं । राजादनीवृक्षे ॥

निम्बुकम् । न । } निम्बूके । कागदी
निम्बूः । स्त्री । } नींबू इतिभाषा ॥

निम्बूकम् । न । अम्लजम्बीरे । शोधने । निंबाम् । दीप्ते ॥ निम्बूकमम्लंवा



तमंदीपनंपाचनंलघु ॥ * ॥ निम्बुकं कृमिसमूहनाशनं तीक्ष्ण मम्ल-मुदरग्रहापहम् । वातपित्तकफशूलिने हितं कष्टनष्टरुचिरोचनम् परम् ॥ त्रिदोषवह्निक्षयवातरोगनिपीडितानांविषविह्वलानाम् । मन्दग्रहेबद्धगुदेप्रदेयंविसूचिकायांमुनयोवदन्ति ॥ * ॥ भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ निम्बूफलभवं पान मत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥ इतिराजनि० ॥

निम्लोचन् । त्रि । अस्तङ्गच्छति ॥

निम्लोचनम् । न । अस्तगमने ॥

नियतः । त्रि । निश्चिते ॥ निश्चये ॥ सदाचारनिष्ठे । वशीकृतेन्द्रिये ॥ म । नित्यकर्मणि ॥ नियच्छति । यम० । अकर्मकत्वात्कर्त्तरिक्तः । मलोपः ॥ नियततेवा । यती० । पचाद्यच् ॥

नियतात्मा । त्रि । समाहितचित्ते ॥ सुनिश्चितमनसि ॥ नियतः आत्मा यस्य ॥

नियतिः । स्त्री । नियमे ॥ दैवे । दिष्टे । भागधेये । प्राक्तनशुभाशुभकर्मणि ॥ नियम्यतेऽनया । यमउपरमे । क्तिन् ॥

नियती । स्त्री । दुर्गायाम् ॥

नियतेन्द्रियः । त्रि । इन्द्रियदमनशीले । संयतेन्द्रिये ॥

नियन्ता । पुं । सारथौ ॥ त्रि । शासितरि ॥ पशुप्रेरके ॥ नियच्छति विशिष्टे विषये स्थापयति । अन्तर्भावितण्यर्थो वा । यम० । तृच् ॥

नियन्त्रितः । त्रि । अनर्गले । अबाधे ॥ इति हेमचन्द्रः ॥ नितरां यन्त्रितः ॥ नियमिते ॥

नियमः । पुं । यन्त्रणे ॥ प्रतिज्ञायाम् । अङ्गीकारे ॥ निश्चये ॥ यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यते एतदतोऽन्येऽभक्ष्या इति । अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा । अभक्ष्यो ग्राम्यकुक्कुट. अभक्ष्यो ग्राम्यशूकर इत्युक्ते गम्यते एतदारण्यो भक्ष्य इति महाभाष्यम् ॥ भक्ष्यनियम इति भक्ष्यानुमतिरूपउपदेश इत्यर्थ इति विवरणम् ॥ * ॥ प्रतिज्ञानिश्चये ॥ इति मेदिनी ॥ व्रते ॥ आगन्तुसाधने ॥ यथा । नियमस्तु स यत्कर्मानित्यमागन्तुसाधनम् । यत् कर्म अनित्यम् न तु यावज्जीवं कर्त्तव्यम् आगन्तुभिः कादाचित्कैः कामनया समयविशेषादिभिः साधनैः साध्यम् उपवासस्नानजपादि तन्नियम इत्यर्थः ॥ * ॥ नित्यकर्म्मणि । तत्तदाश्रमविहिताचरणे ॥ * ॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानेषु पञ्चसु ॥ अपोपवासप्रदक्षिणनमस्कारादिरूमाः पुराणेषेऽधिका उक्तास्तेऽप्येष्वेव पञ्चस्वन्तर्भाव्याः ॥ स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः । नियमो गुरुशुश्रूषाशौचाक्रोधाप्रमादता. ॥ * ॥ अक्रोधादिषु ॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः ॥ * ॥ तपआदिदशसु । यथा ॥ तपःसन्तोष आस्तिक्यं दानं देवस्य पूजनम् । सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम् ॥ दशैते नियमाः प्रोक्ता मया पर्वतनायकेति देवीगीता ॥ नियच्छति अनेन वा नियमनं वा । यम उपरमे । यमः समुपनिविषु चेत्यपा ॥ सजातीयप्रवाहस्य विजातीयतिरस्कृतिः । नियमो हि परानन्दो नियमात् क्रियते बुधैः ॥ वेदशब्दानियमपूर्वमधीताः फलवन्तो भवन्तीति महाभाष्यम् ॥

नियमनम् । पुं । नियमे ॥ निग्रहे । बन्धे ॥ वर्जेर्नियमनमिति यथा ॥

नियमविधिः । पुं । नानासाधनसाध्-

क्रियाया मेकसाधनप्राप्ता वप्राप्तस्य परसाधनस्य प्रापके विधौ ॥ नियमः पाक्षिकेसतीत्युक्तेः । पक्षेऽप्राप्तस्य प्रापकोविधिर्नियमविधिर्भवति । यथा व्रीहीनवहन्तीत्यादिः । कथमस्यपक्षेऽप्राप्तप्रापकत्वमितिचेत् इत्थम् । अनेनाऽवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तुनियमः । तथाप्राप्तांशपूरणम् । वैतुष्यंहिनानोपायसाध्यत्वात् यदावघातंपरित्यज्योपायान्तरंगृहीतुमारभ्यतेतदाऽवघातस्या प्राप्तत्वेन तद्विधानमात्मकमप्राप्तांशपूरणमेवानेनविधिनाक्रियते । अतस्तनियमविधावप्राप्तांशपूरणात्मकोनियमएवचवाक्यार्थः । पक्षेऽप्राप्तावघातविधानमितियावत् ॥

नियमितः । त्रि । कृतनियमे ॥ बद्धे ॥ नियम. सञ्जातोऽस्य । ता॰इतच् ॥

नियाम. । पुं । नियमे ॥ नियमनम् । यम॰ । यम. समुपनिविषुचेति- घञ् ॥

नियामकः । पुं । नाविरा इतिप्रसिद्धे गुणवृक्षोपरिस्थिते पोतवाहे ॥ कर्णधारे ॥ नियच्छतिपोतम् । यमनियमने । ण्वुल् ॥ त्रि । नियन्तरि ॥

नियामिका । स्त्री । नियमनकर्त्र्याम् ॥

नियुक्तः । त्रि । अधिकृते ॥ नियोजिते ॥ आज्ञप्ते । प्रेरिते ॥ यथानियुक्तोऽस्मितथा करोमि ॥ नियुज्यते स्म । युजिर॰ । क्तः ॥ अवधारिते इतिरा धाकान्तः ॥

नियुतम् । न । लक्षे । १००००० ॥ इति लीलावती ॥ शतं सहस्रमयुतं नियुतं प्रयुत मतम् । लीकोटिरर्बुदमितिक्रमाद्दशगुणोत्तरमिति रत्नकोष. ॥ धेनूनां नियुत प्राद्दाद्विप्रेभ्यः समलङ्कृते । इत्यत्र नियुते दशलक्षे इति श्रीधरस्वामी ॥ २ ॥ दशलक्षे १०००००० । प्रयुते ॥ यथा । एकं दश शतञ्चैव सहस्र मयुतं तथा । लक्षञ्च नियुतञ्चैवकोटि रर्बुद एवच ॥ वृन्दः खर्वो निखर्वश्च शङ्खपद्मौच सागर. । अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरम् ॥ इतिपुराणम् ॥

नियुद्धम् । न । बाहुयुद्धे ॥ निरस्त्र नितरांवा युद्धम् ॥

नियोगः । पुं । अवधारणे ॥ आज्ञायाम् ॥ कार्य्ये ॥ नियुज्यतेऽस्मिन् । युजिर॰ । घञ् ॥

नियोगी । त्रि । नियुक्ते । कर्मसचिवे । नियोगविशिष्टे ॥ नियोगोऽस्यास्ति । इनिः ॥

नियोग्य । त्रि । नियोगार्हे । प्रभौ ॥

नियोजनम्। न। स्थापने॥ युजिर्॰। ल्युट्॥ नियोगे। प्रेरणे॥ त्वयैतत् क्रियतामिति क्रियासु नियोजनं प्रेरणमित्यर्थात्॥

नियोजितः। त्रि। नियुक्ते॥

नियोज्यः। त्रि। प्रेष्ये। भृत्ये॥ नियुज्यते। युजिर्॰। नियोक्तुं शक्यस्यार्थे प्रयोज्यनियोज्यौ शक्यार्थे इति पद्धति कवर्गाभावो निपातनात्॥

नियोद्धा। पुं। कुक्कुटे॥ इति राजनिर्घण्टः॥ बाहुयुद्धकारिणि॥

निर्। अ। निर्णये॥ निषेधे॥ बहिर्भावे॥ क्रान्ताद्यर्थे॥ न्वषाति। नृनये। क्विप्। कृत इत्॥ निःशेषे॥

निरंशः। पुं। राशेः प्रथमभागे॥ त्रि। अंशरहिते॥ निर्गतोंऽशात्॥

निरंशकः। त्रि। निरंशे॥ स्वार्थे तद्धितः॥ यथा। पतितस्तत्सुतः क्लीबः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगार्त्ता भर्त्तव्यास्ते निरंशकाः॥ तेषां पतितवर्ज्जेभ्यो भक्तवस्त्रं प्रदीयते॥

निरंशसूर्य्यः। पुं। राशेः प्रथमभागस्थे भानौ॥ राशेः प्रथमभागस्थो निरंश सूर्य उच्यते॥

निरचदेश। पुं। ध्वस्तदेशे। पतभा शून्यस्थाने॥ सतुपूर्वमहाध्वर्षेयम

कोटिः। दक्षिणे भारतवर्षे लङ्का। पश्चिमे केतुमालवर्षे रोमकः। उत्तरे कुरुवर्षे सिद्धपुरी। एताः भूवृत्तपादविवराः अन्योन्यं प्रतिष्ठिताः। तासामुपरिगो विषुवस्थो दिवाकरो याति। तासु विषुवच्छाया अक्षस्योन्नतिश्च न दृश्यते। तत्र दिवामानं रात्रिमानञ्च त्रिंशद्घटिकाः। इति सूर्य्यसिद्धान्तमतमिति राधाकान्तः॥

निरग्निः। पुं। अग्निसाध्यश्रौतकर्म्मत्यागिनि॥ निरग्निर्ब्राह्मणः कलौ॥

निरङ्कुशः। त्रि। अनिवार्य्ये। अबाधे। बाधाशून्ये॥ इति जटाधरः॥

निरञ्जनः। त्रि। अञ्जनशून्ये। धौतकज्जले। निर्मले॥ अविद्यया असंस्पृष्टे मनश्चक्षुराद्यविषये परमात्मनि॥ उपाधिनिवर्त्तके॥ अञ्जनं यद्वञ्जनमज्ञानं मलिनस्वभावत्वात् तन्निर्गतं यस्मात् सः॥

निरञ्जना। स्त्री। पूर्णिमायाम्॥ अञ्जनदीनायाम्॥

निरतः। त्रि। नियुक्ते॥ यथा षट्कर्मनिरत इति॥

निरतिशय। त्रि। अतिशयाभावे॥ निर्गतः अतिशयो यस्मात्॥

निरत्यय। त्रि। निर्दोषे॥ अमायिके॥ निर्गतोऽत्ययो यस्य। निष्क्रान्तो॥

ष्यंयाद्वा । निरादय इतिसमासः ॥

निरनुयोज्यानुयोगः । पुं । निग्रहस्थानाभिधेगोनिरनुयोज्यानुयोग इतिगौतमलक्षिते अनिग्रहस्थाने ॥ अवसरे यथार्थं निग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः । एतेनानवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावनेच नातिव्याप्तिः । सोयं चतुर्द्धा । छलं जातिराभासोऽनवसरग्रहणञ्च । आभासो व्यभिचाराद्यावसिद्ध्याद्युद्भावनम् । अनवसरग्रहणञ्च अकाले एवोद्भावनम् । यथा त्यक्ष्यतिचेत् प्रतिज्ञाहानिः विशेषयिष्यतिचेत् हेत्वन्तरम् । एवमपसिद्धान्ती व्यकथनमपि । यथा । उच्चमानग्राह्यस्थापशब्दादेः परिसमाप्तौ । एवमनुक्ताग्राह्यान्यायाननुभाषणावसरे ऽनुज्ञाप्ययोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ॥ इति५ ध्याये ६५ सूत्रम् ॥

निरन्तरः । त्रि । घने । निविडे । सान्द्रे ॥ निरवधौ ॥ नीरन्ध्रे ॥ निर्गतमन्तरात् । निर्गतमन्तरमस्मिन्वा ॥

निरन्तराभ्यासः । पुं । स्वाध्याये ॥ सततावर्त्तने ॥ निरन्तरश्चासावभ्या-सश्च ॥

निरपत्रपः । त्रि । धृष्टे । निर्लज्जे ॥ निर्गतोऽपत्रपाया लज्जायाः ॥

निरपेक्षः । त्रि । अपेक्षारहिते । अनपेक्षे ॥ विगतस्पृहे ॥ यथा । निरपेक्षोऽगच्छाद्दियादिति ॥ निर्गताऽपेक्षा यस्य ॥ निःसङ्गे ॥

निरयः । पुं । नरके ॥ निर्गतोऽयात् ॥

निरयपतिः । पुं । यमपुरुषे ॥

निरर्गलः । त्रि । अबाधे । अर्गलारहिते । अनर्गले ॥ निष्क्रान्तमर्गलायाः । निरादयइतिसमासः ॥

निरर्थः । त्रि । मोघे ॥

निरर्थकः । त्रि । निष्फले । मोघे ॥ न । निग्रहस्थानविशेषे । निरर्थकंलक्षयतिगौतमः । वर्णक्रमनिर्देशवन्निरर्थकम् ॥५१॥ वर्णानां क्रमेण निर्देशो यवगतेत्यादिप्रयोगस्तत्तुल्यो निर्देशो निरर्थकं निग्रहस्थानम् । अवाचकपदप्रयोगइतिफलितार्थः । वाचकत्वं शक्त्या निरूढलक्षणया वा स्वपरिभाषया वा बोध्यम् । समयबन्धव्यतिरेकेणेति विशेषणीयम् । ते ■यन्नाप्यसंशेन विचारःकर्त्तव्यइतिसमयवन्धस्तत्रापभ्रंशे नदोषः । क्वचित्संवरणेतु नदोषइत्युतप्रायम् । अस्यसम्भव प्रमादादित्यवधेयम् ॥

५१ ॥ निर्गतोऽर्थोऽस्मात् ॥

निरवग्रहः । त्रि । स्वच्छन्दः ॥ निष्क्रान्तोऽवग्रहात् नियमनात् । निरादय इतिसमासः ॥ वृष्टिप्रतिबन्धाभावे ॥

निरवद्यः । त्रि । उत्कृष्टे ॥ वातपित्तादिजन्याध्यात्मिकादितापत्रयरहिते आत्मनि ॥ रागादिशून्ये ॥

निरवयवः । पुं । परमाणौ ॥ त्रि । अवयवहीने ॥

निरवशेषः । त्रि । सर्वस्मिन् ॥

निरवसितः । त्रि । बहिष्कृते । येनभुक्ते पात्रं संस्कारेणापि न शुद्ध्यति तत्र । चाण्डालादौ ॥

निरवहालिका । स्त्री । प्राचीरे ॥ इति शब्दमाला ॥

निरशनम् । न । भोजनाभावे । अनशने ॥ त्रि । तद्वति ॥

निरसनम् । न । प्रतिक्षेपे । प्रत्याख्याने ॥ असुक्षेपणे । ल्युट् ॥ वधे । निसूदने ॥ निष्ठीवने ॥

निरसा । स्त्री । निःश्रेणिकातृणे ॥

निरस्तः । त्रि । निष्ठ्यूते ॥ प्रेषितशरे ॥ द्रुतोदिते । त्वरितोदिते ॥ सन्त्यक्ते ॥ प्रतिहते ॥ प्रत्याख्याते ॥ भर्त्सिते ॥ निरस्यतेस्म । असु॰ । क्तः ॥

निरस्तदयः । त्रि । निष्कृपे ॥

निरहङ्कारः । त्रि । शरीरेन्द्रियादौ अहममेत्यभिमानशून्ये ॥ विद्यावत्त्वादिनिमित्तात्मसम्भावनारहिते ॥

निराकः । पुं । पचने ॥ स्वेदे ॥ असत्कर्मफले ॥ इति हेमचन्द्रः ॥

निराकरणम् । न । निराकृतौ । निवारणे ॥ निराक्रियतेऽनेन । कृञ् । ल्युट् ॥

निराकरिष्णुः । त्रि । क्षिपौ । निराकरणशीले ॥ निराकरोति तच्छीलः । अलङ्कृञित्यादिना इष्णुच् ॥

निराकर्त्ता । त्रि । निराकरिष्णौ ॥

निराकारः । त्रि । आकारहीने । देहाद्याकारवर्जिते परमात्मनि ॥ महदादिवत् कार्यातिरिक्त रूपस्वरूपाभावात् निर्गतः आकारोऽस्मात् । निरादय इतिसमासः ॥

निराकुलः । त्रि । आकुलताशून्ये ॥

निराकृतः । त्रि । प्रत्याख्याते । निरस्ते ॥ यथा । कैःपुष्पैरर्चतामद्य भृङ्गाभुवि निमन्त्रिताः । केनचाद्यमकेनार्द्धचन्द्रदत्त्या निराकृताः इति ॥ निराकारि । कृञ् । क्तः ॥ निस्सारिते ॥

निराकृतिः । पुं । पञ्चमहायज्ञानुष्ठानरहिते ॥ यस्तु पञ्चमहायज्ञविहीनः स निराकृतिरिति जटाधरः ॥ तथाच

छन्दोगपरिशिष्टे । निराकर्त्तामरादीनां स विज्ञेयो निराकृतिरिति ॥ स्त्री । निरसने । निराकरणे ॥ निराकरणम् । कृत्स्न० । स्त्रियां क्तिन् ॥ त्रि । अनाकारे ॥ अस्वाध्याये ॥ आकृते रध्ययनचेष्टाया निर्गतः । आकृते र्जातेर्वा निर्गतः । अनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ वारणे । निषेधे ॥

निरागमः । पुं । आगममूलविकले तर्के ॥ तर्कमात्रोपजीविषु बौद्धकाणादसाङ्ख्यादिषु ॥

निराचारः । त्रि । अनाचारे । आचारशून्ये ॥ निर्न विद्यते आचारो यस्य सः ॥

निरातङ्कः । पुं । शिवे ॥ निर्गते आतङ्कतापत्रये यस्मात् ॥ त्रि । आतङ्कहीने ॥

निरातपा । स्त्री । रजन्याम् ॥ त्रि । आतपशून्ये ॥

निरादेशः । त्रि । वार्त्तासञ्चाररहिते ॥

निराधारः । त्रि । आश्रयशून्ये ॥

निराबाधः । त्रि । पक्षाभासविशेषे ॥ यथा । अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् । असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेदिति ॥ निराबाधम् अस्मद्गृहप्रदीपप्रकाशेनायं गृहेऽर्थमकरोतीति मिताक्षरा ॥

निराभासः । पुं । वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वशून्ये परमात्मनि ॥ नितरामाभिमुख्येन भासते । भास० । पचाद्यच् ॥ त्रि । निष्प्रतिबिम्बे ॥

निरामयः । पुं । वनच्छागले ॥ शूकरे ॥ त्रि । नीरुजि । वार्त्ते । रोगरहिते ॥ निष्क्रान्त आमयात् । निरादय इति समासः ॥ निर्गत आमयो व्याधिर्यस्माद्वा ॥

निरामालुः । पुं । कपित्थे ॥

निरामिषः । त्रि । विषयाभिलाषरहिते ॥ आमिषशून्ये ॥

निरामिषाशी । त्रि । अमांसाशिनि ॥

निरालम्बः । त्रि । आश्रयशून्ये । निराश्रये । निर्विषये ॥

निरालम्बनत्वम् । न । देहानुसन्धानराहित्यतायाम् ॥

निरालम्बा । स्त्री । आकाशमांस्याम् ॥

निराशः । त्रि । आशाशून्ये ॥

निराशी । त्रि । वैराग्यदार्ढ्येन विगततृष्णे । निष्कामे ॥ निर्गता आशिषः कामना यस्मात् ॥

निराश्रयः । त्रि । देहेन्द्रियाद्यभिमानशून्ये ॥ आश्रयो देहेन्द्रियादिः अहंदर्शनेन निर्गतो यस्मात् ॥ आ-

श्रयविहीने ॥ निर्गतः आश्रयोयस्मा त् यस्यवा ॥

निरासनम् । न । निरसने ॥ निराङ्पूर्वासधातोर्ल्युट् ॥ आसनाभावे ॥ त्रि । तद्वति ॥

निराहारः । त्रि । आहाररहिते ॥

निरिङ्गिणी । स्त्री । तिरस्करिण्याम् । यव्याम् । यवनिकायाम् ॥

निरिन्द्रिय । त्रि । प्रजननासमर्थे । जीर्णे । इन्द्रियशून्ये ॥

निरीक्षणम् । न । दर्शने ॥

निरीक्षितः । त्रि । अवलोकिते ॥

निरीशम् । न । फाले । फले । यत्रकाष्ठेफालो निवध्यते तत्र । फालाधारे ॥ इत्यमरः ॥ ईशायानिर्गतः । निरादयइति समासः ॥ त्रि । ईशशून्ये ॥ नास्तिके ॥

निरीषम् । न । फले । फालाधारे । निरीशे ॥ इतिभरतोमरटीकाकृत् ॥ निष्क्रान्तईषायाः । निरादय इति समासः ॥

निरीहः । त्रि । निराकाङ्क्षे । प्राप्तस्य अस्यैश्वर्यै ॥ निरीषस्यतृष्णा स्पृहः ॥ ईहारहिते ॥ पुं । विष्णौ ॥

निरुक्तम् । न । वेदाङ्गविशेषे ॥ यथा । ज्योतिषामयनं चैषं निरुक्तंश्रोत्र मुच्यत इतिस्मृतिः ॥ पदभञ्जने ॥ देवविद्यायाम् ॥ त्रि । निर्वचने ॥ स्पष्टे ॥ कथिते ॥ निश्चयेनोक्तोर्थो नेन । वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेनयोग स्तदुच्यतेपञ्चविधं निरुक्तम् ॥

निरुक्तिः । स्त्री । निर्वचने ॥ निश्चितोक्तिः ॥

निरुद्धम् । न । ध्येयाकारवृत्तेर्निरोधे ॥ निरुद्धंचित्तं पञ्चमी चित्तस्य असम्प्रज्ञातसमाधिभूमिः । तदुक्तम् । तस्यापिनिरोधे सर्वनिरोधान्निर्बीजः समाधिरिति ॥ त्रि । संरुद्धे । रोधविशिष्टे ॥ निश्चयेनरुद्धम् ॥

निरुद्धप्रकाशः । पुं । मेढ्रजातक्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

निरुद्योगः । त्रि । उद्योगाभावविशिष्टे । निरुद्यमे ॥

निरुपद्रवः । त्रि । उत्पातरहिते ॥

निरुपप्लवः । त्रि । निर्बाधे ॥ निर्गत उपप्लवोयस्मात् ॥

निरुपमः । त्रि । अनुपमे । उपमाशून्ये ॥ निर्गता उपमासादृश्यं यस्यसः ॥

निरुपाख्यः । त्रि । असति ॥ वाचोमनसस्त्वागोचरे विषयतयोक्तेरयोग्ये ॥ निर्गतः उपाख्यायाः प्रत्यक्षत उपलब्धेः ॥ अस्फुटस्वरूपे ॥

निरपेक्षः । त्रि । अनपेक्षे । उपेक्षारहिते ॥ निर्गता उपेक्षा औदासीन्यं यस्मात् ॥

निरसः । त्रि । यत्रादौ भागः पृथक्कृते ॥

निरूढः । पुं । निरूढलक्षणाकेशब्दे ॥ यथा । पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्यपरमे यद्द्रव्ये स्वत्वं तत्र निरूढो दायशब्द इति दायभागः ॥

निरूढलक्षणा । स्त्री । शक्तितुल्यलक्षणायाम् ॥ यथा । निरूढलक्षणाः काश्चित् सामर्थ्यादभिधानवत् इति काव्यप्रकाशटीकायां महेश्वरः ॥

निरूढा । स्त्री । लक्षणाविशेषे ॥

निरूढिः । स्त्री । प्रसिद्धौ ॥

निरूपणम् । न । आलोके ॥ विचारे ॥ निदर्शने ॥ इति मेदिनी ॥ आलोकानुकूलशब्दे ॥

निरूपितः । त्रि । निर्धृते ॥ कृतनिरूपणे ॥ उपकल्पिते ॥

निरूहः । पुं । वस्तिभेदे ॥ यथा । वस्तिर्द्विधाऽनुवासाख्यो निरूहश्चेति संस्मृतः । यः स्नेहैर्दीयते स स्यादनुवासननामकः । कषायक्षीरतैलैर्यो निरूहः स निगद्यते इति ॥ निग्रहे ॥ तर्के ॥ त्रि । ऊहशून्ये ॥ निश्चिते ॥

निरेनाः । त्रि । निष्पापे ॥

निरेभः । त्रि । निःशब्दे ॥

निरोधः । पुं । नाशे ॥ रोधे ॥ निरोधनम् । रुधिर० । घञ् ॥ प्रलये ॥ निग्रहे ॥

निरोधनम् । न । निरोधे । प्रत्युपवेशने ॥ कारागारप्रवेशने ॥ रुधिर् आवरणे । ल्युट् ॥

निरोद्धव्यः । त्रि । रुन्धनीये ॥

निर्ऋतिः । पुं । दिक्पालविशेषे । नैर्ऋतकोणाधिपतौ ॥ स्त्री । अलक्ष्म्याम् ॥ नियतमृच्छति दुःखाय यत्र । निर्गता ऋतेः शुभादिति वा ॥ त्रि । निरुपद्रवे ॥

निरृथः । पुं । सामवेदे ॥ निरन्तरम् ऋच्छति । ऋच्छ गतिप्रापणयोः । अस्मान्निरीतियक् ॥ निर्ऋथोऽधिकेति वेदभाष्यम् ॥

निर्गः । पुं । देशे ॥ इति हेमचन्द्रः ॥

निर्गतः । त्रि । निःसृते ॥ बहिःप्राप्ते ॥ निर्मुक्ते ॥ निरराङ्गतः ॥

निर्गन्धः । त्रि । गन्धशून्ये ॥

निर्गन्धनम् । न । मारणे ॥ गन्धार्दने । भावे ल्युट् ॥

निर्गन्धपुष्पी । स्त्री । शाल्मलिद्रुमे ॥

निर्गमः । पुं । निःसरणे । निर्गमनम् । गम्लृ० । ग्रहवृद्दिति अप् ॥

निर्गमनम् । न । प्रतीहारे । द्वारे ॥

निर्गमनद्वारम्। न। नैर्याणिके॥

निर्गुणः। पुं। परमात्मनि। परमात्मन्दे॥ त्रि। परमार्थतः सत्त्वरजस्तमोगुणरहिते॥ रूपादिगुणहीने॥ निर्धनेके॥ निर्गताः गुणाः सत्त्वादयो रूपादयो वा यस्मात्॥ ज्यादिशून्ये॥

निर्गुणा। स्त्री। गुणत्रयोपचयापचयरहितसाम्यावस्थमायोपाधिकब्रह्मरूपिणी शक्तिः॥

निर्गुण्डी। स्त्री। शेफालिकाख्याम्॥ सिन्दुवारे। सम्भालु इति भाषा। निसिन्दा इति गौडभाषा॥ श्वेतनीलपुष्पभेदात् निर्गुण्डी द्विविधा मता॥ कमलकन्दे। करहाटे॥ निर्गुडति। गुड रक्षायाम्। इगुपधेति कः। पृषोदरादिः॥ गुडाद्वेष्टनान्निर्गतेति स्वामी। गौरादिः॥

निर्गूढः। पुं। वृक्षकोटरे॥ त्रि। संवृते॥

निर्ग्रन्थः। पुं। नग्ने। क्षपणके॥ निःस्वे। निर्धने॥ बालिशे। मूर्खे॥ द्यूतकारे॥ ग्रन्थेभ्यो निर्गतः॥ मनौ॥ त्रि। निर्वैरङ्गमने॥ निःसहाये। निर्गतहृदयग्रन्थ्याविति श्रीधरस्वामी॥

निर्ग्रन्थकः। पुं। क्षपणे॥ निष्फले॥ त्रि। अपरिच्छदे॥

निर्ग्रन्थनम्। न। मारणे॥ ग्रन्थिकौटिल्ये। भावे ल्युट्॥

निर्ग्रन्थिकः। पुं। क्षपणे॥ त्रि। निपुणे॥ हीने॥

निर्ग्राह्यः। त्रि। निग्रहीतुं शक्ये॥

निर्घटम्। न। बहुजनसङ्कीर्णहट्टे॥ इति हारावली॥ जनशून्यहट्टे॥ घटशून्ये॥

निर्घण्टः। पुं। निघण्टौ। निर्घण्टने। गणसङ्ग्रहे। ग्रन्थानां सूचीति ख्याते॥

निर्घातः। पुं। वाताभिहतवायुपतनजन्यशब्दविशेषे॥ यथा वराहः। पवनः पवनाभिहतो गगनादवनौ यदा समापतति। भवति तदा निर्घातः स च पापो दीप्तविहगरुतः॥ १॥ अर्कोदयेऽधिकरणिकनृपधनियोधाङ्गनावणिग्वेश्याः। आप्रहरांशेऽजाविकमुपहन्याच्छूद्रपौरांश्च॥ २॥ आमध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीडयति। वैश्यजलदांस्तृतीये चौरान् प्रहरे चतुर्थे तु॥ ३॥ अस्तं याते नीचान् प्रथमे यामे निहन्ति सस्यानि। रात्रेर्द्वितीययामे पिशाचसङ्घान्निपीडयति॥ ४॥ तुरगकरिणस्तृतीये विनिहन्याद्यायिनः स्व

मानमफलंभवेत् । खिखितंसाचि-
णोवापि पूर्व्वमानेरितंनचेत् ॥ यथा
पक्केषु धान्येषु निष्फलाःप्रावृषोगुणाः
। निर्णीतव्यवहाराणांप्रमाणमफलं
तथेतिव्यवहारतत्त्वम् ॥

निर्णेजकः । पुं । रजके ॥ निर्णेनेक्ति ।
णिजिर् ॥ बहुलः । उपसर्गादसमासे
ऽपीतिणत्वम् ॥

निर्णेजनम् । नं । चालने ॥ निर्णिजे
र्ल्युट् ॥

निर्णोता । त्रि । प्रतिभुवि ॥

निर्दंटः । त्रि । दयाहीने । निर्दये ॥
निष्प्रयोजने ॥ परापवादरते । अ
न्यदोषरते ॥ मत्तेऽपीतिशब्द० ॥

निर्दयः । त्रि । दयाहीने ॥ निर्गता द
या यस्मात् ॥

निर्दरम् । न । निर्भये ॥ सारे ॥ त्रि ।
कठिने ॥ अभये ॥ इतिमेदिनिकरः ॥
निर्गत. दरोयस्मात् ॥

निर्दहनः । पुं । भल्लातके ॥ अग्नि
मूर्ध्ने ॥

निर्दहनी । स्त्री । मूर्वालतायाम् ॥

निर्दाता । त्रि । लवनकर्त्तरि ॥ यथा
इरति निर्दाता कच धान्यस्य रचती
तिमनुः ॥

निर्दिग्धः । त्रि । बलिनि । मांसले ॥
इति हेमचन्द्र ॥

निर्दिश्यमानः । त्रि । उच्चार्यमाणे ॥

निर्दिष्टः । त्रि । प्रदिष्टे । प्रदर्शिते ॥ क
थिते ॥ निश्चिते ॥

निर्देशः । पुं । निदेशे । शासने । आ
ज्ञायाम् ॥ निर्देशनम् । दिश० । घ
ञ् ॥ निर्दिश्यते ऽभिधीयते ऽनेने
तिव्युत्पत्त्या प्रतिपादकशब्दे । ना-
म्नि ॥ भृतौ ॥ नाभिनन्देत मरणं ना
भिनन्देत जीवितम् । कालमेव प्रती
क्षेत निर्देशं भृतकोयथा ॥ व्यवहा
रे ॥ कथने ॥ उपान्ते ॥ देशान् नि
ष्क्रान्ते ॥ निरव बहिर्भावे ॥

निर्देश्यः । त्रि । निर्देष्टुं शक्ये ॥

निर्देष्टा । त्रि । निर्देशकर्त्तरि ॥

निर्दोषः । त्रि । दोषरहिते ॥ यथा ।
निर्दोषं दर्शयिष्यामि सदोषं यः प्रय
च्छति । समूल्याद् द्विगुणं दाप्यो वि
नयंतावदेवत्विति नारदः ॥

निर्द्धन । पु । जरद्गवे ॥ त्रि । धनहीने ॥

निर्द्धर्म्मः । त्रि । धर्मरहिते ॥

निर्द्धार । पु । निश्चये ॥

निर्द्धारणम् । न । जातिगुणक्रियासंज्ञा
भिः समुदायादेकदेशस्य पृथक् क
रणं ॥ तत्रयतस्तन्निर्द्धारणमितिषष्ठी
सप्तमीच विभक्तिर्भवति । यथा । म
नुष्याणां मनुष्येषुवा क्षत्रियः शूरत
मः । गवांगोषुवा कृष्णासम्पन्नक्षीरा

। अध्वगानामध्वगेषु वा धावन्तः श्रीघ्रतमा इति ॥ निश्चये ॥

निर्द्धारणीयः । त्रि । निर्द्धार्य्ये । निर्द्धारितव्ये ॥

निर्द्धारितः । त्रि । कृतनिश्चये ॥

निर्द्धार्य्यः । त्रि । निर्द्धारणीये ॥ निःश्र्वसं कर्म्मकर्त्तरि ॥ निर्द्धार्य्यः कार्य्यकर्त्ता यः संयतन् सत्त्वसम्पदा । व्यसनेऽप्यु द्ययेनापि ह्यविकारं सदात्मनः । तत्पुरुषमिति प्रोक्तम् ॥ तत् सम्पदा संयतन् उद्यमं कुर्व्वन्नित्यर्थः । संयुत इतिवा पाठः ॥ निश्चयेनध्रियते । धृञ्० । कर्म्मण्यत् ॥

निर्द्धूतः । त्रि । खण्डिते । परित्यक्ते ॥ निःसारीकृते ॥ समुन्मूलिते ॥

निर्द्धौतः । त्रि । प्रक्षालिते ॥ धावेः कर्म्मणि क्तः । च्छ्वोरितिवकारस्योठादेशः । एत्येधत्यूठ् स्विति वृद्धिः ॥

निर्ध्यानम् । न । निध्याने ॥ दर्शने ॥ ध्यैचिन्तायाम् । ल्युट् ॥

निर्द्वन्द्वः । त्रि । शीतोष्णादिद्वन्द्वसहिष्णौ ॥ रागद्वेषादिद्वन्द्वरहिते ॥ निर्गतोद्वन्द्वात् द्वन्द्वेभ्योवा ॥

निर्बन्धः । पुं । आग्रहे । अभिनिवेशे ॥ वपुर्बाधिषु निर्बन्धः कर्म्मिणो ननु साधितः । ज्ञानिनःसाधयत्येवमेत्वेनिर्बन्धो नैतरन्नहि ॥ निश्चयेनबन्धः ॥

निर्बाधः । त्रि । निरुपद्रवे ॥ विविक्ते ॥

निर्भटः । त्रि । दृढे ॥

निर्भयः । पुं । अश्वानेये ॥ रुद्रसावर्णे मनौ ऋषिभेदे ॥ त्रि । भीतिरहिते ॥ निर्गतं भयं यस्मात् यस्यवा ॥

निर्भरम् । न । अतिमात्रे ॥ निःशेषेण भरोभारोऽत्र । उपसर्गान्तरनिवृत्त्यर्थं निर्भरमित्युक्तम् ॥ त्रि । तद्वति ॥

निर्भर्त्सनम् । न । खलीकारे ॥ अलक्तके ॥ इति मेदिनी ॥

निर्भर्त्सितः । त्रि । धिक्कृते । निन्दिते । कृतनिर्भर्त्सने ॥

निर्भाग्यः । त्रि । भाग्यहीने । मन्दे । मूढे ॥

निर्भाज्यः । त्रि । पृथक्कार्य्ये ॥

निर्भिन्नः । त्रि । निःसारीकृते ॥

निर्भिन्नचिर्भिटः । पुं । निर्भिन्नकर्कटीफले । फूट इतिभाषा ॥

निर्भीकः । त्रि । निर्भये ॥

निर्मक्षिकम् । न । मक्षिकाणामभावे ॥

निर्माटः । पुं । घट्टे ॥

निर्मन्थनम् । न । नितरांविलोडने ॥ अतिनिर्मथना द्दधि चन्दनादपि जायते । विषायते ऽमृतमपि ययापथ्यम्मूर्खसः ॥

निर्मादः । पुं । मदहीनगजे । उद्धान्ते

॥ मदान्निर्गतः । निर्गतो मदो ऽस्माद्वा ॥

निर्मध्या । स्त्री । नलिकायाम् ॥

निर्मन्थ्यदारु । न । अरणौ । वह्निमन्थे ॥

निर्ममः । त्रि । भिक्षौ ॥ देहेपि ममेति प्रत्ययरहिते ॥ शरीरयात्रामात्रार्थेपि प्रारब्धकर्मोचितकौपीनाच्छादनादौ ममेदमित्यभिमानहीने ॥ देहपुत्रभार्यादिषु स्वीयेषु ममताशून्ये ॥

निर्मर्य्यादः । त्रि । अविनीते ॥ निर्गतो मर्य्यादायाः ॥

निर्मलम् । न । निर्माल्ये ॥ अभ्रके ॥ त्रि । मलहीने । शुद्धे ॥ रजस्तमोमलाभ्यामनभिभूते ॥ रागादिमलरहिते ॥ अविद्यातत्कार्य्यलक्षणमलरहिते ॥ मलान्निर्गतम् । निर्गतं मलमस्माद्वा ॥

निर्मलोपलः । पुं । स्फटिके ॥

निर्माणम् । न । निर्मितौ ॥ सारे ॥ समञ्जसे ॥ कामभेदे ॥ इति हेमचन्द्रः ॥

निर्माता । त्रि । निर्माणकर्त्तरि ॥ निर्मातीति । माङ् माने । तृच् ॥

निर्मानः । त्रि । मानरहिते ॥ निर्गतो मानात् ॥

निर्मानमोहः । त्रि । मानमोहाभ्यां निष्क्रान्ते । अहङ्काराविवेकाभ्यां रहिते ॥

निर्माल्यम् । न । देवार्पिते जिघ्रते । देवोच्छिष्टद्रव्ये ॥ यथा । अर्वाग्विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवतिच याहिति ॥ त्रि । माल्यशून्ये ॥

निर्माल्या । स्त्री । स्पृक्कायाम् ॥

निर्मितः । त्रि । कृतनिर्माणे । निष्पादिते । रचिते ॥

निर्मितकः । त्रि । मन्त्रौषध्यादिभिर्निष्पादिते ॥

निर्मितिः । स्त्री । निर्माणे । रचनायाम् ॥ असाधारणचमत्कारकारिणीरचनाहि निर्मितिरिति व्याख्यातारः ॥

निर्मुक्तः । पुं । मुक्तकञ्चुके भोगिनि ॥ त्रि । त्यक्तसङ्गे । निष्परिग्रहे ॥

निर्मुक्तिः । स्त्री । निवृत्तौ ॥

निर्मुटः । पुं । वनस्पतौ । अपुष्पवृक्षे ॥ खर्परे ॥ सूर्ये ॥ [illegible] । नरशम्भेद हट्टे । पण्याजिरे ॥

निर्मोकः । पुं । मोचने ॥ व्योम्नि ॥ सन्नाहे ॥ सर्पकञ्चुके । अहिकोषे ॥ निश्चयेन मुच्यते । मुच्लृ० । कर्मणि घञ् ॥

निर्मोचः । पुं । त्यागे ॥ मोचाभावे ॥

निर्य्यत् । त्रि । निर्गच्छति ॥

निर्य्यन्त्रणः । त्रि । विशृङ्खले । अवाधे । निरर्गले । स्वच्छन्दे ॥

निर्य्याणम् । न । वारणापाङ्गदेशे ॥ मोक्षे ॥ अध्वनिर्गमे ॥ पशूनांपादबन्धनदामनि ॥ निर्य्यात्यनेन । यागमने । ल्युट् ॥

निर्य्यातनम् । न । वैरशुद्धौ । दाने । त्यागे ॥ न्याससमर्पणे ॥ यतनिकारादौ । स्वार्थणिजन्तः । भावकर्मकरणादौ ल्युट् ॥ मारणे ॥ इतिहेमचन्द्रः ॥

निर्य्यासः । पुं । शालवाहे ॥ इ० हे० ॥

निर्य्यासः । पुं । कषाये । क्वाथे । कथितद्रव्यरसे ॥ वृक्षद्रवे । वृक्षान्निर्गच्छकठिनतोयातरसविशेषे । वेष्टके । गुंद इतिभाषा ॥

निर्य्युक्तिकः । त्रि । युक्तिरहिते ॥ यथा । नहिक्रियारहितं वाक्यमस्तीतिमाघोंप्रवादोनिर्युक्तिकत्वादयहेयइतिशब्दशक्तिप्रकाशिका ॥ निर्युक्तिकं प्रमाणस्तुनाप्ताभिर्विनिवार्य्यत इतिन्यायः ॥

निर्य्यूषः । पुं । निर्य्यासे ॥ इतिश०मा० ॥

निर्य्यूहः । पुं । आपीडे । शेखरे ॥ द्वारे ॥ निर्य्यासे ॥ नागदन्तके ॥ निर्य्यूहति । यूहलौकिकोधातुः । इगुपधेतिकः ॥ निरूहतिवा । पृषोदरादित्वात् धातोर्यङागमः ॥ मत्तवारणे ॥

निर्य्योगः । पुं । गोःपादबन्धनरज्जौ ॥ निर्युज्यतेगौरनेन । युजिर् ० । घञ् ॥

निर्ल्लज्जः । त्रि । लज्जाहीने । पापकृत्पृष्ठे ॥ इतिहेमचन्द्रः ॥

निर्ल्लिप्तः । पुं । श्रीकृष्णे ॥ त्रि । लेपरहिते ॥

निर्ल्लेखनम् । न । कर्णे ॥

निर्ल्लेपः । त्रि । लेपवर्जिते ॥ शुद्धे ॥ आसङ्गरहिते ॥ पापशून्ये ॥

निर्ल्लोडितः । त्रि । आलोकिते ॥

निर्ल्लयनी । स्त्री । सर्पत्वचि । कञ्चुके ॥ यस्मात्त्वचिसर्पोनितरां लीयते सा निर्ल्लयनी सर्पत्वगितिव्याख्यातारः ॥

निर्व्वचनम् । न । निरुक्तौ । शब्देनाभिधाने ॥ निश्चितं वचनम् ॥

निर्व्वपणम् । न । दाने । पन्नादीनां संविभागे ॥ टुवप् ० । भावेल्युट् ॥

निर्व्वरः । त्रि । निर्हरार्थेषु । इतिहेमानेकार्थः ॥

निर्व्वर्णनम् । न । दर्शने ॥ वर्णशब्दात् सत्यापेतिणिच् । ल्युट् ॥

निर्व्वर्त्तयन् । त्रि । कुर्वति ॥

निर्व्वर्त्तितः । त्रि । निष्पादिते ॥

निर्व्वहणम् । न । नाट्योक्त्या प्रस्तुतकथासमाप्तौ । प्रकृताभिनयस्य निर्वाहे । निर्व्वायास ॥ निर्वाहोनिर्वहणम् ।

वहेर्ल्युट् ॥ नाटकसन्ध्यन्तरे ॥ यथा ॥ मुखं प्रतिमुखञ्चैव गर्भो विमर्ष एव च । तथा निर्वहणञ्चेति नाटके पञ्चसन्धयः इति भरतः ॥

निर्वहणा । स्त्री । निष्ठायाम् । प्रकृताभिनयनिर्वाहे । निर्वहणे ॥ टाप् ॥

निर्वाहिता । त्रि । निर्वोढरि ॥

निर्वाणम् । न । अस्तङ्गमने । विनाशे ॥ निर्वृतौ ॥ गजमज्जने ॥ सङ्गमे ॥ मोक्षे । अपवर्गे ॥ यथा । यतित्वं समत्वेन निर्वाणमपि चेच्छतीति ॥ समस्तबुद्धे निर्वाणे फलमुक्तं श्रुतौ स्मृतौ ॥ सर्वदुःखोपशमलक्षणं परमानन्दरूपं निर्वाणमिति भाष्यकारः । सर्वदुःखोपशमात्मकत्वान्निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थकैवल्यरूपं ब्रह्म निर्वाणमित्युच्यत इति व्याख्याकारः ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नमः इति विष्णोर्निर्वाणरूपत्वे भारतवचनम् ॥ निःस्वने ॥ शून्ये ॥ विश्रान्ते ॥ अपवर्गसाधनग्रन्थविशेषे ॥ विद्योपदेशने ॥ आदिगुरुविकले (ऽ) ॥ त्रि । मुक्ते ॥ शान्ते मुनिवह्न्यादौ । चरमावस्थमुनौ ॥ चरमावस्थवह्नौ ॥ वन्यान्निर्गमनं निर्वाणम् । गत्यर्थक वाधातोर्भावे ल्युट् ॥ निर्वातिस्म । वा गतिगन्धनयोः । गत्यर्थेति क्तः । निर्वाणोऽवातइति साधु ॥ आदिना निर्वाणो हस्ती निमग्नइत्यर्थः । आदिना निर्वाणं मुक्तिं निर्वृतिश्चेत्यपि वदन्ति ॥ यथा । प्रियदर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । निर्वाणमाप्यते येन सरागेणापि चेतसेति ॥

निर्वाणमस्तकः । पुं । मुक्तौ ॥ इति त्रिकाण्डशेषः ॥

निर्वातः । त्रि । वायुरहिते ॥ निर्वातिस्म । वा० । गत्यर्थेति क्तः ॥ निर्गतो वातो गतो वा ॥

निर्वादः । पुं । लोकवादे ॥ परिनिष्ठितवादे ॥ अपवादे ॥ निर्वदनम् । सदत्यक्तायांवाचि वदेरभिवादनस्तुत्योर्वा । निष्पूर्वाद्वदेर्भावे घञ् ॥

निर्वापः । पुं । निवापे ॥

निर्वापणम् । न । वधे ॥ दाने ॥ टुवप० । स्वार्थे णयन्तः । ओवै शोषणे वा । ल्युट् ॥

निर्वाप्यः । त्रि । कर्त्तव्ये ॥

निर्वार्यः । त्रि । निःशङ्कः कर्मकृति । सत्वसम्पदासम्पतन् कार्यकर्त्तरि ॥ भयविस्मयव्यसनाभ्युदयादौ निर्विकारमनःसत्वम् तत्सम्पदासम्पतन् उद्यमं कुर्वन् यो निःशङ्को भूत्वा कर्मकृ

यते स निर्वाय उच्यते ॥ निश्चयेन नियते । वृष० । कर्म्मण्यर्थेत् ॥

निर्वासनम् । न । मारणे । हिंसने ॥ नगरादेर्बहिष्कृतौ ॥ वासच्छेदे । चुरादिः । भावे ल्युट् ॥

निर्वासितः । त्रि । निष्कासिते ॥

निर्वास्यः । त्रि । निर्वासनीये ॥

निर्वाहः । पुं । कार्य्यसाधने ॥ निर्वहणम् । वह० । घञ् ॥ निष्पत्तौ । समाप्तौ ॥ यावता स्यात् स्वनिर्वाहः स्वीकुर्यात् तावदर्थवित् । आधिक्ये न्यूनतायाञ्च च्यवते परमार्थतः इत्युपदेशः ॥

निर्वाहकः । पुं । कार्य्यसाधके । सम्पादके ॥ नहि स्वपरनिर्वाहकस्य परापेक्षा भवति ॥

निर्वाहकैक्यम् । न । सङ्गत्यन्तरे ॥ साक्षात्परम्परया वा एककार्य्यानुकूलत्वे ॥

निर्वाह्यम् । न । निर्वाह्ये ॥

निर्वाहिका । स्त्री । प्रवाहिकायाम् ॥

निर्विकल्प । पुं । सर्वविकल्पशून्ये परमात्मनि ॥ त्रि । कल्पनाहीने ॥ निरस्तभेदे ॥ निर्गतो विकल्पो विविधाकल्पना यस्मात् ॥ भोगैकवासनां त्यक्त्वा त्यक्त्वा त्वं भेदवासनाम् । भावाभावौ ततस्त्यक्त्वा निर्विकल्पोस्थितो भव ॥

निर्विकल्पकः । पुं । असम्प्रज्ञातसमाधौ । ज्ञातृज्ञानादिविकल्पभेदलयापेक्षया ऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थाने ॥ तत्र दृष्टान्तः । जलाकाराकारितलवणानवभासेन जलमात्रावभासवत् अद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेवावभासत इति । ततश्चास्य निर्विकल्पकसमाधेः सुषुप्तेश्चाभेदशङ्का न भवति । उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेण तयोर्भेदोपपत्तेरिति । सुषुप्तौ बुद्धिर्हि नास्ति बुद्धेः कारणात्मनावस्थानस्य तत्र स्वीकारात् । इह तु बुद्धिवृत्तेरद्वितीयवस्त्वाकाराकारितायाः अवस्थानाङ्गीकारात् सुषुप्तेर्भेदोपपत्तेरितिभावः । नापि मुक्तावतिव्याप्तिः । तत्रापि अविद्यातत्कार्य्यसंस्काराणामत्यन्तमुच्छेदात् । इह पुनर्व्युत्थानादिव्यवहारदर्शनेन तेषामनुवृत्तेरिष्टत्वात् । नापि जीवन्मुक्तौ प्रसङ्गः । तत्र व्युत्थानदशायामपि बाधितानुवृत्तिनामरूपावभासेऽपि स्वस्वरूपप्रदानख्यानात् । साधकस्य बाधितानुवृत्तिनामरूपावभासाभावादिति ॥

इतिभावप्रकाशः ॥

निर्विष्टः । त्रि । भुक्ते ॥ कृतनिवेशे ॥ प्राप्ते ॥ स्थिते ॥ विवाहिते ॥ कृताग्निहोत्रे ॥

निर्विषा । स्त्री । काकक्रोडाख्यायाम् । कतृसिस् इतिभाषा इतिराजनिर्घण्टः ॥

निर्वीरः । त्रि । वीरशून्ये ॥

निर्वीरा । स्त्री । अवीरायाम् । पतिपुत्रविहीनायाम् ॥

निर्वीर्य्यः । त्रि । निष्प्रभावे ॥

निर्वृसः । त्रि । उपरतस्वभावे ॥

निर्वृतिः । स्त्री । सुस्थितौ ॥ अस्तगमने । मृत्यौ ॥ सुखे ॥ मोक्षे ॥ सिद्धौ ॥

निर्वृत्तः । त्रि । निष्पन्ने ॥ निर्वर्त्तते स्म । वृतुवर्त्तने । क्तः ॥ प्राप्ते ॥

निर्वृत्तिः । स्त्री । निष्पादे ॥ समाप्तौ ॥ यथा ऽध्ययननिर्वृत्तिरिति ॥ त्रि । वृत्तिरहिते ॥

निर्वेदः । पुं । स्वावमानने ॥ एतावता कालेनाप्ययं न सिद्धः किमतः परं कष्टमित्यनुतापे । खेदे ॥ वैराग्ये ॥ यथा । यदाते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदागन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चेति ॥ शान्तरसस्य स्थायिभावे । निर्वेदः स्थायिभावोऽस्ति शान्तोपि नवमो रसः ॥ परवैराग्ये ॥ यथा । ततः कदाचिन्निर्वेदान्निराकाराश्रितेन च । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मयेति मोक्षधर्म्मः ॥

निर्वेशः । पुं । भोगे ॥ वेतने ॥ मूर्च्छने ॥ निर्वेशनम् निर्विश्यते ऽनेन वा । विश० । अकर्त्तरि चेति हलश्चेति वा घञ् ॥

निर्वेशनम् । न । उपभुक्तौ ॥

निर्वेष्टनम् । न । नाडिचीरे । सूत्रवेष्टनस्याम् ॥ त्रि । वेष्टनरहिते ॥

निर्वैरः । त्रि । सर्वभूतेष्वपकारिष्वपि द्वेषरहिते ॥ निष्क्रान्तो वैरात् ॥

निर्वोढः । त्रि । निर्वहितरि ॥

निर्व्यग्रः । त्रि । स्वस्थे ॥

निर्व्यथनम् । न । छिद्रे । रन्ध्रे ॥ व्यथ० । भावेल्युट् । निश्चयेन व्यथनं भयं चलनं वा यत्र ॥

निर्व्यपेक्षः । त्रि । निस्पृहे ॥

निर्व्यूढः । त्रि । त्यक्ते ॥ समाप्ते ॥

निर्व्यूहः । पुं । शेखरे ॥ द्वारि ॥ निर्यासे ॥ नागदन्तके ॥ निर्व्यूहति । इगुपधेतिकः ॥

निर्व्यूह्यमानः । त्रि । इतस्ततश्चाल्यमाने ॥

निर्हरणम् । न । दाहार्थं शवादिनय

नी ॥ निःक्रोशने ॥ निःशेषेण हरणे ॥

निर्हारः । पुं । शल्याद्युत्पाटने । अभ्यवकर्षणे ॥ मलमूत्रादित्यागे ॥ निर्हरणम् । हृञ्० । घञ् ॥ यथेष्टविनियोगे ॥ न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥

निर्हारिगृहम् । न । } विण्मूत्रादि-
निर्हारस्थानम् । न । } त्यागार्थगेहे । पायखाना इतिभाषा ॥

निर्हारी । पुं । दूरगामिगन्धे । समाकर्षिणि ॥ त्रि । सुरभि ॥

निर्हृतः । त्रि । हृते ॥

निर्ह्रादः । पुं । स्वाने । शब्दे ॥

निलयः । पुं । गृहे । वेश्मनि ॥ निलीयते ऽत्र । लीङ् श्लेषणे । पुंसीतिघः ॥

निलयनम् । न । आधारे ॥ स्थाने ॥ निलीयतेऽस्मिन् । लीङ्० । ल्युट् ॥

निलायी । त्रि । निलायिनि ॥

निलिम्पः । पुं । देवे । सुरे ॥ निलिम्पति । लिप उपदेहे । नौलिम्पेरिति शः । मुचादित्वान्नुम् ॥

निलिम्पा । स्त्री । गवि ॥

निलिम्पिका । स्त्री । निलिम्पायाम् । सौरभेय्याम् ॥ स्वार्थेकन् ॥

निलीनः । त्रि । निःशेषेणलीने । संखने ॥

निवचनेकृत्य । अ । } वाचं नियम्येत्य-
निवचनेकृत्वा । अ । } र्थे ॥ वचनाभावो निवचनम् । अर्थाभावेऽव्ययीभावः । तृतीयासप्तम्योर्बहुलम् । अध्येषणे निवचनेचेतिगतिसंज्ञा । कुगतिप्रादयइति समासः ॥

निवपनम् । न । पितृउद्देश्यकदाने ॥

निवरा । स्त्री । कन्यायाम् । कुमार्याम् ॥ वृञ्० । वृञ्० । आभ्यां अच्छदित्यादिनाकमप् ॥

निवर्त्तनम् । न । व्यावर्त्तने । निवृत्तौ ॥ यतोयतो निवर्त्तते ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ विंशतिवंशपरिमाणे ॥

निवर्त्तितः । त्रि । आकृष्टे ॥

निवर्हणम् । न । मारणे ॥ बर्हहिंसायाम् । भावेल्युट् ॥

निवर्हयितः । त्रि । वध्ये ॥

निवर्हितः । त्रि । अपहृते ॥

निवसतिः । स्त्री । गृहे ॥

निवसथः । पुं । ग्रामे ॥ इति हेमचन्द्रः ॥

निवसनम् । न । वस्त्रे ॥ गृहे ॥ निवसेर्ल्युट् ॥

निवहः । पुं । समूहे ॥ नितरामूह्यते । ऊह० । पुंसीतिघः ॥ सप्तवाव्यमार्गतवायुविशेषे ॥ नितरां वहति । वह० । पचाद्यच् ॥

निवातः। पुं। दृढसन्नाहे। अभ्याभे द्यवर्मणि॥ आश्रये॥ त्रि।वातशून्ये॥ निरुद्धो निवृत्तो वा वातोऽस्मात्॥

निवातकवच.। पुं। अच्छिद्रकञ्चुके॥ हिरण्यकशिपोः पौत्रे दैत्ये। संह्रादपुत्रे॥

निवापः। पुं। पितृदाने। सपिण्डनादूर्ध्वंपितृद्देशेनदाने॥ न्युप्यते निवपनं वा। डुवप०। कर्मणि भावे वा घञ्॥ दानमात्रे॥

निवारः। पुं। निवारणे॥

निवारणम्। न। निश्चयेनवारणे॥

निवारितः। त्रि। निराकृते। कृतनिवारणे॥

निवासः। पुं। गृहे॥ निवसन्त्यस्मिन्। वस०। घञ्॥ निवासदेशे॥ निवासो नाम यत्र सम्प्रत्युष्यतइति भाष्यम्॥

निवासी। त्रि। निवसनशीले॥ निवसति तच्छीलः। वस०। णिनिः॥

निविडः। त्रि। सान्द्रे। घने। नीरन्ध्रे। दृढे॥ निविडाःकेशाः॥ अवटीटे॥ नासिकाया.नतम्। नेर्विडच्बिरीसचौ। तद्योगान्नासिकानिविडा॥

निविरीसः। त्रि। अवनाटे। निविडे॥ नासिकायानतम्। नेर्बिडच्बिरीसचौ। तद्योगान्नासिका निविरीसा पुरुषोनिविरीसः॥ सान्द्रे॥

निविष्टः। त्रि। स्थिते॥ निविश०। क्तः॥ प्रविष्टे॥ यथा। उडुगणपरिवारो नायकोप्योषधीनाममृतमयशरीरः कान्तियुक्तोपिचन्द्रः। भवति विकलमूर्तिर्मण्डलं प्राप्य भानोः परसदननिविष्टःकोलघुत्वंनयातीति॥

निवीतम्। न। कण्ठलम्बिते यज्ञसूत्रे॥ त्रि। प्रावृते। परिहित वस्त्रे॥ निवीयतेस्म। व्येञ्संवरणे। क्तः। सम्प्रसारणादिः॥ यथा। निवीयतेस्म। अच०। अजेर्विः। वीगत्यादिषु वा। क्तः॥ न्यनतिस्म निवेतिस्मवा। गत्यर्थेतिक्तः॥ निम्नधोभागे वीतं गमन मस्य वा॥

निवीती। पुं। कण्ठलम्बियज्ञसूत्रवति द्विजे॥ शिरोवधाय दक्षिणपाण्यादावप्यनुद्धृतेकण्ठादेवसव्याने यज्ञसूत्रे वस्त्रे वा निवीती द्विजो भवति॥ निवीतमस्यास्ति। अतइनिठनाविति इनिः॥ कृतोपवीती देवेभ्यो निवीतीच भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रा नृषींस्तथा॥

निवृतम्। त्रि। निवीते॥ परिच्छिते। परिस्फाटिना वेष्टिते॥ निग्रियते-

स्म । वृध्° । क्तः ॥

निवृत्तः । त्रि । व्यावृत्ते ॥ गते ॥ परिसमाप्ते ॥ निवृत्तिविशिष्टे । विरते ॥

निवृत्तचक्षुः । त्रि । आवृतनेत्रे ॥ निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि बाह्यानि करणानि येन ॥

निवृत्तात्मा । पुं । निषेधे ॥ निषेधस्तु निवृत्तात्मा कालकर्मानपेक्षते ॥

निवृत्तिः । स्त्री । उपरतौ । उपरमे । विरतौ ॥ यद्विषयं यदाश्रय प्रमाणं तद्विषयतदाश्रयप्रमाणाभावात् तन्निवृत्ति र्भवति ॥ प्रवृत्तिप्रागभावे ॥ निवर्त्तते निवर्त्तनं वा । वृतु° । क्तिन् ॥

निवेदकः । त्रि । विज्ञापनस्य कर्त्तरि ॥

निवेदनम् । न । आवेदने । सम्मानपूर्वकविज्ञापने ॥ नि विद° । ल्युट् ॥ समर्पणे ॥

निवेदितः । त्रि । कृतनिवेदने ॥

निवेशः । पुं । विन्यासे ॥ सैन्यविन्यासे ॥ शिबिरे । आगन्तुकसैन्यवासे ॥ उद्वाहे ॥ स्थाने ॥ निवेशनम् । निविश° । घञ् ॥ निविशन्त्यस्मिन् । इत्यत्वेतिघञ् ॥ कटके ॥ इतिशब्दाम्बुधौ प्राणकृष्णः ॥

निवेशनम् । न । गेहे ॥ स्थितौ ॥ प्रवेशे ॥ निविश° । ल्युट् ॥

निवेशनीयः । त्रि । निवेष्टुयोग्ये । निवेशनार्हे ॥

निवेशितः । त्रि । विहिते ॥ विशतेर्ण्यन्तात् कर्म्मणि क्तः ॥

निवेश्यः । त्रि । निवेशनीये ॥

निट् । स्त्री । निशायाम् । रात्रौ ॥ नितरां श्यति तनूकरोति व्यापारान् । शोतनूकरणे । आतश्चोपसर्गइतिकः । पृषोदरादिः ॥

निशठः । पुं । बलदेवात्मजे ॥

निशमनम् । न । दृष्टौ ॥ श्रुतौ ॥

निशा । स्त्री । रजोजनन्याम् । रात्रौ ॥ नितरां श्यति तनूकरोतिव्यापारान् । शो° । आतश्चोपसर्गइतिकः ॥ टाप् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥ लग्नविशेषे ॥ यथा । मेषोगोपतियुग्मच कर्किधन्विमृगा स्तथा । निशासंज्ञाःस्मृतास्त्वेते शेषास्त्वन्ये दिनात्मकाइति ॥

निशाकरः । पुं । चन्द्रे ॥ निशां करोति । डुकृञ्° । दिवाविभानिशेति टः ॥ कुक्कुटे ॥

निशाख्या । स्त्री । हरिद्रायाम् ॥

निशागणः । पुं । गणरात्रे । रात्रिसमूहे ॥

निशाचरः । पुं । राक्षसे ॥ फेरौ । शृगाले । पेचके । भूके ॥ सर्पे ॥ भूते

॥ चक्रवाके ॥ चोरकमेचके ॥ निशायां चरति । चर॰ । चरेट. ॥ त्रि । रात्रिचरमात्रे ॥

निशाचरी । स्त्री । पांशुलायाम् । कुलटायाम् ॥ राक्षस्याम् ॥ यथा नैषधे। निशाचरी समगदशाम्बराले खिला निरहितर्ग शशाममत्पतिपुराणा स्त्रीदिताम् । क्रियां तदनुगा सखी हृदय एव चिन्ताविशत् तयोर्दमन कार्यं त्वमसि केवलं भूपते ॥ केशिनीनामगन्धद्रव्ये ॥ टित्त्वात् ङीप् ॥

निशाचर्म । न । तमसि । अन्धकारे ॥

निशाजलम् । न । हिमे । तुहिने ॥

निशाटः । पुं । पेचके ॥ निशाया मटति । अट्॰ । अच् ॥ निशाचरे ॥

निशाटकः । पुं । गुग्गुलौ ॥ इति राजनिर्घण्टः ॥

निशाटन । पुं । उलूके । पेचके ॥ निशाचरे ॥

निशातः । त्रि । तेजिते । निशिते । शोणिते ॥ निशायते स्म । शो॰ । क्तः । शाछोरिति पक्षे इत्वाभाव. ॥

निशाद. । त्रि । निशाभुजि ॥

निशादिः । स्त्री । सन्ध्यायाम् ॥ इति राजनिर्घण्टः ॥

निशानम् । न । तीक्ष्णीकरणे ॥

निशान्तम् । न । सद्मनि । गृहे । भवने



॥ उषसि । प्रभाते ॥ यथा । निशान्ते निशान्ताङ्गनागानयुक्ते स्फुरत्सारकामानुमद्भानुपूते । प्रसन्नाम्बरान्ते रटद्भृङ्गगीते जगद्वन्दितुमुच्च निद्रां हगमे ॥ इत्युत्कलदयारामभट्टाचार्यः ॥ त्रि । शान्ते ॥

निशान्ध । त्रि । रात्र्यन्धे ॥

निशान्धा । स्त्री । जतुकालतायाम् ॥

निशापतिः । पुं । चन्द्रे ॥ निशायाः पतिः ॥ कर्पूरे ॥

निशापुष्पम् । न । उत्पले ॥

निशाबलः । पुं । मेषवृषमिथुनकर्कटधनुर्मकरराशिषु ॥

निशाभङ्गा । स्त्री । दुग्धपुष्प्याम् । दुग्धपेया इति गौडभाषा ॥

निशामणिः । पुं । चन्द्रे ॥ निशाया मणिरिव ॥

निशामनम् । न । दर्शने । चाक्षुषज्ञाने ॥ आलोचने ॥ श्रवणे ॥ चापनमात्रे ॥

निशामृगः । पुं । शृगाले ॥

निशारणम् । न । मारणे ॥ शृ हिंसायाम् । स्वार्थणिजन्त. । भावे ल्युट् ॥ पुं । रात्रियुद्धे ॥

निशारत्न । पुं । चन्द्रे ॥ इति हेमचन्द्र ॥

निशारुक. । पुं । सप्तरूपकान्तर्गतरूपकभेदे ॥ तल्लक्षणं यथा । लघुद्रन्द

गुरुद्वन्द्वं लघुद्वयं ततोऽथ कः स्मृतः। चतुर्विंशति वर्णैः स्युरसेनाख्ये निशाचकः ॥ तालविशेषे ॥ यथा। प्रविश्य नर्त्तकीरङ्गं विकीर्य कुसुमादिकम्। निशाचकेन तालेन कोमलं नृत्यमाचरेत् ॥ इति सङ्गीतदामोदरः ॥

निशावनः। पुं। शणे ॥ इति राजनिर्घण्टः ॥

निशावेदी। पुं। कुक्कुटे इति हेमचन्द्रः ॥

निशाह्वसः। पुं। कुमुदे। कैरवे ॥ इति त्रिकाण्डशेषः ॥ निशायां ह्वसः हसनं विकाशो ऽस्य ॥

निशाह्वा। स्त्री। हरिद्रायाम् ॥ निशा आह्वा यस्याः। निशापदेन सर्वे रात्रिपर्य्याया हरिद्रानामानि भवन्ति ॥

निशितः। त्रि। शाणिते। तीक्ष्णीकृते ॥ निशायतेस्म। शो॰। क्तः। शाछो-रिति वेत्त्वम् ॥ न। लौहे ॥

निशिपालः। पुं। छन्दोविशेषे ॥ यथा। तालधररज्जुधररजधरसुन्दरम् भावयुतनागगणमन्यकृतचामरम्। मुह्यति नागपतिचित्तकृतसङ्गमम् वृत्तनिशिपालमसिताचिहृदयङ्गमम् ॥ यथा। चन्द्रमुखि जीवमुषि याति मलयानिले याति मम चित्तमिव गाढमदनानले। तापकरकामशरमल्यभरशोषितं मा निरूहिप-

स्य नहि रोष मतिसञ्चितमिति ॥

निशिपुष्पा। स्त्री।
निशिपुष्पिका। स्त्री। } शेफालिका-याम्। शारोल इति हारसिङ्गार इति च भाषा ॥

निशिपुष्पी। स्त्री। निशिपुष्पिकायाम् ॥ निशि रात्रौ विकसितानि पुष्पाण्यस्याः। मध्यमपदलोपः। सप्तम्या अलुक्। पाककर्णेति ङीष् ॥

निशीथः। पुं। अर्द्धरात्रे ॥ निशेरते ऽस्मिन्। शीङ्॰। निशीथगोपीथावगथाः इति थक् ॥ रात्रिमात्रे ॥

निशीथिनी। स्त्री। त्रियामायाम्। रात्रौ ॥ निशीथो ऽस्त्यस्याम्। इनिः ङीप् ॥

निशीथिनीनाथः। पुं। चन्द्रमसि ॥

निशीथ्या। स्त्री। रात्रौ इति भूरि॰ ॥

निशुम्भः। पुं। शुम्भावरजे दानवविशेषे ॥ वधे ॥

निशुम्भनम्। न। मारणे ॥ इति हलायुधः ॥

निशुम्भमथनी। स्त्री।
निशुम्भमर्द्दिनी। स्त्री।
निशुम्भशुम्भमथनी। स्त्री। } दुर्गायाम् ॥

निशुम्भी। पुं। बुद्धविशेषे। वज्रकपालिनि। वज्रटीके ॥

निशैतः। पुं। चक्रपक्षिणि ॥ इति त्रि

काण्डशेषः ॥

निशोथा । स्त्री । त्रिवृतायाम् । रेचन्याम् ॥

निश्चयः । पुं । संशयान्यज्ञाने । निर्णये । सिद्धान्ते । अध्यवसाये । इदमित्थमेवेति संशयविपर्ययरहिते विषयपरिच्छेदे ॥ निश्चयनम् ॥ चिञ् ० ॥ घटवृदनिश्चिगमश्चेत्यपि ॥ चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् । अस्त्येवास्ति तदन्यन्नाकिञ्चिदपि निश्चयो विदुषामिति पूज्यपादाः ॥ प्रमाणनिबन्धने । शास्त्राचार्यवचनतात्पर्यविषयेऽर्थे ॥

निश्चलः । त्रि । अचले ॥ स्थिरे ॥ असम्भावनाविपरीतभावनारहिते ॥ आयत्तमदर्थनकथाविक्षेपरहिते ॥ अवहितकरणकलापे ॥

निश्चला । स्त्री । भूमौ । अचलायाम् ॥ शालपर्ण्याम् ॥

निश्चलाङ्गः । पुं । बके ॥ त्रि । पर्वतादौ ॥ स्पन्दरहिते ॥

निश्चायकः । त्रि । निर्णायके । निश्चयकर्त्तरि ॥

निश्चारकः । पुं । पुरीषस्यचये ॥ स्वैरे ॥ समीरणे ॥ इति मेदिनी ॥

निश्चितः । त्रि । विशेषतयाज्ञाते । प्रमायते निर्णीते ॥ यथा । जगतश्च मूलं तत्परिज्ञानात् परं श्रेय इति सर्वोपनिषदां निश्चितोऽर्थ इति भाष्यम् ॥ निश्चितवति ॥ ब्रह्मविदि ॥ निसु चिञ् ० । कर्त्तरि क्तः ॥

निश्चिन्तः । त्रि । चिन्ताशून्ये । चिन्तामुक्ते ॥ निर्गताचिन्तायस्मात् ॥ यथा । वेदचिन्तया मुक्तौ परमानन्दमाप्नुतौ । यो विमूढो जडो बालो यो गुणेभ्यः परं गतः ॥

निश्चीयमानः । त्रि । निश्चयविषये ॥

निश्चीरानदी । स्त्री । तीर्थविशेषे ॥

निश्चुक्कणम् । न । दन्तशाणे । मिसि इति भाषा ॥ इति त्रिकाण्डशेषः ॥

निश्चेष्टः । त्रि । ईहारहिते । निरुद्योगे ॥ निर्गता चेष्टा यस्मात् ॥

निश्चेष्टता । स्त्री । कायिकव्यापाराकरणे ॥

निश्चेष्टाकरणः । पुं । कामबाणविशेषे ॥ मनःशिलाघटितौषधविशेषे ॥

निश्रेणी । स्त्री । अधिरोहिण्याम् । काष्ठादिकृतारोहणमार्गे । निसैनी इति भाषा ॥ नियता श्रेणिः पङ्क्तिरत्र ॥

निश्वासः । पुं । श्वसने । बहिर्मुखश्वासे ॥ निश्वसनम् । श्वसप्राणने । घञ् ॥

निश्वाससंहिता । स्त्री । वराहपुराणप्रसिद्धे शिवप्रणीततन्त्रविशेषे ॥

निषङ्गः । पुं । तूणीरे ॥ नितरां सज्यन्ते शरा अत्र । षञ्ज० । हलश्चेति घञ् ॥ सङ्गमे ॥

निषङ्गथिः । पुं । समालिङ्गे ॥ निषजति । षञ्ज सङ्गे । निषञ्जेर्गथिन् । च जोरिति कुत्वम् ॥

निषङ्गी । त्रि । धनुर्द्धरे ॥ तूणीरे ॥ निषङ्गोऽस्यास्मिन् वास्ति । इनिः ॥

निषण्णः । त्रि । आसीने ॥ यथास्थानस्थिते ॥ यथा । क्वचित् प्रमोदो भवति स्वस्थे रपि विचेष्टितैः । निषण्णं भोजयेत् तस्मान्मूत्रोच्चारौ चकार येदिति ॥ निषीदतिस्म । षद्लृ० । गत्यर्थेति क्तः । रदाभ्यामिति नः ॥

निषण्णकम् । नं । सुनिषण्णे ॥ त्रि । आसीने ॥

निषदनम् । नं । स्थाने ॥ निषद्यतेऽनेन सीदन्त्यत्र । षद्लृ० । अधिकरणे ल्युट् ॥

निषद्या । स्त्री । आपणे । हट्टे ॥ निषीदन्त्यस्यां जनाः । षद्लृ० । संज्ञायां समजेति क्यप् । सदिरप्रतेरिति षः ॥ क्षुद्रखट्वायाम् ॥

निषद्वरः । पुं । जम्बाले । कर्दमे ॥ निसीदन्त्यनेन । षद्लृ० । नौसदेरिति ष्वरच् । सदिरप्रतेरिति षत्वम् ॥ यदा । निषदनम् । सं० । क्विप् । निषद् आसनस्य वरः आवरकः । वृञ् आवरणे आधृषीयः । पचाद्यच् ॥ स्मरे ॥

निषद्वरी । स्त्री । निशायाम् ॥ षित्वान्ङीष् ॥

निषधः । त्रि । कठिने ॥ पुं । देशविशेषे । बहुवचनान्तः ॥ तद्देशराजे ॥ निषादस्वरे ॥ पर्वतविशेषे । इलावृतस्य दक्षिणे हिमवत्सेयोजनविस्तीर्णे पूर्वतोदैर्घ्येपरिधिपर्यन्तमर्यादाशैले ॥ निषीदति । षद्लृ० । अच् । पृषोदरादिः ॥

निषादः । पुं । तन्त्रीसमुत्थिते कण्ठोत्थिते च स्वरविशेषे ॥ निषादं रौति कुञ्जरः ॥ पारशवे । ब्राह्मणाच्छूद्रकन्यायामूढायामुत्पन्ने धीवरविशेषे ॥ चण्डाले ॥ निषीदति मनो यस्मिन् पापमस्मिन्वा । षद्लृ० । हलश्चेति घञ् । सदिरप्रतेरिति षत्वम् ॥ वेणोर्मन्थनादुत्पन्ने ॥ दग्धस्थाणुप्रतीकाशो विकटाक्षो विह्रस्वकः । किङ्करोमीति तान् सर्वान् विप्रानाह सचातुरः ॥ निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत् । ततस्तत्सम्भवा जाता विन्ध्यशैलनिवासिनः ॥ निषादा मुनिशार्दूल पापकर्मोपलक्षणाः । तेन द्वारेण निष्क्रान्तं

तत् पापं तस्य भूपतेः ॥ निषादास्ते ततो जाता वेनकल्मषनाशनाः ॥ इति विष्णुपुराणम् ॥

निषादकर्षूः । पुं । देशविशेषे ॥

निषादाधिपः । पुं । रामायणप्रसिद्धे गुहाख्ये ॥ निषादानामधिपे ॥

निषादी । पुं । हस्तिपके । हस्त्यारोहे ॥ निषीदत्यवश्यम् । सद्लृ० । आवश्यके णिनिः ॥ यद्वा । निषादयत्युपवेशयति हस्तिनम् । ग्रहादित्वात् आवश्यके वा णिनिः ॥ उपविष्टे ॥

निषिद्धः । त्रि । स्वभावगतेष्टसाधनता निषेधकनञ्पदयोगिवाक्यगम्ये । विधायकानुपस्थितनञ्योगिवाक्यगम्ये ॥ बाधिते ॥ निषेधविषये ॥ निषिध्यते निषिद्धस्तेनासौ । षिधु० । कर्त्तरि कर्मणि वा क्तः ॥

निषिद्धकर्म्म । न । नरकाद्यनिष्टसाधने ब्राह्मणहननादौ ॥ नरकादीन्यादिपदाद् दिहिकदुःखप्रदः । ब्राह्मणहननादीत्यादिपदात् सुरापानादिग्रहः ॥

निषेकः । पुं । गर्भाधाने ॥ न । रेतसि ॥ निषिच्यते । षिच० । घञ् ॥

निषेदिवान् । त्रि । निषण्णे ॥ भाषामांसदक्षसुरित्यादिकसूत्रप्रत्ययः ॥

निषेदुषी । स्त्री । निषण्णायाम् ॥ ङीप् ॥

निषेधः । पुं । प्रतिषेधे । निदर्शने ॥ यत्किञ्चिल्लेनन्निषिध्यते इतिविधिस्पृष्टे निषेधानवकाशत्वेतिन्यायः ॥ निषेधनम् । निपूर्वात् सेधतेर्घञ् । सुषामादित्वात् षत्वम् ॥

निषेवणम् । न । सेवने ॥

निषेवितः । त्रि । नितरामनुष्ठिते ॥

निषेव्यः । त्रि । सेवनीये ॥ सेव्यमाने ॥ सेविते ॥ निषेवितुमर्हः । षेवृ० । यत् । सतां निषेव्योऽपि मतां भोगिनामवधापकः ॥

निष्कः । पुं । न । साष्टहेममते । साष्टसुवर्णमते । माषोविंशेषोऽष्टमाषकपरिमितं स्वर्णसुवर्णः तेषामष्टाधिकशते ॥ दीनारे । व्यावहारिकरूपके ॥ कर्षे । स्वर्णकर्षे ॥ वक्षोऽलङ्कारे ॥ हेमभाजने ॥ हेमपले ॥ निश्चयेन कायति । कै० । आतश्चेति कः । इदुदुपधस्येतिषः ॥ यद्वा । निषीदति । षद्लृ० । नैसदेर्डिच्चेति कन् । सदिर प्रतेरितिषः ॥ चतुर्भिः सुवर्णैः परिमितेमानविशेषे ॥ चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥ षोडशमाषो । मोषकाइन इति गौडभाषा ॥ माषकचतुष्टये ॥ इतिवैद्यकपरिभाषा ॥

निष्कण्टकः । त्रि । उपसर्गरहिते ॥

निष्कण्ठः । पुं । वरुणद्रुमे ॥ इति शब्दचन्द्रिका ॥

निष्कम्पः । त्रि । निस्तरङ्गे ॥ निर्वेपथौ ॥

निष्कर्षः । पुं । निश्चये ॥ निष्कर्षणम् । कृष + भावे घञ् ॥ इयत्तापरिच्छेदे ॥

निष्कलम् । न । ब्रह्मणि । निरवयवे ॥ निर्गताः कला यस्मात् ॥ त्रि । कलाशून्ये ॥ नष्टवीर्ये ॥ निरुपाधौ ॥ निर्गतः कलाभिः ॥ आधारे पुंलिङ्ग इति शब्दचन्द्रिका ॥

निष्कला । स्त्री । विगतार्त्तवायाम् । रजोहीनायाम् ॥ वृद्धायाम् ॥ कलाया निष्क्रान्ता । निरादय इति समासः ॥ निर्गतं कलं शुक्रमस्या वा ॥

निष्कली । स्त्री । विगतार्त्तवमायाम् ॥ गौरादित्वात् ङीष् ॥

निष्कामः । त्रि । मानसकामनाशून्ये । निस्त्रैगुण्ये विवेकिनि ॥ निष्कामा पादिताः कामाः मध्यकृतस्याविवेकिनः । यस्मा विनिर्गताः सोऽयं निष्काम इति भण्यते ॥ निर्गतः कामेभ्यः ॥

निष्कारणः । त्रि । फलापेक्षारहिते ॥ कारणशब्दः फलपरः । यथा ब्राह्मणेन निष्कारणः षडङ्गोवेदो ऽध्येयोज्ञेयश्चेत्यागमः ॥ निष्कारण- इतिहदं कारणमनपेक्ष्येत्यर्थः ॥

निष्कालकः । पुं । मुण्डितलोम्नि घृताभ्यक्ते प्रायश्चित्तार्थे ॥

निष्काशः । पुं । प्रासादाद्युपस्थाने । छज्जाद्द० बारण्डाद्द० बारजाद्द० पणिया इति च भाषा ॥ इति महाभारतम् ॥

निष्कासितः । त्रि । निर्गमिते । अवकृष्टे । निःसारिते ॥ आहिते ॥ धिक्कृते ॥ निष्कासते क्त । कसगतौ । णयन्तः । क्तः ॥

निष्कुटः । पुं । गृहासन्नोपवने । गृहारामे ॥ कुटात् गृहात् निष्क्रान्तः । निरादय इति स० ॥ केदारे ॥ कपाटे ॥ पल्न्याटे । अन्तः पुरे । वेगा रावला रणवास इत्यादिभाषा ॥

निष्कुटिः । स्त्री । सूक्ष्मदेलायाम् । वहुलायाम् ॥ निश्चिताकुटिः कौटिल्यमस्याः । निष्क्रान्ता कुटेर्वा ॥

निष्कुटी । स्त्री । पृथ्वीकायाम् । बृहदेलायाम् ॥ गृहिकारादित्वाति ङीष् ॥

निष्कुषितः । त्रि । निष्कासिते ॥

निष्कुषितः । त्रि । खण्डिते ॥ कुष्णातेः कर्म्मणि क्ते इरिनष्टायामितीडागमः ॥

निष्कुह । पुं । कोटरे । वृक्षादिरन्ध्रे ॥ निश्चयेन कुह्यते । कुहविस्मापने । घञर्थेच ॥

निष्कृतः । त्रि । नाशिते ॥ प्रायश्चित्ते ॥

निष्कृतिः । स्त्री । निर्मुक्तौ । निस्तारे ॥

निष्करणम्। कृञ्०। क्तिन्॥ शुद्धौ। उत्पन्नपापस्य नाशे॥ यथा। अतएवविमृश्य सुरापेगुरुतल्पगे। सर्वथविहितासद्भिः कृतप्रेनक्तिनिष्कृतिः॥

निष्कृपः। त्रि। निर्दये॥

निष्कुटः। त्रि। सारे। निचोड इति भाषा॥

निष्कृष्टार्थः। त्रि। सारार्थे॥

निष्कोषणम्। न। अन्तरवयवानां बहिर्निःसारणे॥

निष्क्रमः। पुं। बुद्धिसम्पत्तौ। धीशक्तौ॥ निर्गमे॥ दुष्कुले॥ निष्क्रमण संस्कारे॥ निष्क्रमणम्॥ क्रमु०। घञ्। नोदात्तेति वृद्धिर्न॥

निष्क्रमणम्। न। दशसंस्कारान्तर्गत संस्कारविशेषे। चतुर्थेमासि कर्त्तव्य शिशोर्निष्क्रमणं गृहादिष्याथुक्त विधिविहिते सूर्यदर्शने॥ गृहादेर्बहिर्निर्गमने॥

निष्क्रयः। पुं। विक्रये॥ भृतौ। वेतने॥ निष्क्रयणम्। डुक्रीञ्०। एरच्॥ वुद्धियोगे॥ सामर्थ्ये॥ निर्गतौ॥ प्रत्युपकारे॥ विनिमये॥ निष्क्रियते प्रत्याक्रियते ऽनेन परगृहीतम्। डुक्रीञ्०। एरच्॥

निष्क्रान्तः। त्रि। निर्गते॥

निष्क्रियः। त्रि। क्रियारहिते॥ न॥ ब्रह्मणि॥

निष्क्वाथः। पुं। रसके। मांसादिक्वाथे। जोल इति रसा इति च भाषा॥

निष्ठ्यः। त्रि। वर्णाश्रमादिभ्यो निर्गते चाण्डालादौ॥ निर्गतः। निसोगते इत्यप्रत्ययः। ह्रस्वात्तादाविति षत्वम्॥

निष्ठा। स्त्री। निर्वहणे। नाट्यसन्धिसमापने। नाट्योक्ता प्रस्तुतकथासमाप्तौ॥ निष्पत्तौ॥ नाशे॥ अन्ते॥ याञ्चायाम्॥ उत्कर्षे॥ व्यवस्थायाम्॥ क्लेशे॥ व्रते॥ गुरुशुश्रूषादौ तत्परतायाम्॥ नियतं स्थानम्। आतश्चोपसर्गे इत्यङ्॥ उपसर्गादिति षत्वम्। टाप्॥ निश्चयेन स्थितौ॥ धर्मादौ श्रद्धायाम्॥ यथा। निष्ठयाविप्रतिष्ठाया दनिष्ठस्य कुतः शुभम्। शक्नोति नैष्ठिकः स्वीयं धर्मं पातुं न चेतर इति॥

निष्ठानम्। न। तेमने। व्यञ्जने। भक्ताद्युपसेचने दध्यादौ॥ निष्ठीयते ऽत्र। ष्ठा०। ल्युट्॥

निष्ठितः। त्रि। निष्पन्ने॥ नितरां स्थिते॥ निष्ठाविशिष्टे॥ निष्ठासञ्जाताऽस्य। ता०। इतच्॥ निश्चयेनस्थिते॥

निष्ठीवः। पुं। निष्ठीवने॥

निष्ठीवनम्। न। मुखेन श्लेष्मनिरसने

। निष्ठेवने ॥ ष्ठिवुनिरसने । ल्युट् ।
ष्ठिवुसिव्योर्ल्युटि दीर्घो वेति स्वामी ।
। पृषोदरादित्वादिति, मुकुटः ॥

निष्ठुरः । त्रि । कर्कशवाग्युक्ते । परुषे ॥
कठोरे ॥ निस्तिष्ठति । स्था० । मद्गु०
उरच् । उपसर्गात्सुनोतीति षत्वम्
॥ न । वचनविशेषे ॥ यथा । गुह्याङ्गा
श्लेष्मसंज्ञानां वचनं निष्ठुरं विदुः ।
यदन्यदा वचो नीचं स्त्रीपुंसो मिथु
नाश्रयमिति ॥

निष्ठेवः । पुं । निष्ठीवे । निष्ठीवने ॥
ष्ठिवु० । घञ् ॥

निष्ठेवनम् । न । निष्ठीवने ॥ ष्ठिवु० ।
ल्युट् ॥

निष्ठ्यूतः । त्रि । आविद्धे । नुन्ने । क्षि
प्ते ॥ निष्ठीव्यते स्म । ष्ठिवु० । क्तः ।
यस्येति नेट् । च्छ्वोः शूडित्यूठ् ॥

निष्ठ्यूतिः । स्त्री । निष्ठीवने ॥ ष्ठिवु० ।
क्तिन् । च्छ्वोरित्यूठ् ॥

निष्णातः । त्रि । कुशले । निपुणे । वि
ज्ञे ॥ न्यष्णासीत् । ष्णा शौचे । गत्य
र्थेति क्तः । निनदीभ्यामिति षत्वम् ॥
पारङ्गते ॥

निष्पक्वः । त्रि । क्वथिते ॥ निश्चयेन
पक्वः ॥

निष्पचनम् । न । निष्पाके ॥

निष्पत्तिः । स्त्री । सिद्धौ ॥ निष्पदन-
म् । पद० । स्त्रियाङ्क्तिन् ॥ समासे ॥

निष्पत्राकृतिः । स्त्री । सपत्राकृतौ । अ
त्यन्तपीडायाम् ॥

निष्पत्रिका । स्त्री । करीरवृक्षे ॥ इति
राजनिर्घण्टः ॥

निष्पद्यानम् । न । नावि । तर-
ण्याम् ॥ अथ निष्पद्याने देशो
यथा । नौकार्यं निष्पदं यानं तच्च
लाघव मुच्यते । अश्वादिकन्तु यद्
यानं स्थले सर्वं प्रतिष्ठितम् ॥ जले-
नौकैव यानं स्यात् तस्मात्तां यत्नतो व
देत् ॥ * ॥ अथ समयो यथा । सु
धारवेलातिथिचन्द्रयोगे चरे विल-
ग्ने मकरादिषट्के । सुखेन्यसस्त
त्वतिरेकतोऽन्ये वदन्ति नौकाघटना
दिकर्म ॥ * ॥ अश्विकरांशुसुधानि
धिपूर्वामित्रधनाच्युतभे शुभलग्ने । ता
रकयोगतिथीन्दुविशुद्धौ नौगमनं
शुभदं शुभवारे ॥ * ॥ वृक्षायुर्वेद
गदिता वृक्षजातिश्चतुर्विधा । समा
सेनैव गदितं तेषां काष्ठं चतुर्विध
म् ॥ तद्यथा । लघु यत् कोमलं
काष्ठं सुघटं ब्रह्मजाति तत् । दृढाङ्गं ल
घु यत् काष्ठमघटं क्षत्रजाति तत् ॥
कोमलं गुरु यत्काष्ठं वैश्यजाति तदु
च्यते । दृढाङ्गं गुरु यत् काष्ठं शूद्रजा
ति तदुच्यते ॥ लक्षणद्वययोगेन द्वि

जातिः काष्ठसङ्ग्रहः ॥ क्षत्रियका
ष्ठैर्घटिता भोजमते सुखसम्पदं नौका
। अन्यैर्लघुभिः सुदृढैर्विदधति जल
दुष्पदं नौकाम् ॥ विभिन्नजातिद्वय
काष्ठजाता नश्रेयसेनापि सुखाय नौ
का । नैषा चिरं तिष्ठति पच्यते च वि
भिद्यते वारिणि मज्जते च ॥ न सि
न्धुगाद्यार्हति लौहबन्धं तल्लौहका
न्तैर्ह्रियते हि लौहम् । विपद्यते ते
न जलेषु नौका गुणेन बन्धं निज
गाद भोजः ॥ * ॥ अथ लक्षणानि
। सामान्यञ्च विशेषश्च नौकायाः ल
क्षणद्वयम् । तत्र सामान्यम् । राज
हस्तमितायामा तत्पादपरिणाहि
नी । तावदेवोन्नता नौका क्षुद्रेति
गदिता बुधैः ॥ अतः सार्द्धमितायामा
तदर्द्धपरिणाहिनी । त्रिभागेनोच्छ्रि
ता नौका मध्यमेति प्रचक्षते ॥ क्षु
द्राथ मध्यमा भीमा चपलापटला भ
या । दीर्घा पत्रपुटा चैव गर्भरा मन्थ
रा तथा ॥ नौका दश्यैकं भिन्नयुक्ता रा
जहस्तैरनुक्रमम् । एकैकवृद्धैः सा
र्द्धैश्च विजानीयाद्द्वयं द्वयम् ॥ उन्न
तिश्च प्रवीणाश्च हस्तादर्द्धाग्रसम्मिता
। अत्र भीमा भयाचैव गर्भरा चाशु
भप्रदा ॥ मन्थरान्तरतो यास्तु तासा
मेवाम्बुधौ गतिः । तासां गुणलुस-

निषाद्

ङ्घेपादृढलाभ प्रकीर्त्तिता ॥ * ॥
अथ विशेषः ॥ दीर्घा चैवोन्नता चेति
विशेषे द्विविधा भिदा । तत्र दीर्घाय
या । राजहस्तद्वयायामा अष्टांशप-
रिणाहिनी । नौकेयं दीर्घिकाना
म दशाङ्के नोन्नतापि च ॥ दीर्घिका
तरणि र्लोला गत्वरा गामिनी तरिः
। जङ्घाला प्लाविनी चैव धारिणी वे
गिनी तथा ॥ राजहस्तैकपञ्चद्वा नौ
का नामानि वेदशः । उन्नतिः परि
णाहश्च दशाष्टांशमितौ क्रमात् ॥
अत्र लोला गामिनी च प्लाविनी दुःख
दा भवेत् । लोलायामाम मारभ्य
यावद् भवति गत्वरा ॥ लोलायाः फ
लमाधत्ते एवं सर्वासु निर्णयः । वे-
गिन्याः परतो यातु सा भिन्ना योत्त
रायथा ॥ भोजोपि । नौकादीर्घं य
थेच्छं स्यात् तथैतानि विवर्जयेत् ।
हस्तसंख्या परित्याज्या वसुवेदग्रहा
न्तरे ॥ यद्यप्युत्तरमिता नौका कुर्व
न्ति वक्ष्व धनम् । सप्त सप्तरे वा
पि या चत्वारिंशतेः परा ॥ एतेन च
त्वारिंशतिषष्टिनवतिसंख्या तत्पर
तोपि । यावदपरं दशकं तावदेव त
त्फलमिति । इति दीर्घा ॥ अथोन्न
ता । राजहस्तद्वयमिता तावत्प्रसर
णोन्नता । इयमूर्द्ध्वाभिधा नौका क्षेमा

॥ दिङ्मात्रमिदमुद्दिष्टं नौकायाश्च मयाग्रजम्। प्रधानेष्वेव नियमो न प्रधाने न निर्णयः॥ लघुता दृढता चैव गामिता च्छिद्रता तथा। समतेति गुणोद्देशो नौकानां सम्प्रकाशितः॥ एवं विचिन्त्य यो राजा नौकायानं करोति च। स चिरं सुखमाप्नोति विजयं समरे श्रियम्॥ यो ऽज्ञानाद्व्यत्ययानं नौकानां कुरुते नृपः। तस्यैतानि विनश्यन्ति यशोवीर्यं बलं धनम्॥ इति निष्पद्यानोद्देशे नौकायानम्॥ * ॥ अथान्यजलयानानि यथा। नौकान्यतो जलेयानं जघन्यमिति गद्यते। तद्देशावरश्च कोतु मा ख्यातानां प्रकीर्त्तिताः॥ द्रोणीकृम्भ तु यद्यानं द्रोणीयानं तदुच्यते। घटीभिर्घटितं यानं घटीनौकेति गद्यते॥ तुम्ब्याद्यैस्तुम्बयानं काष्ठयानं प्रचक्ष्यते। चर्मभिस्तु सपूर्णैर्यैश्चर्मयानं तदुच्यते॥ यानं यत्तु भिर्चैंश्चयानं तदुच्यते। अन्तभिः सलिले यानं जन्तु यानं प्रचक्ष्यते॥ बाहुभ्यां सन्तरेद्वारि अधन्येषु न निर्णयः॥ * ॥ इति युक्तिकल्पतरौ निष्पद्यानोद्देशः॥

निष्पक्वः। त्रि। निर्वृत्ते। सिद्धे। सम्पक्वे॥ निष्पच्यते स्म। पच्०। क्त।



वैंतिक्तः॥

निष्प्रत्यम्। न। विषमानकाचम-ध्यस्थे॥

निष्परिग्रहः। त्रि। परमहंसे॥ निर्गतः कन्याकौपीनाध्यात्मपुस्तकादिव्यतिरिक्तः परिग्रहो यस्मात् सः॥ त्रि। त्यक्तसङ्गे॥

निष्पाकः। पुं। निष्पचने॥

निष्पातः। पुं। प्रहारे॥

निष्पादः। पुं। निष्पादने॥

निष्पादनम्। न। सम्पादने। निष्पत्तौ॥ निस् पूर्वात् पदेर्ण्यन्ता ल्युट्॥

निष्पादना। स्त्री। निष्पत्तिप्रेरणे॥

निष्पादितः। त्रि। कृतनिष्पादने॥

निष्पाद्यः। त्रि। साध्ये। निष्पादनीये॥

निष्पापः। त्रि। पापरहिते॥ निर्गतः पापेभ्यः॥ निरादय इति समासः॥

निष्पावः। पुं। शूर्पपवने॥ धान्यादिनिस्तुषीकृतौ। पवने॥ निष्पूयते शोध्यते तुषाद्यपनयनेन। पूञ्०। परिमाणाख्यायां सर्वेभ्य इति घञ्॥ यथा। द्वौ शूर्पनिष्पावौ। शूर्पेणेति करणात् तृतीयान्तस्य कर्मकरणे कृता बहुलमिति समासः। अत्र शूर्पसङ्ख्यया तण्डुलादेरपि परिच्छिन्तिर्गम्यते। शूर्पं द्वित्वस्यार्थिकं न तु शाब्दम्। यद्यप्यत्र निरभ्योः पूल्वोरिति

घञ् लभ्यते तथापि सर्वप्रकरणवशादनेनापि भवितु मर्हति ॥ राजमाषे । श्वेतशिम्बिधान्ये । राजशिम्बीबीज भटवांसु, बोड़ा चौरा इति च यस्य भाषा ॥ निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः । कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत् । विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः ॥ कलङ्के ॥ पवने ॥ शिम्बिकायाम् ॥ त्रि । निर्विकल्पे ॥ निष्पवनम् । पून्० । घञ् ॥

निष्पावकः । पुं । श्वेतशिम्ब्याम् ॥

निष्पावी । स्त्री । शिम्बीविशेषे । चौरा चौला बोड़ा इति भाषा प्रसिद्धे ॥ सालिधा । हरिद्वर्णा गुच्छा च ॥

निष्पृहः । त्रि । इच्छारहिते ॥ निःस्पृहे । वैषयिकसुखेऽनुरागरहिते ॥ निर्गता स्पृहा यस्य सः ॥

निष्पृहा । स्त्री । अग्निशिखायाम् ॥

निष्पेषः । पुं । सङ्घर्षे ॥

निष्प्रतिभः । त्रि । जडे । मूर्खे ॥ निर्गतः प्रतिभायाः ॥

निष्प्रत्यूहः । त्रि । निर्विघ्ने ॥

निष्प्रभः । त्रि । विगते । अरोके । दीप्तिवर्जिते ॥ निष्क्रान्ता प्रभा ऽस्मात् ॥ अप्रकाशस्वरूपे ॥

निष्प्रवाणम् । न । नवीनवस्त्रे । तन्त्र



विमुक्तवाससि ॥

निष्प्रवाणिः । त्रि । अनाहते । तन्त्रके । नवाम्बरे ॥ प्रोयन्ते ऽनया अस्यां वा । वेञ्० । करणेति ल्युट् । ङीप् । निर्गता प्रवाणी तन्तुवायशलाका अस्मात् । निष्प्रवाणिरस्येति कर्मभावे निपात्यते ॥ निष्प्रवाणिः पटः नवीनवस्त्रार्थः ॥

निष्फलः । त्रि । फलशून्ये ॥

निष्फला । स्त्री । निष्फलायां नार्याम् । विगतार्तवायाम् ॥

निष्फली । स्त्री । निष्फलायाम् ॥

निस् । अ । निषेधे ॥ निश्चये ॥ साकल्ये ॥ अतीते ॥

निसम्पातः । पुं । अर्द्धरात्रे । निशीथे ॥ इतिशब्द० ॥

निसर्गः । पुं । स्वरूपे । स्वभावे ॥ सर्गः ॥ निसर्जनम् । सृज० । घञ् ॥

निसिन्धुः । पुं । सिन्धुवारे ॥

निसुम्भः । पुं । असुरान्तरे ॥

निसूदनम् । न । वधे । मारणे ॥ सूद क्षरणे । भावे ल्युट् ॥

निसृता । स्त्री । त्रिवृतायाम् ॥

निसृष्टः । त्रि । न्यस्ते ॥ निसृज्यते स्म । सृज० । क्तः ॥ मध्यस्थे इति त्रिकाण्डशेषः ॥

निसृष्टार्थः । पुं । दूतविशेषे ॥ यथा ।

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः । कार्य्यप्रेष्य स्त्रिधा दूतो दूत्यश्चापि तथाविधा ॥ तल्लक्षणं यथा । उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः ॥ इति साहित्यदर्पणे ३ परिच्छेदः ॥ पुरुषविशेषे ॥ यथा । धीरः स्थिरमतिः शूरः स्वामिकार्य्यविधायकः । स्वपौरुषप्रकाशीच निसृष्टार्थः स उच्यत इति सङ्गीतदामोदरः ॥ धनाद्यव्ययपालनादौ नियुक्त ॥ यथा । यः स्वामिना नियुक्तो विधनाद्यव्ययपालने । कुर्य्यादृषिवाणिज्ये निसृष्टार्थस्तु सम्मत इति बृहस्पतिः ॥ निसृष्टार्थोयस्मिन् सः ॥

निस्तत्त्व. । त्रि । असति ॥ निर्गतं तत्त्वं वास्तवं रूपं यस्मात् ॥

निस्तनी । स्त्री । वटिकायाम् । वटी इति भाषा ॥ स्तनहीनायाम् ॥

निस्तन्द्रिः । त्रि । अनलसे ॥ निर्गता तन्द्रिरालस्यं यस्मात् ॥

निस्तरणम् । न । उपाये ॥ निस्तारे ॥ तरणे ॥ निर्गमे इति विश्वः ॥

निस्तर्हणम् । न । मारणे ॥ तृहू हिंसायाम् । निर् पूर्वः । स्तृहूधौ । भावे ल्युट् ॥

निस्तल. । त्रि । वर्त्तुले ॥ चले ॥ निर्गतं तलं यस्य ॥

निस्तरी । स्त्री । वटिकायाम् ॥ इति शब्दचन्द्रिका ॥

निस्तारः । पुं । उद्धारे । निस्तरणे ॥ यथा । जीवाः तरितः सरित्संसारगभीरनीरा यस्मा बत सकलमिथ्यमनर्थहेतुः । निस्तारबीजमिदमेव कृशोदरीणां यन्माधव त्वमसि सम्प्रति कर्णधारः ॥ इत्युद्भटः ॥

निस्तारबीजम् । न । संसारार्णवतरणहेतौ ब्रह्मोपासने ॥ यथा । कलौ पापयुगे घोरे तपोहीनेति दुस्तरे । निस्तारबीजमेतावद् ब्रह्ममन्त्रस्य साधनम् ॥ साधनानि बहूनि स्युः नानातन्त्रागमादिषु । कलौ दुर्बलजीवानामसाध्यानि महेश्वरीति महानिर्वाणतन्त्रम् ॥ अपि च । स्मरणं कीर्त्तनं विष्णोरर्च्चनं पादसेवनम् । वन्दनं स्तवनं नित्यं भक्त्या नैवेद्यभक्षणम् ॥ चरणोदकपानञ्च तन्मन्त्रजपनं तथा । इदं निस्तारबीजञ्च सर्वेषामीप्सितं -अनेदिति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ३३ अध्यायः ॥

निस्तितीर्षत् । त्रि । निस्तरितुमिच्छति ॥

निस्तुषक्षीरः । पुं । गोधूमे ॥ इति राजनिर्घण्टः ॥

निस्तुषरत्नम् । न । स्फटिके ॥

निस्तुषितः । त्रि । त्यक्ते ॥ त्वग्विहीने ॥ स्वधूकृते ॥ इति मेदिनी ॥

निस्तेजाः । त्रि । तेजोरहिते ॥

निस्तोदः । पुं । पीडाविशेषे ॥

निस्त्रिंशः । पुं । खड्गे ॥ निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्यः । निरादय इति स० । खड्गस्यायामस्ततः पृथक्त्वाच्चाख्यः ॥ त्रि । निर्दये । निर्घृणे ॥

निस्त्रिंशपत्त्रिका । स्त्री । स्नुहीवृक्षे ॥

निस्त्रैगुण्यः । त्रि । निष्कामे ॥ निष्क्रान्तस्त्रैगुण्यात् ॥ पुं । त्रिगुणातीते परमेश्वरे ॥ त्रैगुण्यः संसारस्तद्रहितत्वात् ॥

निस्त्रैण्यपुष्पिकः । पुं । राजधत्तूरके ॥

निस्नेहः । त्रि । प्रेमशून्ये ॥

निस्नेहफला । स्त्री । श्वेतकण्टकार्याम् ॥

निस्पन्दः । पुं । स्पन्दने ॥ इति त्रिकाण्डशेषः ॥ त्रि । स्पन्दरहिते । ईषत्स्पन्दहीने ॥

निस्पन्दतरः । त्रि । एकान्तस्पन्दरहिते ॥

निस्पृहः । त्रि । अतिविरक्ते ॥ निर्गता दोषदर्शनेन सर्वेभ्यो दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य सः ॥ व्यासादिषु ॥ व्यासादीनां निस्पृहाणां पारार्थ्यमिह दृश्यते ॥

निस्पृहा । स्त्री । अग्निशिखावृक्षे ॥

निस्यन्दः । पुं । स्यन्दने । क्षरणे ॥ निस्यन्दतेऽनेन । स्यन्द० । स्यदो जवे इति घञन्तो निपातितः ॥

निस्यन्दनम् । न । स्यन्दे । स्यन्द० ल्युट् ॥

निस्रावः । पुं । मासरे । भक्तसमुद्भवमण्डे । माँड इति भाषा ॥ निस्राव्यते । स्रु० । ण्यन्तः । एरच् घञ् वा ॥

निस्वः । त्रि । निःस्वशब्दे ॥

निस्वनः । पुं । शब्दे ॥ निस्वननम् । स्वनशब्दे । नौगदनदपठस्वन इत्यप् ॥

निस्वानः । पुं । निनादे । शब्दे ॥ निस्वननम् । स्वन० । नौगदनदपठस्वन इति पाक्षिको घञ् ॥

निस्सारितः । त्रि । निष्कासिते ॥ निराकृते ॥

निस्सीमः । त्रि । अपर्यन्ते ॥

निहतः । त्रि । नाशिते ॥

निहननम् । न । वधे । मारणे ॥ हन्तेर्भावे ल्युट् ॥

निहन्ता । त्रि । हननकर्त्तरि ॥

निहवः । पुं । आह्वाने ॥ ह्वेञ्० निपूर्वः । ह्वः सम्प्रसारणञ्चान्यभ्युपविषु इत्यप् सम्प्रसारणञ्च ॥

निहाका । स्त्री । गोधिकायाम् ॥ नियतं जहाति मुखम् । नौहस्त्वेति हाकन् । बाहुलकात् न ह्रस्वः ॥

निहारः । पुं । नीहारे । हिमे ॥ नि-

नीतिसारः । पुं । इन्द्रस्यतिवृहस्पत्युक्तेनीतिशास्त्रविशेषे ॥ सचगरुडपुराणे ऽष्टास्वध्यायेष्वस्ति ॥

नीथः । पुं । नेतरि । प्रापयितरि ॥ स्तोचे इति वेदभाष्यम् ॥ नयति । यौण्० । हनिकुषिनीरमिकाशिभ्यःक्थन् ॥ न । जले ॥

नीध्रम् । न । नीव्रे । वल्मीके । पटलप्रान्ते । आच्छादने । ओलातीइतिभाषा ॥ नितरांध्रियते । ध्रङ् अवस्थाने । निश्चयेन धरति जलमितिवा । धृञ्धारणे । मू०कः । अन्येषां ० दीर्घः ॥ वने ॥ नेमौ ॥ चन्द्रे ॥ रेवतीनक्षत्रे ॥

नीपः । पुं । कदम्बे । बलिप्रिये ॥ बन्धूके ॥ नीलाशोकद्रुमे ॥ धाराकदम्बे ॥ नीपेमेघाराकदम्बःस्याद्धाराकदम्ब-स्यपर्यायोस्तिसांख्यः ॥ नयति नीयते वा । यौण्० । पानीविपिभ्यःपः । बाहुलकात् गुणाभावः ॥ धनेनीतिप्रावृष्या ॥

नीयमानः । त्रि । प्राप्यमाणे ॥

नीरम् । न । चौरे । अम्बुनि । जले ॥ शरदानीरजोत्पत्त्यानीराविप्रकृति ययुः । अष्टानामिवचेतांसि पुनर्योगनिषेवया ॥ रसे ॥ नीयते । यौण्० । स्फायितञ्चीतिरक् ॥ निर्गत राइमेवी । निरादयइतिसमासः । अम्भेराप इतिस्मृतेः ॥ निर्गतेरो ऽस्मिरस्मात् । प्रादिभ्योधातुजस्येतिबहुव्रीहिः । अप्योमित्रेष्ट्यांश्चः सपमितिस्मृतेः ॥ निश्चयेनराति-सुखम् । रा० । आतश्चेतिके हलोपरतिदीर्घः ॥ निष्ठीवाह्यक्षकृत्-मधिवाष्यसुमेसद्विमेत् ॥

नीरजम् । न । कुष्ठौषधौ ॥ पद्मे ॥ मुक्तायाम् ॥ त्रि । अजलासे ॥ नीरे जातम् । जनी० । डः ॥ पुं । उशीरेपि ॥ उद्रे ॥

नीरजाः । त्रि । निर्धूलिदेशपुष्पादौ ॥ स्त्री । अरजस्कायाम् ॥

नीरन्ध्रः । त्रि । निश्छिद्रे ॥

नीरतरङ्गः । त्रि । विरते सुरतरागे । रसशाभावत्रति ॥ यथा । आयाताः सखि वर्षा वर्षादपि यासु वासरो-दीर्घः । दिशिदिशि नीरतरङ्गो नीरतरङ्गो समाविष्टश्चेशः इति ॥

नीरदः । पुं । मेघे ॥ मुस्तके ॥ त्रि । दन्तशून्ये ॥ यथा । आस्वाद्य निरवशेष विरहिवधूनां सदूनि मांसानि । करकानिषेण मन्ये निष्ठीवति नीरदो ऽस्थीनीति ॥

नीरदिनी । स्त्री । मेघपङ्क्त्याम् ॥

नीरधिः । पुं । अब्धौ । समुद्रे ॥ नीराणिधीयन्ते ऽस्मिन् । डुधाञ् । कर्म

यद्वाधिकरणेघेतिक्तिः ॥

नीरनिधिः । पुं । अकूपारे । समुद्रे ॥ नीराणिनितरां धीयन्तेऽत्र । डुधाञ् । किः ॥

नीरन्ध्रः । त्रि । सान्द्रे । घने ॥ छिद्ररहिते ॥ यथा । श्रीमन्नायतवर्त्तितोऽर्ज्जितयशःसंशुद्धमुक्तावली मात्रैवविधिर्विधित्सुरमणंहारं त्वदीयैर्गुणैः । नीरन्ध्रामवलोक्यतामपि ततो मान्तं गुणानामहोडत्पितसु गगनान्तरे समकिरत्ताराक्कालतसारकाः ॥ इतिकालिदासः ॥

नीरसः । पुं । दाडिमे ॥ त्रि । रसहीने ॥ यथा । शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् । सएव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥

नीराखुः । पुं । उद्रे । जलबिडाले ॥

नीराजनम् । न । आरात्रिके । दीपादिना सत्कृतौ ॥ पञ्चनीराजनं कुर्यात् प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा ॥ चूताश्वत्थादिपत्रैश्च चतुर्थम्परिकीर्त्तितम् । पञ्चमंप्रणिपातेनसाष्टाङ्गेनयथाविधि ॥ आश्विनशुक्लदशम्यामश्वादेःपूजने ॥ यथा शरत्कालेऽष्टम्यांदुर्गायाःपरिपूजनम् । नीराजनंदशम्यान्तुकुर्याद्बलवृद्धये ॥ निःशेषेणराजनमत्र । नीरस्यशान्त्युदकस्यअजनं क्षेपोयत्रवा । नीरेणजले अजनंस्पर्शनं वा ॥



नीराजना । स्त्री । आरात्रिके । दीपादिनासत्कृतौ ॥ निःशेषेण नितरां वा राजनम् । राजृदीप्तौ ण्यन्तः । ण्यासश्रन्थेतिभावेयुच् ॥

नीरिन्दुः । पुं । शाखोटके । शाखेओडा इतिगौडेषुख्याते वृक्षे ॥

नीरुक् । पुं । स्त्री । रोगाभावे । स्वास्थ्ये । अनामये ॥ त्रि । रोगरहिते । उल्लाघे । पटौ ॥ निरोषते । रुज० । क्विप् । नविवृतिवृषीत्यिदीर्घः ॥

नीरुजम् । न । कुष्ठौषधौ ॥ त्रि । रोगाऽभाववति ॥ रुजायानिर्गतम् ॥

नीरूपः । त्रि । रूपाभावविशिष्टे ॥ नीरूपस्यापिकालस्येन्द्रियवेद्यत्वाभ्युपगमेनेतिवेदान्तपरिभाषा ॥

नीलः । पुं । निधिभेदे ॥ अद्रिविशेषे ॥ इलावृतस्योत्तरस्मिन् वितस्तयोजनविस्तीर्णो प्रागायतो रम्यकवर्षस्य मर्यादापर्वते ॥ भारतवर्षस्थे शैलविशेषे ॥ वानरविशेषे ॥ वर्णविशेषे ॥ नीलौषधौ ॥ लाञ्छने ॥ मञ्जुघोषे ॥ वटवृक्षे ॥ कृष्णवर्णे ॥ वृषोत्सर्गवृषे ॥ चरणानि मुखं पुच्छं यस्यश्वेतानि गोपतेः । ला

चारसत्तवर्णश्च तं नीचमितिनिर्दिशेत् ॥ अपिच । लोहितो यस्तुवर्णेन पुच्छाग्रेणतुपाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलोवृष उच्यते ॥ नीलति । नीलवर्णे । इगुपधेतिकः ॥ न । नाक्षीरक्ते॥ नील्यारक्तम्। नील्यावन् ॥ इन्द्रनीलमणौ । नीलम् इति भाषा प्रसिद्धे वैरिरत्ने॥ कायकलये ॥ तालीशपत्रे ॥ विषे ॥ सौवीराञ्जने ॥ तुत्थे ॥ नव्याङ्गाष्टौ लघ्वन्तकरयाष्टमीतकरणविशेषे ॥ वर्णवृत्तप्रभेदे ॥ तालपयोधरजाय कलोमरवल्लधरम् मायितुतत्र विभावय भामिनि वृत्तवरम्। नीलसिदम् फणिनायकपिङ्गलसंकलितम् पण्डितमण्डलिकासुखदं सखि कर्णगतम् ॥ यथा । सुन्दरि सुन्दरि पीनसिशाखिनि किञ्चिरुपे मानिनि मानिनिकाममिदं हृदयं परमे । वारिणि वारिणि ते हृदये निचितोदयितो भामिनि भाविनि वासिमनोस्मि चिराय यतः इति ॥ नीलंलक्ष्म लिङ्गरूप उत्पातः । तथाचिवराहः। सपर्वणि यदाराहुग्रस्तं चन्द्रसूर्ययोः । चन्द्रार्कमण्डलं छिद्रं दृष्ट्वा जनपदक्षयः इति ॥ यदानीलं लक्ष्म च न्द्रस्यकर्पूरोत्पत्स्यते एतदेवोत्पाति

कं नैल्यमधिकृत्योक्तम् । यदादित्ये नैल्यंतदानष्येदिति ॥ त्रि । नीलवर्णयुक्ते ॥

नीलकम् । न । कालालूण इति भाषा प्रसिद्धे काचलवणे ॥ वर्तलोहे ॥ पुं । असनवृक्षे ॥

नीलकण्ठः । पुं । शिवे । हरे ॥ क्षीराब्धेर्मथ्यमानाच्च विषं शक्यापलोद्भूत । धरेण धारितं कण्ठे नीलकण्ठस्ततोहरः ॥ दात्यूहे ॥ ग्रामचटके ॥ मयूरे ॥ खञ्जने ॥ नीलः कण्ठोयस्य सः ॥ पीतसारे ॥ न । मूलके ॥ इतिराजनिर्घण्टः ॥

नीलकण्ठशिखा । स्त्री । मयूरशिखायाम् ॥ नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥

नीलकण्ठाक्षम् । न । रुद्राक्षे ॥ त्रि । खञ्जनाक्षे ॥

नीलकन्दः । पुं । महिषकन्दप्रभेदे । विषकन्दे । महिषीकन्दे ॥ इतिराजनिर्घण्टः ॥

नीलकमलम् । न । नीलवर्णपद्मे । उत्पले । हिमाब्जे ॥

नीलकुन्तला । स्त्री । गौर्याःसखीविशेषे ॥ त्रि । नीलकुन्तलविशिष्टे ॥

नीलकुरण्टकः । पुं । नीलझिण्ट्याम् ॥

नीलकान्ता । स्त्री । विष्णुकान्तायाम् ॥

नीलक्रौञ्चः । पुं । नीलबके । दीर्घग्रीवे ॥

नीलग्रीवः । पुं । शिवे ॥ नीला ग्रीवा यस्य सः ॥

नीलङ्गुः । पुं । मक्षने ॥ शृगाले ॥ भ्रमरे ॥ क्रिमिविशेषे ॥ नितरां लङ्गति । लगि० । नीलति वा । नीलवर्णे । खय्वङ्कितिनिपातनात् साधुः ॥ स्त्री । भ्रमराख्याम् ॥

नीलचर्म । न । परूषके ॥ नीलवर्णाजिने ॥

नीलजम् । न । वर्त्तलोहे ॥ त्रि । नीलाज्जाते ॥

नीलजिण्टी । स्त्री । नीलकुरण्टके ॥

नीलतरुः । पुं । नारिकेले ॥

नीलतालः । पुं । तमाले ॥ हिन्ताले ॥

नीलदूर्वा । स्त्री । श्यामायाम् । भार्ग्याम् । रुहायाम् ॥ नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत् । कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् ॥ नीला चासौ दूर्वा च ॥

नीलध्वजः । पुं । तमालवृक्षे ॥ माहिष्मत्याः पुर्या राजविशेषे ॥ त्रि । नीलध्वजविशिष्टे ॥

नीलनिर्गुण्डी । स्त्री । नीलसिन्धुवारे ॥

नीलनिर्यासकः । पुं । नीलासनवृक्षे ॥

नीलपङ्कम् । न । अन्धकारे ॥

नीलपत्रम् । न । इन्दीवरे ॥ नीलानि पत्राण्यस्य ॥ पुं । गुण्डतृणे ॥ अश्मन्तकवृक्षे ॥ नीलासनवृक्षे ॥ दाडिमे ॥

नीलपद्मम् । न । इन्दीवरे ॥ नीलञ्च तत् पद्मञ्च ॥

नीलपिच्छः । पुं । श्येनखगे ॥

नीलपुनर्नवा । स्त्री । कृष्णवर्णपुनर्नवाशाके । नीलायाम् । नीलशद्दपडो था इति भाषा ॥

नीलपुष्पः । पुं । नीलभृङ्गराजे ॥ नीलाम्लाने ॥ ग्रीतसहे । निर्गुण्डीद्रुमे ॥ न । ग्रन्थिपर्णे ॥ नीलवर्णपुष्पे ॥

नीलपुष्पा । स्त्री । विष्णुक्रान्तायाम् ॥

नीलपुष्पिका । स्त्री । नील्याम् ॥ अतस्याम् ॥

नीलपुष्पी । स्त्री । नील्याम् ॥ निर्गुण्ड्याम् । सिन्धुके ॥ अतस्याम् ॥ नीलबुह्नायाम् ॥

नीलफला । स्त्री । जम्ब्वाम् ॥

नीलभृङ्गराजः । पुं । नीलवर्णभृङ्गराजे । महाभृङ्गे । श्यामले । नीलाभंगरा इति भाषा ॥

नीलमणिः । पुं । इन्द्रनीलमणौ । मसारे । नीले ॥ क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत् । इन्द्रनीलमिति ख्यातं महार्घं रत्ननिर्णये

॥ नीलीरक्तनिभाः केचिच्चमूरुकाण निभाः परे इत्यादि नागखण्डे नरनाथ खे यथामेकादश विधाख्यातास्ता ॥

नीलमाधवः । पुं । विष्णौ ॥

नीलमाषः । पुं । राजमाषे ॥

नीलमल्लिकः । पुं । खद्योते ॥

नीलमल्लिका । स्त्री । पुष्पकासीसे ॥ । कृष्णवर्णायांस्त्रियाम् ॥

नीललोहम् । न । वर्त्तलोहे ॥

नीललोहितः । पुं । शिवे । धूर्जटौ ॥ नीलश्चासौ लोहितश्च । कण्ठेजटासु च । नीलः कण्ठो लोहिताश्च केशा अस्येति स्वामी ॥ नीलरक्तमिश्रितवर्णे ॥ वर्णविशेषे ॥

नीललोहिता । स्त्री । भूमिजम्बाम् ॥

नीलवर्षाभूः । स्त्री । नीलपुनर्नवायाम् ॥ पुं । कृष्णभेके ॥

नीलवल्ली । स्त्री । वन्दायाम् ॥

नीलवसनः । पुं । शनौ ॥ इन्द्रायुधे । नीलाम्बरे ॥ त्रि । नीलवस्त्रयुक्ते ॥

नीलवस्त्रः । पुं । बलदेवे ॥ न । नीलवर्णवसने ॥ यथा । स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं नदुष्यति । नीलीवस्त्रं नस्पृशेच्चनो ब्रह्माण्डं चेद्विलिप्त नागखण्डे प्रायश्चित्ताध्यायः ॥ तद्धारणप्रायश्चित्तादुक्तंप्रायश्चित्तविवेके । तथा भविष्यपुराणे । शृणुष्वेतिमहात्मा होनीलीरक्तवस्त्रधारणात् । वाससो यथाशार्दूलमदृतो ममकृतस्तथः ॥ पालनाद्विक्रयाच्चैव तद्वृत्तेरुपजीवनात् । पतितस्तुभवेद्विप्रस्त्रिभिःकृच्छ्रैर्विशुध्यति ॥ नीलीरक्तेनवस्त्रेण यत्कर्मकुरुतेद्विजः । स्नानंदानंतपो होमःस्वाध्यायःपितृतर्पणम् ॥ वृथा तस्यमहायज्ञोनीलीवस्त्रस्य धारणात् । नीलीरक्तं यदावस्त्रं कश्चिद्विप्रस्तुधारयेत् ॥ अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यतीति । इदम स्नाने । स्नानेतुदैशुध्यम् । अथापवादमाहापस्तम्बः । नीलीत्यनुवृत्तौ । स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यतीति ॥

नीलवासाः । पुं । शनैश्चरे ॥ बलभद्रे ॥ नीलेवाससीयस्य सः ॥

नीलवृक्षा । स्त्री । अजान्त्र्याम् । अतिलोमशायाम् । नीलवर्णवेगुना इति गौडभाषा ॥

नीलवृक्षः । पुं । वृक्षविशेषे । वातारौ । शोफनाशने ॥

नीलवृन्तकम् । न । तूले ॥ इति राजनिर्घण्टः ॥

नीलवृषः । पुं । कृष्णवर्णवृषे ॥ वृषविशेषे ॥ पश्चाल्लक्षणवृषे ॥

नीलवृषा । स्त्री । वार्त्ताक्याम् ॥

नीलव्रतम् । न । व्रतविशेषे ॥ नीललोहितव्रते ॥

नीलशिखण्डः । पुं । नीलजटाभारे । रुद्रे ॥ नीलशिखण्डोऽस्य ॥

नीलशिग्रुः । पुं । शोभाञ्जने ॥

नीलसरस्वती । स्त्री । तारायाम् । धीनाधिवासिन्यां बुद्धशक्तिविशेषे ॥

नीलसारः । पुं । तिन्दुकवृक्षे ॥

नीलसिन्धुकः । पुं । } निर्गुण्ड्याम् ।
नीलसिन्धुवारः । पुं । } शीतसहायाम् ॥

नीला । स्त्री । मक्षिकाप्रभेदे । पर्पशाखायाम् ॥ नीलति । नीलवर्णः । अच् ॥ देवीविशेषे ॥ नीलपुनर्नवायाम् ॥ नील्याम् ॥ मल्लाररागस्य नायीविशेषे ॥ लिङ्गवहर्मपुरायाम् ॥

नीलाङ्गः । पुं । सारसखगे ॥ चासे ॥

नीलाङ्गुः । पुं । कृमौ ॥ नितरां अङ्गति । गच्छति । नलदशाङ्कुपीयु नीलङ्गु लिग इति निपूर्वाल्लगेः कुः प्रत्ययो ने दीर्घे नीलङ्गुः । नीलाङ्गु इति पाठान्तरे तु धातोरपि दीर्घो निपात्यते ॥ स्त्री । भ्रमराख्याम् ॥ सुषिरे ॥ प्रसूने ॥

नीलाञ्जनम् । न । सौवीराञ्जने ॥ तुत्थे ॥

नीलाञ्जना । स्त्री । विद्युति ॥ इतिनटाधरः ॥

नीलाञ्जनी । स्त्री । कालाञ्जनीक्षुपे ॥

नीलाञ्जसा । स्त्री । अप्सरोभेदे ॥ नदीभेदे ॥ विद्युति ॥

नीलाण्डकः । पुं । ऋषभे । गवये ॥

नीलापराजिता । स्त्री । नीलवर्णापराजितालतायाम् । महानील्याम् ॥

नीलाब्जम् । न । नीलोत्पले ॥

नीलाम्बरः । पुं । बलदेवे । अच्युताग्रजे ॥ कौणपे । राक्षसे ॥ शनैश्चरे ॥ नीलमम्बरं यस्य ॥ न । तालीशपत्रे । शुक्रोदरे ॥ नीलवस्त्रे ॥ त्रि । नीलवस्त्रविशिष्टे ॥

नीलाम्बा । स्त्री । देवीविशेषे ॥ नीलाद्रिपर्वतोपरिस्थितस्थाने ॥

नीलाम्बुजन्म । न । नीलोत्पले ॥ नीलं च तदम्बुजन्म च ॥

नीलाम्लानः । पुं । पुष्पवृक्षविशेषे । दाख्याम् । आर्त्तगलायाम् ॥

नीलाम्ली । स्त्री । क्षुपविशेषे । श्यामाम्लायाम् ॥

नीलालुः । पुं । कन्दविशेषे । श्यामलालुके ॥

नीलाश्मा । पुं । नीलमणौ ॥

नीलासनः । पुं । नीलनृपे । नीलद्रुमे ॥ रतिबन्धविशेषे ॥ यथा । स्त्रियोपरि स्थिता नारी शय्यां कृत्वा पदद्वय

॥ नीलीरसनिभाः केचित् कृष्णकाष्ठनिभाः परे इत्यादिनागस्त्येन रत्नाशास्त्रे एषामेकादश विधाश्चोक्ताः ॥

नीलमाधवः । पुं । विष्णौ ॥

नीलमाषः । पुं । राजमाषे ॥

नीलमौक्तिकः । पुं । खद्योते ॥

नीलमक्षिका । स्त्री । पुष्पकाकोषे ॥ कृष्णवर्णायांमक्षिकायां ॥

नीललोहम् । न । वर्त्तलोहे ॥

नीललोहितः । पुं । शिवे । धूर्जटौ ॥ नीलश्चासौ लोहितश्च । कण्ठेजटासु च । नीलः कण्ठे लोहितश्चकेशेषु यस्येति स्वामी ॥ नीलरक्तमिश्रितवर्णे ॥ व्रतविशेषे ॥

नीललोहिता । स्त्री । भूमिजम्बाम् ॥

नीलवर्षाभूः । स्त्री । नीलपुनर्नवायाम् ॥ पुं । कृष्णभेके ॥

नीलवल्ली । स्त्री । वन्दायाम् ॥

नीलवसनः । पुं । शनौ ॥ हलायुधे । नीलाम्बरे ॥ त्रि । नीलवस्त्रयुक्ते ॥

नीलवस्त्रः । पुं । बलदेवे ॥ न । नीलवर्णवसने ॥ यथा । स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं नदुष्यति । नीलीवस्त्रं नस्पृशेद्यो नीलीमाचरकं तथेति गारुडे प्रायश्चित्ताध्यायः ॥ तद्धारणप्रायश्चित्तादुक्तं प्रायश्चित्तविवेके । तच्च भविष्यपुराणे । शृणुष्वेति महाबाहो नीलीरक्तस्य धारणात् । वाससो गवयाद्दुष्यते मम कृतस्त्रयः ॥ पालनाद्विक्रयाच्चैव तद्वृत्तैरुपजीवनात् । पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्विशुध्यति ॥ नीलीरक्तेन वस्त्रेण यत्कर्म कुरुते द्विजः । स्नानं दानं तपो होमः स्वाध्यायः पितृतर्पणम् ॥ वृथा तस्य महायज्ञो नीलीवस्त्रस्य धारणात् । नीलीरक्तं यदा वस्त्रं कश्चिद्विप्रस्तु धारयेत् ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यतीति । इदम् स्नाने । दानेतुद्वैगुण्यम् । अथापवादमाहापस्तम्बः । नील्यनुरक्तौ । स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यतीति ॥

नीलवासाः । पुं । शनैश्चरे ॥ बलभद्रे ॥ नीलेवाससीयस्य सः ॥

नीलवृक्षा । स्त्री । अजान्त्र्याम् । अतिशोभमायाम् । नीलवर्णवेगुना इति गौडभाषा ॥

नीलवृक्षः । पुं । वृक्षविशेषे । वातारौ । शोफनाशने ॥

नीलवृन्तकम् । न । तूले ॥ इति राजनिर्घण्टः ॥

नीलवृषः । पुं । कृष्णवर्णवृषे ॥ वृषविशेषे ॥ पश्चाल्लक्षणवद्वृषे ॥

नीलवृषा । स्त्री । वार्त्ताक्याम् ॥

नीलव्रतम् । न । व्रतविशेषे ॥ नीलश्चो हितव्रते ॥

नीलशिखण्डः । पुं । नीलजटाभारे रुद्रे ॥ नील.शिखण्डोऽस्य ॥

नीलशिग्रुः । पुं । शोभाञ्जने ॥

नीलसरस्वती । स्त्री । तारायाम् । चीनाधिवासिन्यां बुद्धशक्तिविशेषे ॥

नीलसारः । पुं । तिन्दुकवृक्षे ॥

नीलसिन्धुकः । पुं । } निर्गुण्ड्याम् ।
नीलसिन्दुवारः । पुं । } शीतसहायाम् ॥

नीला । स्त्री । मक्षिकाप्रभेदे । वर्णबायाम् ॥ नीलति । नीलवर्णे । अच् ॥ देवीविशेषे ॥ नीलपुनर्नवायाम् ॥ नील्याम् ॥ मल्लाररागस्य भार्याभिति सङ्गीतदर्पणम् ॥

नीलाङ्गः । पुं । सारसखगे ॥ चासे ॥

नीलाङ्गुः । पुं । कृमौ ॥ निस्रावयति । खगिगतौ । सृशङ्कुपीयुनीलङ्गु लिगु इति निपूर्वाल्लगेःकु प्रत्ययोऽने दीर्घेनीलङ्गुः । नीलाङ्गु इतिपाठान्तरेतु धातोरपिदीर्घोनिपात्यते ॥ स्त्री । भ्रमराल्याम् ॥ शुषिरे ॥ प्रसूने ॥

नीलाञ्जनम् । न । सौवीराञ्जने ॥ तुत्ये ॥

नीलाञ्जना। स्त्री । विद्युति ॥ इतिन टाधरः ॥

नीलाञ्जनी । स्त्री । कालाञ्जनीक्षुपे ॥

नीलाञ्जसा । स्त्री । अप्सरोभेदे ॥ न दीभेदे ॥ विद्युति ॥

नीलाण्डकः । पुं । क्षये । गवये ॥

नीलापराजिता । स्त्री । नीलवर्णापराजितालतायाम् । महानील्याम् ॥

नीलाभ्रम् । न । नीलेऽभ्रे ॥

नीलाम्बरः । पुं । बलदेवे । अच्युताग्रजे ॥ कौणपे । राक्षसे ॥ शनैश्चरे ॥ नीलमम्बरंयस्य ॥ न । तालीशपत्रे । शुकोदरे ॥ नीलवस्त्रे ॥ त्रि । नीलवस्त्रविशिष्टे ॥

नीलाम्बा । स्त्री । देवीविशेषे ॥ नीलाद्रिपर्वतोपरिस्थितस्थाने ॥

नीलाम्बुजन्म । न । नीलोत्पले ॥ नीलम्बुतदम्बुजन्मच ॥

नीलाम्लानः । पुं । पुष्पवृक्षविशेषे । दासाख्याम् । आर्त्तगलायाम् ॥

नीलाम्ली । स्त्री । क्षुपविशेषे । श्यामालताम् ॥

नीलालुः । पुं । कन्दविशेषे । श्यामलालुके ॥

नीलाश्मा । पुं । नीलमणौ ॥

नीलासनः । पुं । नीलपद्मे । नीलद्रुमे ॥ रतिबन्धविशेषे ॥ यथा । स्त्रियोपरिस्थिता नारी शय्यां कृत्वा पदद्वय

न। हृदये दत्तहस्ताच वन्धौ नीला स्तनोन्नतः ॥ इतिस्मृ० ॥

नीलिका । स्त्री । नीलिन्याम् ॥ क्षुद्ररोगभेदे ॥ नेत्ररोगविशेषे ॥ शेफालिकायाम् ॥ जलस्यन्दरे ॥ यथा । भूमेक्षुधरो वृक्षस्कोटरो जल नीलिकेत्यादिज्वरप्रकरणे विजयरक्षितः ॥ नीलवर्णा नीलादोषधौ प्राणिनि चेति ङीप् । स्वार्थे कन् ॥

नीलिनी । स्त्री । नीलीवृक्षे ॥ कृष्णपिष्टुलि ॥ जलनीलमल्याम् ॥ नीलावर्णोऽस्त्यस्याः । इनिः । ङीप् ॥

नीली । स्त्री । नीलिकारोगे ॥ नीलिन्याम् । काशायाम् । रञ्जन्याम् । नीलकावृक्ष इति भाषा ॥ नीलाख्या नपदे स्यनाछादनेर्थे ङीप् । नीलादोषधौ प्राणिनि च नित्यं ङीष् । संज्ञायान्तु वा ॥ नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा घन्युदरप्लीहवातरक्तकफानिलान् ॥ आमवातमुदावर्त्तं मदञ्च विषमुद्धतम् ॥

नीलीरागः । पुं । स्थिरसौहृदेपुरुषे ॥

नीलीवृक्षाकृतिः । पुं । शरपुङ्खे ॥

नीलोत्पलम् । न । इन्दीवरे । नीलशांपलाइति गौडभाषा ॥

नीलोत्पली । पुं । मञ्जुघोषे ॥ इति-त्रिकाण्डशेषः ॥

नीलोपलः । पुं । इन्द्रनीलमणौ ॥

नीवरः । पुं । वाणिज्ये ॥ वणिजके ॥ परिव्राजि । भिक्षुके ॥ नयति नीयते वा । णीञ्० । छित्वरच्छत्वरधीवरपीवरेत्यादिना साधुः ॥

नीवाकः । पुं । प्रयामे । मूल्योत्कर्षार्थं धान्यादिसञ्चये ॥ महार्घहेतोर्धान्यादिषु जनानामादरातिशये ॥ तुच्छावरणाधिक्ये ॥ तुलाकृतं न्यूनाधिक्यं क्रयादरो वेति स्वामी ॥ नियतं वचनम् । वच० । घञ् । उपसर्गस्येति दीर्घः ॥ मूल्याधिक्यहेतोर्निश्चये नपरिच्छेदनेऽतिभरतः ॥ वचनाभावे ॥

नीवारः । पुं । श्यामाकादितृणधान्ये । मुनिधान्ये । अरण्यधान्ये ॥ निव्रीयते । वृञ् वरणे । नौवृधान्ये इति घञ् । दीर्घः ॥ नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत् ॥

नीविः । स्त्री । परिपणे । वणिङ्मूलधने ॥ उच्चये । स्त्रीणां कटीवसनबन्धने ॥ स्त्रीणामित्युपलक्षणम् पुंस्कटीवस्त्रबन्धेऽपि ॥ निव्ययति निवीयते वा । व्येञ्० । नेर्व्येञो यलोपः पूर्वस्य च दीर्घश्चेतीञ् ॥ नितरां मिन्वति । इति मीधातौ भागमशास्त्रस्या

निष्ठस्त्वात्तनुम् । इगुपधात्किदिति इन् ॥

नीवी । स्त्री । नीविशब्दार्थे ॥ राजपुत्रादेर्बन्धके । परिपणे ॥ कृदिकारादितिङीप् ॥

नीवृत् । पुं । स्त्री । जनपदे । देशे । जनादिजननिवासस्थाने ॥ नियतो वर्त्तते । अधिकरणस्य कर्तृत्वविवक्षाय । वृतु० । क्विप् । नहिवृतीति दीर्घः ॥ नीवृज्जनपदयोर्भेदोदेशो इति शब्दाम्बुधिः ॥

नीशारः । पु । हिमानिलनिवारणप्रावरणे । सौड इति भाषा ॥ नीरिङ्गकूसनीशारः प्राचेयाः शिशिरे कृतः ॥ निसरां शीर्यते हिमानिलावनाने नया । शर्हिंसायाम् । शृवायुवर्णेभि हत्तेष्वितिः घञ् ॥ उपसर्गस्य घञीति दीर्घः ॥

नीहारः । पुं । अवश्याये । तुषारे । हिमे । धुवारा इति भाषा ॥ निह्रियते । हृञ० । घञ् । उपसर्गस्य घञीति दीर्घः ॥ कफवायुवर्द्धकोऽयम् ॥

नु । अ । वितर्के ॥ अपमाने ॥ विकल्पे ॥ अनुनये ॥ अतीते ॥ प्रश्ने ॥ हेतौ ॥ अपदेशे ॥ अनुशये ॥ नुदति नौतिवा । णुद० । णु० वा । मितद्वादित्वात् डु. ॥



नुतः । त्रि । स्तुते ॥

नुतिः । स्त्री । स्तुतौ । स्तोत्रे ॥ नूयतेऽनेन । णु० । स्त्रियाङ् क्तिन् ॥ पूजायामिति शब्दरत्नावली ॥

नुत्तः । त्रि । प्रेरिते ॥ नुद्यतेस्म । णुद० । क्तः । नुदविदेति पाक्षिकोनत्वाभावः ॥

नुन्नः । त्रि । नुन्ने । अस्ते । प्रेरिते ॥ नुद्यतेस्म । णुद० । क्तः । नुदविदेति नत्वम् ॥ निरस्ते ॥

नुन्नानुन्नत् । त्रि । अतिपीडितपीडके ॥ अतिशयेन नुन्नोऽनुन्नतः तं नुदतीतिविग्रहः ॥

नुन्नसारः । त्रि । परिचितधैर्ये ॥

नूतः । त्रि । स्तुते ॥

नूतन. । त्रि । प्रत्यग्रे । अभिनवे । नवीने ॥ नवएव । नवस्यनूतनप्नप्त्नखप्रत्ययाः नूरादेशश्च ॥

नूत्न. । त्रि । नवे । नव्ये । नूतने ॥ नवएव । नवस्यत्नप् प्रत्ययेनूरादेश. ॥

नूदः । पुं । ब्रह्मदारुवृक्षे । अश्वत्थाकारे पार्श्वपिप्पल इतिख्याते ॥ तूत इति प्रसिद्धेपि ॥ नुदति पापम् । णुद० । इगुपधेतिक । पुं० ॥ यद्वा । नुवदति । वद० । मू० क । कर्मणि कर्तृत्वम् ॥ यद्वा । नूयते । णु० । दा० द. । कुटादि ॥

नूनः । त्रि । समर्थे ॥ नक्तनः । म° ॥

नूनम् । अ । निश्चिते ॥ तर्के ॥ स्मरणे ॥ वाक्यपूरणे ॥ नुवा स्तुत्या नमति । डिच् ॥ यद्वा । नूनं नयति । ऊनप रिहाणे । अम् ॥

नूपुरः । पुं । न । पादाङ्गदे । मञ्जीरे । नेवुर इति बिछुआ इति च भाषा ॥ ॥ नुवनम् नूयते वा । णू° । सं° कि प् । नुवि पुरति । पुर अग्रगमने । इ गुपधेति कः ॥

ना । पुं । मनुष्ये । पुरुषे ॥ नयति म यतेया । णीञ्० । नयतेर्डिच्चेत्यृन् । नरौ । नरः ॥

नृकरोटिका । स्त्री । नरकपाले ॥ नृ करोटिका ॥

नृकेसरी । स्त्री । नरसिंहावतारे ॥

नृगः । पुं । पुराणप्रसिद्धे नृपविशेषे ॥

नृगधूमः । पुं । तीर्थविशेषे ॥

नृचक्षाः । पुं । राक्षसे ॥ नॄन् चष्टे । च क्षिङ्० । सर्वधातुभ्योऽसुन् । अस नयोश्चेति न ख्याञादेशः ॥ यद्वा । चष्टे नृन् संक्षिप्तश्चक्षिः । सार्वधातु कसंघत्वात् ख्याञ् न ॥ नृणां द्रष्टरि ॥

नृता । स्त्री । पुंस्त्वे । नृभावः । तल् ॥

नृतिः । स्त्री । नर्त्तने ॥ इतिशब्द° ॥

नृतुरङ्गः । पुं । हयग्रीवावतारे ॥

नृतूः । पुं । नर्त्तके ॥ नृत्यति । नृती°



। नृतिमृधोः कूः ॥

नृत्तम् । न । नर्त्तने । ताण्डवे । लास्ये ॥ नृती गात्रविक्षेपे । भावे क्तः ॥ भा वाश्रयन्तु नृत्तं स्यान्नृत्यं तालल याश्रयम् । आद्यं पदार्थाभिनयो मार्गो देशी तथा परः ॥ मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः । लास्यताण्डवरूपे ण नाटकाद्युपकारकम् ॥ गात्रविक्षे पमात्रे ॥

नृत्यम् । न । तालमानरसाश्रयसवि लासाङ्गविक्षेपे । ताण्डवे । नटने । नाच इतिभाषा ॥ देवस्या प्रती त्यर्थं तालमानरसाश्रयः । सविला सोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥ * ॥ ताण्डवञ्च तथा लास्यं द्विवि धं नृत्यमुच्यते । पेवलिमं तु रूपञ्च ताण्डवं द्विविधं मतम् ॥ अङ्गविक्षेप बाहुल्यं तथाभिनयशून्यता । यत्रसा पेक्षि करस्याः संगादेशीति श्लोकतः ॥ छेदनं भेदनं यत्र बहुरूपान्तराव ली । ताण्डवं बहुरूपं तदाकृष्याग- समुद्धृतम् ॥ * ॥ इतिसङ्गी° ॥ नृ त्येनाराधनरूपेण सिद्धिर्नृत्यस्य रूप तः । सार्वभिधानयत् नृत्यं नृत्य- मन्यद्विवक्षनेति ॥ गेयादुत्तिष्ठते वा द्यं वाद्यादुत्तिष्ठते लयः । लयताल स मारब्धं ततो नृत्यं प्रवर्त्तते ॥ नृती°

साधितं तु यथा। कर्णनासानुशोथार्श्च
त्वद्दन्तरोगश्च पीनसम्॥ श्वौल्व्य-
शीतपित्तञ्च स्थावराणि विषाणि च
। वातपित्तकफोत्थांश्च द्वन्द्वजान् सा
न्निपातिकान्॥ सर्वरोगभयान् हन्ति
चण्डांशुरिव पापहा । बलवर्णकरो
ह्येष आयुष्यो वीर्यवर्द्धनः॥ परंवा
जीकरः श्रेष्ठः पटुतामन्त्रसिद्धिदः।
अरोगी दीर्घजीवी स्याद्रोगी रोगं
विमुञ्चति॥ रसस्यास्य प्रसादेन सुख
ह्रिस्वायते जनः। इति रत्नावली॥

नृपद्रुमः। पुं। आरग्वधे॥ राजादनी
वृक्षे॥

नृपप्रियः। पुं। वेणुवंश इति गौडभा
षाप्रसिद्धे वेणुवंशे॥ राजपलाण्डौ॥
राजशुके॥ रामशरे॥ शालिधान्ये॥
आम्रे॥ त्रि। राजवल्लभे॥ नृपस्य
प्रियः॥

नृपप्रियफला। स्त्री। वार्त्ताक्याम्॥
इति राजनिर्घण्टः॥

नृपप्रिया। स्त्री। केतक्याम्॥ राजख
र्जूर्याम्॥ राजभार्यायाम्॥

नृपबदरः। पुं। राजबदरवृक्षे॥ न। त
त्फले॥

नृपमन्दिरम्। न। सौधे। राजसदने॥

नृपमाङ्गल्यकम्। न। आहुल्यवृक्षे॥

नृपमानम्। न। भूभुजाभुक्तिकाला



वेद्यवाद्यविशेषे॥ इति शब्दाम्बुधिः॥

नृपलक्ष्म। न। राजच्छत्रे॥ राजचि
ह्ने॥ नृपस्य लक्ष्म॥

नृपलिङ्गधरः। पुं। राजवेशधारिणि॥
यथा। निजयाहौजसा वीरःकलिं
दिग्विजयेक्वचित्। नृपलिङ्गधरं शू
द्रं घ्नन्तं गोमिथुनं पदेति श्रीभागवत
म्॥ प्रवृद्धे कलिकाले तु तद्विधाएव भू
भुजः। प्रसाधनाद्दानपराःशूद्राश्चैतादृ
शभागिनः॥

नृपवल्लभः। पुं। राजाम्रे॥ त्रि। राज
प्रिये॥

नृपवल्लभा। स्त्री। राजप्रियायाम्॥ के
तकापुष्पे॥

नृपशुः। पुं। कार्य्याकार्य्यविवेकशून्ये॥
ना पशुरिव। उपमितसमासः॥

नृपसभम्। न। राज्ञांसभायाम्॥ नृपा
णांसभा। सभाराजामनुष्यपूर्वेति
क्लीवत्वम्॥

नृपात्मजा। स्त्री। राजपुत्र्याम्॥ नृ
पस्य आत्मजा॥ कटुतुम्ब्याम्॥

नृपाध्वरः। पुं। राजसूययज्ञे॥

नृपान्नम्। न। राजान्नाख्यधान्ये॥ रा
जान्ने॥

नृपाभीरम्। न। भक्ततूर्य्ये। राजभो
जनकालीनवाद्यविशेषे॥

नृपामयः। पुं। राजयक्ष्मणि। क्षयरो

गे ॥ राजोरोगे ॥

नृपावर्त्तम् । न । राजावर्त्तरत्ने ॥

नृपासनम् । न । भद्रासने । सिंहासने । मण्यादिकृतराजासने ॥ नृपस्य आसनम् ॥

नृपाह्वयः । पुं । राजपलाण्डौ ॥ नृपनामनि ॥

नृपेशः । पुं । सार्वभौमे ॥ नृपाणामीशः ॥

नृपोचितः । पुं । राजमाषे ॥ त्रि । राजार्हे ॥

नृयज्ञा । स्त्री । सप्तद्वीपस्य प्रधानमध्याम् ॥

नृयज्ञः । पुं । अतिथिपूजने । ब्राह्मण श्रेष्ठस्यार्चायाम् ॥

नृवराहः । पुं । वराहरूपधरभगवदवतारे ॥ अयं वक्ष्यद्वीति पुराणम् ॥ नृवराहस्य वसति र्मर्त्त्यलोके प्रतिष्ठितेति पद्मपुराणम् ॥

नृशंसः । त्रि । घातुके । क्रूरे ॥ नॄन् शंसति । शंसु हिंसायाम् । कर्मण्यण् ॥ पचाद्यच् ॥

नृषद् । पुं । मनुष्येषु विद्यमाने ॥ वृद्धौ ॥ नृषु सीदति । षद्लृ० क्विप् ॥

नृसिंहः । पुं । विष्णौ । हरेरवतारविशेषे ॥ यथा । यत्पादपद्ममकरन्दरसाऽनभिज्ञाविश्राममाविधिपदात्



पिसम्भ्रमतः । नमामुवन्निपशुकर्मरताधनेदास्यो नृसिंहवपुषे हरये नमस्ते इतिविष्णुभागवतम् ॥ अपिच । पुण्यारण्येनृसिंहैकनामसिंहोविराजते । यन्नादतःपलायन्ते महाकिल्बिषकुञ्जराइति ॥ अस्यवसतिर्जनलोके । यथा । नृवराहस्यवसतिर्महर्लोकेप्रतिष्ठिता । नृसिंहस्यतथाप्रोक्ताजनलोके मया अनघ इतिपाद्मेसृष्टिखण्डे २८ अध्यायः ॥ मनुष्योत्तमे ॥ ना सिंह इव । उपमितव्याघ्रादिभिरितिसमासः ॥ नाचासौसिंहश्चेति वा ॥ रतिबन्धविशेषे । यथा । पादौ सम्मीलयेन्नारी षष्ठान्त्रिप्रवेशनम् । उभयोर्दृष्टयेप्राप्यबन्धोनृसिंहसंज्ञकइति ॥

नृसिंहचतुर्दशी । स्त्री । वैशाखशुक्लचतुर्दश्याम् ॥ यथा । वैशाखस्यचतुर्दश्यांशुक्लायां श्रीनृकेशरी । जातस्तदस्यांतत्पूजोत्सवं कुर्वीतसव्रतमिति ॥

नृसिंहपुराणम् । न । नारसिंहे ॥

नृसेनम् । न । नरसेनायाम् ॥ नृणां सेना । विभाषासेनेतियाश्चिदंक्लीवत्वम् ॥

नृसेना । स्त्री । नृसेने ॥ नृणांसेना ॥

नृहरिः । पुं । नृसिंहे ॥

तियोगात् । प्रसक्तसरोदनशोकता पाच्छिरोभिघातादतिमद्यपानात् ॥ तथाक्रतूनाञ्च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च । वातात् पित्तात् कफाद् रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्वनेत्रामयाकरः इति च ॥ वाग्भटस्तु सूर्यनिरीक्षणाच्च नेत्रविकारान् जनयन्ति दोषाः ॥

नेत्ररोगहा । स्त्री । वृश्चिकालीवृक्षे ॥ त्रि । चक्षूरोगनाशके ॥

नेत्रामयः । पुं । नेत्ररोगे ॥

नेत्राम्बु । न । अश्रुणि ॥ नेत्रयोरम्बु ॥

नेत्रारिः । पुं । सेहुण्डवृक्षे ॥

नेत्री । स्त्री । नद्याम् ॥ नाड्याम् ॥ श्रियि । लक्ष्म्याम् ॥ नेतृशब्दात् स्त्रियाम् ङीप् ॥ प्रापयित्र्याम् ॥

नेत्रोपमफलः । पुं । वातादे । बदाम इति भाषा ॥

नेत्रौषधम् । न । पुष्पकासीसे ॥ चक्षूरोगौषधमात्रे ॥

नेत्रौषधी । स्त्री । अजशृङ्ग्याम् ॥

नेदिष्ठः । त्रि । अत्यासन्ने ॥ अयमेषामतिशयेनान्तिकः । इष्ठन् । अन्तिकबाढयोर्नेदसाधौ ॥ निपुणे ॥ अङ्कोठ वृक्षे ॥

नेदीयान् । त्रि । अत्यन्तसमीपे । अयमनयोरतिशयेनान्तिकः । ईयसुन् । अन्तिकस्य नेदादेशः ॥

नेपः । पुं । पुरोहिते ॥ नयति नीयते वा । णीञ्० । पानीविषिभ्यः पः ॥

नेपथ्यम् । न । रङ्गभूम्याम् । रङ्गभूमौ ॥ पुं । अलङ्कारे । प्रसाधने । वेशे ॥ वेशस्थाने ॥ नयति । णीञ्० । विच् । गुणः । नयेर्नेतस्य नेतुर्वा पथ्यः ॥

नेपालः । पुं । स्वनामप्रसिद्धे हिमालयैकदेशविशेषे ॥ यथा । जटेश्वरं समारभ्य योगेन्यन्तं महेश्वरि । नेपालदेशो देवेशि सुक्तः श्रीशक्तिसङ्गमे ॥

नेपालकम्बलः । पुं । कृतमाल्ये ॥

नेपालनिम्बः । पुं । नैपाले । तृणनिम्बे । ज्वरान्तके । माल्वीतिक्ते ॥

नेपालमूलकम् । न । हस्तिदन्तसदृशे मूलकविशेषे ॥ नैपालमूलकं चान्यत् शङ्खवेत्रगदन्तवत् ॥

नेपालिका । स्त्री । मनःशिलायाम् ॥

नेमः । पुं । काले ॥ अवधौ ॥ अर्द्धे । खण्डे ॥ प्रकारे ॥ कैतवे ॥ गर्त्ते ॥ नीयते । णीञ्० । अर्त्तिस्तुस्विति मन् ॥ नाम्बादौ ॥ अन्यस्मिन् । इति शब्द० ॥

नेमिः । पुं । जिनविशेषे ॥ तिनिशवृ

चे। त्रिनाभ इतिभाषा॥ स्त्री। त्रिकायाम्। कूपसमीपे रज्जुधारणार्थं निदारुयन्त्रे॥ चक्रान्ते। प्रधौ। रथचक्रस्य भूमिस्पर्शिभागे॥ कूपात्रिके समारम्भवलभागे॥ इति शब्दरत्नावली॥ नयतिरथम् नयन्त्यनेनवा। णीञ्०। मिर्योमिः॥

नेमिचक्रः। पुं। परीचिद्वंशजे असीमकृष्णात्मजे॥

नैमिषम्। न। नैमिषारण्याख्ये क्षेत्रे॥ तत्रायाविसृष्टस्य चक्रस्य नेमिः शीर्यते क्षुण्णीभवति यत्र तत्॥

नेमी। स्त्री। कूपत्रिकायाम्॥ चक्रान्तभागे। प्रधौ॥

नेष्ट। त्रि। निषिद्धे॥

नेष्टु। पुं। लोष्टे॥ इतिशब्दाम्बुधि॥

नेष्टा। पुं। ऋत्विग्विशेषे॥ नयति। णीञ्०। नयतेः षुक्चेतितृन्॥ नप्तृनेष्ट्रितिसाधु॥

नैत्यम्। न। नित्यतायाम्। दुर्गीता॥

नैकटिक। पुं। भिक्षौ॥ भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति शास्त्रम्। प्रयोजनान्निकटे वसति। ठक्॥ त्रि। निकटवर्त्तिनि॥

नैकट्यम्। न। निकटत्वे॥

नैकभेद। त्रि। बहुविधे। उच्चावचे॥ अनेकप्रकारे॥ एकोभेदोऽस्य। न



एकभेदः। सुप्सुपेति समासः॥ न एकोभेदोऽनेनेति। उत्तरपदशब्दस्य समास परभावयवेच्छत्वान्मध्यपदे न लोपाभावः॥

नैकषेयः। पुं। राक्षसे॥ निकषाया अपत्यमित्यर्थे ढक्॥

नैकृतिकः। त्रि। स्वस्मिन्नुपकारिण्यममनुत्पाद्यपरवृत्तिच्छेदनेन स्वार्थपरे॥ निकृत्यापरापकारेणजीवति। निकृत्यानिष्ठुरतया चरतिवा। ठक्॥

नैगमः। पुं। न। उपनिषदि॥ वणिजि। वाणिजे॥ नागरे। पौरे॥ नये॥ स्वाम्॥ निगमे भवः। तत्रभव इत्यण्॥ निगमपदना। प्र० कण्॥ त्रि। निगम सम्बन्धिनि॥

नैचिकम्। न। गोः शिरोदेशे॥ इति हेमचन्द्रः॥

नैचिकी। स्त्री। उत्तमायांगवि॥ नीचैश्चरति। चरतीति ठक्। अव्ययानामितिटिलोपः। यद्वा। निचि. कर्णशिरोदेशे इतिरभसः। तस. म्यार्थेकन्। प्रशस्तं निचिकमस्या. ज्योत्स्नादिभ्य इत्यण्॥

नैज.। त्रि। निजसम्बन्धिनि। स्वीये॥

नैत्यम्। न। नित्यत्वे॥ इ०राधाकान्त॥

नैत्यकम्। न। नित्यानुष्ठेये। क्य

यज्ञे । ब्रह्मयज्ञादिरूपे ॥ यथा । वेदोपकरणे चैव स्वाध्याये चैव नैत्यके । नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हीति ॥ नैत्यके नास्त्यनध्यायोऽब्रह्मसत्रं हि तत् स्मृतम् । ब्रह्माहुति हुतं पुण्यमनध्यायवषट्कृतमिति मनुः ॥

नैत्यशब्दिकः । पुं । नित्यशब्दस्त्वाहिनि ॥ नित्यः शब्द इति आह । तदर्हतिमाशब्दादिभ्य ष्ठक् ॥

नैदानिकः । त्रि । निदानविदि ॥ निदानाध्येतरि ॥

नैद्रः । त्रि । निद्रासम्बन्धिनि ॥

नैपालः । पुं । नेपालनिम्बे ॥ त्रि । नेपालदेशसम्बन्धिनि ॥

नैपालिकम् । न । ताम्रे ॥ इतिराजनि० ॥

नैपाली । स्त्री । नवमाल्याम् ॥ कुनट्याम् । मनःशिलायाम् ॥ सुवहायाम् । शेफालिकायाम् ॥ नेपाले भवा । तत्र भवः इत्यण् ॥ नीलशेफालिकायाम् शब्दरत्नावली ॥

नैपुणम् । न । नैपुण्ये ॥ निपुणस्य भावः ॥

नैपुण्यम् । न । निपुणत्वे ॥ निपुणस्य कर्म भावो वा । ब्रा० ष्यञ् ॥

नैमित्तिकम् । न । पुत्रजन्माद्यनुबन्धिषु जातेष्ट्यादिकर्मसु । निमित्तमासाद्यावश्यकर्त्तव्यतया विहितेषु ॥ त्रि । हेतुमति । निमित्तादागते ॥ ठक् ॥

नैमित्तिकक्रिया । स्त्री । निमित्तनिश्चयवदधिकारिकर्त्तव्ये कर्मणि ॥

नैमित्तिकदानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये दाने ॥ यथा । यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितमिति गरुडपुराणम् ॥

नैमित्तिकधर्मः । पुं । निमित्ताश्रितधर्मे ॥ निमित्तमेकमाश्रित्य यो धर्मः सम्प्रवर्त्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥

नैमित्तिकलयः । पुं । प्रलयविशेषे ॥ चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः ॥

नैमित्तिकस्नानम् । न । निमित्तनिश्चयवदधिकारिकर्त्तव्ये स्नाने ॥ यथा । चाण्डालशवपूयादिस्पृष्टास्नातो रजस्वलाम् । स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तदिति ॥

नैमिशम् । न । नैमिशारण्ये ॥ नैमिशमेव । स्वार्थेऽण् ॥ तीर्थविशेषे ॥

नैमिशारण्यम् । न । प्रसिद्धेऽरण्यविशेषे ॥ नैमिशश्च तदरण्यञ्च ॥

नैमिषम् । न । नैमिषारण्ये ॥ तीर्थ

विशेषे ॥

नैमिषकुञ्जम् । न । तीर्थविशेषे ॥

नैमिषारण्यम् । न । स्वनामख्यातप्रसिद्धेऽरण्यविशेषे ॥ अथारण्ये निमिषेण दानवबलं विष्णुना निहतम् । तथा हि । तेन चक्रेण ससैन्य मासुरदैत्येयं व्यधात् । निमिषान्तरमात्रेण भस्मसद्बहुधाकृतम् ॥ एवंकृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिं स्ततस्तेन नैमिषारण्य संज्ञितम् । भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः ॥ इतिवराहपुराणेगौरमुखंप्रतिभगवद्वाक्यम् ॥ शुकपाद्यधिष्ठितेसिद्धसिद्धस्थानम् ॥ सुकथातत्रदेवता । देवदेवाधिपःशम्भुर्नैमिषेचमहेश्वरेत्यागमोक्तेः ॥ नैमिषेतुमहास्थानेदेवीसाध्विङ्गधारिणीतिदेवीगीता ॥

नैमेयः । पुं । परीवर्त्ते । परिदाने । विनिमये ॥ निमानम् । मेङ्प्रणिदाने । अचोयत् । ईद्यति । गुणः । प्रज्ञाद्यण् ॥

नैयग्रोधम् । न । न्यग्रोधफले ॥ न्यग्रोधस्यविकारः । अचादित्वादण् । तस्य विधानसामर्थ्यात्फलेनलुक् । न्यग्रोधस्यचकेवलस्येत्यैजागमः ॥ न्यग्रोधजातेचमसादौ ॥

नैयङ्कवम् । त्रि । न्यङ्कुमृगजातवस्त्रचर्मादौ ॥

नैयमिकम् । न । नित्यनैमित्तिकविधिप्राप्तेसन्ध्याध्ययनजातेपूज्यादौ ॥

नैयायिकः । त्रि । सांयात्रिके । स्वाध्यायादे । तर्कशास्त्राध्येतरि । तद्वेत्तरि च ॥ न्यायमधीते वेत्तिवा । क्रतूक्थादित्वाठक् ॥

नैयासिकः । त्रि । न्यासाभिज्ञे ॥ न्यासमधीते वेदवा । उक्थादित्वाट्ठक् ॥

नैरन्तर्यम् । न । निरन्तरत्वे ॥

नैराश्यम् । न । आशायाअभावे ॥

नैरुक्तः । त्रि । निरुक्तसम्बन्धिनि ॥

नैरुक्तिकः । त्रि । निरुक्ताध्येतृवेदित्रोः ॥ निरुक्तमधीते वेदवा । उ० ठक् ॥

नैर्ऋतः । पुं । राक्षसे ॥ पश्चिमदक्षिणकोणाधिपतौ ॥ सैंहिकेये ॥ निर्ऋतेरपत्यम् । तस्यापत्यमित्यण् ॥

नैर्ऋती । स्त्री । असुरयक्षा ॥ अथ प्रतीच्योर्मध्यायांदिशि । नैर्ऋतकोणे ॥

नैर्गुण्यम् । न । निर्गुणत्वे ॥

नैर्झरम् । न । भौमस्यैवपानीयस्यभेदे । निर्झरसम्बन्धिजले ॥ शैलसानुस्रवद्वारिमवाहो निर्झरो झरः । सतुप्रस्रवणश्चापि तत्पयं नैर्झरं क

लम् ॥ नैर्जरं कृषिकृत्क्षीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकञ्च वातघ्नं स्याद्‌पित्तलम् ॥

नैर्मल्यम् । न । निर्मलत्वे ॥ विषयवैराग्ये ॥ यथा । विषयेष्वतिसंरागो मानसो मलउच्यते । तेष्वेव हि विरागस्तु नैर्मल्यंसमुदाहृतमिति ॥

नैर्वाणिकम् । न । माया. निर्गमनद्वारे ॥

नैविड्यम् । न । संप्रफुल्लारगुणविशेषे ॥ यथा । नैविड्यंप्रौढताचापिस्तुस्वरत्वञ्चगीभता । माधुर्यमितिपञ्चामीफुल्लृतेषुगुणाः स्मृताः ॥ निविडत्वे । सघनतायाम् ॥

नैवेद्यम् । न । निवेदनीयद्रव्ये ॥ सर्वागुविसर्जनाद् द्रव्यं नैवेद्यं सर्वमुच्यते विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥

नैशम् । त्रि । नैशिके ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति शैषिकेर्थेषु पाक्षिकोऽण् ॥

नैशिकम् । त्रि । नैशे ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति पक्षे ठञ् ॥

नैषधः । पुं । नलभूपतौ ॥ निषधदेशाधीश्वरे ॥ निषधानामयम् । तस्येदमित्यण् ॥ त्रि । निषधसम्बन्धिनि ॥

नैषादकिः । पुं । निषादतनये ॥

नैष्कर्म्यम् । न । ब्रह्मविषयविचारनिष्पन्नज्ञाने ॥ सर्वकर्मशून्यत्वे । कर्मत्यागरूपेसन्न्यासे ॥ निष्कर्मणोभावः । ष्यञ् ॥ वेदोक्तमेवकुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यसिद्धिंलभते रोचनार्थाफलश्रुति महाभागवते एकादशस्कन्धः ॥

नैष्किकः । पुं । रूप्याध्यक्षे । टङ्कादिशालायां नियुक्ते ॥ निष्के हेम्निनियुक्तः । तत्रनियुक्तइति ठक् ॥ त्रि । निष्केणक्रीते ॥ निष्कस्यविकारे ॥ क्रीतवत् परिमाणादित्यति देशात् असमासेनिष्कादिभ्य इति ठक् ॥

नैष्ठिकः । पुं । ब्रह्मचर्येण यावज्जीवंगुरुकुलेवासिनि । मिथ्यासंसारसमाप्तिकालयोगनेब्रह्मचारिविशेषे ॥ यथा । नैष्ठिको ब्रह्मचारीच वसेदाचार्यसन्निधौ । तदभावेऽस्यतनये पत्न्यांवैश्वानरेपिवा ॥ अनेनविधिनादेहं साधयेद्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोतिनचेहा ऽऽजायतेपुनः ॥ आरूढोनैष्ठिकंधर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येनशुध्येत् स आत्महा ॥ आरूढपतितं विप्रमण्डलाद्विनिःसृतम् । उद्बद्धं निहतञ्चसृद्यञ्चान्द्रायणं चरेत् ॥

विशेषे ॥

नैमिषकुञ्जम् । न । तीर्थविशेषे ॥

नैमिषारण्यम् । न । स्वनामप्रसिद्धे ऽरण्यविशेषे ॥ अत्रारण्ये निमिषेण दानवबलं विष्णुना निहतम् । तथा हि । तेन चक्रेण तत्सैन्यं मासुरं दौर्जयं ज्वलात् । निमिषान्तरमात्रेण भस्मवद्वसुधागतम् ॥ एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलम् ॥ अरण्येऽस्मिंस्ततस्तेन नैमिषारण्यसंज्ञितम् । भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः ॥ इति वराहपुराणे गौरमुखं प्रति भगवद्वाक्यम् ॥ शुकाद्यधिष्ठितैतत्सिद्धस्थानम् ॥ स कथासु यद्देवता । देवदेवाधिपः शम्भुर्नैमिषे च सदा स्थितः ॥ नैमिषे तु महास्थाने देवी सा लिङ्गधारिणीति देवीगीता ॥

नैमेय. । पुं । परीवर्त्ते । परिदाने । विनिमये ॥ निमानम् । मेङ् प्रणिदाने । अचोयत् । ईद्यति । गुणः । प्रज्ञाद्यण् ॥

नैयग्रोधम् । न । न्यग्रोधफले ॥ न्यग्रोधस्य विकारः । प्लक्षादिभ्योऽण् । तस्य विधानसामर्थ्यात्फलेन लुक् । न्यग्रोधस्य केवलस्येत्यैजागमः ॥ न्यग्रोधजातेचमसादौ ॥

नैयङ्कवम् । त्रि । न्यङ्कुमृगजातवस्त्रचर्मादौ ॥

नैयमिकम् । न । नियमनैमित्तिकविधिप्राप्तेसन्ध्याध्ययनाग्निहोत्रादौ ॥

नैयायिकः । पि । सांख्यादिके । स्वाद्यपादे । तर्कशास्त्राध्येतरि । तद्वेत्तरि च ॥ न्यायमधीते वेत्ति वा । क्रतूक्थादित्वाट्ठक् ॥

नैयासिकः । पि । न्यासाभिज्ञे ॥ न्यासमधीते वेद वा । उक्थादित्वाट्ठक् ॥

नैरर्थ्यम् । न । निरर्थत्वे ॥

नैराश्यम् । न । आशायाअभावे ॥

नैरुक्त । पि । निरुक्तसम्बन्धिनि ॥

नैरुक्तिकः । त्रि । निरुक्ताध्येतृवेदित्रोः ॥ निरुक्तमधीते वेद वा । उ० ठञ् ॥

नैर्ऋतः । पुं । राक्षसे ॥ पश्चिमदक्षिणकोणाधिपतौ ॥ सैंहिकेये ॥ निर्ऋतेरपत्यम् । तस्यापत्यमित्यण् ॥

नैर्ऋती । स्त्री । असुरप्रजा ॥ अवाचीप्रतीच्योर्मध्यायां दिशि । नैर्ऋतकोणे ॥

नैर्गुण्यम् । न । निर्गुणत्वे ॥

नैर्झरम् । न । भीमसेनपानीयप्रभेदे । निर्झरसम्बन्धिजले ॥ शैलसानुस्रवद्वारिप्रवाहो निर्झरो झरः । ततु प्रस्रवणस्यापि तत्स्थं नैर्झरं म

लम् ॥ नैऊरं रुचिकृत्क्षीरं कफघ्नं दीपनं लघु । मधुरं कटुपाकञ्च वातलं स्यादपित्तलम् ॥

नैर्म्मल्यम् । न । निर्म्मलत्वे ॥ विषयवैराग्ये ॥ यथा । विषयेष्वतिसंरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्म्मल्यं समुदाहृतमिति ॥

नैर्य्याणिकम् । न । वाय्वाः निर्गमनद्वारे ॥

नैविड्यम् । न । वंशफूत्कारगुणविशेषे ॥ यथा । नैविड्यं प्रौढताचापि सुस्वरत्वञ्च धीमता । माधुर्य्यमिति षड्वाणीफुत्कृतेषु गुणाः स्मृताः ॥ निविडत्वे । सघनतायाम् ॥

नैवेद्यम् । न । निवेदनीयद्रव्ये ॥ अर्व्वागुविसर्ज्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते विसर्ज्जिते जगन्नाथे निर्म्माल्यं भवति क्षणात् ॥

नैशम् । त्रि । नैशिके ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति शैषिकेर्थेषु प्राग्दिव्यतीयेष्वण् ॥

नैशिकम् । त्रि । नैशे ॥ निशायांभवम् । निशाप्रदोषाभ्याञ्चेति पक्षे ठञ् ॥

नैषधः । पुं । नलभूपतौ ॥ निषधदेशाधीश्वरे ॥ निषधानामयम् । तस्येदमित्यण् ॥ त्रि । निषधसम्बन्धिनि ॥

नैषादकिः । पुं । निषादतनये ॥

नैष्कर्म्यम् । न । ब्रह्मविषयविचारनिष्पन्नज्ञाने ॥ सर्व्वकर्म्मशून्यत्वे । कर्म्मत्यागरूपसन्न्यासे ॥ निष्कर्म्मणो भावः । ष्यञ् ॥ वेदोक्तमेव कुर्व्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिरिति महाभागवते एकादशस्कन्धः ॥

नैष्किकः । पुं । टङ्काध्यक्षे । टङ्कादिशालायां नियुक्ते ॥ निष्के हेम्नि नियुक्तः । तत्र नियुक्त इति ठक् ॥ त्रि । निष्केणक्रीते ॥ निष्कस्य विकारे ॥ क्रीतवत् परिमाणादित्यनिदेशात् असमासे निष्कादिभ्य इति ठक् ॥

नैष्ठिकः । पुं । ब्रह्मचर्य्येण यावज्जीवं गुरुकुलवासिनि । निष्ठा संसारसमाप्तिस्तत्पर्य्यन्तं ब्रह्मचारिविशेषे ॥ यथा । नैष्ठिको ब्रह्मचारी च वसेदाचार्य्यसन्निधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥ अनेन विधिना देहं साधयेद्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति न चेहा जायते पुनः ॥ आरूढो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा ॥ आरूढपतितं विप्रमण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत् ॥

निष्ठाविद्यतेऽस्य । मत्वर्थीयठक् ॥ निष्ठायां भव: भवार्थेठग्वा ॥ त्रि । निश्चले॥

नैष्ठिकी । स्त्री । निश्चलायाम् ॥ टिड्ढे त्विङीप् ॥

नैसर्गिक: । त्रि । स्वाभाविके ॥

नैस्त्रिंशिक: । त्रि । असियोधे । असिहेतौ ॥ निस्त्रिंश: प्रहरणमस्य । प्रहरणमिति ठक् ॥

नो । अ । अभावे ॥ नह्यति । नह० । डो प्रत्यय: ॥

नोचेत् । अ । निषेधे ॥

नोदना । स्त्री । चोदनायाम् ॥

नोदित: । त्रि । प्रवर्त्तिते ॥ प्रेरिते ॥

नोधाड । पु । ऋषिविशेषे ॥ नूयते । णु० । नुवोधुट्चेत्यसि. । नवंदधातिवा ॥

नोपस्थाता । त्रि । दूरस्थे ॥ हीनार्थिविशेषे । अनुपस्थिते । पास नही इति भाषा ॥ यथा । अन्यवादीक्रियाद्वषी नोपस्थातानिरुत्तर: । आहूतप्रपलायीचहीन. पञ्चविध: स्मृत. ॥ न उपसमीपे तिष्ठति । ष्ठा० । तृच् ॥

नौ: । स्त्री । नौकायाम् ॥ नौकाविशेषे । कस्तकी नाव इतियस्कादेशभाषा इष्टिम्बोट इतीङ्ग्रेजभाषाच ॥

यथा । तत: प्रवासितो विद्वान् विदुरेणनरस्तदा । पार्थानांदर्शयामास मनोमारुतगामिनीम् ॥ सर्ववातसहां नावं यन्त्रयुक्तांपताकिनीम् । शिवेभागीरथीतीरे नरै र्विस्रम्भिभि: कृताम् ॥ इतिमहाभारते आदिपर्वणि जतुगृहे १४६ अध्याय: नुदते । णुद० । ग्लानुदिभ्यांडौ: ॥ यद्वा । नयति । णीञ्० । अन्येभ्यो० ड: । नम् भवति । क्विप् । ज्वरत्वरत्यूठ् । वृद्धि: ॥

नौका । स्त्री । नावि । तरण्याम् । निष्पद्याने । तर्याम् ॥ नौशब्दात्स्वार्थेक: ॥

नौकादण्ड: । पुं । क्षेपण्याम् । नौकापार्श्वद्वयवहुचालनकाष्ठे । दाँड इति भाषा ॥ नौकाया दण्ड: ॥

नौतार्य्य: । त्रि । नाव्ये ॥ नावातार्य्य ॥

न्यक्का । स्त्री । विट्कीटे ॥ न्यक्काविट्कीटकेस्त्रियामिति शब्दाम्बुधि: ॥

न्यक्कवका । स्त्री । विट्कीटे । शकृत्कृमौ ॥ इतिहारावली ॥

न्यक्करणम् । न । तिरस्कारे ॥

न्यक्कार. । पुं । अनादरे । अवहेलने ॥

न्यक्कृति: । स्त्री । रीढायाम् । न्यक्कारे ॥

न्यच. । पु । यामदग्न्य । परशुरामे ॥

मर्हिषे ॥ न । कार्त्स्न्ये ॥ तृणे ॥ त्रि । निकृष्टे ॥ नियतानि निकृतानि वा अक्षाण्यस्य यस्मिन् वा ॥

न्यग्रोधः । पुं । व्यामे । व्यामपरिमाणे ॥ वटवृक्षे ॥ शमीद्रुमे ॥ न्यक्रुणद्धि । रुधिर० । कर्मण्यण् ॥ हरौ ॥ न्यग्वीरुद् रोहति सर्वेषामुपरि वर्त्तते० ॥ सर्वाणि भूतानि न्यक्कृत्य निजमायया ऽऽवृणोति रुणद्धीति वा ॥ विष्णुपर्य्यायम् ॥ मोहनाख्यौषधौ ॥

न्यग्रोधपरिमण्डलः । पुं । व्यामपरिमितोच्छ्रायपरीणाहे पुरुषे ॥ एतादृशाः पुरुषास्त्रेतायुगे चक्रवर्त्तिन आसन् । यथा । महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः । सर्वे लक्षणसम्पन्ना न्यग्रोधपरिमण्डलाः ॥ न्यग्रोधौ तु स्मृतौ बाहू व्यामो न्यग्रोध उच्यते । व्यामेन तूच्छ्रयो यस्य अध ऊर्द्ध्वं च देहिनः ॥ समोच्छ्रयपरीणाहो न्यग्रोधपरिमण्डलः ॥ इति मात्स्ये ११८ अध्यायः ॥

न्यग्रोधपरिमण्डला । स्त्री । अङ्गनाविशेषे ॥ यथा । स्तनौ सुकठिनौ यस्या नितम्बे च विशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डलेति शब्दमाला ॥

न्यग्रोधा । स्त्री । न्यग्रोधाम् ॥

न्यग्रोधी । स्त्री । उपचित्रायाम् । मूषिकपर्ण्याम् ॥ न्यक्रुणद्धि बहुमूलत्वात् । रुधिर० । पचाद्यच् । गौरादित्वात् ङीष् ॥ न्यक् रुणद्धि इति वा । कर्मण्यण् ॥

न्यङ्कुः । पुं । मुनिविशेषे ॥ बहुविषाणमृगविशेषे । बारहसिंगा इति भाषा ॥ न्यङ्कुः स्वादुर्लघुर्बल्यो वृष्यो दोषत्रयापहः ॥ नितरामञ्चति । नावञ्चेरिच्यु. । न्यङ्क्वादित्वात् कुत्वम् ॥

न्यङ्कुभूरुहः । पुं । शोणकवृक्षे । श्योनाके ॥

न्यक्षम् । न । अधोऽक्षतिवाकुपारव्येमिताचरा ॥

न्यच्छम् । न । क्षुद्ररोगविशेषे ॥ इति भावप्रकाशः ॥

न्यच् । त्रि । निम्ने ॥ नीचे ॥ कार्त्स्न्ये ॥ न्यञ्चति । अञ्चु० । ऋत्विगिति क्विन् ॥

न्यञ्चितम् । त्रि । अधः क्षिप्ते ॥

न्यन्तः । पुं । चरमप्रदेशे । पश्चिमभागे ॥ नितरामन्तः ॥

न्ययः । पुं । नाशे ॥ निपूर्वादिण एरच् । न्ययंगतः पापः । नाशमित्यर्थः ॥

न्यस्तः । त्रि । निक्षिप्ते । त्यक्ते । निहिते । स्थापिते ॥ यथा । शरणं मम न

च्छिन् जननी न पिता न सुता न सोदरा नान्ये । परमं शरणमिदमेव चरणं मम न्वृहि देशिकान्यस्तमिति ॥

न्यस्यतेस्म । अव्य० । त्ता ॥

न्यस्तदण्डः । पुं । सन्न्यासिनि ॥

न्यस्तशस्त्रः । पुं । दिव्यपितृषु ॥ त्रि । अस्त्रशस्त्ररहिते ॥ न्यस्तानि शस्त्राणि येन सः ॥

न्याक्षम् । न । मूंडी कुडकी फरकी इत्यादिभाषाप्रसिद्धे भृष्टान्ने ॥ इति शब्दचन्द्रिका ॥

न्यादः । पुं । आहारे ॥ न्यदनम् । अद० । नोपाचेत्यदेशः ॥

न्यायः । पुं । अभ्रेषे । कल्पे । देशरूपे उचिते ॥ नियमेन ईयते । इण्० । परिन्योर्नीणोर्द्यूताभ्रेषयोरिति घञ् । एषोऽनन्याय उचितमित्यर्थः ॥ गौतमप्रणीते षोडशपदार्थनिरूपणपरे शास्त्रविशेषे । तर्कविद्यायाम् । आन्वीक्षिक्याम् ॥ एतद्दर्शनमते नित्येच्छाकृतिमतिसहितः परमात्मा ईश्वरः । स तु अष्टपदार्थो जीवातिरिक्तः । एतच्छास्त्रप्रयोजनं चार्वाकादि मतनिराकरणपूर्वकं जगत्कारणतयेश्वर संस्थापनं प्रमाणादि निरूपणेन वेदार्थनिर्णयश्च । एतद्दर्शनकारो गौतमः । तत्सूत्रं प्रमाणादिषोडशपदार्थनिरूपणम् । तेषां तत्त्वज्ञानान्निःश्रेयसम् । तद्भाष्यकारो वात्स्यायनः । तद्वार्त्तिककारः कात्यायनः । तट्टीकाकारो वाचस्पति मिश्रः तच्छायवदुदयनाचार्यः । कुसुमाञ्जलिप्रभृति ग्रन्थकर्त्ता । तच्छिष्यप्रच्यावरिदासेरामभद्रगङ्गेशोपाध्यायचिन्तामणिकारादयोऽपरे ॥ * ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकपञ्चावयववाक्ये ॥ यथा । पर्वतो वह्निमान् धूमात् यो यो धूमवान् स स वह्निमान् यथा महानसम् वह्निव्याप्यधूमवांश्चायम् तस्माद्वह्निमान् ॥ नीयते प्राप्यते विवक्षितार्थो येनस न्यायः । अध्यायन्यायेति घञन्तो निपातितः ॥ नीतौ ॥ नये ॥ लोके ॥ युक्तौ ॥ युक्तिमूलकदृष्टान्तविशेषे ॥

न्यायपथः । पु । मीमांसादिशास्त्रे ॥

न्यायवृत्तः । त्रि । शास्त्रविहिताचारे । यथाशास्त्रव्यवहारिणि ॥

न्यायसारिणी । स्त्री । भुक्त्याम् । युक्तिपूर्वककर्मकारिण्याम् ॥ इति शब्दा- र्णवे ॥ न्यायस्थले ॥

न्यायी । त्रि । न्यायवति ॥

न्याय्य । त्रि । न्यायादनपेते । युक्ते औपयिके ॥ न्यायादनपेतम् । धर्म्यपथ्य